**बुधानुराधामष्टम्यां दशम्यां भृगुरेवतीम् ।**
**नवम्यां गुरुपुष्यं चैकादश्यां शनिरोहिणीम् ॥ २१ ॥**

वर्जयेदिति ॥ सर्वशुभकृत्येषु पंचम्यां हस्तनक्षत्रं सूर्यवारं च युगपद्वर्जयेत् । एवं सप्तम्यां भौमाश्विनीमपि, षष्ठ्यां सोममृगनक्षत्रे, अष्टम्यां बुधानुराधां, दशम्यां भृगुरेवतीं, नवम्यां गुरुपुष्यं, एकादश्यां शनिरोहिणीं, वर्जयेदित्यर्थः । हस्तार्कादीन् सिद्धियोगानाह नारदः–'हस्तर्क्षं सूर्यवारेंदाविंदुभं प्रथमं कुजे । सौम्ये मित्रभमाचार्ये पुष्यं पौष्णं भृगोः सुते ॥ रोहिणी मंदवारे तु सिद्धियोगाह्वया अमी ॥' इति । तत्र त्रितयनिषेधो दैवज्ञमनोहरे–'आदित्ये पंचमीहस्तौ सोमे षष्ठी च चंद्रभम् । भौमाश्विन्यौ च सप्तम्यामनुराधां बुधाष्टमीम् ॥ गुरुपुष्यं नवम्यां च दशम्यां भृगुरेवतीम् । एकादश्यां शनिब्राह्मे विषयोगाः प्रकीर्तिताः ॥' इति । अन्यत्रापि–'अर्के हस्तं पंचमीं च सोमे षष्ठीं च चंद्रभम् । अश्विनीं सप्तमीं भौमे बुधे मैत्रं तथाष्टमीम् ॥ गुरौ पुष्यं च नवमीं दशमीं रेवतीं भृगौ । एकादशीं शनौ ब्राह्मं वर्जयेत् सर्वदा बुधः ॥' इति । वसिष्ठेन त्वन्यदेव त्रितयं निषिद्धमुक्तम्—'अर्कवारेऽग्निपंचम्योः सोमे चित्राद्वितीययोः । कुजे पूर्णेंदुरोहिण्योः सप्तमीयाम्ययोर्बुधे । गुरौ मित्रत्रयोदश्योः षष्ठीश्रवणयोः सिते । पौष्णाष्टम्योः शनावेते योगा हालाहलाह्वयाः ॥ एषु योगेषु कर्तव्यं शत्रूच्चाटनमारणम् । विवाहादिषु कार्येषु नियतं निधनप्रदम् ॥' इति । अग्निः=कृत्तिका । पूर्णेंदुः=पूर्णिमा ॥ २० ॥ २१ ॥

अथ भौमाश्विन्यादिकान् सिद्धियोगान् कार्यविशेषेऽतिनिंद्याननुष्टुभाह–

**गृहप्रवेशे यात्रायां विवाहे च यथाक्रमम् ।**
**भौमाश्विनीं शनौ ब्राह्मं गुरौ पुष्यं विवर्जयेत् ॥ २२ ॥**

गृहेति ॥ नूतनगृहप्रवेशेऽतिसिद्धिदामपि भौमाश्विनीं वर्जयेत् । यात्रायां शनौ रोहिणीं वर्जयेत् । विवाहे गुरुपुष्यं विवर्जयेत् । यदाह राजमार्तंडः 'भौमाश्विनीं प्रवेशे च प्रयाणे शनिरोहिणीम् । गुरुपुष्यं विवाहे च सर्वथा परिवर्जयेत् ॥' इति । ननु भौमाश्विनी तु प्रवेशे निषिद्धास्ति । कथम् 'त्यक्त्वार्करवारे तिथिषु रिक्ताऽमावर्जितासु च । दिवा वा यदि वा रात्रौ प्रवेशो मंगलप्रदः ॥' इति नारदोक्तेर्भौमो निषिद्धः? अश्विनी क्षिप्रसंज्ञनक्षत्रम्, तेन 'क्षिप्रैश्चरैः स्यात्पुनरेव यात्रा' इति फलम् । ततः सापि निषिद्धा । एवं रोहिणी यात्रायामविहिता, पश्चिमायां चातिशयेन निषिद्धैव । एवं शनिवारोऽपि सामान्यतो नवम्यादियोगे सुतरां निषिद्ध एव । एवं पुष्योऽपि विवाहे निषिद्धः । गुरुवारस्तूत्तम एव । अनयोर्योगस्तु वाप्यग्निवत्सुतरां निषिद्धस्तत्कथमिदमपवादवचनं? प्राप्तिपूर्वकत्वात्प्रतिषेधस्य–इति चेत्, उच्यते–'हस्तार्क्षमर्कवारे' इत्यादिवचनाद्भौमाश्विनीत्यादिवारनक्षत्रयुतेः कार्यमात्रे प्रशस्तत्वप्र-

मस्ति। यदाह राजमार्तंडः—'यदि विष्टिर्व्यतीपातो दिनं वाप्यशुभं भवेत्। हन्यतेऽमृतयोगेन भास्करेण तमो यथा॥ इत्यमृताख्यो योगः सर्वाण्यशुभानि लीलया नियतम्। न भवति पुनरिह शक्तो वैधृतिविष्टिव्यतीपातः॥' इति सामान्यतः कार्यमात्रप्राशस्त्यप्रासावपवादवचनं युक्तमेव। अत्र पितृचरणाः—इयं च प्रशंसाऽमृतयोगकारकनक्षत्रवारोक्तकर्मविशेषगतविशिष्टफलाभिधायिकावगंतव्या, ननु निषिद्धकर्मानुविधायिनी। अत एव पठंति—'भौमाश्विनीं प्रवेशे च प्रयाणे शनिरोहिणीम्। गुरुपुष्यं विवाहे च सर्वथा परिवर्जयेत्॥' इत्याहुः। अत्र समाधिः अन्यशुभदिवसासंभवे कृत्यस्य चावश्यकत्वे भौमाश्विन्यादौ निषिद्धेऽपि कार्यं कार्यम्, अन्यथा नेति॥ २२॥

अथानंदादीनष्टाविंशतियोगान् शालिन्युपजातिभ्यामाह—

आनंदाख्यः कालदंडश्च धूम्रो धाता सौम्यो ध्वांक्षकेतू क्रमेण।
श्रीवत्साख्यो वज्रकं मुद्गरश्च छत्रं मित्रं मानसं पद्मलुंबौ॥२३॥
उत्पातमृत्यू किल काणसिद्धी शुभोऽमृताख्यो मुसलो गदश्च।
मातंगरक्षश्चरसुस्थिराख्यप्रवर्धमानाः फलदाः स्वनाम्ना॥ २४॥

आनंदेति॥ स्पष्टार्थं पद्यद्वयम्। यदाह नारदः—'आनंदः कालदंडोऽथ धूम्रो धाता शुभाह्वयः। ध्वांक्षो ध्वजाख्यश्रीवत्सवज्रमुद्गरछत्रकाः। मित्रमानसपद्माख्यलुंबकोत्पातमृत्यवः। काणः सिद्धिः शुभामृतमुसलातंककुंजराः। राक्षसाख्यचरस्थैर्यवर्धमानाः क्रमादमी। योगाः स्वसंज्ञाफलदास्त्वष्टाविंशतिसंख्यकाः॥'॥ २३॥ २४॥

अथैते योगाः कथं ज्ञेया इत्यनुष्टुभाह—

दास्रादर्के मृगादिंदौ सार्पाद्भौमे कराद्बुधे।
मैत्राद्गुरौ भृगौ वैश्वाद्गण्या मंदे च वारुणात्॥ २५॥

दास्रादिति॥ अत्र नक्षत्राणां साभिजितां गणना कार्या। यतोऽष्टाविंशतिरेते योगाः संभवंति। तथा सति अर्कवारे दास्रादश्विनीनक्षत्रात् साभिजिद्दिननक्षत्रं गणनीयं। तत्सम्संख्याकं स्यात्तत्संख्याको योग आनन्दादिर्भवति। यथा-दिननक्षत्रं श्रवणः तदश्विनीतः साभिजिद्गणनया त्रयोविंशतिसंख्यमस्ति, तथा सति आनन्दादियोगेषु त्रयोविंशतिसंख्यो गदयोगो जातः। एवमिंदौ सोमवारे मृगशीर्षात्पूर्ववद्गणनया आनन्दादियोगा ज्ञेया इत्यर्थः। एवं सर्वत्र व्याख्येयम्। सार्पम्=आश्लेषा, करः=हस्तनक्षत्रं, मैत्रम्=अनुराधा, वैश्वम्=उत्तराषाढा, वारुणं=शततारका। यदाह नारदः—'रविवारक्रमादेते दास्रभादिंदुभाद्विधौ। सार्पाद्भौमे बुधे हस्तान्मैत्रभाद्देवमंत्रिणि। वैश्वदेवाद्भृगुसुते वारुणाद्भास्करात्मजे॥' इति॥ २५॥

अथानन्दादिषु ये दुष्टयोगास्तेषां कियतां सत्यावश्यकत्वे परिहारं शालिन्याह—

ध्वांक्षे वज्रे मुद्गरे चेषुनाड्यो वर्ज्या वेदाः पद्मलुंबे गदेऽश्वाः ।
धूम्रे काणे मौसले भूर्द्वयं द्वे रक्षोमृत्यूत्पातकालाश्च सर्वे ॥२६॥

ध्वांक्ष इति ॥ ध्वांक्षवज्रमुद्गरयोगेषु आद्या इषुनाड्यः पंच घट्यो वर्ज्याः । पद्मलुंबयोगयोर्वेदाश्चतस्रो घटिका वर्ज्याः । एवं गदे अश्वाः सप्तघटिकाः, धूम्रे भूरेकैव घटिका, काणे घटिकाद्वयं, मुसलयोगे घटिके द्वे, राक्षसमृत्यूत्पातकालाः षष्टिघटिकात्मकाः सर्वेऽपि वर्ज्याः । अत्र श्लोके अनुक्तेऽपि चरयोगे घटिकात्रयं वर्ज्यम् । उक्तं च ज्योतिःसारसागरे—'ध्वांक्षे-द्रायुधमुद्गरेषु घटिकास्त्याज्यास्तु पंचादितः पद्माऽऽलुंबकयोश्चनस्र उदिता धूम्रे सदैका पुनः । द्वे काणे मुसलाह्वयेऽपि च गदे सप्तैव तिस्रश्चरे मृत्यूत्पात-करक्षसां दिनगतास्ताः कालदंडे तथा ॥' अत्र दिनशब्देनाहोरात्रमुच्यते । 'पद्मालुंबकयोः' इत्यत्राकृमश्लेषश्छंदोऽनुरोधार्थः ॥ २६ ॥

अथ दोषापवादभूतान् रवियोगाननुष्टुभाह—

सूर्यभाद्वेदगोतर्कदिग्विश्वनखसंमिते ।
चंद्रर्क्षे रवियोगाः स्युर्दोषसंघविनाशकाः ॥ २७ ॥

सूर्यभादिति ॥ सूर्यो यस्मिन्नक्षत्रेऽस्ति ततश्चंद्रर्क्षं दिननक्षत्रमित्यर्थः । तस्मिन् चतुर्नवषट्दशत्रयोदशविंशतिसंख्याके सति रवियोगाः स्युः । कीदृशाः? दोषाणां संघः समूहस्तस्य विनाशका इत्यर्थः । उक्तं च वसिष्ठेन—'सूर्याच्चतुर्थे दशमे च षष्ठे विश्वर्क्षके विंशतिमे नवर्क्षे । भवंति षड् भानुमदृक्ष-योगाः कुयोगविध्वंसकराः शुभेषु ॥' इति ॥ २७ ॥

अथ सूर्यादिवारेषु नक्षत्रविशेषैः सिद्धियोगानिंद्रवज्रोपजातिभ्यामाह—

सूर्येऽर्कमूलोत्तरपुष्यदास्रं चंद्रे श्रुतिब्राह्मशशीज्यमैत्रम् ।
भौमेऽश्व्यहिर्बुध्न्यकृशानुसार्पं ज्ञे ब्राह्ममैत्रार्ककृशानुचान्द्रम् ॥२८॥
जीवेऽन्त्यमैत्राश्व्यदितीज्यधिष्ण्यं शुक्रेऽन्त्यभाग्याश्व्यदितिश्रवोभम्[1]
शनौ श्रुतिब्राह्मसमीरभानि सर्वार्थसिद्ध्यै कथितानि पूर्वैः ॥२९॥

सूर्ये इति ॥ रविवारे हस्तमूलम्युत्तरापुष्याश्विनीनक्षत्राणि सिद्धियोगाः स्युः। एवं चंद्रे श्रवणरोहिणीमृगशिरःपुष्यानुराधाः सिद्धियोगाः । एवं भौमेऽश्वि-न्युत्तराभाद्रपदाकृत्तिकाश्लेषाः । हे बुधे रोहिण्यनुराधाहस्तकृत्तिकामृगाः । गुरौ रेवत्यनुराधाश्विनीपुनर्वसुपुष्याः । शुक्रे रेवतीपूर्वाफल्गुन्यश्विनीपुनर्वसुश्रवणाः। शनौ श्रवणरोहिणीस्वातीनक्षत्राणि सर्वार्थसिद्ध्यै समस्तकार्यसिद्ध्यै पूर्वैराचार्यैः कथितान्युक्तानि । अत्रैते सिद्धियोगाः 'दास्त्रादर्के मृगादिंदौ' (श्लो० २५) इत्यादि-

१ शुक्रेऽन्त्यमैत्राश्व्यदितिश्रवोभम् इति पाठः ।

प्रकारेणानन्दादिसमीचीनयोगसंबंधिनक्षत्रैरुपनिबद्धाः । अत एवानयोः पद्ययोरार्षमूलाभावः । अमुमेवाशयं मनस्यभिसंधाय जगन्मोहनज्योतिःसारसागरादिनिबन्धेषु स्वेच्छया न्यूनाधिकनक्षत्रैः सिद्धियोगा उक्ताः । तत्र भीमपराक्रमः—'मूलं रवौ पुष्यकरोत्तराणि वेधा मृगांकः श्रवणं च सोमे । कृशानुपुष्योत्तरभानि भौमे बुधेऽनुराधा वरुणः कृशानुः ॥ बृहस्पतौ पुष्यपुनर्वसू च भगोऽश्विनी च श्रवणं च शुक्रे । शनैश्चरे स्वातिपितामहौ च योगाः किलैते शुभदायिनः स्युः ॥' इति । दीपिकायां च—'ध्रुवगुरुकरमूलपौष्णभान्यर्कवारे' इत्यादिभिर्नक्षत्रैः सिद्धियोगाभिधानं युक्तमेव । 'हस्तार्कमर्कवारैन्दाविंदुर्भं प्रथमं कुजे । सौम्ये मित्रभमाचार्ये पुष्यं पौष्णं भृगोः सुते । रोहिणी मन्दवारे तु सिद्धियोगाह्वया अमी' इति नारदोक्तवचनार्थोऽस्मिन्पद्ये उक्त एवेति स्वयं पुनर्नोक्तः ॥ २८ ॥ २९ ॥

अथोत्पातमृत्युकाणसिद्धियोगान् शालिन्याह—

द्वीशात्तोयाद्वासवात्पौष्णभाच्च ब्राह्मात्पुष्याद्र्यमर्क्षाद्युगर्क्षैः ।
स्यादुत्पातो मृत्युकाणौ च सिद्धिर्वारेऽर्काद्ये तत्फलं नामतुल्यम् ॥

द्वीशादिति ॥ आदित्यवारादिषु क्रमात् द्वीशात्=विशाखातः, तोयभात्=पूर्वाषाढातः, वासवात्=धनिष्ठातः, पौष्णभात्=रेवतीतः, ब्राह्मात्=रोहिणीतः, पुष्यादर्यमर्क्षात्=उत्तराफल्गुनीत आरभ्य, युगर्क्षैः=चतुर्भिश्चतुर्भिर्नक्षत्रैः, क्रमादुत्पातमृत्युकाणसिद्धियोगाः स्युः। यथा, रवौ-विशाखा उत्पातः, मैत्रं मृत्युः, ज्येष्ठा काणः, मूलं सिद्धिः । एवं सोमे-पूर्वाषाढा उत्पातः, उत्तराषाढा मृत्युः, अभिजित्काणः, श्रवणं सिद्धिः । भौमे-धनिष्ठोत्पातः, शततारका मृत्युः, पूर्वाभाद्रपदा काणः, उत्तराभाद्रपदा सिद्धिः । बुधे-रेवत्युत्पातः, अश्विनी मृत्युः, भरणी काणः, कृत्तिका सिद्धिः । गुरौ-रोहिण्युत्पातः, मृगो मृत्युः, आर्द्रा काणः, पुनर्वसुः सिद्धिः । शुक्रे-पुष्य उत्पातः, आश्लेषा मृत्युः, मघा काणः, पूर्वाफल्गुनी सिद्धिः । शनौ-उत्तराफल्गुन्युत्पातः, हस्तो मृत्युः, चित्रा काणः, स्वाती सिद्धियोग इत्यर्थः । तदुक्तं नारदेन-'विशाखादिचतुर्वर्गमर्कवारादिषु क्रमात् । उत्पातमृत्युकाणाख्या योगाश्चामृतसंयुताः ॥' अमृतं=सिद्धिः । ननु चायं पुनरुक्तः श्लोकार्थः । आदित्यवारादिषु हि—'दास्रादर्के मृगादिंदौ' इत्यादिक्रमेणानंदादियोगगणनया उत्पातमृत्युकाणसिद्धियोगा एव संभवंति, नान्ये । किंच—'सूर्येऽर्कमूलोत्तरपुष्यदास्रम्' (श्लो० २८) इति मूलादीनामेव सिद्धियोगाभिधानाच्चायुक्तिश्च । उच्यते-बालानां शीघ्रबोधनार्थं तथोक्तिः । अथवावश्यवर्ज्या एते उत्पातमृत्युकाणाः सिद्धियोगोऽप्यतिप्रशस्त इत्येतदर्थं तथोक्तिः । ननु तर्हि देशभेदेन परिहारो वक्ष्यमाणोऽनुपपन्नः। सत्यम् । कार्यस्यात्यावश्यकर्तव्यत्वे समीचीनदिनांतराप्राप्तावपवादप्रवृत्तिरिति युक्तमुत्पश्यामः । तत्फलमिति तेषामुत्पातमृत्युकाणसिद्धियोगानां फलं नामतुल्यम् । यस्य

योगस्य यादृशं नाम तद्योगसत्त्वे प्रारब्धकार्यफलमपि तादृशमेवेत्यर्थः । उक्तं च नारदेन—'योगाः स्वसंज्ञाफलदास्त्वष्टा विंशतिसंख्यकाः' इति ॥ ३० ॥

अथ दुष्टयोगानां देशभेदेन परिहारमनुष्टुभाह—

**कुयोगास्तिथिवारोत्थास्तिथिभोत्था भवारजाः ।**
**हूणवंगखशेष्वेव वर्ज्यास्त्रितयजास्तथा ॥ ३१ ॥**

**कुयोगा इति** ॥ तिथिवारोत्थाः कुयोगाः=दुष्टयोगाः क्रकचादयः, तिथिभोत्थाः='अनुराधा द्वितीयायाम्' (श्लो० २० ) इत्यादयः । भवारजाः='याम्यं त्वाष्ट्रं वैश्वदेवम्' ( श्लो० ५ ) इत्यादयः, तथा त्रितयजाः=तिथिवारनक्षत्रजाः 'वर्जयेत्सर्वकार्येषु हस्तार्के पंचमीतिथौ' (श्लो० १२ ) इत्येवमादयस्ते सर्वे दुष्टयोगा हूणवंगखशेष्वेव । हूणवंगौ=प्राच्यदेशौ । खशो देश उत्तरस्यां दिशि प्रसिद्धस्तत्रैते वर्ज्याः । अन्यदेशेषु निषिद्धा न भवंतीत्यर्थसिद्धमेव । उक्तं च नारदेन—'तिथिवारोद्भवा नेष्टा योगा वारर्क्षसंभवाः । हूणवंगखशेभ्योऽन्यदेशेष्वेते शुभप्रदाः ॥' इति । अथ तिथिवारयोर्वारर्क्षयोश्च युतेरुपलक्ष्यत्वादन्ययुतावपि परिहारो ज्ञेयः ॥ ३१ ॥

अथ समस्तशुभकृत्ये वर्ज्यपदार्थान् शार्दूलविक्रीडितेनाह—

**सर्वस्मिन्विधुपापयुक्ततनुलवावर्धे निशाह्नोर्घटी-**
**त्र्यंशं वै कुनवांशकं ग्रहणतः पूर्वं दिनानां त्रयम् ।**
**उत्पातग्रहतोऽग्रहांश्च शुभदोत्पातैश्च दुष्टं दिनं**
**षण्मासं ग्रहभिन्नभं त्यज शुभे यावद्धं तथोत्पातभम् ॥३२॥**

**सर्वस्मिन्निति** ॥ हे पंडित ! सर्वस्मिन् शुभे कार्ये एतानि वस्तूनि वै निश्चयेन त्यज परिहरेत्यर्थः । कानीत्यत्राह विध्विति । विधुः=चंद्रः, पापाः= क्षीणचंद्रसूर्यभौमशनयः । 'क्षीणेंद्वर्कमहीसुतार्कतनयाः पापा बुधस्तैर्युतः' इति वराहोक्तेः । राहुकेत्वोरपि पापत्वं दीपिकायामुक्तम्—'अर्धोनेंद्वर्कसौराराः पापा ज्ञस्तैर्युतोऽपरे । शुभाः पापौ तमःकेतू विष्णुधर्मोत्तरोदितौ ॥' इति । वसिष्ठेनापि—'सूर्यभौमशनिराहुकेतवः पापसंज्ञखचराः क्षयिचंद्रः । पूर्णचंद्रगुरुशुक्रसोमजाः सर्वकर्मसु हि सौम्यखेचराः ॥' इति । तत्र विधुना पापेन वा पापैर्वा युक्तौ तनुलवौ लग्ननवांशौ त्यज । 'पूर्णः क्षीणोऽपि वा चंद्रो लग्ने सर्वत्र गर्हितः' इति कश्यपोक्तेः । श्रीपतिश्च—'सर्वार्थसिद्धिषु शशी न शुभो विलग्ने' इति । दैवज्ञमनोहरे गुरुः—'पापेंदू लग्नगौ त्याज्यौ सर्वेण शुभकर्मसु । अक्षीणं कर्किगोजस्थं केऽप्याहुर्लग्नगं शुभम् ॥' इति । अथ निशाह्नोरर्धे रात्र्यर्धे दिनार्धे च घटीत्र्यंशं विंशतिपलानि दश पूर्वं दश पश्चाच्च पलानि त्यज । उक्तं च शार्ङ्गीये—'मूर्तः कालो निवसति महानिशायां च दिनदले यस्मात् । दश पूर्वं दश परतस्तस्माद्वर्ज्यानि च पलानि ॥' इति । अथो कुनवांशकं पापग्रहनवांशं त्यज । यदाह नारदः—'क्रूरांशका

न च ग्राह्या न शस्तास्ते नवांशकाः । कुनवांशकलग्नं यस्याज्यं सर्वगुणान्वितम् ॥' इति । क्रूरैः क्रूरग्रहैरुग्रा भयजनका अंशा नवांशा न ग्राह्या इत्यर्थः । अथ ग्रहणतः पूर्वं दिनानां त्रयं त्यज । ग्रहणतः सूर्यचंद्रग्रहणदिनात्प्रथमं दिवसत्रयं त्याज्यम् । यदाह गर्गः—'चंद्रसूर्योपरागेषु त्र्यहं प्रागशुभं भवेत् । सप्ताहमशुभं पश्चात्स्मृतं ग्रहणशूलकम् ॥' इति । उपरागः=ग्रहणम् । 'उपरागो ग्रहो राहुग्रस्ते त्विन्दौ च पूष्णि च' इत्यमरोक्तेः । अथ उत्पातग्रहतोऽग्र्यहांश्च । उत्पातो नाम स्वभावतो वैपरीत्यम् । यदाह वराहः-'तेषां संक्षेपोऽयं प्रकृतेरन्यथात्वमुत्पातः' इति । ते चोत्पातास्त्रिविधाः-दिव्याः, आंतरिक्षाः, भौमाश्च । तत्र दिव्यः-केत्वादिः, आंतरिक्षः-गंधर्वनगरादिः, भौमः-भूमिकंपादिः । एतदप्याह वराहः—'अपचारेण नराणामुपसर्गः पापसंचयाद्भवति । संसूचयंति दिव्यांतरिक्षभौमास्तमुत्पाताः ॥ दिव्यं ग्रहर्क्षवैकृतमुल्कानिर्घातपवनपरिवेषाः । गंधर्वपुरपुरंदरचापादि यदांतरिक्षं तत् । भौमं चरस्थिरभवं तच्छांतिभिराहतं शममुपैति ॥' इति । ते ह्युत्पाता यस्मिन् दिने स्युस्तद्दिनमारभ्य अग्र्यहान् सप्त दिनानि त्यज । यदाह नारदः—'उत्पातग्रहणादूर्ध्वं सप्ताहं निखिलग्रहे' इति । दीपिकायां च—'अनिष्टे त्रिविधोत्पाते सिंहिकासूनुदर्शने । सप्तरात्रं न कुर्वीत यात्रोद्वाहादिमंगलम् ॥' इति ।-'अनिष्टे=अकालवृष्ट्यादिदूषिते काले' इति तट्टीकाकारो व्याख्यत् । अग्र्यहानिति अग्र्यश्च तान्यहानि चेति कर्मधारयसमासे 'राजाहःसखिभ्यष्टच्' इति समासांते टचि कृते 'नस्तद्धिते' इति टिलोपे च 'रात्राह्नाहाः पुंसि' इति पुंलिंगत्वम् । अत एव 'ग्राहाः प्रदेया अविशुद्धशुद्धौ' इत्यादयः प्रयोगा उपपद्यन्ते । तथा ग्रहतो ग्रहणत ऊर्ध्वं सप्त दिनानि त्यज । अत्र ग्रहणशब्देन सर्वग्रहणं विवक्षितम् । ततो न्यूनत्वे त्रैराशिकम् । यदाह वसिष्ठः 'सर्वग्रासे दिनान्यष्टौ सर्वकार्येषु वर्जयेत् । षट् दिनानि त्रिभागोने अर्धग्रासे चतुर्दिनम् ॥ चतुर्थांशे त्रिरात्रं स्याद्ग्रहणे चंद्रसूर्ययोः ॥' इति । नारदोऽपि—'निःशेषे सप्त सप्त च' इत्याह । एतच्च यद्यप्यविशेषेणोक्तं तथापि ग्रहणादनंतरमेव ज्ञेयम् । 'उत्पातग्रहणादूर्ध्वं सप्ताहं निखिलग्रहे' इति तस्यैवोक्तेः । अंगिरा अपि—'सर्वग्रासे तु सप्ताहमर्धग्रासे दिनत्रयम् । त्र्यंगुलकांगुलतो ग्रासे दिनमेकं तु वर्जयेत् ॥' इति । अनयोर्वाक्ययोर्विषयव्यवस्था देशभेदेनाचारभेदादवगंतव्या । कश्चित्सामान्यतो दिनसप्तकमुक्तम् । यदाह गर्गः—'सूर्यचन्द्रोपरागौ द्वौ महादोषावुभौ । सप्तरात्रं तयोरूर्ध्वं सर्वशोभननाशनम् ॥' इति । एतदपि सर्वग्रासपरतया योज्यम् । शार्ङ्गीयविवाहपटले चन्द्रस्य सर्वग्रासे उभयतो दिनसप्तकं त्याज्यमित्युक्तम्—'कृत्स्नचन्द्रग्रहे त्याज्यं प्राक् पश्चाद्दिनसप्तकम्' इति । उत्पातविशेषे ग्रहणे च बहूनि दिनानि वर्ज्यान्याहुः । यदाह चंडेश्वरः-'ग्रहे रवींद्वोरवनिप्रकंपे केतूद्गमोल्कापतनादिदोषे । मते दशाहानि वदंति तज्ज्ञास्त्रयोदशाहानि वदंति केचित् ॥' इति । ग्रहणे तु कार्यस्यावश्यकत्वविशेषे परिहार उक्तो ज्योतिर्निबंधे—'पञ्च दिनानि वसिष्ठस्त्रिदिनं गर्गस्तु कौशिकस्त्वेकम् ।

यवनाचार्यस्य मतं पंच मुहूर्तांश्च दूषयति राहुः ॥' इति । अयं च ग्रहणीयो निषेधो नित्यनैमित्तिकादिकृत्यव्यतिरिक्तविषयः । यदाह गुरुः—'नित्ये नैमित्तिके काम्ये जपहोमक्रियासु च । उपाकर्मणि चोत्सर्गे ग्रहवेधो न विद्यते ॥' इति । ग्रहः=ग्रहणम् । अथ शुभदोत्पातैश्च दुष्टं दिनं त्यज । शुभं कल्याणं ददति लोकेभ्य इति शुभदा एतादृशा ये उत्पाता वसंतादृतुपुरस्कारेणोत्पातविशेषाः शुभा इत्युक्तम् । तादृशैरुत्पातैर्दुष्टं दूषितं दिनं द्विग्वातिरिक्तसंख्याविशेषानवगमादेकत्वस्य च प्रतीतेरेकं दिनं त्याज्यमित्यर्थः । अत्र हेतुः शुभदत्वमुत्पातानाम् । शुभदोत्पातानाह ऋषिपुत्रकृतैः श्लोकैर्यथाह—'वज्राशनिमहीकंपाः संध्यानिर्घातनिःस्वनाः । परिवेषरजोधूमरक्तार्कास्तमनोदयाः ॥ द्रुमेभ्योऽन्नरसस्नेहमधुपुष्पफलोद्गमाः । गोपक्षिमधुवृद्धिश्च शिवाय मधुमाधवे ॥ तारोल्कापातकलुषं कपिलार्केंदुमंडलम् । अनग्निज्वलनास्फोटधूमरेखानिलाकुलम् ॥ रक्तपद्मारुणं सांध्यं नभः क्षुब्धार्णवोपमम् । सरितां चांबुसंशोषं दृष्ट्वा ग्रीष्मे शुभं भवेत् ॥ शक्रायुधपरीवेषविद्युच्छुष्कविरोहणम् । कंपोद्वर्तनवैकृत्यं रसनं दारणं क्षितेः ॥ नद्युदपानसरसां वृद्ध्यूर्ध्वतरणप्लवाः । सरणं चाद्रिगेहानां वर्षासु न भयावहम् ॥ दिव्यस्त्रीभूतगंधर्वविमानाद्भुतदर्शनम् । ग्रहनक्षत्रताराणां दर्शनं च दिवांबरे ॥ गीतवादित्रनिर्घोषो वनपर्वतसानुषु । सस्यवृद्धिरपां हानिरपापाः शरदि स्मृताः । शीतानिलतुषारत्वं नर्दनं मृगपक्षिणाम् । रक्षोयक्षादिसत्त्वानां दर्शनं वागमानुषी ॥ दिशो धूमांधकाराश्च सनभोवनपर्वताः । उच्चैः सूर्योदयेऽस्ते च हेमंते शोभनाः स्मृताः ॥ हिमपातानिलोत्पातविरूपाद्भुतदर्शनम् । कृष्णांजनाभमाकाशं तारोल्कापातपिंजरम् ॥ चित्रगर्भोद्भवाः स्त्रीषु गोऽजाश्वमृगपक्षिषु । पत्रांकुरलतानां च विकाराः शिशिरे शुभाः ॥ ऋतुस्वभावजा ह्येते दृष्टाः स्वर्तौ शुभप्रदाः । ऋतोरन्यत्र चोत्पाता दृष्टास्ते भृशदारुणाः ॥' इति । अथ ग्रहभिन्नभं ग्रहैर्भौमादिभिः पंचभिर्भिन्नं सिद्धांतोक्ताल्या भेदयोगं प्राप्तमेतादृशं भं नक्षत्रं त्यज । तथा यद्धं यन्नक्षत्रं भौमादिपंचग्रहयुद्धमध्यपतितं सदृश्यते तत्त्यज । तत्र क्रूरयोगादेव दोषसत्त्वे युद्धोपधानस्तु दोषाधिक्यसूचनार्थः । सौम्यग्रहयुद्धे तु स एव दोषः । अत्र केचित्—यस्मिन् दिननक्षत्रे भौमादीनां युद्धं जातं तन्नक्षत्रं त्याज्यमित्याहुः; तन्न, प्रमाणाभावात् । तथोत्पातमुत्पातैर्दिव्यांतरिक्षभौमैर्दूषितं भं त्यज । अयमर्थः—भौमांतरिक्षयोरुत्पातयोर्ग्रहयुद्धवत्प्रत्यक्षदृश्यनक्षत्राभावाद्दिननक्षत्रमेव त्याज्यम् । दिव्योत्पाते तु केत्वादिना प्रत्यक्षतो यन्नक्षत्रमाक्रांतं तत्त्याज्यम्, भौमांतरिक्षोत्पातसाहचर्याद्दिननक्षत्रमपि त्याज्यम् । एवं नक्षत्रचतुष्टयं षण्मासम् । 'कालाध्वनोरत्यंतसंयोगे' इति द्वितीया । षण्मासमभिव्याप्येत्यर्थः । यदुक्तं शार्ङ्गीयविवाहपटले—'क्रूरैर्भुक्तं युक्तं भोग्यं च तथैव खेटयुद्धगतम् । ग्रहभिन्नकमुदूतभं त्यजेन्महोत्पातदुष्टं यत् ॥ यद्राहुसंदर्शनदुष्टमृक्षं शीतांशुयुक्तं च विवाहलग्नम् । आ मासषट्कं विदधीत तस्मिन्विवाहयात्रादि शुभं न चैव ॥' इति । नारदोऽपि—'ग्रह-

णोत्पातभं त्याज्यं मंगलेषु ऋतुत्रयम्' इति । मंगलेषु ऋतुत्रयमित्यत्र 'ऋत्यकः' इति प्रकृतिभावः । गुरुरपि—'उत्पातैः पीडितास्तारा: षण्मासैः प्रकृतिं ययुः । राहुकेतुविमुक्तं यदृक्षचक्रं निपीडितम् ॥ वत्सरार्धेन शुध्येत ग्रहयुद्धगतं च भम् । नक्षत्रग्रहयोगेन यदुक्तं दोषसंचयम् ॥ तदिदं सर्वकार्येषु शुभेषु परिवर्जयेत् ॥' इति । ग्रहयुद्धभेदाश्चत्वारः-भेदः, उल्लेखः, अंशुविमर्दनं, अपसव्यं चेति । यथाह वराहः—'आसन्नक्रमयोगाद्भेदोल्लेखांशुमर्दनासव्यैः । युद्धं चतुष्प्रकारं पराशराद्यैर्मुनिभिरुक्तम् ॥' इति । तल्लक्षणानि सूर्यसिद्धांते—'उल्लेखस्तारकास्पर्शाद्भेदे भेदः प्रकीर्त्यते । युद्धमंशुविमर्दाख्यमंशुयोगे परस्परम् ॥ अंशादूनेऽपसव्यं स्याद्युद्धमेकोऽत्र चेदणुः ॥' इति । ननु ग्रहयुद्धादिकं सिद्धांतविरुद्धम् । यतः—'कक्षाः सर्वा अपि दिविषदां चक्रलिप्तांकितास्ता वृत्ते लघ्व्यो लघुनि महति स्युर्महत्यश्च लिप्ताः । तस्मादेते शशिजभृगुजादित्यभौमेज्यमन्दा मन्दाक्रांता इव शशधराद्यांति यांतः क्रमेण ॥' इति भास्कराचार्योक्तेर्महांतरोर्ध्वाधोभावेनावस्थितानां ग्रहाणां युद्धासंभव एव । लोके हि समीपवर्तिनोः पुंसोर्युद्धादि दृश्यते, तत्कथमियमत्र शास्त्रे ग्रहयुद्धोक्तिः ? सत्यम् । अत्र युक्तिपुरःसरं वराह एव समादधाति स्म-'वियतिचरग्रहाणामुपर्युपर्यात्ममार्गसंस्थानाम् । अतिदूराद्दृग्विषये समतामिव संप्रयातानाम् ॥ आसन्नक्रमयोगाद्भेदोल्लेखांशुमर्दनासव्यैः । युद्धं चतुष्प्रकारं पराशराद्यैर्मुनिभिरुक्तम् ॥' इति । तेन भूवर्तिनां राज्ञामन्येषां वा शुभाशुभफलसूचनार्थं युद्धसमागमाद्युक्तिः । उक्तं च सूर्यसिद्धांते—'भावाभावाय लोकानां कल्पनेयं प्रदर्शिता । स्वमार्गतः प्रयांत्येते दूरमन्योन्यमागतः ॥' इति । ननु यथा ग्रहणं तिथिसंधौ भवति तथा नक्षत्रद्वयसंधौ जायमानं किं नक्षत्रं दूषयति, किं परं, किं पूर्वं, किमुभयमिति ? अविशेषादुभयमिति वयं ब्रूमः । यदुक्तं शार्ङ्गीयविवाहपटले—'यस्मिन् विधुं राहुरिनं च धिष्ण्ये गृह्णाति तस्याज्यमृतुत्रयं स्यात् । पाणिग्रहे पुंमरणं विधत्ते द्वयोर्भयोश्चेद्द्वयमेव जह्यात् ॥' इति । अथासन्नपक्षद्वयग्रहणे किं द्वयोस्त्यागः षण्मासमुत कस्यचित्कश्चिद्विशेषः ? अयमपि निर्णयस्तत्रैवाभ्यधायि 'पक्षांतरेण ग्रहणद्वयं च यदा तदाद्यग्रहणोपगं भम् । पक्षाद्विशुद्धं भवति द्वितीयं पाणिग्रहे शुध्यति भोगषट्कात् ॥' इत्यलमतिप्रसंगेन ॥ ३२ ॥

अथ ग्रासभेदेन कियत्संख्याकेषु मासेषु ग्रहणीयनक्षत्रनिषेधं तथा ग्रासादिदिवसांश्च निषिद्धानिंद्रवज्राछन्दसाह—

**नेष्टं ग्रहर्क्षं सकलार्धपादग्रासे क्रमात्तर्कगुणेंदुमासान् ।**
**पूर्वं परस्तादुभयोस्त्रिघस्रा ग्रस्तेऽस्तगे वाभ्युदितेऽर्धखंडे ॥ ३३ ॥**

नेष्टमिति । ग्रहर्क्षं ग्रहणनक्षत्रं क्रमात्संपूर्णार्धचतुर्थांशग्रासे सति षट्त्र्येकमासान् नेष्टम् । यथा-ग्रहणभं सर्वग्रासे मासषट्कं, अर्धग्रासे मासत्रयं, चतुर्थांशग्रासे मासमेकं त्यजेदित्यर्थः । यदाह गुरुः-'सर्वग्रासे तु षण्मासांस्त्रीन्

मासांश्च दलग्रहे । आपादग्रहणे धिष्ण्यं मासमेकं विवर्जयेत् ॥' इति । अथ पूर्वमिति । क्रमादित्यनुवर्तत एव । अत्रापि ग्रस्तेऽस्तगे ग्रस्तास्ते पूर्वं त्रिघस्राख्रिदिनं नेष्टम् । पूर्वं न सम्यक् त्रिदिनमित्यर्थः । अर्थादग्रेतनानि दिनानि समीचीनानि । तथा ग्रस्तेऽभ्युदिते ग्रस्तोदये परस्तात्पश्चात्त्रिदिनं नेष्टं पूर्वं सम्यक् त्रिदिनमित्यर्थः । तथा अर्धखंडे ग्रस्तोदयग्रस्तास्तयोरभावेऽपि अर्धग्रासे बिंबमानादर्धग्रासे उभयोः कालयोः प्राक्पश्चात्त्रिदिनं नेष्टम् । यदाह गुरुः–'ग्रस्तास्ते त्रिदिनं पूर्वं पश्चाद्ग्रस्तोदये तथा । खंडग्रासे त्रित्रिदिनं निःशेषे सप्त सप्त च ॥' इति । कश्यपोऽपि–'ग्रस्तोदये परो दोषो ग्रस्तास्तेऽर्वाक् शशीनयोः । मुनिशार्धे तूभयं स्यात् खंडिखंडव्यवस्थयोः ॥' इति । वसिष्ठोऽपि–'ग्रस्तोदये चोर्ध्वमनिष्टमादौ ग्रस्तास्तमानेऽप्युडुमासषट्कम् ॥' इति । अतः खण्डग्रहणादिसद्भावेऽपि ग्रस्तोदयग्रस्तास्तत्वाभावात्पूर्वं पश्चाच्चोक्तदिनानि वर्ज्यानीति सर्वत्र विषयविवेकः ॥ ३३ ॥

अथ सामान्यतोऽवश्यवर्ज्यानि पंचांगदूषणादीनि वसंततिलकयानुष्टुभा चाह । जन्मर्क्षमासतिथिप्रभृतयः पदार्थाः सर्वेषु कर्मसु वर्ज्या इति द्वितीयश्लोकेनान्वयः । तान् पदार्थानाह—

जन्मर्क्षमासतिथयो व्यतिपातभद्रा-
वैधृत्यमापितृदिनानि तिथिक्षयर्द्धी ।
न्यूनाधिमासकुलिकप्रहरार्धपाता
विष्कंभवज्रघटिकात्रयमेव वर्ज्यम् ॥ ३४ ॥
परिघार्धं पंच शूले षट् च गंडातिगंडयोः ।
व्याघाते नव नाड्यश्च वर्ज्याः सर्वेषु कर्मसु ॥ ३५ ॥

जन्मर्क्षेति ॥ यस्मिन्नक्षत्रे जन्म भवेत्तज्जन्मर्क्षं, यस्मिन् मासे जन्म भवेत् स जन्ममासः, यस्यां तिथौ जन्म भवेत् सा जन्मतिथिः, एते वर्ज्याः । तदाह वसिष्ठः–'स्वजन्ममासर्क्षतिथिक्षणेषु वैनाशिकाद्यृक्षगणेषु तेषु । नोद्वाहमात्माभ्युदयाभिलाषी नैवाद्यगर्भद्वितयं कदाचित् ॥' अयं च जन्मनक्षत्रमासतिथिनिषेध आद्यगर्भस्यैव । यदाह नारदः–'जन्ममासे न जन्मर्क्षे न जन्मदिवसेऽपि वा । आद्यगर्भसुतस्यापि दुहितुर्वा करग्रहः ॥' इति । अनेनाद्यगर्भव्यतिरिक्तकन्यायामादशवरस्य च जन्मर्क्षमासतिथिषु शुभफलत्वमुक्तं भवति । अत एवाह च्यवनः–'जन्मर्क्षे जन्ममासे वा तारायामथ जन्मनि । जन्मलग्ने भवेदूढा पुत्राढ्या पतिवल्लभा ॥' इति । अथ जन्ममासलक्षणम् । जगन्मोहने वृद्धगर्गः–'आरभ्य जन्मदिवसं यावत्त्रिंशद्दिनं भवेत् । स जन्ममासो विज्ञेयो गर्हितः सर्वकर्मसु ॥' इति । अस्यापि विशेषस्तत्रैव–'आद्यं दिनं दूषयते वसिष्ठः पंचैव गर्गस्त्रिदिनं तथाऽत्रिः । तज्जन्मपक्षं किल भागुरिश्च व्रते विवाहे गमने क्षुरे च' इति । वस्तुतस्तु-यस्मिंश्चान्द्रमासे चैत्रादौ

जन्माभूत्स चांद्रमासो जन्ममासतया त्याज्य इति युक्तमुत्पश्यामः। 'इंद्राग्नी यत्र हूयेते मासादिः स प्रकीर्तितः। अग्नीषोमौ स्थितौ मध्ये समासौ पितृसोमकौ॥' इति हारीतवचनात्। 'उपवासव्रतोद्वाहयात्राक्षौरोपनायनम्। तिथिवर्षादि निखिलं चांद्रमानेन गृह्यते॥' इति कश्यपोक्तेश्च। अथात्र तिथिशब्दो वसिष्ठवाक्यस्वरसादुक्तः। अत एव नारदसंहितायां रत्नमालादिग्रंथेषु च दिवसपदं तिथिपरं व्याख्येयम्। अन्यथा जन्मवारेऽप्यतिप्रसंगः स्यात्। अथ व्यतीपातो वर्ज्यः। सप्तविंशतियोगेषु व्यतीपातो नाम योगः स्पष्टसूर्यचंद्रयोगजन्मा सप्तदशसंख्याको निंद्यः। उक्तं च वसिष्ठेन—'सर्वैर्धृतो यो व्यतिपातयोगः सर्वोऽप्यनिष्टः परिघार्धमाद्यम्।' इति। तथा भद्रा वर्ज्या, भद्रा सप्तमं करणं वर्ज्यम्। यदाह वसिष्ठः—'न कुर्यान्मंगलं विष्ट्यां जीवितार्थी कदाचन। कुर्वन्नज्ञस्तदा क्षिप्रं तत्सर्वं नाशतां व्रजेत्॥' इति। भद्राप्रवृत्तिरंगविभागकल्पनं च विशेषतोऽग्रे वक्ष्यते। तथा वैधृतिः पूर्वलक्षणलक्षितः सप्तविंशतिसंख्याको योगो निंद्यः। अत्र संमतिः पूर्वमुक्ता। अथ 'नामैकदेशे नामग्रहणम्' इति न्यायमनुसृत्य 'भीमो भीमसेन' इत्यादिवत् अमा अमावास्या निंद्या। 'सदैव दर्शे पितृकर्म चैव नान्यद्विधेयं शुभपौष्टिकाद्यम्। मूढैः कृतं यत्र शुभोत्सवाद्यं विनाशमायात्यचिरादृशं तत्॥' इति वसिष्ठोक्तेः। अथ पितृदिनं माता च पिता च पितरौ, 'पुमान् स्त्रिया' इत्येकशेषः; पित्रोर्दिनं=मातापित्रोर्मरणदिनं। श्राद्धदिनमिति यावत्। तदपि निषिद्धम्। यदाह शार्ङ्गधरः—'भद्रार्धयामकुलिकं व्यतिपातं वैधृतिं च परिघार्धम्। क्रांतिसमत्वं जन्मास्संक्रांतिं क्षयदिनं पित्रोः॥' इति। अथ तिथिक्षयर्द्धी वर्ज्ये। क्षयश्च ऋद्धिश्च क्षयर्द्धी, तिथेः क्षयर्द्धी तिथिक्षयर्द्धी; तिथिक्षयस्तिथिवृद्धिश्चैते वर्ज्ये। अनयोः प्रसिद्धत्वाल्लक्षणं नोक्तम्। तत्र तिथिक्षयलक्षणम्। यत्र यो वारस्तिथिद्वयांतं स्पृष्ट्वा तृतीयतिथेः कंचिदादिमभागमपि स्पृशति तत्र वारे मध्यमा तिथिः क्षयसंज्ञा। यथा नवमी रवौ घटिकाद्वयं पुनर्दशमी रवौ षट्पंचाशद्घटिकाः ५६ एकादश्याश्च घटिकाचतुष्टयं रविवारेण सह संबद्धमिति दशमीतिथिः क्षयसंज्ञिता अवमसंज्ञितेत्यपि चाहुः॥ अथ तिथिवृद्धिलक्षणम्। यत्र या तिथिर्वारद्वयांतं स्पृष्ट्वा तृतीयवारस्यादिमं कंचिद्भागं स्पृशति तत्र सा तिथिर्वृद्धिसंज्ञा त्रिद्युस्पृगित्यपि चेत्याहुः। यथा-तृतीया रवौ अष्टपंचाशद्घटिकाः ५८, ततश्चतुर्थी सोमे षष्टिघटिकाः ६०, ततो भौमवासरे चतुर्थी घटिकात्रयं ३, अतश्चतुर्थी वारत्रयसंबंधात्तिथिर्वृद्धिसंज्ञा। यदाह वसिष्ठः—'स्युस्तिस्रस्तिथयो वारे एकस्मिन्नवमा तिथिः। तिथिर्वारत्रयं चैका त्रिद्युस्पृक् द्वेऽतिनिंदिते॥ कृतं यन्मंगलं तत्र त्रिद्युस्पृगवमे दिने। भस्मीभवति तत्क्षिप्रमग्नौ सम्यग्यथेंधनम्॥' इति। द्वेऽतिनिंदिते इत्यत्र संधिस्त्वार्षः। यत 'ईदूदेद्द्विवचनं प्रगृह्यम्' इति प्रगृह्यसंज्ञायां संध्यभावप्रसक्तेः। अथ शुभकृत्यावश्यकत्वे तिथिक्षयतिथिवृद्ध्योः परिहारमाह दोषापवादाध्याये वसिष्ठः—'अवमाख्यं तिथेर्दोषं केंद्रगो देवपूजितः। हंति यद्वत्पापचयं व्रतं द्वैवार्षिकं यथा॥ त्रिद्युस्पृगाह्वयं दोषं सौम्यः केंद्रगतः सदा। हंति यद्वत्पापचयमशून्यशयनव्रतम्॥' इति। अथ न्यूनाधि-

मासौ क्षयमासाधिकमासौ वर्ज्यौ । 'असंक्रांतिमासोऽधिमासः स्फुटं स्याद्द्विसंक्रांतिमासः क्षयाख्यः कदाचित्' इति द्वयोरपि लक्षणं सिद्धांतशिरोमणावभिहितम् । ग्रंथकृदपि संक्रांतिप्रकरणे (श्लो० २०)–'स्पष्टार्कसंक्रांतिविहीन उक्तो मासोऽधिमासः क्षयमासकस्तु । द्विसंक्रमः–' इति वक्ष्यति । एतच्च तत्रैव सम्यग्व्याख्यास्यते । तदुक्तं वसिष्ठसंहितायाम्—'यस्मिन्दर्शस्यांतादर्वागेवापरं दर्शम् । उल्लंघ्य भवति भानोः संक्रांतिः सोऽधिमासः स्यात् ॥ आद्यंतदर्शयोर्मध्ये भानोरेवांतयोर्यदा । संक्रांतिद्वितयं स्याच्चेत्स्यूनमासः स उच्यते ॥ मासप्रधानाखिलमेव कर्म मुक्त्वाखिलं कर्म न कार्यमत्र । यज्ञोपवासव्रततीर्थयात्राविवाहकर्मादि विनाशमेति ॥' इति । अथ कुलिकः वारसंबंधी मुहूर्तदोषो वर्ज्यः । तथा प्रहरार्धं वारसंबंधेनार्धयामा वर्ज्याः । यदाह वसिष्ठः—'निधनं प्रहरार्धे तु निःस्वत्वं यमघंटके । कुलिके सर्वनाशः स्याद्यात्रायां चैते न दोषदाः ॥' इति । कुलिकादीन् दोषान् ग्रंथकृदग्रे वक्ष्यति । अथ पातो महापातो महागणितसाध्यो व्यतीपातनामको वैधृतिनामकश्च वर्ज्यः । यदाह नारदः—'यस्मिन्दिने महापातस्तद्दिनं वर्जयेच्छुभे । अपि सर्वगुणोपेतं दंपत्योर्मरणप्रदम् ॥' इति । कश्यपोऽपि—'महावैधृतिपाताभ्यां दूषितं लग्नमुत्तमम् । राजावधूतं पुरुषं यद्वत्संपरित्यजेत् ॥' इति । पातः=व्यतीपातः । महाशब्दः प्रत्येकमभिसंबध्यते । महावैधृतिर्महाव्यतीपातश्च ताभ्यामित्यर्थः । महापातो नाम रवींदुक्रांतिसाम्यम् । तदानयनं तु गणितग्रंथेभ्यः सूर्यसिद्धांतादिभ्यो ज्ञेयम् । ततो महापातकालं निर्णीय तत्कालस्यातिसूक्ष्मत्वात्कस्मिन्काले मंगलकृत्यं निषिद्धमित्याशंक्य महापातस्थितिकालानयनमप्युक्तं तत्रैव । तत्प्रयोजनं सूर्यसिद्धांते—'आद्यंतकालयोर्मध्ये कालो ज्ञेयोऽतिदारुणः । प्रज्वलज्ज्वलनाकारः सर्वकर्मसु गर्हितः ॥ स्नानदानजपश्राद्धव्रतहोमादिकर्मसु । प्राप्यते सुमहच्छ्रेयस्तत्कालज्ञानतस्तथा ॥' इति । आद्यंतकालौ=स्पर्शमोक्षस्थितिरूपौ । सिद्धांतशिरोमणावप्युक्तम्–'पातस्थितिकालांतर्मंगलकृत्यं न शस्यते तज्ज्ञैः । स्नानजपहोमदानादिकमत्रोपैति खलु वृद्धिम् ॥' इति । यत्तु वसिष्ठेनोक्तम्—'महापातो वैधृतिश्च उपरागसमस्तदा । तस्माद्दिनत्रयं त्याज्यं मध्यपूर्वापराभिधम् ॥' इति । वराहेणापि बृहद्यात्रायामुक्तम्–'एष्यो धनं क्षपयति व्यतिपातयोगो मृत्युं ददाति नचिरादपि वर्तमानः । संतापशोकगदविघ्नभयान्यतीतस्तस्माद्दिनत्रयमपि प्रजह्यीत विद्वान् ॥' इति तदेतद्वचनद्वयमपि महापातोपयोगिगणिताशक्त्या कदा महापातः स्यादिति सूक्ष्ममहापातस्थितिकालाऽज्ञानाद्विवाहप्रकरणे (श्लो० ५०)'पंचास्याजौ' इति वक्ष्यमाणरीत्या महापातसंभावनापरया पातदिवसं निर्णीय पूर्वापरवर्तमानदिनानां त्यागपरमिति प्रतिभाति । 'यस्मिन्दिने महापातस्तद्दिनं वर्जयेच्छुभे' इति नारदवाक्यमप्येवमेव व्याख्येयम् । यदा तु महापातस्य स्थितिरूपसूक्ष्मकालज्ञानं स्यात्तदा 'स्थूलात् सूक्ष्मं ज्यायः' इति न्यायेन स एव पातमध्यकालो विवाहादिमंगलकृत्येषु त्याज्यः, अन्यथा गणितग्रंथेषु पात-

१ आद्यंतदर्शयोः अंतयोर्मध्ये एकस्मिन्मासे इत्यर्थः ।

स्थितिकालानयनस्य वैयर्थ्यंप्रसंग इति निष्कृष्टोऽर्थः। विष्कंभेति। विष्कंभवज्र-योगयोः प्रथमानिक्रमे कारणाभावादादिमं घटिकात्रयमेव वर्ज्यम्। तथा परि-घस्य परिघाख्ययोगस्य घटिकानामाद्यमर्धं त्रिंशद्घटिकात्मकं त्याज्यम्। शूले पंचादिमा नाड्यो वर्ज्याः। गंडातिगंडयोगयोरादिमाः षड् नाड्यो वर्ज्याः। व्याघातयोगे नवादिमा नाड्यो वर्ज्याः। यदाह श्रीपतिः-'परिघस्य चार्धम्। तिस्रस्तु योगे प्रथमे सवज्रे व्याघातसंज्ञे नव पंच शूले। गंडेऽतिगंडे च षडेव नाड्यः शुभेषु कार्येषु विवर्जनीयाः॥' इति। ननु 'सवज्रे' इदं कस्य विशेषणं-प्रथमयोगस्य वा व्याघातयोगस्य वा? भिन्नभिन्नघटिकानिर्देशादुभ-योस्तद्विशेषणमयुक्तम्। अत्र ब्रूमः-प्रथमस्यैव विशेषणम्, वज्रयोगसहिते प्रथमयोगे विष्कंभयोगे तिस्रो नाड्यो वर्ज्या इत्यर्थः। किमत्र प्रमाणम्? इति चेच्छृणु-कश्यपादिवाक्यस्वरसात्। यदाह कश्यपः—'विष्कंभवज्रयो-स्तिस्रः षट् च गंडातिगंडयोः। व्याघाते नव शूले तु पंच नाड्यस्तु गर्हिताः॥' इति। नारदोऽप्येवमेव। अनेन—'विष्कंभादिघटीत्रयं च नवकं व्याघात-वज्रोद्भवम्' इति वदन् महेश्वरः प्रत्याख्यातो भवति। एवं च—'विष्कंभाद्य-त्रिनाडीः शुभकृतिषु च षट् गंडयोः पंच शूले व्याघाते वज्रकेंऽकाः' इति केशवज्योतिर्विद्भिरपि चिंत्या॥ ३४॥ ३५॥

अथ पक्षरंध्रतिथीरावश्यकत्वे सति तत्तिद्वर्ज्यघटीश्चानुष्टुभाह—

वेदांगाष्टनवार्केंद्रपक्षरन्ध्रतिथौ त्यजेत्।
वस्वंकमनुतत्त्वाशाशरा नाडीः पराः शुभाः॥ ३६॥

वेदांगेति॥ चतुर्थी, षष्ठी, अष्टमी, नवमी, द्वादशी, चतुर्दशी; एताः पक्ष-रंध्रसंज्ञास्तिथयो ज्ञेयाः। आसु शुभकृत्यावश्यकत्वे सति क्रमादादिमाः वस्वं-कमनुतत्त्वाशाशरा नाडीस्त्यजेत्। यथा-चतुर्थ्यामादिमा अष्ट घटिकाः, षष्ठ्यां नव, अष्टम्यां चतुर्दश, नवम्यां पंचविंशतिः, द्वादश्यां दश, चतुर्दश्यां पंच घटिकास्त्याज्या इत्यर्थः। अथ परा उर्वरिता नाड्यः शुभकृत्ये शुभा ज्ञेयाः। यदाह दोषनिरूपणाध्याये वसिष्ठः—'चतुर्दशी चतुर्थी च अष्टमी नवमी तथा। षष्ठी च द्वादशी चैव पक्षच्छिद्राह्वया इमाः॥ क्रमादेतासु तिथिषु वर्जनीयाश्च नाडिकाः। भूताष्टमनुतत्त्वांकदश शेषास्तु शोभनाः॥ दोषनाडीषु यत्कर्म शुभं सर्वं विनश्यति। विवाहे विधवा नारी व्रात्यः स्याच्चोपनायने॥ सीमंते गर्भनाशः स्यात्प्राशने मरणं ध्रुवम्। अग्निना दह्यते क्षिप्रं गृहारंभे विशेषतः॥ राजराष्ट्रविनाशः स्यात्प्रतिष्ठायां विशेषतः। किमत्र बहुनोक्तेन कृतं कर्म विनश्यति॥' इति। कश्यपस्तु सर्वसाधारण्येन दशैव घटिकास्त्याज्या इत्याह—'अष्टमी द्वादशी षष्ठी पक्षरंध्रास्तु तासु च। मंगले सर्वदा त्याज्या नूनं हि दश नाडिकाः॥' इत्यनेन। एतस्यैव तिथिवारनक्षत्रयोगकरणात्मकस्य पंचांगस्य शुद्धिः पंचांगशुद्धिरित्युक्तं नारदेन—'तिथिवारर्क्षयोगानां करणस्य च मेलनम्। पंचांगमस्य शुद्धिः पंचांगशुद्धिरुदाहृता॥ यस्मिन्पंचांगदोषोऽस्ति तस्मिन्मुहूर्तं निरर्थकम्॥' इति॥ ३६॥

अथ कुलिककालवेलायमघंटकंटकदोषाननुष्टुभाह—

**कुलिकः कालवेला च यमघंटश्च कंटकः ।**
**वाराद्द्विघ्ने क्रमान्मंदे बुधे जीवे कुजे क्षणः ॥ ३७ ॥**

कुलिक इति ॥ वारात् वर्तमानवारात् मंदे शनैश्चरे गणिते सति योंऽको भवेत्तस्मिन् द्विगुणे योंऽकस्तत्संख्यः क्षणो मुहूर्तः कुलिको भवति । एवं वर्तमानवारात् बुधे जीवे कुजे गणिते ततो द्विगुणिते सति येंऽकास्ते क्रमात् कालवेला-यमघंट-कंटक-संज्ञका दुष्टमुहूर्ताः स्युः । यथा-रवितः शनिः सप्तसंख्याकः, स द्विगुणश्चतुर्दश जाताः, अतस्तत्संख्याको मुहूर्तः कुलिकसंज्ञो रविवारे भवति । एवं रवावष्टमो मुहूर्तः कालवेला, तथा रवौ दशमो मुहूर्तो यमघंटः, तथा रवौ षष्ठो मुहूर्तः कंटकसंज्ञ इत्यर्थः । एवं सोमवारादावपि कुलिककालवेलायमघंटकंटकाः स्युरित्यर्थः । यदाह कश्यपः-'शैलाक्षवेदा ७-५-४ मर्काब्धिनगाः ६-४-७ पंचाग्निबाहवः ५-३-२ । वेदाक्षिबाणा ४-२-५ लोकैकभा ३-१-८ स्त्वक्षिगिरिवह्नयः २-७-३ ॥ चन्द्रर्तुतर्काः १-६-६ कुलिकयमघंटार्धयामकाः । प्रहरार्धप्रमाणास्ते भानुवारादितः क्रमात् ॥' इति । अत्रार्धयामः संपूर्णस्त्याज्योऽन्वर्थत्वात् । कुलिकयमघंटयोस्तूत्तरार्धं त्याज्यम् । उक्तं च दैवज्ञमनोहरे-'अहनि निशि गजांशः स्वे दिनेशादिकानां भवति तु गुरुभौमज्ञार्किकालक्रमेण । प्रभवति यमघंटः कंटकः कालवेला कुलिक इति विरुद्धस्तत्परार्धं निषिद्धम् ॥' इति । गजांशः=अर्धप्रहरः । एते मुहूर्तदोषा दिनषोडशांशत्वेन ज्ञेयाः । गजांश इत्युक्त्वा तत्परार्धं निषिद्धमित्युक्तः । दोषफलमाह वसिष्ठः-'निधनं प्रहरार्धे तु निःस्वत्वं यमघण्टके । कुलिके सर्वनाशः स्याद्रात्रावेते न दोषदाः ॥' इति । कंटक-कालवेलयोरन्वर्थत्वादत्र फलं नोक्तम् । 'रात्रावेते न दोषदाः' इत्यस्यार्थवादो रत्नकोशे-'तमस्विनीगंधमुपेत्य वारदोषास्तथा शक्तिमनाप्नुवंतः । अंधं समासाद्य विलासिनीनां कटाक्षबाणा इव निष्फलाः स्युः ॥' इति । तथा च 'न वारदोषाः प्रभवंति रात्रौ देवेज्यदैत्येज्यदिवाकराणाम् । दिवा शशांकार्कजभूसुतानां सर्वत्र निंद्यो बुधवारदोषः' इति ज्योतिर्निबंधकृदुक्तिः संगच्छते । अथ शुभकृत्यावश्यकत्वे देशभेदेन यमघंटकंटकादिदोषपरिहारमाह गर्गः-'विंध्यस्योत्तरकूले तु यावदाहिमाचलम् । यमघं(कं)टकदोषोऽस्ति नान्यदेशेषु विद्यते ॥ मत्स्यांगमगधांध्रेषु यमघंटस्तु दोषकृत् । काश्मीरे कुलिकं दुष्टमर्धयामस्तु सर्वतः ॥' इति ॥ ३७ ॥

अथ सूर्यादिवारेषु शिष्याणां सद्य एव दोषज्ञानार्थं दुर्मुहूर्तादिनामकान् मुहूर्तदोषान् शार्दूलविक्रीडितवसंततिलकाभ्यामाह—

**सूर्ये षट्स्वरनागदिग्मनुमिताश्चंद्रेऽङ्घिषट्कुंजरां-**
**कार्का विश्वपुरंदराः क्षितिसुते ग्रम्यङ्घितर्कादिशः ।**

सौम्ये ध्वब्धिगजांकदिक्ष्वनुमिता जीवे द्विपड्भास्कराः
शक्राख्यास्तिथयः कलाश्च भृगुजे वेदेषुतर्कग्रहाः ॥ ३८ ॥

दिग्भास्करामनुमिताश्च शनौ शशिद्वि-
नागा दिशो भवदिवाकरसंमिताश्च ।
दुष्टक्षणः कुलिककंटककालवेलाः
स्युश्चार्धयामयमघंटगताः कलांशाः ॥ ३९ ॥

**सूर्य इति** ॥ **दिगिति** ॥ रविवारे-षष्ठसप्तमाष्टमदशमचतुर्दशसंख्या मुहूर्ता निंद्याः । सोमवारे-चतुर्थषष्ठाष्टमनवमद्वादशत्रयोदशचतुर्दशमुहूर्ता निंद्याः । भौमे-द्वित्रिचतुःषड्दशसंख्या मुहूर्ता निंद्याः । बुधे-द्विचतुरष्टनवदशचतुर्दश-संख्या मुहूर्ता निंद्याः । गुरौ-द्विषड्द्वादशचतुर्दशपंचदशषोडशसंख्या मुहूर्ता निंद्याः । शुक्रे-चतुःपंचषट्नवदशद्वादशचतुर्दशसंख्या मुहूर्ता निंद्याः । शनौ-एकद्विवसुदशैकादशद्वादशसंख्याका मुहूर्ता निंद्याः । एषु मुहूर्तेषु केषुचित् दुष्टक्षणो दुर्मुहूर्तो ज्ञेयः । केषुचित्कुलिककंटककालवेलाः स्युः । केषुचिदर्धयाम-यमघंटाः स्युः । तत्प्रमाणमाह **कलांशा इति** । कलांशाः=षोडशांशाः । दिन-स्येति शेषः । यस्मिन्दिने कुलिकादिजिज्ञासा तद्दिने यद्दिनमानं तत्षोडशभिर्भाज्यं, यल्लब्धं घटीपलात्मकं तन्मुहूर्तपरिमाणं; तेषु मुहूर्तेषु यथासंभवं दुर्मुहूर्तादयो दोषा ज्ञातव्याः । तथा हि रवौ चतुर्दशसंख्यो मुहूर्तो दुर्मुहूर्तः, कुलिकश्च षष्ठः कंटकसंज्ञः सप्तमाष्टमावर्धयामाख्यौ । तत्राष्टमः कालवेलाख्यश्च, दशमो यमघ-ण्टाख्यः । एवं सोमवारादिष्वपि बोद्धव्यम् । तत्र कुलिककंटककालवेलायम-घंटज्ञानं पूर्वश्लोकेऽभ्यधायि । दुर्मुहूर्तार्धयामान् विवाहप्रकरणे (श्लो० २३) 'रवाव-र्यमा-' इत्यादिना वक्ष्यति । ननु दुर्मुहूर्तकुलिकादेर्वाचनिकस्यार्थस्य 'सूर्ये षट्स्वर-' (श्लो० ३७) इत्यादिलघुप्रकारेणाभिधानात्पूर्वं परस्ताच्च पुनर्ग्रंथोक्तप्रकाराभिधान-मयुक्तमिति प्रतिभाति । तथापि दृष्टांतार्थमिदमभिधानम् । तथा हि-ग्रन्थेषु दुर्मु-हूर्तकुलिककण्टककालवेलार्धयामयमघंटानां श्लोकषट्केनाभिधानात् व्याख्या-नगम्यार्थत्वाच्चेति गौरवम् । अत्र तु सर्वमप्यर्थं शब्दतः संक्षिप्य श्लोकद्वयेन व्याख्यानानपेक्षमभिधानमिति लाघवमिति दृष्टांतदर्शनद्वारा सर्वत्र लाघव-करणसूचनार्थं शिष्याणामत्र ग्रंथे पठनादरातिशयार्थं च पुनरुक्तिः ॥३८॥३९॥

अथ विवाहादिशुभकृत्ये होलिकाष्टकनिषेधमनुष्टुभाह—

विपाशेरावतीतीरे शुतुद्र्याश्च त्रिपुष्करे ।
विवाहादिशुभे नेष्टं होलिकाप्राग्दिनाष्टकम् ॥ ४० ॥

**विपाशेति** ॥ विपाशा इरावती चैते नद्यौ पश्चिमदेशे प्रसिद्धे । एतयो-र्नद्योस्तीरे तीरवर्तिदेशेषु, तथा शुतुद्रिर्नदी, सापि तत्रैव प्रसिद्धा,-तस्या अपि

तीरवर्तिदेशेषु; तथा त्रिपुष्कराख्ये देशे च होलिका फाल्गुनपौर्णमास्यामग्निदाहः, ततः प्राक् दिनाष्टकं विवाहादिशुभकृत्ये नेष्टं निषिद्धमित्यर्थः । अत्र तावद्धोलिकाष्टकनिषेधः शीघ्रबोधे-'शुक्लाष्टमीं समारभ्य फाल्गुनस्य दिनाष्टकम् । पूर्णिमावधिकं त्याज्यं होलाष्टकमिदं शुभे ॥' इति । अस्यापवादोऽपि तत्रैव-'शुतुद्र्यां च विपाशायामैरावत्यां त्रिपुष्करे । होलाष्टकं विवाहादौ त्याज्यमन्यत्र शोभनम् ॥' इति ॥ ४० ॥

मृत्युक्रकचदग्धादीनिंदौ शस्ते शुभाजगुः ।
केचिद्यामोत्तरं चान्ये यात्रायामेव निंदितान् ॥ ४१ ॥

मृत्य्विति ॥ मृत्यवो मृत्युयोगा आनंदादिष्वष्टाविंशतियोगेषु 'दास्त्रादर्के' (श्लो० २५) इत्यादिना प्रागुक्ताः । क्रकचः 'षष्ठ्यादितिथयो मंदाद्विलोमम्' (श्लो० ६) इत्युक्तः । दग्धयोगः 'सूर्येशपंचाग्निरसाष्टनंदा' (श्लो० ८) इत्युक्तः । आदिशब्देन विषयोगा हुताशनयोगाश्च गृह्यंते । चंद्रे शस्ते समीचीने सति । समीचीनत्वं गोचरप्रकरणे वक्ष्यते । मृत्युक्रकचदग्धादीन् शुभाननिष्टफलमपास्य शुभफलदान् जगुरूचुः । यदाह राजमार्तण्डः-'क्रकचो मृत्युयोगाख्यो दिनं दग्धं तथैव च । चंद्रे शुभे क्षयं यांति वृक्षा वज्रहता इव ॥' इति । केचिदाचार्या यामोत्तरं मृत्युक्रकचदग्धादीन् शुभाजगुः । तथा च दीपिकायां राजमार्तण्डः-'उत्पाते यमघंटे च काणे च क्रकचे तथा । तिथौ दग्धे च काले च प्राग्यामात्परतः शुभम् ॥' इति । अथान्ये आचार्या मृत्युक्रकचदग्धादीन् यात्रायामेव निंदिताञ्जगुः । विवाहादीनि तु प्रतिषेधाभावादवश्यं कार्याणि । यदाह लल्लः-'वारर्क्षतिथियोगेषु यात्रामेव विवर्जयेत् । विवाहादीनि कुर्वीत गर्गादीनामिदं वचः ॥' इति । वारर्क्षतिथियोगेषु निंद्येष्विति शेषः ॥ ४१ ॥

अथ पुनरप्यपवादं भुजंगप्रयातेनाह—

अयोगे सुयोगोऽपि चेत्स्यात्तदानी-
मयोगं निहत्यैष सिद्धिं तनोति ।
परे लग्नशुद्ध्या कुयोगादिनाशं
दिनार्धोत्तरं विष्टिपूर्वं च शस्तम् ॥ ४२ ॥

अयोग इति ॥ अयोगे क्रकचादौ सति सुयोगः सिद्धियोगोऽपि चेत्स्यात्तदा एष सिद्धियोगः अयोगं अयोगफलं निहत्य सिद्धिं कार्यसिद्धिं तनोति निष्पादयति । यदाह राजमार्तण्डः—'अयोगः सिद्धियोगश्च द्वावेतौ भवतो यदि । अयोगो हन्यते तत्र सिद्धियोगः प्रवर्तते ॥' इति । अन्यच्च-'हंत्यमृताख्यो योगः सर्वाण्यशुभानि लीलया नियतम् । न भवति पुनरिह शक्तो वैधृतिविष्टिव्यतीपाते ॥' इति । यत्तु दीपिकाकारवचनम्—'यदि विष्टिर्व्यतीपातो दिनं वाप्यशुभं भवेत् । हन्यतेऽमृतयोगेन भास्करेण तमो यथा ॥'

इति तदमृतयोगस्यातिप्राशस्त्यसूचनार्थं, न तु भद्राव्यतीपातादिदोषापवादकम्, 'हंत्यमृताख्यो योग' इत्येकवाक्यताबलात्। अथ परे आचार्या लग्नशुध्या समीचीनलग्नबलेन कुयोगानां मृत्युक्रकचादीनां नाशं वदंतीति शेषः। यदाह स एव—'यत्र लग्नं विना कर्म क्रियते शुभसंज्ञकम्। तत्र तेषामयोगानां प्रभावाज्जायते फलम्॥' अथावश्यकशुभकृत्ये कालांतरप्रतीक्षाऽयोग्यतायां परिहारमाह—विष्टिपूर्वं विष्टिभद्रा तत्पूर्वं तदादिव्यतीपातादिकं दिनार्धोत्तरं मध्याह्नादनंतरं शस्तं प्राहुः। अर्थान्मध्याह्नं यावत्कालो निषिद्धः। 'विष्टिरंगारकश्चैव व्यतीपातश्च वैधृतिः। प्रत्यरं जन्मनक्षत्रं मध्याह्नात्परतः शुभम्॥' इति तेनैवोक्तत्वात्॥ ४२॥

अथ भद्रा निषिद्धेति पूर्वमुक्तं तदधुना प्रस्तावात्तन्निषिद्धकालं शालिनीछंदसाह—

**शुक्ले पूर्वार्धेऽष्टमीपंचदश्योर्भद्रैकादश्यां चतुर्थ्यां परार्धे।**
**कृष्णेऽन्त्यार्धे स्यात्तृतीयादशम्योः पूर्वे भागे सप्तमीशंभुतिथ्योः॥**

शुक्ले इति॥ शुक्लपक्षेऽष्टम्यां पूर्णिमायां च पूर्वार्धे भद्रा भवति। एकादश्यां चतुर्थ्यां चोत्तरार्धे भद्रा। अथ कृष्णे कृष्णपक्षे तृतीयायां दशम्यां चान्त्यार्धे उत्तरार्धे भद्रा स्यात्। सप्तम्यां शंभुतिथौ चतुर्दश्यां च पूर्वभागे पूर्वार्धे भद्रा स्यात्। पूर्वे इति 'पूर्वादिभ्यो नवभ्यो वा' इति स्मिन्भावपक्षे रूपम्। अष्टम्यादीनां तिथीनां गतभोग्यघटिकायोगार्धं भद्राप्रमाणमिति यावत्। 'तिथ्यर्गतैष्यैक्यदलं तन्मानं करणं भवेत्' इति बोपदेवोक्तेः। तिथ्यर्धभागं सर्वेषां करणानां प्रकल्पयेत्' इति सूर्यसिद्धांतोक्तेश्च। उक्तं च दीपिकायाम्—'तृतीयादशमीशेषे तत्पंचम्योस्तु पूर्वतः। कृष्णे विष्टिः सिते तद्वत्तासां परतिथिष्वपि॥' इति। बृहस्पतिना तु स्पष्टमुक्तम्—'सिते चतुर्थ्यामन्त्यार्धमष्टम्याद्यार्धमेव च। एकादश्यां परार्धे तु पूर्वार्धे पूर्णशीतगौ॥ कृष्णे तृतीयान्त्यार्धं हि सप्तम्याद्यार्धमेव च। दशम्यामुत्तरार्धं तु चतुर्दश्यर्धमादितः॥ विष्ट्याख्योऽयं महादोषः कथितोऽत्र समस्तगः। तदानीं कृतसत्कर्म कर्त्रा सह विनश्यति॥' इति। पूर्णशीतगौ=पूर्णिमायाम्। रत्नकोशे प्रत्येकं भद्रानामानि—'हंसी नंदिन्यपि च त्रिशिराः सुमुखी करालिका चैव। वैकृत्यनिरौद्रमुखी चतुर्मुखी विष्टयः क्रमशः॥' चतुर्थ्यादितिथिसंबंधिभद्रानामाभिधानं नाममात्रश्येन फलतारतम्यसूचनार्थम्। भद्रास्वरूपं रत्नमालायाम्—'उद्बद्धोद्भटतरपिंडिकाऽतिकृष्णा दंष्ट्रोग्रा पृथुहनुगंडदीर्घनासा। कार्यघ्नी हुतवहलक्ष्मुग्निरंनी विश्रांतः पतति समंततोऽत्र विष्टिः॥' इति॥ ४३॥

अथ चतुर्थ्यादितिथिषु भद्राया मुखपुच्छविभागादिकं शार्दूलविक्रीडितेनाह—

**पंचद्र्यद्रिकृताष्टरामरसभूयामादिघट्यः शरा**
**विष्टेरास्यमसद्गजेंदुरसरामाद्र्यश्विबाणाब्धिषु।**

---

१ तृतीयां दशमीं चारभ्य पंचम्योः सप्तमीचतुर्दश्योरित्यर्थः। २ तद्वत्—परपूर्वभागे विष्टिर्भवतीत्यर्थः। ३ तासां=कृष्णपक्षीयतिथीनाम्। ४ वैकृतिरौद्रमुखी इति पाठः

**यामेष्वंत्यघटीत्रयं शुभकरं पुच्छं तथा वासरे**
**विष्टिस्तिथ्यपरार्धजा शुभकरी रात्रौ तु पूर्वार्धजा ॥ ४४ ॥**

**पंचेति** ॥ चतुर्थ्यादितिथीनां क्रमतः पंचादिप्रहरेषु शराः पंच नाड्यः आदिमा विष्टेर्भद्राया आस्यं मुखं। यथा- चतुर्थ्याः पंचमप्रहरआदिभूताः पंच घट्यो भद्रामुखम्। एवमष्टम्या द्वितीयप्रहरे, एकादश्याः सप्तमप्रहरे, पौर्णमास्याश्चतुर्थप्रहरे, तृतीयाया अष्टमप्रहरे, सप्तम्यास्तृतीयप्रहरे, दशम्याः षष्ठप्रहरे, चतुर्दश्याः प्रथमप्रहरे भद्रामुखमित्यर्थः। तद्भद्राया मुखमसदशुभमित्यर्थः। अथ पुनश्चतुर्थ्यादितिथीनां क्रमेण गजादिप्रहरेषु अंत्यम्, अंते भवमंत्यं 'दिगादिभ्यो यत्' इति यत्। घटीत्रयं पुच्छं पुच्छसंज्ञं तच्छुभकरं समस्तकार्येष्वित्यर्थः। यथा-चतुर्थ्यां अष्टमप्रहरस्यांत्यघटीत्रयं भद्रापुच्छं, एवमष्टम्याः प्रथमप्रहरस्य, एकादश्याः षष्ठप्रहरस्य, पूर्णिमायास्तृतीयप्रहरस्य, तृतीयायाः सप्तमप्रहरस्य, सप्तम्या द्वितीयप्रहरस्य, दशम्याः पंचमप्रहरस्य, चतुर्दश्याश्चतुर्थप्रहरस्यांत्यघटीत्रयं भद्रापुच्छमित्यर्थः। यदाह गुरुः-'भूतदसस्वरांभोधिवसुबाणांगरूपकाः। यामेष्वेषु क्रमादास्यं भवेत्तिथ्यर्धविष्टिषु ॥' इति। व्यवहारसमुच्चये—'दशम्यामष्टम्यां प्रथमघटिकापंचकपरं हरिद्युः सप्तम्यां द्विदश- १२ घटिकांते त्रिघटिकम्। तृतीया राकायां स्वयम २० घटिकाभ्यः परभवं शुभं विष्टेः पुच्छं शिवतिथिचतुर्थ्योस्तु विरमे ॥' इति। हरिद्युः=एकादशी। राका=पूर्णिमा। ननु भद्रा देवतेत्यभिधीयते, तस्याः पुच्छकथनात् पशुत्वसिद्धिर्दृश्यते। देवता च कथं पशुर्भवितुमर्हति? सत्यम्। दैत्येन्द्रैर्देवेषु पराजितेषु रुद्रस्य ज्वालामालाकुलनेत्रालोकितशरीराद्देवी भद्रासंज्ञा मुखपुच्छादिसन्युत्पन्ना सती दैत्याञ्जघान। यदुक्तं श्रीपतिना—'दैत्येंद्रैः समरेऽमरेषु विजितेष्वीशः क्रुधा दृष्टवान् स्वं कायं किल निर्गता खरमुखी लांगलिनी च त्रिपात्। विष्टिः सप्तभुजा मृगेंद्रगलका क्षामोदरी प्रेतगा दैत्यघ्नी मुदितैः सुरैस्तु करणप्रांते नियुक्ता सदा ॥' इति। करणान्याह गर्गः—'बवं च बालवं चैव कौलवं तैतिलं गरम्। वणिजं विष्टिमित्याहुः करणानि चराणि तु ॥' इति। विष्टिः=भद्रा। 'अंते कृष्णचतुर्दश्याः शकुनिर्दर्शभागयोः। भवेच्चतुष्पदं नागं किंस्तुघ्नं प्रतिपद्दले ॥' इति। अतः 'तिथ्यर्धभागः करणम्' इत्युक्तेः प्रतिपत्पूर्वार्धे स्थिरकरणं किंस्तुघ्नं, ततो बवकरणं प्रतिपद्द्वितीयार्धे। बालवकौलवकरणे द्वितीयायाः पूर्वोत्तरार्धयोः, तैतिलगरकरणे तृतीयापूर्वोत्तरार्धयोः। चतुर्थीपूर्वार्धे वणिक्, उत्तरार्धे तु भद्रा। एवं पंचमीषष्ठीसप्तमीषु बवबालवकौलवतैतिलगरवणिक्करणानि भवंति। ततोऽष्टम्या आद्यर्धे भद्रा भवति॥ एवं पुनःपुनरावृत्तावुक्ततिथिषु भद्रा ज्ञेया। अत एवोक्तम् 'शुक्ले पूर्वार्धेऽष्टमीपंचदश्योः' (श्लो० ४३) इत्यादि। एवं चतुर्दश्याः पूर्वार्धे भद्रा। उत्तरार्धादारभ्य शकुन्यादीनि स्थिरकरणानि चत्वारि। **भद्राकृत्यमाह वसिष्ठः**—'वधबंधविषाग्न्यस्त्रच्छेदनोच्चाटनादि यत्। तुरंगमहिषोष्ट्रादि-

कर्म विष्ट्यां तु सिध्यति ॥ न कुर्यान्मंगलं विष्ट्यां जीवितार्थी कदाचन । कुर्वन्नज्ञस्तदा क्षिप्रं तत्सर्वं नाशतां व्रजेत् ॥' इति । अत्र अंगविभागः फलं च कश्यपसंहितायाम्—'मुखे पंच गले त्वेका वक्षस्येकादश स्मृताः । नाभौ चतस्रः षट् कट्यां तिस्रः पुच्छे तु नाडिकाः ॥ कार्यहानिर्मुखे मृत्युर्गले वक्षसि निःस्वता । कट्यामुन्मत्तता नाभौ च्युतिः पुच्छे ध्रुवो जयः ॥' इति । अयं च भद्रांगविभागो नाडीनां त्रिंशतोक्तः । त्रिंशतो न्यूनाधिकत्वे तु त्रैराशिकेन मुखादीनामंगानां विभागज्ञानम् । यथा–यदि नाडीत्रिंशता इदमुक्तमंगपरिमाणं तदिष्टपरिमाणेन किमिति त्रैराशिकम् । एवं सति उक्तांगपरिमाणं भद्राभोगमितघटीभिः संगुण्य त्रिंशता भाज्यं, लब्धं स्पष्टोऽगविभागः । त्रैराशिकस्वरूपं लीलावत्यामुक्तम्—'प्रमाणमिच्छा च समानजाती आद्यंतयोस्तत्फलमन्यजाति । मध्ये तदिच्छाहतमाद्यहृत्स्यादिच्छाफलं व्यस्तविधिर्विलोमे ॥' इति । तत्र मुखादिकालो रत्नमालायाम्—'जलशिखिशशिरक्षःशर्वकीनाशवायुत्रिदशपतिककुप्सु प्रोक्तमास्यं हि विष्टेः । नियतमृषिभिराशासंख्ययाऽक्रमेण स्फुटमिह परिहार्यं मंगलेष्वेतदेव ॥' इति । जलं=वरुणः, कीनाशः=यमः । शुक्लचतुर्थ्यां उत्तरार्धे पश्चिमदिशि भद्रामुखं तथाशासंख्ययाऽक्रमेण पंचमे प्रहरे भवति । अर्थादेव भद्रायाः प्रहरचतुष्टयाधिकस्थितिभावादंते एव घटिकात्रयं पुच्छम् । ततोऽष्टम्यां द्वितीयप्रहरे तेन प्रकारेण आग्नेय्यां दिशि मुखम् । मुखाच्च प्राक् पुच्छमिति प्रथमप्रहरांत एव पुच्छं घटिकात्रयमित्येवं सर्वास्वपि भद्रातिथिष्ववगंतव्यम् । प्रयोजनमपि तत्रैव–'मनुवसुमुनितिथियुगदशशिवगुणसंख्यासु तिथिषु पूर्वस्याः । आयाति विष्टिरेषा पृष्ठे शुभदा पुरस्त्वशुभा ॥' इति । तदेतदात्ययिककार्यसंभवे सति मुखदिक्संमुखयात्रानिषेधकमवधेयम् । ग्रंथांतरे अन्यदप्युक्तम्–'असिते सर्पिणी ज्ञेया सिते विष्टिस्तु वृश्चिकी । सर्पिण्यास्तु मुखं त्याज्यं वृश्चिक्याः पुच्छमेव च ॥' इति । अथ परिहारमाह—तथेति । विष्टिस्तिथ्यपरार्धजा तिथ्युत्तरार्धे संभूता वासरे दिवसे यदि स्यात् तदा शुभकरी । तेनैव प्रकारेण तिथिपूर्वार्धजा भद्रा रात्रौ चेत्स्यात्तदा शुभा शुभकरी स्यात् । उक्तं च—'रात्रिभद्रा यदाऽह्नि स्याद्दिवाभद्रा यदा निशि । न तत्र भद्रादोषः स्यात्सा भद्रा भद्रदायिनी ॥' इति । रात्रिभद्रा=तिथ्युत्तरार्धोद्भवा; दिवाभद्रा=तिथिपूर्वार्धोद्भवा । अमुमर्थं स्पष्टमाह गुरुः—'निशि पूर्वार्धजा विष्टिर्दिवा चापरतः शुभा । क्रमागता तु या विष्टिः सैव हालाहलोपमा ॥' इति । लल्लोऽपि—'दिवा परार्धजा विष्टिः पूर्वार्धोत्था यदा निशि । तदा विष्टिः शुभायेति कमलासनभाषितम् ॥' ब्रह्मसिद्धान्तेऽपि—'दिवा परार्धजा विष्टिर्विष्टिरेव दिवानिशोः । सा त्याज्या त्वन्यथा विष्टिः सर्वकर्मशुभप्रदा ॥' इति । ननु यत्तु नारदकश्यपादिभिरुक्तम्—'करणानि बवादीनि शुभसंज्ञानि षट् क्रमात् । क्रमायाताऽक्रमायाता विष्टिर्नेष्टा तु मंगले ॥' इति । अत्र क्रमायाता=दिवारात्रिक्रमेणागता; अक्रमायाता=दिवाभद्रा रात्रौ, रात्रिभद्रा च दिवेत्यर्थः । एवं सति

द्विविधाया अपि भद्राया दोषवत्त्वोक्तेः पूर्वोक्तपरिहाराभिधानमयुक्तम्। उच्यते—इदमेव कृष्णायामेति वचनं ज्ञापकमुक्तार्थस्य। अन्यथा सामान्यतो भद्रा दुष्टेत्युक्ते द्विविधभद्राया दोषवत्त्वसिद्धेरनर्थकमिदं स्यात्। तस्माच्छुभकार्याणां भद्रारूपदुष्टदिनव्यतिरिक्तकालप्रतीक्षायोग्यत्वे तत्रैव कार्यं, न दुष्टदिने। 'अबाधेनोपपत्तौ बाधो न न्याय्यः' इति न्यायाद्दूषणस्य निषेध एव तात्पर्याच्च। अवश्यकर्तव्यस्य तु शुभकर्मणः कालांतरप्रतीक्षामसहमानस्यैवमादिपरिहारमाश्रित्य दुष्टदिने कृतिरुचितैव। 'विष्टिरंगारकश्चैव-' इत्यपि परिहार एतत्पर एवेत्यलं पल्लवितेन ॥ ४४ ॥

अथ भद्रानिवासं तत्फलं चानुष्टुभाह—

कुंभकर्कद्वये मर्त्येऽब्जे स्वर्गेऽजात्त्रयेऽलिगे।
स्त्रीधनुर्जूकनक्रेऽधो भद्रा तत्रैव तत्फलम् ॥ ४५ ॥

कुंभेति ॥ अब्जे चंद्रमसि कुंभद्वये कुंभमीनस्थे कर्कद्वये कर्कसिंहराशिस्थिते मर्त्ये भद्रा मर्त्ये मनुष्यलोके तिष्ठति। अथ मेषादित्रये मेषवृषमिथुनस्थितेऽलिगे वृश्चिकस्थिते चंद्रे स्वर्गे भद्रा तिष्ठति। कन्याधनुस्तुलामकरराशिस्थितेऽधः पाताललोके भद्रा तिष्ठति। अथ यत्र भद्रा तत्रैव मर्त्यस्वर्गपातालेषु फलं स्वोक्तशुभाशुभफलं ददातीत्यपवादद्वारा प्रयोजनमुक्तं भवति। उक्तं च—'मेषोक्षकौर्प्यमिथुने घटसिंहमीनकर्केषु चापमृगतौलिसुतासु चंद्रे। स्वर्मर्त्यनागनगरीः क्रमशः प्रयाति विष्टिः फलान्यपि ददाति हि तत्र देशे ॥' इति। भूपालवल्लभे—'कन्यातुलामकरधन्विषु नागलोके मेषालिवैणिकवृषेषु सुरालये स्यात्। पाठीनसिंहघटकर्कटकेषु मर्त्ये चंद्रे वदंति मुनयस्त्रिविधां हि विष्टिम् ॥' इति। पाठीनः=मीनः ॥ ४५ ॥

एवं महता ग्रंथसंदर्भेण पंचांगदूषणान्युक्तानि, अधुना कालाशुद्धौ निषेध्यवस्तूनि शार्दूलविक्रीडिताभ्यामाह—

वाप्यारामतडागकूपभवनारंभप्रतिष्ठे व्रता-
रंभोत्सर्गवधूप्रवेशनमहादानानि सोमाष्टके।
गोदानाग्रयणप्रपाप्रथमकोपाकर्मवेदव्रतं
नीलोद्वाहमथातिपन्नशिशुसंस्कारान्सुरस्थापनम् ॥ ४६ ॥
दीक्षामौंजिविवाहमुंडनमपूर्वं देवतीर्थेक्षणं
संन्यासाग्निपरिग्रहौ नृपतिसंदर्शाभिषेकौ गमम्।
चातुर्मास्यसमावृती श्रवणयोर्वेधं परीक्षां त्यजे-
द्वृद्धत्वास्तशिशुत्व इज्यसितयोर्न्यूनाधिमासे तथा ॥ ४७ ॥

वाप्यारामेति ॥ दीक्षेति ॥ वापी=दीर्घिका, आरामः=उपवनं, तडागः=

१ वैणिकं=मिथुनं, तत्स्वरूपे 'सवीण'मिति वराहोक्तेः।

पुष्करिणी, कूपः प्रसिद्धः, भवनं=गृहं; एतेषामारंभप्रतिष्ठे-आरंभः=निर्माणं, प्रतिष्ठा=उत्सर्गः । तत्र गृहप्रतिष्ठा गृहप्रवेशो ज्ञेयः । व्रतारंभोत्सर्गौ- व्रतानां= अनंतशिवरात्रिव्रतादीनां आरंभः, उत्सर्गः=अनंतव्रतादीनामुद्यापनं, महादानानि=षोडशमहादानानि, सोमः=सोमयागः, अष्टका=अष्टकाश्राद्धं, गोदानं= केशांतसंज्ञं कर्म, आग्रयणं=नवान्नेष्टिः, प्रपा=जलशाला, 'प्रपा पानीयशालिका' इत्यभिधानात् । महाराष्ट्राः 'पाणपोई' इति वदंति । 'पवसरा' इति कान्यकुब्जाः । प्रथमकोपाकर्म=प्रथमारभ्यमाणं श्रावणीकर्म, वेदव्रतं=महानाम्न्यादित्रयं महानाम्नीव्रतं, उपनिषद्व्रतं, महाव्रतं च; नीलोद्वाहः=नीलशब्दवाच्यः काम्यो वृषोत्सर्गः, नत्वेकादशाहे क्रियमाणः; तस्य तदैव विहितत्वान्मुहूर्तविचारानुन्मेषः । अतिपन्नशिशुसंस्काराः=अतिपन्ना अतिक्रांता जातकर्मनामकर्मादयः शिशूनां संस्काराः, दीक्षा=मन्त्रग्रहणादिका, मुण्डनं=चौलं, अपूर्वं देवेक्षणं तीर्थेक्षणं च, अग्निपरिग्रहः=अग्निहोत्रमध्याधानं, चातुर्मास्यं=चातुर्मास्याख्यो यागः, समावृत्तिः=समावर्तनं मौंजीमोक्षः, श्रवणयोर्वेधः=कर्णवेधः, परीक्षा= तप्तमाषादिरूपा, दिव्यमिति यावत् । अन्यानि कर्माणि नामतः स्पष्टानि । एतानि सर्वाणि कर्माणि त्यजेन्न कुर्यात् । इज्यसितयोर्बृहस्पतिशुक्रयोर्वृद्धत्वे अस्तत्वे शिशुत्वे बाल्ये च तथा न्यूनाधिमासे क्षयमासे अधिकमासे च न कुर्यात् । अयं च निषेधः प्रथमोपक्रांतकृत्येषु ननु नित्यवदारब्धवार्षिकयात्रादौ। अत्र मूलवचनानि लिख्यंते । तत्र शुक्रास्तादिषु ज्योतिःसारसागरे ऋक्षोच्चयः—'वापीकूपतडागयागगमनं क्षौरं प्रतिष्ठा व्रतं विद्या मंदिरकर्णवेधनमहादानं वनं सेवनम् । तीर्थस्नानविवाहदेवभवनं मन्त्रादि देवेक्षणं दूरेणैव जिजीविषुः परिहरेदस्तंगते भार्गवे ॥ बाले शुक्रे वृद्धे जीवे वृद्धे शुक्रे जीवे बाले । जीवे सिंहे सिंहादित्ये जीवादित्ये नष्टे जीवे ॥ तथा मलिम्लुचे मासि सुराचार्ये तथाऽस्तगे । वापीकूपतडागादिक्रियाः प्रागुदितास्त्यजेत्॥' इति । वनम्=आरामादि । सेवनं राजादीनाम् । नष्टे जीवे=नष्टबले नीचस्थिते गुराविति । [illegible]:—'उपनयनं गोदानं परिणयनगृहप्रवेशगमनानि । अस्तमितेषु न कुर्यात्सुरगुरुभृगुपुत्रचंद्रेषु ॥' इति । शातातपः—'अस्तंगते गुरौ शुक्रे बाले वृद्धे मलिम्लुचे । उद्यापनमुपारंभं व्रतानां नैव कारयेत् ॥' अस्तमयादिफलमाह बादरायणः—'गुरोरस्ते पतिं हन्याच्छुक्रास्ते चैव कन्यकाम् । चंद्रे नष्टे उभौ हन्यात्तस्मादस्तं विवर्जयेत् ॥' इति । विवाह इति शेषः । 'बालभावे स्त्रियं हन्याद्वृद्धभावे नरं तथा । तस्माद्बाले च वृद्धे च विवाहं नैव कारयेत् ॥' उपलक्षणमेतत्—एवं व्रतबंधादिष्वपि कर्तुर्मरणं ज्ञेयम् । 'एकत्र निर्णीतः शास्त्रार्थोऽपरत्रापि विनियुज्यते' इति न्यायात् । उक्तं च शार्ङ्गीयविवाहपटले—'विवाहो व्रतबंधो वा यात्रा वा गृहकर्म च । गुरावस्तमिते शुक्रे ध्रुवं मृत्युं विनिर्दिशेत् ॥' इति । अथाधिमासक्षयमासवर्ज्यानि गृह्यपरिशिष्टे—'सोमयागादिकर्माणि नित्यान्यपि मलिम्लुचे । तथैवाग्रयणाधानचातुर्मास्यादिकान्यपि ॥ महालयाष्टकाश्राद्धोपाकर्माद्यपि कर्म यत् । स्पष्टमासविशेषाख्यविहितं वर्जयेन्मले ॥' इति । गर्ग-

बृहस्पती अपि—'अग्न्याधानं प्रतिष्ठां च यज्ञदानव्रतानि च। वेदव्रतवृषोत्सर्ग-चूडाकरणमेखलाः॥ मांगल्यमभिषेकं च मलमासे विवर्जयेत्॥' मरीचिः—'गृहप्रवेशगोदानस्थानाश्रममहोत्सवम्। न कुर्यान्मलमासे तु संसर्पेंऽहस्पतौ तथा॥' इति। वसिष्ठः—'वापीकूपतडागादिप्रतिष्ठां यज्ञकर्म च। न कुर्यान्मलमासे तु संसर्पांहस्पतौ तथा॥' इति। यदा क्षयमासो भवति तदा पूर्वोत्तरावधिमासौ भवतः। तत्र पूर्वः—संसर्पः। द्वितीयः—अंहस्पतिः। एतान्यधिकमासक्षयमासवर्ज्यानि गुरुशुक्रयोरस्तादावपि वर्ज्यानि। यदाह वृद्धगार्ग्यः—'बाले वा यदि वा वृद्धे शुक्रे वाऽस्तंगते गुरौ। मलमास इवैतानि वर्जयेद्देवदर्शनम्॥' इति। अत्र देवदर्शनमपूर्वं विवक्षितम्। यदाह गर्गः—'अपूर्वदेवतां दृष्ट्वा शुचः स्युर्नष्टभार्गवे। मलमासेष्वनावृत्ततीर्थयात्रां परित्यजेत्॥' इति। अनावृत्ततीर्थयात्राम्=अपूर्वतीर्थयात्राम्। दीपिकायां—'नो शुक्रास्तेऽष्टमेऽर्के गुरुसहितरवौ जन्ममासेऽष्टमेन्दौ विष्टौ मासे मलाख्ये कुजशनिदिवसे जन्मतारासु चाथ। नाडीनक्षत्रहीने सुरगुरुरजनीनाथताराविशुद्धौ प्रातः कार्या परीक्षा द्वितनुचरगृहांशोदये शस्तलग्ने॥' इति। गुरुसहितरवौ=गुर्वादित्ये इत्यर्थः। इदं सिंहस्थितमकरस्थितास्तमितगुरूणामुपलक्षणम्। उक्तं च व्यवहारोच्चये—'सिंहस्थे मकरस्थे च जीवे चास्तमिते तथा। मलमासे न कर्तव्या परीक्षा जयकांक्षिणा॥' इति। मलमासग्रहणं क्षयमासस्याप्युपलक्षणम्। नाडीनक्षत्राणि=वैनाशिकनक्षत्राणि। परीक्षा=दिव्यम्। अयमत्र तात्पर्यार्थः अनियतकालविहितानि चूडाकरणवाप्यारामादिशुभकृत्यानि गुर्वादित्यादिषु सर्वथा न कार्याणि। यानि तु नियतकालानि सीमंतनामकरणादीनि तानि गुर्वादस्तादिसत्त्वेऽपि स्वोक्तकाल एव भवंति। 'चतुर्थे गर्भमासे स्यात्सीमंतोन्नयनक्रिया। षष्ठेऽष्टमे वा कुर्वीत सूत्रांतरविधानतः॥' इति शौनकादिमुनिवचनेभ्यः कालस्यापि नियामकत्वावगतेः। अत एवाह बृहस्पतिः—'मासप्रयुक्तकार्येषु मूढत्वं गुरुशुक्रयोः। न दोषकृन्मलो मासो गुर्वादित्यादिकं तथा॥' इति। यमोऽपि—'चन्द्रसूर्यग्रहे स्नानं श्राद्धदानजपादिकम्। कार्याणि मलमासेऽपि नित्यं नैमित्तिकं तथा॥' इति। अन्यत्रापि 'सीमंतजातकादीनि प्राशनांतानि यानि वै। न दोषो मलमासस्य मौढ्यस्य गुरुशुक्रयोः॥' इति। एवं सति प्रतिबन्धवशादतिक्रांतकालेषु जातकर्मादिषु सत्सु गौणकाले कार्याणि। तद्वशेन सदसन्मुहूर्तोपलब्धौ बहुदिवसगणैः सन्मुहूर्तोपलब्धिरेवोचिता, गौणकालस्य तुल्यत्वात्। उक्तं च वसिष्ठेन—'अतीतकालान्यखिलानि तानि कार्याणि सौम्यायनगे दिनेशे। सिते गुरौ चाप्यथ दृश्यमाने तदुक्तपंचांगदिनेऽप्यखण्डे॥' इति। अत एवोक्तं अतिपन्नशिशुसंस्कारानिति॥ ४६॥ ४७॥

अथ सिंहस्थगुर्वादिदोषान् शालिन्याह—

**अस्ते वर्ज्यं सिंहनक्रस्थजीवे वर्ज्यं केचिद्वक्रगे चातिचारे।**
**गुर्वादित्ये विश्वघस्रेऽपि पक्षे प्रोचुस्तद्वद्दंतरत्नादिभूषाम्॥४८॥**

अस्ते वर्ज्यमिति॥ यदस्ते गुर्वादस्ते वर्ज्यमुक्तं तत् सिंहनक्रस्थजीवे सिंहस्थगुरौ मकरस्थगुरौ च वर्ज्यं निषिद्धम्। यदाह वराहः—'उद्यानचूडाव्रतबंध-

दीक्षाविवाहयात्रादि वधूप्रवेशः । तडागकूपत्रिदशप्रतिष्ठा बृहस्पतौ सिंहगते न कुर्यात् ॥' इति । देवीपुराणेऽपि—'सिंहसंस्थे गुरौ यत्नात्सर्वारंभान्विवर्जयेत् । प्रारब्धं च न सिध्येत महाभयकरं भवेत् ॥ पुत्रभ्रातृकलत्राणि हन्याच्छीघ्रं न संशयः । कारको व्रजते नाशं संतानं म्रियतेऽचिरात् ॥ देवारामतडागाश्च प्रपोद्यानगृहाणि च । विवाहयज्ञोपनयचूडादि च न सिध्यति ॥ यथा सिंहस्थितो जीवस्तथैव मकरस्थितः ॥' इति । त्रिस्थलीसेतौ—'गुर्वादित्ये गुरौ सिंहे शुक्रे वाऽस्तमुपागते । त्यजेद्यानं महादानं व्रतं देवविलोकनम् ॥' इति । लल्लोऽपि—'नीचस्थे वक्रसंस्थेऽप्यतिचरणगते बालवृद्धेऽस्तगे वा संन्यासो देवयात्रा व्रतनियमविधिः कर्णवेधस्तु दीक्षा । मौंजीबंधोऽगनानां परिणयनविधिर्वास्तुदेवप्रतिष्ठा वर्ज्याः सद्भिः प्रयत्नात्त्रिदशपतिगुरौ सिंहराशिस्थिते वा ॥' इति । अयमपि निषेधो नियतकालविहितानां न भवति । उक्तं च शार्ङ्गीये—'सीमंतजातकादीनि प्राशनांतानि यानि वै । कर्तव्यानि न दोषोऽस्ति पंचाननगते गुरौ ॥' इति । उपलक्षणमेतत्—एवं मकरस्थेऽपि कार्याणि शुभानि । क्वचित्पूर्वतीर्थयात्रायां मौढ्यादिदोषाभावोऽभिहितः । त्रिस्थलीसेतौ—'गोदावर्यां गयायां च श्रीशैले ग्रहणद्वये । सुरासुरगुरूणां च मौढ्यदोषो न विद्यते ॥' वायुपुराणे—'गयायां सर्वकालेषु पिंडं दद्याद्विधानतः । अधिमासे जन्मदिने ह्यस्ते च गुरुशुक्रयोः ॥ न त्यक्तव्यं गयाश्राद्धं सिंहस्थेऽपि बृहस्पतौ ॥' इति । अत्र श्राद्धस्य यात्रापूर्वकत्वाद्गयायात्रापि न निषिद्धेति ज्योतिर्निबंधे व्याख्यातम् । गुर्वाद्यस्तस्योपलक्षणत्वात्सिंहस्थगुरावपि गोदावरीयात्रा न निषिद्धेत्याहुः । अन्यत्र-'अधिमासे सिंहगुरावस्ते च गुरुशुक्रयोः । तीर्थयात्रा न कर्तव्या गयां गोदावरीं विना ॥' इति । अत्र 'अधिमासे च जन्मर्क्षे-' इति पठंति, तत्र यात्रायां जन्मनक्षत्रस्यातिनिषिद्धत्वाद्गोदावरीगयायात्रयोरपवादो युक्त एव । तथा ग्रहणार्धोदयकपिलाषष्ठीसंक्रांत्युद्देशेनापूर्वतीर्थयात्रायां कर्तव्यायां शुक्रास्तादिमहादोषो नास्तीत्युक्तं त्रिस्थलीसेतौ लल्लेन—'उपप्लवे शीतलभानुभान्वोरर्धोदये वा कपिलाख्यषष्ठ्याम् । सुरासुरेज्यास्तमयेऽपि तीर्थयात्राविधिः संक्रमणेऽपि शस्तः ॥' इत्यलमियता ॥

अथ गुर्वाद्यस्ते यद्वर्ज्यमुक्तं तद्वक्रगे गुरावथवाऽतिचारगे गुरौ वर्ज्यम् । यदाह वात्स्यः—'यात्रोद्वाहौ प्रतिष्ठां च गृहचूडाव्रतादिकम् । वर्जयेद्व्रतश्चैव जीवे वक्रातिचारगे ॥ कीर्तिभंगः प्रतिष्ठायां चौरभीतिस्तथाध्वनि । तथोद्वाहे भवेन्मृत्युर्व्रते हानिर्भयं गृहे ॥' इति । क्वचिदस्यापवादोऽभिहितः राजमार्तंडे—'वक्रातिचारगे जीवे वर्जयेत्तदनंतरम् । व्रतोद्वाहादिचूडायामष्टाविंशतिवासरान् ॥' इति । मुक्तावल्यां त्वतिचारस्यैवापवादः—'अतिचारे सुरपूज्यो भवनाद्भवनान्तरं यदा याति । अष्टाविंशतिदिवसान्विवर्जयेत्परिणये प्रयत्नेन ॥' इति । परिणय इत्युपलक्षणम् । अस्याप्यपवादो दीपिकायां—'त्रिकोणजायाधनलाभराशौ वक्रातिचारेण गुरुः प्रयातः । यदा तदा प्राह शुभं विलग्नं हिताय पाणिग्रहणं वसिष्ठः ॥' इति । अत एव लल्लः—'प्रतिषिद्धो नोद्वाहो वक्रिणि

जीवे तथाऽतिचारगते। गोचरबलं प्रधानं लग्ने च पराशरः प्राह॥' इति। विवाहे एव कर्तव्येऽयमपवाद इति केचित्; न तु यज्ञोपवीतादौ। लग्ने च पराशरः प्राहेति सामान्योक्तेः सर्वस्यापि कर्मणोऽपवाद इत्यन्ये। विशेषमाह लल्लः-'यद्यप्यनुपचयस्थो जीवः कन्यानिकालमावहति। गुणवद्गुरोपलब्धौ तथापि पाणिग्रहः कार्यः॥' इति। अथ केचित् गुर्वादित्ये गुरुमहिते आदित्ये सूर्ये। एकराशिगतौ गुरुसूर्याविति यावत्। स गुर्वादित्यस्तस्मिन्नपि सर्वमस्तोक्तं शुभकर्म वर्ज्यम्। यदाह शौनकः-'एकराशिगतौ सूर्यजीवौ स्यातां यदा पुनः। व्रतबंधविवाहादि शुभकर्माखिलं त्यजेत्॥' इति। यत्तु गुरुवचनम्-'गुरुक्षेत्रगतो भानुर्भानुक्षेत्रगतो गुरुः। गुर्वादित्यः स विज्ञेयो गर्हितः सर्वकर्मसु॥' इत्याहुः;—तदविचारितरमणीयम्। तथा हि-गुरुक्षेत्रे धनुर्मीनौ तत्र भानुः सूर्यो गुर्वादित्यस्तदसत्। धनुरर्कस्य दक्षिणायनत्वादेव निषेधसिद्धेः। मीनार्कस्य तु यज्ञोपवीतव्यतिरिक्तकार्यमात्रनिषेधसिद्धेः। तथा भानुक्षेत्रं सिंहस्तत्र गतो गुरुर्गुर्वादित्य इति चेन्न। तत्र सिंहस्थगुरुत्वादेव निषेधसिद्धेः। अथ गणितवशेन यस्मिन्नेव गुरुक्षेत्रे भानुस्तस्मिन्नेव राशौ गुरुः स गुर्वादित्य इति। तन्न। संभवत्येकवाक्यताकरणे भिन्नवाक्यताकरणस्य वैयर्थ्यापत्तेः। ननु गुरोर्बाल्यवृद्धत्वास्तमयानां पृथङ्निषेधोऽनर्थकः, गुर्वादित्यनिषेधेनैव सिद्धत्वादिति चेत्-मैवं वोचः। राश्यादौ सूर्यः तद्राशेरेवान्तेऽष्टाविंशत्यंशे गुरुः तत्राष्टाविंशत्यंशानां व्यवधानात्तावद्गुरोरस्ताभावः। कालांशाश्च गुरोरेकादश ११ तदंतरे ह्यस्तमयत्वोक्तेः सप्तदशांशांतरितत्वाच्च वार्धकमपि नास्ति। यतो बाल्यं वार्धकं च परमं पक्ष १५ मात्रं नारदादिभिरुक्तं, तत्र दिनद्वयमधिकमवशिष्यते। येषां तु दश वा सप्त वा दिनानि बाल्यं वार्धकं चेति पक्षस्तेषामपि सप्त वा दश वा दिनानि बाल्यवार्धकरहितान्यवशिष्यंते। तत्र गुर्वादित्यप्रयुक्तोऽपि दोषो यथा स्यादिति वचनारंभः। एवं बाल्येऽपि द्रष्टव्यम्। नन्वेवं गुर्वादित्य एव तर्हि वक्तव्यो गुरोर्बाल्यवार्धकास्तानां पार्थक्येन दोषाभिधानमनर्थकमिति चेन्न। यदा यत्र राशौ सूर्यस्ततः प्राग्राशौ गुरोरुदयस्तत्र बाल्यदोषः सावकाशः। यदोत्तरराशौ गुरुस्तदा वार्धकदोषः सावकाशः। बहुंशांतरत्वादस्तमयसंभावनापि नास्ति। तत्र गुर्वादित्यदोषेण बाल्यवार्धकास्तमयदोषाणां कथं निरासः कर्तुं शक्यः? नहि भिन्नराशिस्थयोरपि गुर्वादित्ययोर्गुर्वादित्यदोषाभिधानं कैश्चिदुक्तम्। तस्मात्प्रागुक्तविषय एव गुर्वादित्यदोषः। यदा त्वेकराशिस्थितत्वं तदा यदि बाल्यवार्धकास्तमयदोषाणां संभवस्तदा दोषस्याधिक्यन्यूनतातरतमभावो ध्येयः। तथा हि-बृहस्पतेः खलु पंचावस्थाः संभवंति। पूर्वं गुर्वादित्यसंज्ञा, साऽल्पदोषा। ततो यथा यथा रविसामीप्यं तथा तथा क्षीणताधिक्याद्वार्धक्यव्यपदेशो गुर्वादित्यव्यपदेशाद्दुष्टफलः। ततः सूर्यातिसान्निध्येनास्तंगतत्वेऽस्तमयाख्यो व्यपदेशः सोऽत्यंतं दुष्टफलः। ततः पुनरपि कालांशातिक्रमेण रविविप्रकर्षोद्भवे सति बालत्वव्यपदेशः प्राक्फलात् किंचिन्न्यूनदोषकरः। ततः पुनरपि राश्यंते गुर्वादित्य-

व्यपदेशः सोऽल्पदोष इति। एवं गुरोर्बाल्यवार्धकदिनानामपि बहुत्वाल्पत्वयो-रपि व्यवस्था ध्येया। तथा हि–यदाऽस्तोदयाभ्यां प्राक् पश्चाच्च वार्धकं बाल्यं च पक्षमभिहितं तदा पक्षांतिमदिनपंचकमल्पदोषदम्। यदा तु दशदिना-नीति पक्षस्तदा तदंतिमं दिनत्रयं मध्यमदोषम्। यदा तु सप्तदिनान्तानि पक्ष-स्तदा तु महादोष एव। एवं धीमद्भिरन्यत्रापि व्यवस्था विरोधे सति महादो-षाल्पदोषजनिकावश्यकानावश्यकविषयिणी ध्येयेत्यलमतिप्रसंगेन॥ ॥ अथ कश्चित् विश्वघस्रेऽपि पक्षे त्रयोदशदिने पक्षे यस्मिन् पक्षे तिथिद्वयह्रासः, स त्रयोदशदिनात्मकः पक्षोऽतिनिंद्यः। तदुक्तं ज्योतिर्निबंधे–'पक्षस्य मध्ये द्विर्तिथी पतेतां तदा भवेद्रौरवकालयोगः। पक्षे विनष्टे सकलं विनष्टमित्याहुरा-चार्यवराः समस्ताः॥' इति। तथा 'त्रयोदशदिने पक्षे तदा संहरते जगत्। अपि वर्षसहस्रेण कालयोगः प्रकीर्तितः॥' इति। एवंविधे काले सर्वं गुर्वाद्यस्तोक्तं शुभकर्म वर्ज्यं प्रोचुः। तदुक्तं व्यवहारचंडेश्वरे–'त्रयोदशदिने पक्षे विवा-हादि न कारयेत्। गर्गादिमुनयः प्राहुः कृते मृत्युस्तदा भवेत्॥' इति। विवाहे दंपत्योश्चौलोपनयनादौ च शिशोर्मृत्युरित्यवधातव्यम्, संस्कार्यतया प्राधान्यात्। ज्योतिर्निबंधेऽपि–'उपनयनं परिणयनं वेश्मारंभादिकर्माणि। यात्रां द्विक्षयपक्षे कुर्यान्न जिजीविषुः पुरुषः॥' इति। अथ प्रसंगात्त्रयोदश-दिनात्मकपक्षः कथं संभवति, कथं च न संभवतीति विचारः प्रस्तूयते। कस्मिं-श्चिच्छककाले कस्मिंश्चित्पक्षे प्रतिपत्सोमवासरे घटिकैका दशपलाधिका १।१०, ततो द्वितीया क्षयोन्मुखत्वात्पक्षस्य सोमवार एवांतर्हिता, अत एवाऽवमाख्या जाता घट्यः ५७ पलानि ६, ततः पुनरपचयक्रमेण तिथीनां चतुर्दश्यपि क्षयं गताऽवमाख्या शुक्रवार एव। ततः शनिवारे पूर्णिमा क्षयोन्मुखी चतुर्दशी-तुल्या वा; एतादृशः पक्षस्त्रयोदशदिनात्मकः संभवति। यद्यपि 'पक्षपरि-ग्रहे' इत्यस्माद्धातोः पचाद्यचि पक्षशब्दो निष्पन्नो नानार्थश्चास्ति तथापि ज्योतिःशास्त्रे प्रतिपदाद्यक्षणमारभ्य पंचदश्यंतिमक्षणपर्यंतं पंचदशतिथ्यात्मके काले रूढः शिष्टपरिगृहीतत्वाद्गृह्यते। दिनशब्दोऽप्यत्र त्रयोदशपदसमभि-व्याहारादहोरात्रवाचकः 'दशाहं शावमाशौचं सपिंडेषु विधीयते' इत्यादावहः-शब्दवत्। तत्र दिवसस्तु 'यत्कृच्छ्रसूतकचिकित्सितवासराद्यं तत्सावनाच्च घटि-कादिकमार्क्षमानात्' इति भास्करोक्तः सावन एवात्र ग्राह्यः। स च सूर्योदय-मारभ्यापरसूर्योदयं यावत् तावत्कालो रविवाराद्यपरपर्यायः सकललोकप्रसिद्धो गृह्यते। तत्र 'त्रयोदशदिने पक्षे नूनं संहरते जगत्' इति वचनादेतादृशस्य त्रयो-दशदिनात्मकस्य पक्षस्य दोषवत्ता स्मर्यते, कथमस्य पक्षस्य त्रयोदशदिनात्मक-त्वम्? उच्यते,-त्रयोदशसंख्याकानि दिनानि यस्मिन्स त्रयोदशदिनस्तादृशे पक्ष इति व्युत्पत्त्या पक्षस्यान्यपदार्थकत्वात्तस्य पंचदशतिथ्यात्मकस्य त्रयो-दशाहोरात्रसंबंधोऽभिहितो भवति। प्रस्तुतोदाहरणे तावत्प्रतिपदंतिमघटी-संबंधः प्रातःकाले सोमवारस्य जातः। ततो द्वितीयादितिथिसंबंधः सोमवार-मारभ्यैव जातः। ततः क्रमेण पंचदश्याः शनिवारसंबंधोऽभूदिति पक्षस्य

त्रयोदशदिनात्मकत्वमजनिष्ट । यदि प्राग्लक्षणलक्षितस्य पक्षस्य त्रयोदशाहोरात्रसंबंधो विवक्ष्यते तदा पक्षस्य त्रयोदशदिनात्मकता खपुष्पतुल्यैव भवेत् । यतोपचयाभिमुखत्वात्तिथीनां मध्ये एकस्या एव तिथेः क्षयः स्यान्न द्वयोस्तिथ्योस्तदा पक्षस्य चतुर्दशदिनात्मकता संभवति । 'पक्षस्य मध्ये द्वितिथी पतेतां तदा भवेद्रौरवकालयोगः । पक्षे विनष्टे सकलं विनष्टमित्याहुराचार्यवराः समस्ताः ॥' इति वाक्याद्द्वयोस्तिथ्योरेव क्षये पक्षस्य त्रयोदशदिनात्मकता संभवेत् । सा चाल्पावशिष्टप्रतिपत्संभवे एव भवेदिति निष्कृष्टोऽर्थः । अत्रैवंविधमन्यदप्युदाहरणम्–विंशत्युत्तरपञ्चदशशती १५२० मिते शककाले कार्तिकशुक्लपक्षे जातमस्ति तदेवंविधम् । एवं च यदाकदाचित्कस्मिंश्चित्काले पञ्चदशीतिथिः गुरुवारे घटिकैका १, पुनस्तस्मिन्नेव वारे प्रतिपत् ५८ क्षयगता, ततस्तस्मिन्नेव वारे पुनर्द्वितीया संलग्ना, पुनः प्रातरारभ्य शुक्रवारसंबंधेन द्वितीया संपूर्णाभूत् , पुनः क्षयाभिमुखत्वात्तिथीनां चतुर्दश्याः पंचदश्या वा क्षयः संवृत्तस्तदा पञ्चदशी तिथिर्गुरुवार एव समभूत्तदा चतुर्दशदिनात्मक एव पक्षो भवति । यतः प्रतिपत्संबंधः शुक्रवारे एकपलात्मकोऽपि नाभूत्किंतु गुरुवारेणैव । ननु 'पक्षस्य मध्ये द्वितिथी पतेताम्' इति लक्षणात्त्रयोदशदिनात्मकः पक्षो भविष्यतीति चेन्न । यतोऽत्र मध्यशब्दः पठ्यते स यद्यप्यष्टमीतिथिमुत षष्ठ्यादितिथिपञ्चकात्मकविभागमाक्षिपति तथापि 'द्वितिथी पतेताम्' इति वाक्यार्थासंभव एव स्यात् । संभवस्तु वाक्यार्थे लक्षणयोपयुज्यते । अतो 'यदा हि पक्षे' इति सप्तम्यंतपदे वक्तव्ये मध्यपदोच्चारणसामर्थ्यादादिक्षयोराद्यंतयोस्तिथ्योर्निवृत्तिमाह स इति वाक्यार्थोऽवगम्यते । एवं सति प्रतिपत्पंचदश्योर्युगपत्क्षये दोषवत्ता नैव भवति किंतु द्वितीयामारभ्य चतुर्दश्यंतं तिथिद्वयह्रासे त्रयोदशदिनात्मकः पक्षोऽतिदोषावहो भवति । यद्येवं द्वितीयापंचदश्योः क्षयेऽतिदोषवत्ता न स्यादित्यते च तत्रापि । सत्यम् । नहीदमेव वचोऽतिनिर्णायकं किंतु त्रयोदशदिने पक्ष इत्यनेनैकवाक्यतामापन्नं सत् । 'संभवत्येकवाक्यत्वे वाक्यभेदो हि दूषणम्' इत्युक्तेः । कथं ? तिथिद्वयक्षयवान् त्रयोदशाहोरात्रसंबंधवान्पक्षः त्रयोदशदिनः पक्ष इत्यनुगतं लक्षणं क्रियते । अतो नात्राऽव्याप्तिरित्यस्त्यतिदोषवत्ता । यत्र चतुर्दशदिनात्मकः पक्ष इति प्रसिद्धिस्तत्र पंचदशतिथीनां त्रयोदशाहोरात्रसंबंधात्पक्षस्य त्रयोदशदिनात्मकता स्यात्सा मा भूदिति तिथिद्वयक्षयवानित्युक्तम् । अतः प्रतिपत्तिथेश्चतुर्दशीपंचदश्योरन्यतरतिथेश्च युगपत्क्षये त्रयोदशदिनात्मकपक्षत्वं नास्त्येवेति सिद्धांतः । अत एव भीष्मपर्वणि कुरुपांडवसैन्यक्षयनिमित्तभूतमुत्पातमाह दुर्योधनं प्रति भीष्मः–'चतुर्दशीं पंचदशीं भूतपूर्वां च षोडशीम् । इमां तु नाभिजानेऽहममावास्यां त्रयोदशीम् ॥' इति । अस्यार्थः—पूर्वं हि पंचांगगणनया प्रतिपदमारभ्यामावस्यां तिथिं चतुर्दशीं चतुर्दशाहोरात्रे निष्पन्नां भूतपूर्वां पूर्व-

१ प्रतिपत् शनौ घ. १ द्वि. श. घ. ५८ तृ. र. घ. ५६ च. सो. घ. ५२ पं. मं. ४७ ष. बु. ४२ स. गु. ३६ अ. शु. ३१ न. श. २५ द. र. १९ ए. सो. १४ द्वा. मं. ९ त्र. बु. ५ च. गु. १ पूर्णिमा गुरु. घ. ५८ ।

भूतामहमभिजाने, पक्षस्यैकतिथिक्षयसद्भावात्। तथाऽमावास्यां पंचदशीं पंचदशाहोरात्रे पूर्वं जातामहमभिजाने, पक्षस्य तिथिक्षयवृद्धिराहित्यात्। तथाऽमावास्यां षोडशीं षोडशाहोरात्रे पूर्वं जातामहमभिजाने, पक्षस्यैकतिथिवृद्धिसद्भावात्। पक्षमध्ये तिथिद्वयवृद्धिस्तु खपुष्पतुल्यैव भूतपूर्वामित्यनेन गणितसाध्यपंचांगेष्वनेकशो दृष्टत्वादाश्चर्याभावोऽभिहितः। अतः फलमप्यस्य वराहेण सामान्यत उक्तम्—'शुक्ले पक्षे संप्रवृद्धे प्रवृद्धिं ब्रह्मक्षत्रं याति वृद्धिं प्रजाश्च। हीने हानिस्तुल्यता तुल्यतायां कृष्णे सर्वं तत्फलं व्यत्ययेन॥' इति। व्यत्ययस्तु शुक्लपक्षापेक्षया। अत्रातिदुष्टफलाश्रवणान्नोत्पातरूपत्वमस्य पक्षस्य। परमस्मिन्नवसरे त्विमां पंचांगे मया दृष्टाममावास्यां त्रयोदशीं प्रतिपत्तिथिमारभ्य त्रयोदशाहोरात्रे तिथिद्वयह्रासाज्जातां कदाप्यननुभूतां नाहमभिजाने इति महानुत्पातो मया दृष्टोऽतो युद्धाविवर्तस्त्वेति वाक्यतात्पर्यार्थः॥ ननु 'प्रकृतेरन्यत्वमुत्पातः' इत्युत्पातलक्षणानाक्रांतत्वमत्रास्ति, गणितज्ञानसाध्यत्वाच्छुक्रास्तादिवत्। नहि शुक्रास्तादिरुत्पातः केनाप्यंगीक्रियते। सत्यम्। यद्यपि पक्षद्वयमध्ये तिथीनां क्षयगामित्वात्तिथिद्वयह्रासो दृश्यते बहुधा गणितसाध्यत्वात्तथाप्यस्मिन्काले ऽप्यस्मिन्नेवैकस्मिन्पक्षे प्रतिपदमारभ्य तिथिद्वयह्रासद्भावाद्दिवसैस्त्रयोदशभिर्वैषम्यमावास्या त्रयोदशी जाता दृष्टा, तादृशी च मया कदापि नानुभूतेति महोत्पातरूपत्वमस्य पक्षस्य युक्तमेव संपन्नमिति। 'ज्योतिर्विन्नीलकण्ठस्य गोविंदेन तनूभुवा। त्रयोदशाहपक्षस्य तत्त्वं सम्यक् प्रकाशितम्॥' इति। अथ तदुक्तेन प्रकारेण दम्पत्यादिभूषां दत्त्वा हस्तिदन्तास्थिसंबंधिनीं भूषां रत्नसंबंधिनीं भूषां तथादिशब्दात्सुवर्णमणिसंबंधिनीं भूषामपि वर्ज्यां प्रोचुः। सर्वस्मिन्निषिद्धे काले इत्यर्थः। यदाह राजमार्तंडः-'यात्रां चूडां विवाहं श्रुतिविवरविधिं शंभुसद्मप्रवेशं प्रासादोद्यानहर्म्यं सुरनरभवनारंभविद्याविधानम्। मौञ्जीबन्धं प्रतिष्ठां मणिकनकरदाधारणं कुर्वतो ये मृत्युः सिंहस्थितेज्ये गुरुदिनकरयोरेकराशिस्थयोश्च॥' इति। सिंहस्थगुरोरुपलक्षणत्वाद्गुर्वस्तादावपि प्रथमकर्तव्यसुवर्णादिधारणं वर्ज्यमित्यर्थः॥ ४८॥

अथ सिंहस्थगुरोः प्रकारत्रयेण परिहारमिंद्रवज्रयाह—

**सिंहे गुरौ सिंहलवे विवाहो नेष्टोऽथ गोदोत्तरतश्च यावत्।**
**भागीरथीयाम्यतटं हि दोषो नान्यत्र देशे तपनेऽपि मेषे॥४९॥**

सिंह इति॥ अथ प्रथममंशभेदेन परिहार उच्यते। गुरौ सिंहस्थिते सत्यपि सिंहांशे तृतीयांशसहितत्रयोदशांशकेभ्योऽनन्तरं १३।२० तृतीयांशसहितांशत्रयं ३।२० पंचमो नवांशः सिंहांशस्तत्र गुरौ सति विवाहो नेष्टो निषिद्धः। उक्तं च ज्योतिर्निबंधे राजमार्तंडेन—'सिंहराशौ तु सिंहांशे यदा भवति वाक्पतिः। सर्वदेशेष्वयं त्याज्यो दंपत्योर्निधनप्रदः॥' इति। विशेषमाह वसिष्ठः—'सिंहे सिंहांशके जीवे कलिंगे गौडगुर्जरे। कालमृत्युरयं योगो दंपत्योर्निधनप्रदः॥' इति। अतोऽवशिष्टेष्वंशेषु विवाहादि शुभं भवतीत्यर्थः। 'सिंहेऽपि भगदैवत्ये गुरौ पुत्रवती भवेत्। अत्यंतसुभगा साध्वी धनधान्यसम-

न्विता ॥' इति राजमार्तंडोक्तेः । अथ देशभेदेन द्वितीयः परिहार उच्यते । अथ गोदोत्तरतः गोदावरी नदी तस्या उत्तरदिशि भागीरथी गंगा तस्या याम्यतटं दक्षिणकूलं यावन्मर्यादीकृत्य गोदावरीगंगांतरालवर्ती यो देशस्तत्र सिंहस्थगुरुर्वर्ज्यो नान्यत्र देशे । अन्येषु देशेषु न सिंहस्थगुरुदोषः । तदाह लल्लः—'गोदावर्युत्तरतो यावद्भागीरथीतटं याम्यम् । तत्र विवाहो नेष्टः सिंहस्थे देवपतिपूज्ये ॥' इति । अर्थाद्गोदावरीदक्षिणे देशे भागीरथ्युत्तरे देशे च सिंहस्थगुरुदोषो नास्ति । यदाह वसिष्ठः—'भागीरथ्युत्तरे कूले गौतम्या दक्षिणे तटे । विवाहो व्रतबंधो वा सिंहस्थेज्ये न दुष्यति ॥ मृगेंद्रसंस्थिते जीवे मध्यदेशे करग्रहः । मृत्युयोगो मृत्युदः स्याद्दंपत्योः पंचवर्षतः ॥' इति । अत्र विवाहव्रतबंधावेव न निषिद्धौ । आभ्यामन्यानि शुभकर्माणि तु निषिद्धान्येव । अपवादस्य संकोचाश्रयत्वादुपलक्षणत्वायोगात् । अथ सूर्यराशिवशेन तृतीयः परिहार उच्यते । तपनेऽपि मेषे सूर्ये मेषराशौ विद्यमाने सति वा सिंहस्थगुरोर्दोषो नास्ति । 'मंगलानीह कुर्वीत सिंहस्थो वाक्पतिर्यदा । भानौ मेषगते सम्यगित्याहुः शौनकादयः ॥' इति ज्योतिर्निबंधोक्तेः । अन्यच्च तत्रैव—सिंहगते सुरमंत्रिणि कन्या मेषगते तपने परिणीता । भूषणरत्नयुता च सुशीला सत्यवती सुतकीर्तिसमेता ॥' इति ॥४९॥

सिंहराशिगतगुरुनिषेधवाक्यानां प्रतिप्रसववाक्यानां च निर्गलितार्थमनुष्टुब्द्वयेनाह—

मघादिपंचपादेषु गुरुः सर्वत्र निंदितः ।
गंगागोदांतरं हित्वा शेषांघ्रिषु न दोषकृत् ॥ ५० ॥
मेषेऽर्के सद्व्रतोद्वाहौ[1] गंगागोदांतरेऽपि च ।
सर्वः सिंहगुरुर्वर्ज्यः कलिंगे गौडगुर्जरे ॥ ५१ ॥

मघादिपंचेति । मेषेऽर्क इत्यादि च ॥ श्लोकद्वयं स्पष्टार्थम् ॥ ५० ॥ ५१ ॥

अथ मकरस्थितगुरोः प्रकारद्वयेन परिहारं शालिन्याह—

रेवापूर्वे गंडकीपश्चिमे च शोणस्योदग्दक्षिणे नीच इज्यः ।
वर्ज्यो नायं कौंकणे मागधे च गौडे सिंधौ वर्जनीयः शुभेषु ॥५२॥

रेवापूर्वे इति ॥ रेवा नर्मदानदी तस्याः पूर्वे भागे गंडकी नदी तस्याः पश्चिमे च विभागे शोणनदस्योत्तरे दक्षिणे च विभागे नीच इज्यः मकरस्थगुरुर्न वर्ज्यः । एषु देशेषु मकरस्थितगुरोर्दोषो नास्ति । तदुक्तं लल्लेन—'नर्मदापूर्वभागे तु शोणस्योत्तरदक्षिणे । गंडक्याः पश्चिमे भागे मकरस्थो न दोषभाक् ॥' अर्थादन्येषु देशेषु निषिद्ध एव । तद्देशज्ञानार्थं द्वितीयः परिहारः । अयं मकरस्थितगुरुः कौंकणे देशे मागधे देशे च गौडदेशे सिंधुदेशे अटकाख्यनगराधस्तात् सिंधुर्नाम नदोऽस्ति तत्पारे शुभेषु शुभकृत्येषु वर्ज्यो निषिद्धः । उक्तं च दैवज्ञमनोहरे-'मागधे गौडदेशे च सिंधुदेशे च कौंकणे । व्रतं

1 सन्तौ च तौ व्रतोद्वाहौ इति विग्रहः । व्रतोद्वाहौ गंगौ शुभावित्यर्थः ।

चूडां विवाहं च वर्जयेन्मकरे गुरौ ॥' इति । अतोऽन्येषु देशेषु मंगलं कार्यमेवेत्यर्थतः सिद्धम् । व्यवहारचंडेश्वरे तु विशेषः—'नीचराशिगतो जीवः प्रशस्तः सर्वकर्मसु । नीचांशकगतस्त्याज्यो यस्माद्देशेषु नीचता ॥' इति । अत एव वामनपुराणे—'वापीकूपतडागादि निषिद्धं सिंहगे गुरौ । मकरस्थेऽपि तत्कार्यं न दोषः काललोपतः ॥' इति । काललोपो नाम कालनिषेधः, स इह नास्ति । निषेधवाक्यस्य देशपरत्वादंशपरत्वाच्चेति भावः । गरुडपुराणेऽपि—'यदा सिंहगतो जीवो नैव कल्याणमाचरेत । मकरस्थेऽपि कर्तव्यं नात्र कार्या विचारणा ॥' इति । अत्रापि पूर्वोक्त एवाशयः ॥ ५२ ॥

अथ लुप्तसंवत्सरदोषं सापवादं वंशस्थवृत्तेनाह—

## गोऽजांत्यकुंभेतरभेऽतिचारगो नो पूर्वराशिं गुरुरेति वक्रितः ।
## तदा विलुप्ताब्द इहातिनिंदितः शुभेषु रेवासुरनिम्नगांतरे ॥ ५३ ॥

गोऽजांत्येति ॥ गौः=वृषः, अजः=मेषः, अंत्यः=मीनः, कुंभः; एभ्यः इतरभे अन्यस्मिन् कस्मिंश्चिद्राशौ स्थितो गुरुराक्रांतराशेः सकाशादग्रिमराशौ महातिचारेण समागतः सन् पश्चात्कियद्भिर्दिनैर्वक्रितो यदा पूर्वराशिं भुक्तराशिं नो एति तदा विलुप्ताब्दः लुप्तसंवत्सर उच्यते । स विलुप्ताब्द इह शुभकृत्येष्वतिनिंदितः, निषिद्ध इत्यर्थः । तदुक्तं व्यवहारोच्चये—'अतिचारगतो जीवस्तं राशिं नैति चेत्पुनः । लुप्तसंवत्सरो ज्ञेयो गर्हितः सर्वकर्मसु ॥' इति । यदा तु गोऽजांत्यकुंभेषु पूर्वराशेः सकाशान्महातिचारेणायाति पूर्वराशिं च नैति तदा न लुप्तसंवत्सरदोषः । यदाह गुरुः-'मेषे वृषे झषे कुंभे यद्यतीचारगो गुरुः । न तत्र काललोपः स्यादित्याह भगवान् यमः ॥' इति । काललोपः=कालदोषः । यदि तु दशैकादश वा मासान्भुक्त्वा यस्मिन्कस्मिंश्चिद्राशावतिचारेण गुरुः समायाति पूर्वं राशिं च न गच्छति तदा लुप्तसंवत्सर एव नास्ति । यदाह च्यवनः-'मासान्दशैकादश वा प्रयुज्य राशेर्यदा राशिमुपैति जीवः । भुंक्ते न पूर्वं च पुनस्तथापि न लुप्तसंवत्सरमाहुरार्याः ॥' इति । अथ पूर्वराशिभेदेन परिहारमुक्त्वेदानीं देशभेदेन परिहारमाह—लुप्तसंवत्सरो रेवा नर्मदा सुरनिम्नगा गंगा तयोर्नद्योरंतरे मध्ये निषिद्धः । उक्तं च-'लुप्ताब्ददोषोऽत्रिमतेन मध्ये सोमोद्भवायाः सुरनिम्नगायाः ।' इति । केषुचिद्राशिषु लुप्तसंवत्सरदोषातिशयोऽस्तीत्युक्तं सारसागरे–'अतिचारगते जीवे धनुःकर्कटमीनगे । लुप्तसंवत्सरो ज्ञेयो विवर्ज्यः सर्वकर्मसु ॥' अन्यैर्विवाहादिनिषेधकं समसप्तकाख्यं दोषांतरमप्युक्तम् । यदाह नारदः—'समदृष्टिर्गुरुः शुक्रस्तन्मासे तु प्रयत्नतः । विवाहादि न कुर्वीत नर्मदानीर उत्तरे ॥' इति । गुरुरपि–'यदा जीवासितौ चक्रे परस्परनिरीक्षितौ । सप्तमस्थौ तदा दोषो मूढत्वादतिरिच्यते ॥' इति । वसिष्ठोऽपि–'समसप्तकयोर्जीवशुक्रयोश्च परस्परम् । तदा मूढसमो दोषः शुभकार्यविनाशनः ॥' इति ॥ ५३ ॥

अथ ग्रहाणां होरां वक्ष्यति, सा च वारप्रवृत्त्यधीना, तदर्थं वारप्रवृत्तिमुपजात्याह—

**पादोनरेखापरपूर्वयोजनैः पलैर्युतोनास्तिथयो दिनार्धतः ।**
**ऊनाधिकास्तद्विवरोद्भवैः पलैरूर्ध्वं तथाधो दिनपप्रवेशनम् ५४**

पादोनेति ॥ रेखा=भूमध्यरेखा । 'पुरी रक्षसां देवकन्याथ कांची सितः पर्वतः पर्यलीवत्सगुल्मम् । पुरी चोज्जयिन्याह्वया गर्गराटं कुरुक्षेत्रमेरू भुवो मध्यरेखा ॥' इति भास्करेणोक्ता । उपलक्षणं चैतत्-लंकात आरभ्य सुमेरुपर्यंतं यद्दत्तं सूत्रं तदधोवर्तिनो ये देशास्ते मध्यरेखा उच्यंते । तदुक्तं तेनैव-'यल्लंकोज्जयिनीपुरोपरि कुरुक्षेत्रादिदेशान्स्पृशन्सूत्रं मेरुगतं बुधैर्निगदिता सा मध्यरेखा भुवः ।' इति । यस्मिन्देशे वारप्रवृत्तिर्जिज्ञासिता स देशो यदि मध्यरेखातः प्राक्पश्चाद्वा यावंति योजनानि भवंति तानि स्वचतुर्थांशोनानि कृत्वा तावद्भिः पलैस्तिथयः पंचदश युतोनाः कार्याः । यदि मध्यरेखातः प्रत्यग्योजनानि तदा युताः । यदा तु प्राग्योजनानि तदोनाः कार्या इत्यर्थः । अथ यद्दिने वारप्रवृत्तिरिष्टा, तद्दिने 'चरपलयुतहीना नाडिकाः पंचचंद्राद्युदलमथ निशार्धं याम्यगोले विलोमम् ।' इति भास्करोक्तरीत्या दिनार्धं साध्यम् । तस्माद्दिनार्धात्संस्कारविशिष्टाः पंचदश ऊनाधिकाश्चेद्भवंति तद्विवरोद्भवैः पलैर्दिनार्धस्य संस्कारविशिष्टपंचदशानां च यद्विवरमंतरं तत्संबंधेनोत्थैरुत्पन्नैः पलैरूर्ध्वं तथाधो दिनपस्य वारस्य प्रवेशनं वारप्रवृत्तिः स्यात् । यदि दिनार्धात्संस्कारविशिष्टाः पंचदश चेदूनाः स्युस्तदा सूर्योदयादूर्ध्वं वारप्रवेशनम् । यदा ह्यधिकास्तदा सूर्योदयात्प्राग्वारप्रवृत्तिरित्यर्थः । यथा वाराणसीप्राकमध्यरेखाभिधान कुरुक्षेत्रात्रिषष्टियोजनानि ६३ पादोनानि ४७।१५ प्राग्योजनत्वादेतैः ४७ पलैः ऊनाः पंचदश जाताः १४।१३ दिनार्धं १७।२ अस्मात् न्यूना इति विवरं २।४९ सूर्योदयादूर्ध्वं वारप्रवृत्तिः । अयमर्थो ग्रंथकृता लाघवायोपनिबद्धः । राजमार्गस्तु वसिष्ठसंहितायाम्—'प्रभाकरस्योद्गमनात्पुरे स्याद्वारप्रवृत्तिर्दशकंधरस्य । चरार्धदेशांतरनाडिकाभिरूर्ध्वं तथाधोऽथ परत्र तस्मात् ॥' इति । श्रीपतिरपि—'चरार्धदेशांतरयोर्वियोगयोगोत्थमानीय पलैश्च सम्यक् । सूर्योदयादूर्ध्वमृणे धनेऽधो वारप्रवृत्तिं मुनयो वदंति ॥' इति । तत्र चरमुत्तरदक्षिणगोलवशादृणं धनं च 'अस्वं, स्वं चरं गोलयोः[1] स्यात्' इति भास्करोक्तेः । देशांतरमपि पूर्वापरयोजनवशादृणं धनं च । तत्र—'योगे युतिः स्यात्क्षययोः स्वयोर्वा धनर्णयोरंतरमेव योगः' इत्युक्तेः ऋणयोर्देशांतरचरयोर्योगे तूर्ध्वं वारप्रवृत्तिः । धनयोर्योगे सूर्योदयादधः धनर्णयोर्योगेऽतरं कार्यम् । तद्यदि ऋणं धनं च तदा सूर्योदयादूर्ध्वमधश्च वारप्रवृत्तिः । ग्रंथकृता तु चरसंस्कारो मध्याह्नस्य तद्विशिष्टत्वाच्च कृतः । देशांतरसंस्कारोऽवशिष्यते स लंकादिनार्धे पंचदशघटीमिते कार्यः, तथा कृते सति यदुभयोरंतरं तावत्सूर्योदयादूर्ध्वमधश्च वारप्रवृत्तिः ॥ ५४ ॥

---

१ गोलयोः=सौम्ययाम्यगोलयोरित्यर्थः ।

अथ वारप्रवृत्तिप्रयोजनपुरःसरां होरामनुष्टुभाह—

**वारादेर्घटिका द्विघ्नाः स्वाक्षहृच्छेषवर्जिताः।**
**सैकास्तष्टा नगैः कालहोरेशा दिनपात्क्रमात् ॥ ५५ ॥**

**वारादेरिति** ॥ वारप्रवृत्तिप्रकारेण यस्मिन् क्षणे वारप्रवृत्तिर्जाता तत इष्टघट्यो द्विगुणाः कार्याः। ता द्विस्थाने स्थाप्याः। तत्र पंचभिर्भक्ते यल्लब्धं तत् त्याज्यं। यच्छेषं तत् द्विगुणघटीमध्ये वर्जितं कार्यम्। एवंविधा घट्यः सैका एकयुक्ताः कार्याः। ततो नगैः सप्तभिस्तष्टा भक्ता अवशिष्टाः कालहोराः स्युस्तद्दिनपाद्वारात्क्रमाद्गणनीयाः। यथा—रविवारे इष्टघटिकाः षट् ६ द्विगुणाः १२ पृथगक्षाप्तशेष २ वर्जिताः १० सैकाः ११ नगैस्तष्टाः शेषं ४ रविवारे क्रमगणनया चतुर्थो बुधस्तस्य होरा। अत्र वासना। तत्र **वसिष्ठः**—'वारप्रवृत्तेरुदिता दिनेशात्कालाख्यहोरापतयः क्रमेण। सार्धेन नाडीद्वितयेन तष्टः षष्ठश्च षष्ठश्च पुनःपुनः स्यात् ॥' इति। तत्र कृतेऽहोरात्रे चतुर्विंशतिः कालहोरा भवन्ति। अत्रानुपातः—यदि घटिकानां षष्ट्या ६० चतुर्विंशतिर्होरा २४ लभ्यन्ते, तदा एकया किमिति। अत्रैकेन गुणने विशेषाभावाच्चतुर्विंशतेः छेदः षष्टिर्जातः। उभयोर्द्वादशापवर्ते इष्टघटिका द्विगुणाः पञ्चभक्ताः कालहोराः स्युरिति। तथा चोक्तं **रत्नमालायाम्**—'वारप्रवृत्तेर्घटिका द्विनिघ्नाः कालाख्यहोरापतयः शराप्ताः। दिनाधिपाद्या रविशुक्रसौम्यशशांकसौरेज्यकुजाः क्रमेण॥' अथ ग्रंथकृदुक्ता वासना सार्धघटिद्वयेनैका होरा द्विगुणिताः सार्धद्विघट्यः पंच भवंति। अत एवोक्तं 'वारादेर्घटिका द्विघ्नाः' इति। एकयोगे षट् जाताः। एवं रविवारे क्रमेण गणनया द्वितीया शुक्रस्य कालहोरा प्रवृत्ता। अत उक्तं 'सैका' इति। भवन्मतेऽपि सूर्यात्षष्ठः शुक्रस्तस्यैव होरा। इयं च शुक्रहोरा पंचघटीपर्यंतं। स्वमते इष्टघटिका ४ द्विगुणाः ८ अत्र पंचभ्य आधिक्यमनुचितमिति द्वितीयस्थाने स्थापयित्वा पंचभक्तावशिष्टत्रयेणोनाः पंच जाताः। अत उक्तं 'स्वाक्षहृच्छेषवर्जिताः' इति। एकयोगे षट्। एवं सति पुनः सैव होरा। एवमिष्टघटीभिः कालहोरानयनं सुगमं। वाराणां सप्तसंख्यात्वात्तदाधिक्यमनुचितमिति 'नगैस्तष्टा' इत्युक्तम् क्रमगणनाया त्वियं युक्तिः। द्वयोर्होरास्वामिनोरंतरं पंच संभवति। एकयोगस्तु वर्तमानकालहोराज्ञानार्थं, अतः षष्ठीक्रमगणनया भवद्विवक्षिता सैव होरा भवति॥ **विवाहवृन्दावने** तु उदयमारभ्योक्ताः कालहोराः। यथा—'तत्कालार्कन्यूनलग्नांशपिंडो भक्ताः पंच क्षोणिभिर्भुक्तहोराः। भास्वच्छुक्रज्ञेंदुसौरेज्यभौमाः संख्यायेरन् वारतस्ते तदीशाः' इति। अनयोर्विषयविभागो **वसिष्ठसंहितायाम्**—'वारप्रवृत्तेर्विज्ञानं क्षणवारार्थमेव हि। अखिलेष्वन्यकार्येषु दिनादिरुदयाद्भवेत् ॥' इति। क्षणवारः—कालहोरारूपः, तदर्थं वारप्रवृत्तिः। अन्यकार्येषु दिक्शूलादिषु तिथिवारप्रयुक्तेषु नक्षत्रवारप्रयुक्तेषु चायोगेषु सुयोगेषु च सूर्योदयादेव वारा ग्राह्याः ॥ ५५ ॥

५ मु० चि०

अथ कालहोराप्रयोजनमन्यच्च शालिन्याह—

वारे प्रोक्तं कालहोरासु तस्य
धिष्ण्ये प्रोक्तं स्वामितिथ्यंशकेऽस्य।
कुर्याद्दिक्शूलादि चिंत्यं क्षणेषु
नैवोल्लंघ्यः पारिघश्चापि दंडः॥ ५६॥

वारे प्रोक्तमिति॥ यत्कर्म यस्मिन् वारे प्रोक्तं तद्दिनस्य सदोषत्वात्तत्यावश्यककृत्ये तस्य कालहोरायां कर्तव्यम्। यदाह नारदः—'यस्य खेटस्य यत्कर्म वारे प्रोक्तं विधीयते। ग्रहस्य क्षणवारेऽपि तस्य तत्कर्म सर्वदा॥' इति। अत्र केचित्–यस्य वारे यत्कर्म प्रोक्तं तस्य बलिनो नवांशे सूर्यश्चन्द्रो वा चेत्तिष्ठेत् तदा तत्कर्म कार्यमित्याहुः। उक्तं च-'यस्य ग्रहदिने कर्म यत्किंचिदभिधीयते। तस्यांशसंस्थिते सूर्ये चंद्रे वा तद्विधीयते॥' इति। कैश्चित्प्रत्येकं होराफलान्युक्तानि—'भानुहोरा मृतिं कुर्याच्चंद्रहोरा स्थिरागमम्। कारावंधं भौमहोरा बुधहोरा च पुत्रदा॥ वस्त्रालंकारदा जीवहोरा शौक्री विवाहदा। जडत्वं शनिहोरायां सप्तहोराफलं त्विदं॥ प्रश्नकाले यदा होरा तदा तत्फलमाप्नुयात्॥' इति। उदयादारभ्य होरानयनप्रयोजनं नु–'पादं स्ववर्षे च दलं स्वमासे दिने स्वकीये चरणोनरूपम्। रूपं स्वहोरास्विति कालवीर्यमुक्तं हि होरानिपुणैः पुराणैः॥' इति। युक्तं चैतेन; वर्षेशादीनामुदयादितः प्रवृत्तानां साहचर्याद्वारेशा अप्युदयादेव गणनीयाः॥ अथ प्रसंगान्नक्षत्रप्रयुक्तानां कर्मणां नक्षत्राभावेनानुष्ठाने प्राप्तेऽपवादमाह—धिष्ण्य इति। यस्मिन्धिष्ण्ये नक्षत्रे यत्कर्म वस्त्रपरिधानादिकमुक्तं तत्सत्यावश्यकत्वेऽस्य धिष्ण्यस्य स्वामितिथ्यंशके स्वामिमुहूर्ते कुर्यात्। उक्तं च नारदेन—'यस्मिन्नृक्षे तु यत्कर्म निखिलं कथितं च यत्। तद्दैवत्ये तन्मुहूर्ते कार्यं यात्रादिकं तथा॥' इति। मुहूर्तस्वामिनो विवाहप्रकरणे वक्ष्यंते। अथात्रापि स्वामितिथ्यंशे इदमवश्यं चिंत्यं विचारणीयम्। किं? दिक्शूलाद्यं वारशूलं नक्षत्रशूलं च। आदिशब्देन लालाटिकयोगोऽपि। क्षणेषु मुहूर्तेषु इदमवश्यं चिंत्यं विचारणीयम्। एवं पारिघो दंडः क्षणेषु नैवोल्लंघ्यः। यदाह वसिष्ठः—'यत्कर्म कथितमृक्षे यस्मिंस्तत्कर्म तत्क्षणे कार्यम्। दिक्शूलादिकमखिलं पारिघदंडादि विज्ञेयम्॥' इति। विज्ञेयं=अवश्यं विचारणीयम्। दिक्शूलादिकं तु यात्राप्रकरणे वक्ष्यन्ति॥ ५६॥

अथ कार्यमात्रनिषिद्धान्मन्वादीन् युगादींश्च शार्दूलविक्रीडितेनाह—

मन्वाद्यास्त्रितिथी मधौ तिथिरवी ऊर्जे शुचौ दिक्तिथी
ज्येष्ठेऽन्त्ये च तिथिस्त्विषे नव तपस्यश्वाः सहस्ये शिवा।

भाद्रेऽग्निश्च सिते त्वमाष्ट नभसः कृष्णे युगाद्याः सिते
गोऽग्नी बाहुलराधयोर्मदनदर्शौ भाद्रमाघासिते ॥ ५७ ॥

मन्वाद्या इति ॥ एते चतुर्दश मन्वाद्या ज्ञेयाः। सिते इति वक्ष्यमाणं पदमनुकृष्य चैत्रादिमासेष्वपि संबध्यते । मधौ=चैत्रमासे, सिते=शुक्लपक्षे, त्रितिथी=तृतीयापूर्णिमे । ऊर्जे=कार्तिके, शुक्लपक्षे तिथिरवी=पूर्णिमाद्वादश्यौ । शुचौ=आषाढमासे शुक्लपक्षे, दिकतिथी=दशमीपूर्णिमे । ज्येष्ठे, अन्त्ये=फाल्गुने च तिथिः=पूर्णिमा । इषे=आश्विने शुक्लपक्षे नव=नवमी । तपसि मासे=माघे मासि शुक्लपक्षे, अश्वाः=सप्तमी । सहस्ये=पौषे शुक्लपक्षे,शिवा=एकादशी । भाद्रे=भाद्रपदमासे शुक्लपक्षे, अग्निः=तृतीया । नभसः=श्रावणस्य, कृष्णे=कृष्णपक्षे, अमा=अमावास्या, अष्ट=अष्टमी । अत्राष्टमी जन्माष्टमी तदनंतरभाविनी अमावास्या च गृह्यते । यदाह नारदः—'द्वादश्यूर्जे शुक्लपक्षे नवम्याश्वयुजे सिते । चैत्रे भाद्रपदे चैव तृतीया शुक्लसंज्ञिता ॥ एकादशी सिता पौषेऽप्याषाढे दशमी सिता । माघे च सप्तमी शुक्ला नभस्येऽप्यसिताष्टमी ॥ श्रावणे मास्यमावास्या फाल्गुने मासि पूर्णिमा । आषाढे कार्तिके मासि चैत्री ज्येष्ठस्य पूर्णिमा ॥ मन्वादयः स्नानदानश्राद्धेष्वानंत्यपुण्यदाः ॥' इति । मत्स्यपुराणेऽपि-'आश्वयुक् शुक्लनवमी कार्तिके द्वादशी तथा । तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ॥ श्रावणस्य त्वमावास्या पौषस्यैकादशी तथा । आषाढस्यापि दशमी माघमासस्य सप्तमी ॥ श्रावणस्याष्टमी कृष्णा आषाढस्यापि पूर्णिमा । कार्तिकी फाल्गुनी चैत्री ज्यैष्ठी पंचदशी सिता ॥ मन्वंतरादयश्चैता दत्तस्याक्षयकारिकाः ॥' इति । अत्र नारदवाक्ये-'नभस्येऽप्यसिताष्टमी' इति, तत् कृष्णादिमासाभिप्रायेण । मत्स्यपुराणवचनं तु-'श्रावणस्याष्टमी कृष्णा' इति तच्छुक्लादिमासाभिप्रायेण । एवं सति जन्माष्टमी सिद्धा । उभयमते अमावास्या शुक्लमासाभिप्रायेण जन्माष्टम्यनंतरभाविनी गृह्यते ॥ अथ युगाद्याः युगादयश्चत्वार उच्यन्ते । बाहुलः=कार्तिकः, राधः=वैशाखः, गोऽग्नी=नवमीतृतीये यथासंख्यं ज्ञेये, सिते=शुक्लपक्षे । कार्तिके-शुक्लपक्षे नवमी, वैशाखे-शुक्लपक्षे तृतीया, भाद्रमाघासिते यथासंख्यं मदनदर्शौ भाद्रपदकृष्णपक्षत्रयोदशी माघकृष्णामावास्या एते युगादयश्चत्वारः । यदाह नारदः-'कार्तिके शुक्लनवमी चादिः कृतयुगस्य सा । त्रेतादिर्माधवे शुक्ला तृतीया पुण्यसंज्ञिता ॥ कृष्णा पंचदशी माघे द्वापरादिरुदीरिता । कल्पादिः स्यात्कृष्णपक्षे नभस्ये च त्रयोदशी ॥' शुक्लादिमासाभिप्रायेण श्राद्धपक्षत्रयोदशी प्रसिद्धशिवरात्र्यनंतरभाविन्यमावास्या च गृह्यते। उशनाः-'अयने विषुवे चैव शयने बोधने हरेः । अनध्यायं प्रकुर्वीत मन्वादिषु युगादिषु ॥' इति । याज्ञवल्क्यस्त्वष्टत्रिंशत्तात्कालिकाननध्यायानाह-'संध्यागर्जितनिर्घातभूकंपोल्कानिपातने । समाप्य वेदं द्युनिशमारण्यकमधीत्य च ॥ पंचदश्यां चतुर्दश्यामष्टम्यां राहुसूतके । ऋतुसंधिषु भुक्त्वा च श्राद्धिकं प्रतिगृह्य च ॥ पशुमंडूक-

नकुलश्वाहिमार्जारमूषकैः । कृतेऽन्तरे त्वहोरात्रं शक्रपाते तथोच्छ्रये ॥ खरोष्ट्रगर्दभोलूकसामबाणार्तनिःस्वने । अमेध्यशवशूद्रांत्यश्मशानपतितांतिके ॥ देशेऽशुचावात्मनि च विद्युत्स्तनितसंप्लवे । भुक्त्वार्द्रपाणिरंभोभिरर्धरात्रेऽतिमारुते ॥ पांसुवर्षे दिशां दाहे संध्यानीहारभीतिषु । धावतः पूतिगंधे च शिष्टे च गृहमागते ॥ खरोष्ट्रयानहस्त्यश्वनौवृक्षेरिणरोहणे । अष्टत्रिंशदनध्यायानेतांस्तात्कालिकान् जगुः ॥' इति । अन्यच्च-'अहन्येते ह्यनध्यायाः शिष्यर्त्विग्गुरुबंधुषु । उपाकर्मणि चोत्सर्गे स्वशाखाश्रोत्रिये मृते ॥' एवमाद्योऽन्येऽप्यनध्याया धर्मशास्त्रोक्ता अनुसंधेयाः । ते च व्रतबंधे विद्यारंभे व्रतविसर्गादौ नित्याध्ययने च यथायोग्यं वर्जनीयाः । सोपपदादीननध्यायान् ग्रंथकृद्व्रतबन्धप्रकरणे वक्ष्यतीति शिवम् ॥ ५७ ॥

अथ शुभाशुभप्रकरणं गद्येनोपसंहरति—

## इति श्रीदैवज्ञानंतसुतदैवज्ञरामज्योतिर्विद्विरचिते मुहूर्तचिंतामणौ शुभाशुभप्रकरणं समाप्तम् ॥ १ ॥

'इति हेतुप्रकरणप्रकारादिसमाप्तिषु' इत्यमरः । श्रीशब्दो वाक्यालंकारे । शुभं=सिद्धियोगादि, अशुभं=सिंहस्थादि, तयोः प्रकरणं निरूपणम् । अन्यत् स्पष्टम् । 'ज्योतिर्विद्वरनीलकंठविदुषः श्रीचंद्रिकायास्तथा पुत्रेणाहिगवीप्रसारितधिया मौहूर्तचिंतामणेः । गोविंदेन विनिर्मिते नयनिधौ पीयूषधाराभिधे व्याख्याने हि शुभाशुभप्रकरणं पूर्णत्वमभ्यागमत् ॥' इति श्रीविद्वद्वरदैवज्ञमुकुटालंकारनीलकंठज्योतिर्वित्पुत्रगोविंदज्योतिर्विद्विरचितायां मुहूर्तचिंतामणिटीकायां पीयूषधाराभिधायां शुभाशुभप्रकरणं समाप्तम् ॥ १ ॥

## नक्षत्रप्रकरणम् २ ।



शर्वाणीतनयमघाब्धिदावमीशं नत्वा श्रीगुरुपदभक्तिलब्धधिषः ।
गोविंदो विबुधवरप्रहर्षिणीं तां नक्षत्रप्रकरणटिप्पणीं तनोति ॥ १ ॥

अथ नक्षत्रप्रकरणं व्याख्यायते । तत्रादौ नक्षत्राणां प्रसिद्धत्वादेवावक्तव्यतायां सिद्धायां तत्स्वामिनः शार्दूलविक्रीडितेनाह—

नासत्यान्तकवह्निधातृशशभृद्रुद्रादितीज्योरगा
ऋक्षेशाः पितरो भगोऽर्यमरवित्वष्ट्राशुगाश्च क्रमात् ।
शक्राग्नी खलु मित्रशक्रनिर्ऋतिक्षीराणि विश्वे विधि-
गोविंदो वसुतोयपाजचरणाहिर्बुध्न्यपूषाभिधाः ॥ १ ॥

नासत्यान्तकेति ॥ एते क्रमादृक्षेशा नक्षत्राधीशा ज्ञेयाः । यथा, अश्विन्याः-

नासत्यौ=अश्विनीकुमारौ। भरण्याः-अन्तकः=यमः। कृत्तिकायाः-वह्निः=अग्निः। रोहिण्याः-धाता=ब्रह्मा । मृगस्य-शशभृत्=चन्द्रः । आर्द्रायाः-रुद्रः=महादेवः। पुनर्वसोः-अदितिः=देवमाता। पुष्यस्य-इज्यः=बृहस्पतिः। आश्लेषायाः-उरगः=सर्पः । मघायाः-पितरः। पूर्वाफल्गुन्याः-भगः=सूर्यविशेषः। उत्तराफल्गुन्याः-अर्यमा=सूर्यविशेषः। हस्तस्य-रविः=सूर्यः। चित्रायाः-त्वष्टा=विश्वकर्मा। स्वात्याः-आशुगः=वायुः। विशाखायाः-शक्राग्नी=इन्द्राग्नी । अत्र समुदितयोर्देवतात्वं । अनुराधायाः-मित्रः=सूर्यविशेषः। ज्येष्ठायाः-शक्रः=इन्द्रः । मूलस्य-निर्ऋतिः=राक्षसः। पूर्वाषाढायाः-क्षीरं=उदकं। उत्तराषाढायाः-विश्वे=विश्वेदेवाः। अभिजितः-विधिः । श्रवणस्य-गोविंदः=विष्णुः। धनिष्ठायाः-वसवः-अष्टौ देवताविशेषाः। शततारकायाः-तोयपः=वरुणः । पूर्वाभाद्रपदायाः- अजचरणः=रुद्रविशेषः। उत्तराभाद्रपदायाः-अहिर्बुध्न्यः=रुद्रविशेषः। रेवत्याः-पूषा-सूर्यविशेषः । यदाह नारदः—'नक्षत्रेशाः क्रमाद्दस्रयमवह्निपितामहाः। चन्द्रेशादितिजीवाहिपितरो भगसंज्ञिताः ॥ अर्यमार्कस्त्वष्टृमरुच्छक्राग्नीमित्रवासवाः। निर्ऋत्युदकविश्वेजगोविंदा वसवोऽम्बुपः ॥ ततोऽजपादहिर्बुध्न्यः पूषा चेति प्रकीर्तिताः ॥' इति । प्रयोजनं तु तिथिप्रकरणे प्रोक्तमस्माभिः । अत्र वसव इति बहुवचनांतत्वाद्बहूनामेव व्यासज्यवृत्तिदेवतात्वं प्रतीयते । 'धनिष्ठानक्षत्रं वसवो देवता' इति श्रुत्युक्तेश्च। एवं सति केचिद्दीपिकाकारादयो बहुत्वमविवक्षितमिति मत्वा वसुशब्दं च द्रव्यवाचकं मत्वा स्वं धनं द्रव्यमित्यादिशब्दं धनिष्ठानक्षत्रवाचकं मन्यंते, ते चिन्त्योक्तयो वेदितव्याः । अथ प्रसंगात्प्रत्येकं नक्षत्रकृत्यानि ग्रन्थकृदनुक्तान्यप्युच्यंते। तान्याह नारदः—'वस्त्रोपनयनक्षौरसीमन्ताभरणक्रियाः। स्थापनाश्वेभयानर्क्षाकृषिविद्यादयोऽश्विभे ॥ वापीकूपतडागादिविषशस्त्रोग्रदारुणाः । बिलप्रवेशगणितनिक्षेपा याम्यभे शुभाः ॥ अग्न्याधानास्त्रशस्त्रोग्रसंधिविग्रहदारुणाः । संग्रामौषधवादित्रक्रियाः शस्ताश्च वह्निभे ॥ सीमंतोन्नयनोद्वाहवस्त्रभूषास्थिरक्रियाः । हयहस्त्यभिषेकाश्च प्रतिष्ठा ब्रह्मभे शुभाः ॥ प्रतिष्ठाभूषणोद्वाहसीमंतोन्नयनक्रियाः । क्षौरवास्तुगजोष्ट्राश्वयात्राः शस्ताश्च चन्द्रभे ॥ ध्वजतोरणसंग्रामप्राकारास्त्रक्रियाः शुभाः । संधिविग्रहवैराणि रसाद्याः शर्वभे शुभाः ॥ प्रतिष्ठायानसीमन्तवस्त्रवास्तूपनायनम्। क्षौराश्वकर्मादितिभे विधेयं धान्यभूषणम् ॥ यात्राप्रतिष्ठासीमन्तव्रतबन्धप्रवेशनम्। करग्रहं विना सर्वं कर्म देवेज्यभे शुभम् ॥ अनृतं व्यसनं द्यूतं धातुवादौषधाहवम् । विवादरसवाणिज्यं कर्म कद्रुजभे शुभम् ॥ कद्रुजः=सर्पः। कृषिवाणिज्यगोधान्यरणोपकरणादिकम् । विवाहनृत्यगीताद्यं निखिलं कर्म पैत्रभे ॥ विवादविषशस्त्राग्निदारुणोग्राहवादिकम् । पूर्वात्रयेऽखिलं कर्म कर्तव्यं मांसविक्रयः ॥ प्रतिष्ठोद्वाहसीमंताभिषेकव्रतबन्धनम्॥ प्रवेशस्थापनाश्वेभवास्तुकर्मोत्तरात्रये ॥ प्रतिष्ठोद्वाहसीमंतयानवस्त्रोपनायनम् । क्षौरवास्त्वभिषेकाश्च भूषणं कर्म भानुभे ॥ प्रवेशवस्त्रसीमंतप्रतिष्ठाव्रतबंधनम्। त्वाष्ट्रभे वास्तुविद्याश्च क्षौरभूषणकर्म यत् ॥ प्रतिष्ठोपनयोद्वाहवस्त्रसीमंत-

भूषणम् । विवादाश्वेभकृष्यादिक्षौरकर्म समीरभे ॥ वस्त्रभूषणवाणिज्यरस-धान्यादिसंग्रहम् । इन्द्राग्निभे नृत्यगीतशिल्पलेखनकर्म यत् ॥ प्रवेशस्थापनोद्वाहव्रतबन्धाष्टमंगलम् । वस्त्रभूषणवास्तुश्च मैत्रभे संधिविग्रहम् ॥ क्रूरोग्रशस्त्रवाणिज्यगोमहिष्यंबुकर्म च । इन्द्रभे नृत्यवादित्रशिल्पलोहाश्मलेखनम् ॥ विवाहकृषिवाणिज्यदारुगाहवभेषजम् । निर्ऋतिभे नृत्यशिल्पसंधिविग्रहलेखनम् ॥' इति । पूर्वाषाढोत्तराषाढयोः कृत्यमुक्तम् । 'प्रतिष्ठाक्षौरसीमंतयानोपनयनौषधम् । पुरग्रामगृहारंभा विष्णुभे पटबंधनम् ॥ वस्त्रोपनयनक्षौरप्रतिष्ठायानभूषणम् । वसुभे वास्तुसीमंतप्रवेशाश्वविभूषणम् ॥ प्रवेशस्थापनक्षौरमौंजीबन्धनभेषजम् । अश्वारोहणसीमंतवास्तुकर्म जलेशभे ॥' इति । पूर्वाभाद्रपदोत्तराभाद्रपदयोः कृत्यमुक्तं पूर्वम् । 'विवाहव्रतबन्धाश्च प्रतिष्ठायानभूषणम् । प्रवेशवस्त्रसीमंतक्षौरभेषजमंत्यभे ॥' इति ॥ १ ॥

अथ ध्रुवगणं तत्कृत्यं चानुष्टुभाह—

उत्तरात्रयरोहिण्यो भास्करश्च ध्रुवं स्थिरम् ।
तत्र स्थिरं बीजगेहशांत्यारामादि सिद्धये ॥ २ ॥

उत्तरात्रयेति ॥ उत्तरा उत्तराफल्गुन्युत्तराषाढोत्तराभाद्रपदास्तिस्र उत्तराः रोहिणी च एतानि नक्षत्राणि ध्रुवसंज्ञकानि स्थिरसंज्ञानि चेति संज्ञाद्वयम् । एवमुत्तरत्रापि व्याख्येयम् । तत्र ध्रुवनक्षत्रेषु स्थिरं कर्म कार्यम् । तथा बीजं=यवादि, गेहं=गृहं, शांतिः=विनायकशांत्यादि, आरामः=नगरोपकंठवर्ति वनम् । आदिशब्दान्मृदुनक्षत्रोक्तमपि कर्म सिद्धये भवति । तदुक्तं वसिष्ठेन—'स्थिरसंज्ञं भचतुष्टयमंबुजजर्क्षमुत्तरात्रितयम् । नरपतिपत्तनमदनप्रवेशबीजादि सिध्यते तत्र ॥ मृदुवृंदे कथितान्यपि स्थिरवृंदे तानि कार्याणि ॥' इति । अथ संज्ञाद्वये प्रमाणमुच्यते—'ध्रुवमचलं क्षिप्रं लघु चरं चलं मैत्रमृदुसंज्ञे । साधारणमिश्राख्यं क्रूरोग्रं तीक्ष्णदारुणं तुल्यम् ॥' इति वसिष्ठोक्तेः । एवं भास्करो रविरपि स्थिरः । यदाह वसिष्ठः—'सूर्यः स्थिरः शीतकरश्चरास्मा धराज उग्रः शशिजो विमिश्रः । देवेंद्रपूज्यो लघुरिंद्रशत्रुपूज्यो मृदुस्तीक्ष्णतनुश्च सौरिः ॥' इति । अत्रापि सामान्यतः स्थिरकृत्यं कार्यं मूलश्लोकोक्तम् । अन्यदपि वारोक्तं कर्म कार्यमभिधानात् । यदाह नारदः—'नृपाभिषेकमांगल्यसेवायानास्त्रकर्म यत् । औषधाहवधान्यादि विधेयं भानुवासरे ॥' इति ॥२॥

अथ चरगणं तत्कृत्यं चानुष्टुभाह—

स्वात्यादित्ये श्रुतेस्त्रीणि चंद्रश्चापि चरं चलम् ।
तस्मिन्गजादिकारोहो वाटिकागमनादिकम् ॥ ३ ॥

स्वात्यादित्य इति ॥ स्वाती, आदित्यं-अदितिर्देवताऽस्यादित्यम्, 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' इति ण्यः । आदिवृद्धिः । 'यस्येति च' इतीकार-

लोपः । आदित्यं=पुनर्वसुः । श्रुतेः श्रवणमारभ्य त्रीणि श्रवणधनिष्ठाशततारकाः सोमवारश्च चरसंज्ञाश्चलसंज्ञाश्चैते ज्ञेयाः । तस्मिंश्चरनक्षत्रे गजो हस्ती तदादयोऽश्वादयस्तेषामारोहः, वाटिका आरामस्तथा गमनं यात्रा । आदिशब्दाल्लघुनक्षत्रोक्तमपि कर्म सिध्यतीति शेषः । तदाह वसिष्ठः—'अदितिः श्रुतिभाधितयं चरसंज्ञं पंचकं मरुदं च । वाहनकर्मविभूषणचरकार्योद्यानमंत्रसिद्ध्यै तत् ॥ कथितान्यपि लघुवृंदे चरसंज्ञे तानि कार्याणि । मणिमुक्ताफलहेमसद्रजतत्रपुसीसकर्माणि ॥' इति । नारदः—'शंखमुक्तांबुरजतवृक्षेक्षुस्त्रीविभूषणम् । पुष्पगीतक्रतुक्षीरकृषिकर्मेंदुवासरे ॥' इति ॥ ३ ॥

अथोग्रगणमनुष्टुभाह—

पूर्वात्रयं याम्यमघे उग्रं क्रूरं कुजस्तथा ।
तस्मिन्घाताग्निशाठ्यानि विषशस्त्रादि सिध्यति ॥ ४ ॥

पूर्वात्रयमिति ॥ पूर्वात्रयं=पूर्वाफल्गुनीपूर्वाषाढापूर्वाभाद्रपदारूपं नक्षत्रत्रयं, याम्यं=भरणी, मघा च, तथा कुजः=भौमश्च, उग्रसंज्ञः, क्रूरसंज्ञश्च । तस्मिन्=उग्रनक्षत्रे, घातः=हननं, अग्निः=अग्निदाहः, शाठ्यं=खलत्वं, विषं=विषभक्षणादि, शस्त्रं=शस्त्रमारणादि, आदिशब्दादन्यदपि अरिष्टकृत्यं दारुणनक्षत्रोक्तं सिध्यतीति निष्पद्यते । उक्तं च वसिष्ठेन—'पूर्वात्रितयं पित्र्यभमुग्राख्यमिदं च पंचकं याम्यम् । मारणभेदनबंधनविषदहननं पंचमे कार्यम् ॥ यद्दारुणभोक्तं तत्कर्म त्वथोग्रभे कार्यम् ॥' इति । नारदः—'विषाग्निबंधनस्तेयसंधिविग्रहसाहसम् । धात्वाकरप्रवालस्त्रीकर्म भूमिजवासरे ॥' इति ॥ ४ ॥

अथ मिश्रगणमनुष्टुभाह—

विशाखाग्नेयभे सौम्यो मिश्रं साधारणं स्मृतम् ।
तत्राग्निकार्यं मिश्रं च वृषोत्सर्गादि सिद्धये ॥ ५ ॥

विशाखेति ॥ विशाखा, आग्नेयं=कृत्तिका, सौम्यः=बुधश्च, एतत्त्रयं मिश्रसंज्ञं, साधारणसंज्ञं च । तत्र मिश्रसंज्ञेषु नक्षत्रेषु अग्निकार्यं=अग्निहोत्रं, मिश्रं-नक्षत्रांतरोक्तं कर्म, वृषोत्सर्गः-काम्यः । आदिशब्दादुग्रमपि कर्म सिद्धये भवति । तदाह वसिष्ठः—'अग्नितयं श्वसनसखं सैंद्राग्निभकं च मिश्रसंज्ञं हि । निखिलानि च साधारणकार्याण्युग्राणि तत्र कार्याणि ॥' इति । नारदः—'नृत्यशिल्पकलागीतलिपिभूरससंग्रहम् । विवाहधान्यसंग्राहकर्म सौम्यस्य वासरे ॥' इति ॥ ५ ॥

अथ लघुगणमनुष्टुभाह—

हस्ताश्विपुष्याभिजितः क्षिप्रं लघु गुरुस्तथा ।
तस्मिन्पण्यरतिज्ञानभूषाशिल्पकलादिकम् ॥ ६ ॥

हस्ताश्वीति ॥ पूर्वार्धं स्पष्टम् । तस्मिन्=लघुनक्षत्रे, पण्यं=विक्रेयवस्तु,

रतिः=स्त्रीभोगः, ज्ञानं-शास्त्रादेः, भूषा=आभरणं, शिल्पं=चित्रादि, कलाः-चतुःषष्टिकला नृत्यादिकाः । आदिशब्दादपरनक्षत्रोक्तमपि कार्यम् । तदाह वसिष्ठः-'सुरसचिवाश्विनहस्तास्तारा: स्युः क्षिप्रसंज्ञकास्तासु । औषधपण्यविभूषणशिल्पकलाज्ञानकर्मसिद्धिः स्यात् ॥ चरस्थिरभ्ये कथितान्यपि कार्याण्यखिलानि लघुगणे नूनम् ॥' इति । नारदोऽपि-'क्षिप्रं सूर्याश्विपुण्यभम्' इत्याह । अत्राभिजिन्नोक्तः । दैवज्ञमनोहरे—'आर्ष्टिषेण' इत्युक्त्वा पठितम् 'लघुक्षिप्रं करस्तिष्योऽभिजिद्दास्रं बृहस्पतिः' इति । अत एवोक्तं श्रीपतिना—'अश्विनीगुरुभमर्कदैवतं साभिजिल्लघुचतुष्टयं स्मृतम्' इति । वसिष्ठादिभिस्तु प्रत्येकं नक्षत्रकृत्येपु अभिजितोऽनुक्तेरित्यतोऽत्राप्यनुक्तिः । वारकृत्ये नारदः-'यज्ञपौष्टिकमांगल्यस्वर्णवस्त्रादिभूषणम् । वृक्षगुल्मलतायानकर्म देवेज्यवासरे ॥' इति ॥ ६ ॥

अथ मृदुगणमनुष्टुभाह—

मृगांत्यचित्रामित्रर्क्षं मृदु मैत्रं भृगुस्तथा ।
तत्र गीतांबरक्रीडामित्रकार्यविभूषणम् ॥ ७ ॥

मृगांत्येति ॥ मृगः, अंत्यं=रेवती, चित्रा, मित्रर्क्षम्=अनुराधा, भृगुः-शुक्रः, मृदुसंज्ञं मैत्रसंज्ञं च । तत्र गीतं, अंबरं=वस्त्रं, क्रीडा-स्त्रिया सह क्रीडा, मित्रस्येष्टस्य कार्यं, विभूषणं=अलंकारः एतत्सिध्यति । यदाह वसिष्ठः-'मृदुवर्गं भचतुष्टयमंत्यत्वाष्ट्राख्यसौम्यमित्रर्क्षम् । मंगलवनिताभूषणमंदिरगीतानि सिध्यंति ॥' इति । तत्र नारदः—'नृत्यवादित्रगीतादिस्वर्णक्षीरवभूषणम् । भूपण्योत्सवगोधान्यकर्म भार्गववासरे ॥' इति ॥ ७ ॥

अथ तीक्ष्णगणमनुष्टुभाह—

मूलेंद्राद्राहिभं सौरिस्तीक्ष्णं दारुणसंज्ञकम् ।
तत्राभिचारघातोग्रभेदाः पशुदमादिकम् ॥ ८ ॥

मूलेंद्रेति ॥ मूलं, ऐंद्रं=ज्येष्ठा, आर्द्रा, अहिभम्-आश्लेषा, सौरिः=शनैश्चरः, तीक्ष्णसंज्ञं दारुणसंज्ञं च । तत्र तीक्ष्णनक्षत्रे अभिचारकर्माणि, उग्रं=भयंकरकृत्यं मारणादि, भेदः=अत्यंतमित्रयोः कलहोत्पादनादि, पशूनां हस्त्यादीनां दमः शिक्षा, आदिशब्दाद्बंधनादीनि । यदाह वसिष्ठः-'दारुणभानि पुरन्दरकोणपशिवसर्पदैवानि । दारुणबंधनदहनप्रहरणकर्माणि सिद्धिमायांति ॥' इति । नारदः—'त्रपुसीसायसाश्मास्त्रविषपानासवानृतम् । स्थिरकर्माखिलं वास्तुसंग्रहं सौरिवासरे ॥' इति ॥ ८ ॥

अथाधोमुखोर्ध्वमुखतिर्यङ्मुखनक्षत्राणि इन्द्रवंशेनाह—

मूलाहिमिश्रोग्रमधोमुखं भवे-
दूर्ध्वास्यमार्द्रेज्यहरित्रयं ध्रुवम् ।

तिर्यङ्मुखं मैत्रकरानिलादिति-
ज्येष्ठाश्विनानीदृशकृत्यमेषु सत् ॥ ९ ॥

मूलेति ॥ मूलं, अहिः=आश्लेषा, मिश्रं=कृत्तिकाविशाखे, उग्रं=पूर्वात्रयमघा-भरण्यः, एतानि नव नक्षत्राण्यधोमुखानि ज्ञेयानि । एष्वीदृशकृत्यमधोमुखकृत्यं वापीकूपादि तत्समीचीनमुक्तम् । तदुक्तं गरुडपुराणे—'भरणीकृत्तिकाश्लेषा-मघामूलविशाखिकाः । तिस्रः पूर्वास्तथा चैव अधोवक्त्राः प्रकीर्तिताः ॥' एषु—'वापीकूपतडागादिखननं च तृणादिकम् । देवतागारखननं निधानखननं तथा ॥ गणितं ज्यौतिषारंभं खनीबिलप्रवेशनम् । कुर्यादधोगतान्येव कार्याणि वृषभध्वज ॥' इति । अथार्द्रा, इज्यः=पुष्यः, हरित्रयं=श्रवणधनिष्ठाशततारकाः, ध्रुवं=उत्तरात्रयरोहिण्यः; एतन्नक्षत्रनवकमूर्ध्वास्यमूर्ध्वमुखं भवेत् । अत्राप्येता-दृशकृत्यं प्रासादादि सत्स्यात् । तदुक्तं गरुडपुराणे–'रोहिण्यार्द्रा तथा पुष्यो धनिष्ठा चोत्तरात्रयम् । वारुणं श्रवणं चैव नव चोर्ध्वमुखाः स्मृताः ॥ एषु राज्याभिषेकं च पट्टबंधं च कारयेत् ॥' इति । ऊर्ध्वमुखानि उच्छ्रितानि सर्वाणि एषु च कारयेत । अथ मैत्रं, मृदुनक्षत्रं-मृगरेवतीचित्रानुराधाः, करः=हस्तः, अनिलः=स्वाती, अदितिः=पुनर्वसुः, ज्येष्ठा, आश्विनं=अश्विनी, एतन्नक्षत्रनवकं तिर्यङ्मुखं पार्श्वमुखं भवेत् । अत्रापि तादृशमेव कृत्यं चक्ररथहलादिकं भवेत् । तदुक्तं गरुडपुराणे—'रेवती चाश्विनी चित्रा स्वाती हस्तः पुनर्वसुः । अनुरा-धामृगज्येष्ठा एताः पार्श्वमुखाः स्मृताः ॥ गजोष्ट्राश्वबलीवर्ददमनं महिषस्य च । बीजानां वपनं कुर्याद्गमनागमनादिकम् ॥ चक्रयंत्ररथादीनां नावादीनां प्रवाह-णम् । पार्श्वेषु यानि कर्माणि कुर्यादेतेषु तानि च ॥' इति । ननु सर्वेषामेव कर्मणां पार्थक्येन नक्षत्राभिधानादिदं पुनरुक्तं किमर्थमुक्तमिति चेन्न । विशेषनक्षत्र-विहितानां कर्मणामवश्यकर्तव्यत्वे सति कतिपयदिनमध्ये मुहूर्तालब्धौ सत्यां कर्मण आकारमधोमुखादिकं विदित्वा तत्तन्नक्षत्रेषु तानि तानि कर्माणि कार्याणि । यानि सर्वथा विशेषतोऽनुक्तान्येव बिलप्रवेशनिधिखननचक्रयंत्रहल-परिखाद्यूतक्रीडामेषगर्दभगर्तादीनि तेषामेष्वेव नक्षत्रेषु कृतिरुचिता । एव-मन्येषामप्यप्रसिद्धानां कर्मणां तिर्यङ्मुखाद्याकारज्ञाने सत्येषु नक्षत्रेषु कर्तव्य-तौचित्यात् । सामान्येन विशेषभावेन च सुदिनलब्धिः 'द्विर्बद्धं सुबद्धं भवति' इति न्यायाद्युक्तमेव । सद्यस्कालपक्षे तु 'धिष्ण्ये प्रोक्तं स्वामितिथ्यंशकेऽस्य' ( १।५६ ) इति वचनात्तन्मुहूर्ते कार्यमित्यलमियता ॥ ९ ॥

अथ प्रवालदंतशंखसुवर्णवस्त्रपरिधानमुहूर्तं वसंततिलकेनाह—

पौष्णध्रुवाश्विकरपंचकवासवेज्या-
दित्ये प्रवालरदशंखसुवर्णवस्त्रम् ।
धार्यं विरिक्तशनिचन्द्रकुजेऽह्नि रक्तं
भौमे ध्रुवादितियुगे सुभगा न दध्यात् ॥ १० ॥

पौष्णेति ॥ पौष्णं=रेवती, ध्रुवाणि=रोहिण्युत्तरास्तिस्रः, अश्विनी, करपंचकं=हस्तचित्रास्वातीविशाखानुराधाः, वासवं=धनिष्ठा, इज्यः=पुष्यः, आदित्यं=पुनर्वसुः; अयं समाहारद्वंद्वः । तत्र प्रवालं=विद्रुमं, 'पोवळें' इति महाराष्ट्रभाषायां, 'मूंगा' इति कान्यकुब्जाः । रदाः=हस्तिदंताः अर्थाद्वलयादि, शंखः=शंखवलयं, सुवर्णं, वस्त्रं-श्वेतं; एतानि वस्तूनि धार्याणि तानि रिक्तातिथिशनिचंद्रभौमरहितेऽह्नि दिने धार्याणि । यदाह श्रीपतिः—'रोहिणीषु करपंचकेऽश्विभे स्युत्तरेऽपि च पुनर्वसुद्वये । रेवतीषु वसुदैवते शुभे नव्यवस्त्रपरिधानमिष्यते ॥' इति । प्रवालादीनां तु विशेषत्वेनैवोक्तः—'करादिपंचकेऽश्विभे सपौष्णवासरे स्मृता । धृतिश्च शंखकांचनप्रवालरक्तवाससाम् ॥' इति । वारानप्याह स एव—'जीर्णं रवौ सततमंबुभिरार्द्रमिंदौ भौमे शुचे बुधदिने च भवेद्धनाय । ज्ञानाय मंत्रिणि भृगौ प्रियसंगमाय मंदे मलाय च नवांबरधारणं स्यात् ॥' इति । अतः परिशेषात् सूर्यभौमशनयो निषिद्धाः । अथ रक्तं कौसुंभादिरंगेण रक्तं वस्त्रं भौमे धार्यम् । 'मांजिष्ठकौसुंभकरागयोश्च महीसुतः कांचनभूषणेषु' इति तेनैवोक्तत्वात् । 'नासत्यपौष्णवसुभैः करपंचकेन मार्तंडभौमगुरुदानवमंत्रिवारैः । मुक्तासुवर्णमणिविद्रुमशंखदंतरक्तांबराणि विधृतानि भवंति सिद्ध्यै ॥' इति दैवज्ञवल्लभोक्तेश्च । अथ स्त्रीणां विशेषः । ध्रुवादितियुगे उत्तरात्रयरोहिणीपुनर्वसुपुष्येषु सुभगा सभर्तृका स्त्री प्रवालरदमुक्तादिकं न दध्यात् । उक्तं च दीपिकायाम्—'पुष्टेंदौ समये शुभे ध्रुवसुराचार्यादितीर्शेऽगना नो रक्तं बिभृयात्प्रवालकमणिं शंखेभदंतौ तथा' इति । कश्चित्तु शततारानक्षत्रे स्त्रीणां स्नानमपि निषिद्धम् । उक्तं च—'रोहिणीगुरुपुनर्वसूत्तरे या बिभर्ति नववस्त्रभूषणम् । सा न योषिदवलंबते पतिं स्नानमाचरति वारुणेऽपि या ॥' इति । चंडेश्वरोऽपि—'स्नानं कुर्वंति या नार्यश्चंद्रे शतभिषान्विते । सप्तजन्म भवेद्वंध्या विधवा दुर्भगा भृशम् ॥ प्रमादाच्छतभे स्नानं नारीणां यदि जायते । पूजयेत्स्वामिनं तत्र आत्मना च धनेन च ॥' इति । विशेषो राजमार्तंडे—'अस्तंगते भृगुसुते शयने च विष्णोर्जन्माद्यचापमृगगे दिनपे न दध्यात् । रक्तेंदुभानुदिवसेऽशकवर्जिते च शंखं च रक्तपटकं युवतिः कथंचित् ॥' इति । दिनपः=सूर्यः, रक्तः=भौमः ॥ १० ॥

अथ वस्त्रस्य नवधाविभक्तस्य दग्धादिदोषशुभाशुभफलं शार्दूलविक्रीडितेनाह—

**वस्त्राणां नवभागकेषु च चतुष्कोणेऽमरा राक्षसा**
**मध्यत्र्यंशगता नरास्तु सदृशे पाशे च मध्यांशयोः ।**
**दग्धे वा स्फुटितेंऽबरे नवतरे पंकादिलिप्ते न सद्-**
**क्षोंऽशे नृसुरांशयोः शुभमसत्स्वांशके प्रांततः ॥ ११ ॥**

वस्त्राणामिति ॥ वस्त्राणां नव भागाः कार्याः । कोणचतुष्टये अमरा देवाः स्थाप्याः । राक्षसा मध्यभूतांशत्रयगता ज्ञेयाः । नराः सदृशे दशासहितपाशे च पुनर्मध्ययोरंशयोः स्थाप्याः । एतदुपलक्षणम्,–शयनासनपादुकास्वप्ययं विचारः । तत्र चेदृक्षेंऽशे नवतरे अतिनूतने अंबरे वस्त्रे दैवाद्दग्धे स्फुटिते पाषाणधात्वादिभिर्निहते पंकेन कर्दमेन आदिशब्दाद्गोमयादिभिर्लिप्ते उपहते सति तद्वस्त्रं न सत् शुभफलजनकं न भवतीत्यर्थः । किंतु मरणं विदधाति । अथ नृसुरांशयोरेवं वस्त्रस्य दाहादिके सति शुभं कल्याणं स्यात् । मनुष्यांशे पुत्रप्राप्तिर्देवांशे भोगप्राप्तिरित्यर्थः । अथ सर्वांशके राक्षसमनुष्यदेवांशेषु प्रांततः प्रांतभागेऽनिष्टमशुभफलजनकम् । एतत्फलं शय्यासनपादुकास्वपि ध्येयम् । तदुक्तं श्रीपतिना–'कर्दमकज्जलगोमयलिप्ते वाससि दग्धवति स्फुटिते वा । चिंत्यमिदं नवधाविहितेऽस्मिन्निष्टमनिष्टफलं च सुधीभिः ॥ निवसंत्यमरा हि वस्त्रकोणे मनुजाः पाशदशांतमध्ययोश्च । अपरेऽपि च रक्षसां त्रयोंऽशाः शयने चासनपादुकासु चैवम् ॥ भोगप्राप्तिर्दैवतांशे नरांशे पुत्राप्तिः स्याद्राक्षसांशे च मृत्युः । प्रांते सर्वांशेष्वनिष्टं फलं स्याज्जुष्टे वस्त्रे नूतने साध्वसाधु ॥' अत्र राक्षसांशे छत्रध्वजादिसदृशी छेदाकृतिः शुभफलेति विशेषो ध्येयः । देवांशेऽपि काकोलूकसदृशी छेदाकृतिरशुभफलदेत्यपि विशेषो ज्ञेयः । तदुक्तं तत्रैव–'छत्रध्वजस्वस्तिकवर्धमानश्रीवत्सकुंभांबुजतोरणानाम् । छेदाकृतिर्नैर्ऋतभागगापि पुंसां विधत्ते नचिरेण लक्ष्मीम् ॥ कंकप्लवोलूककपोतकाककव्यादगोमायुखरोष्ट्रसर्पाः । शुष्कद्रुमप्रेतसमा न शस्ता छेदाकृतिर्दैवतभागगापि ॥' इति । अत एव कश्यपः—'नवांशकं समं कृत्वा चिंतयेच्च शुभाशुभम् । वसंति देवताः कोणे चांत्यमध्यद्वये नराः ॥ मध्यांशत्रितये दैत्याश्चैवं शय्यासनादिषु । अर्थप्राप्तिर्दैवतांशे पुत्रवृद्धिर्नरांशके ॥ हानिः पीडा पिशाचांशे सर्वप्रांतेष्वशोभनम् । शंखचक्रांबुजच्छत्रध्वजतोरणसंनिभाः ॥ श्रीवत्ससर्वतोभद्रनंद्यावर्तगृहोपमाः । वर्धमानस्वस्तिकेन मृगसमेभाकृतिः ॥ छेदाकृतिर्दैत्यभागेऽप्यायुरर्थप्रदा नृणाम् । खरोष्ट्रोलूककाकाहिजंबूकश्वृकोपमाः ॥ त्रिकोणसूर्याकृतयो देवभागेऽप्यशोभनाः । निंदितं वसनं दद्याद्द्विजेभ्यः स्वर्णसंयुतम् ॥ आशिषो वाचनं कृत्वा त्वन्यद्वस्त्रं च धारयेत् ॥' इति ॥ ११ ॥

अथ क्वचिद्दुष्टदिनेऽपि वस्त्रपरिधानमनुष्टुभाह—

**विप्राज्ञया तथोद्वाहे राज्ञा प्रीत्यार्पितं च यत् ।**
**निंद्येऽपि धिष्ण्ये वारादौ वस्त्रं धार्यं जगुर्बुधाः ॥ १२ ॥**

विप्रेति ॥ धिष्ण्ये नक्षत्रे वारादौ वारतिथियोगादौ व्यतीपातभद्रादिदुष्टयोगैर्निंद्येऽपि दुष्टेऽपि यद्वस्त्रं ब्राह्मणानुज्ञया तथोद्वाहे राज्ञा संतोषेणार्पितं दत्तं तद्वस्त्रं धार्यमिति बुधा जगुः । उक्तं च रत्नमालायाम्—'विप्रादेशादुद्वाहे च क्ष्मापालेन प्रीत्या दत्तम् । धिष्ण्ये वारे निंद्येऽप्याहुर्नूतं नव्यं वस्त्रं

धार्यं' इति । कश्यपेनापि—'प्रीत्या क्ष्मापालदत्तं यद्द्विप्रादेशात्करग्रहे । निंद्ये वासरधिष्ण्येऽपि धारयेत्तु नवांबरम् ॥' इति । इदं चोपलक्षणं तुल्यन्यायत्वाद्राज्ञा तथा ब्राह्मणादिभिस्तथा विवाहादिशुभकृत्ये हस्त्यश्वद्रव्यादिकं दत्तं तन्नक्षत्रादिदुष्टदिनेऽपि ग्राह्यम् ॥ १२ ॥

अथ लतापादपारोपणराजदर्शनमद्यगोक्रयविक्रयमुहूर्तान् शार्दूलविक्रीडितेनाह—

राधामूलमृदुध्रुवर्क्षवरुणक्षिप्रैर्लतापादपा-
रोपोऽथो नृपदर्शनं ध्रुवमृदुक्षिप्रश्रवोवासवैः ।
तीक्ष्णोग्राम्बुपभेषु मद्यमुदितं क्षिप्रांत्यवह्नीन्द्रभा-
दित्यैंद्राम्बुपवासवेषु हि गवां शस्तः क्रयो विक्रयः १३

राधामूलेति ॥ राधा=विशाखा, मूलं, मृदु=चित्रानुराधामृगरेवत्यः, ध्रुवर्क्ष=रोहिण्युत्तरात्रितयः, वरुणः=शततारका, क्षिप्रम्=अश्विनीपुष्याभिजितः । अत्राभिजित उत्तराषाढायामंतर्भावात् पृथगुक्तिर्न भवनानि ज्ञेयम् । कुतः ? अश्विनीपुष्यहस्तानां लाघवात् क्षिप्रत्वेनाभिधानादभिजिदुक्तिरप्यर्थाक्षिप्ता । एवं चतुर्दशभानि । एतैर्नक्षत्रैर्लतानां पादपानां वृक्षाणां चारोपो वापनं कार्यम् । उक्तं च वराहेण—'ध्रुवमृदुमूलविशाखा गुरुभं श्रवणं तथाऽऽश्विनं हस्तम् । शस्तानि दिव्यदृग्भिः पादपसंरोपणे भानि ॥' इति । यत्तु वसिष्ठवचनम्—'द्विदैववारीशशशांकमूलध्रुवेषु तिष्यार्कभपौष्णभेषु ॥ वनौषधीगुल्मलतादिकानामारोपणं तूत्तममत्र शस्तम् ॥' इति, तत् पादपव्यतिरिक्तलताद्यारोपणविषयम् । यतः पादपारोपणे चतुर्दश नक्षत्राणि, तद्व्यतिरिक्तलताद्यारोपणे एकादश भानि । ननु 'सावित्रतिष्याश्विनवारुणानि मूलं विशाखा च मृदुध्रुवाणि । लतौषधीपादपरोपणेषु शुभानि भानि प्रतिपादितानि ॥' इति श्रीपतिवचनं कथं संगच्छेत ? उच्यते,—वराहपद्यस्थपादपग्रहणं लतादीनामुपलक्षणमिति मत्वा तदुक्तिः । अनेनैवाशयेन ग्रंथकृदुक्तिरपि । अथो राजदर्शनमुहूर्तः । तत्र ध्रुवमृदुक्षिप्रश्रवोवासवैः उत्तरात्रयरोहिणीचित्राऽनुराधामृगरेवत्यश्विनीपुष्यहस्तश्रवणधनिष्ठाभिजिदेतैः षोडशनक्षत्रैर्नृपदर्शनं राजदर्शनं कुर्यात् । उक्तं च रत्नमालायाम्—'सौम्याश्विपुष्यश्रवणश्रविष्ठाहस्तध्रुवत्वाष्ट्रभपूषभानि । मैत्रेण युक्तानि नरेश्वराणां विलोकने भानि शुभप्रदानि ॥' अथ मद्यारंभमुहूर्तः । तत्र तीक्ष्णोग्राम्बुपभेषु= मूलज्येष्ठार्द्राश्लेषापूर्वात्रयमघाभरणीशततारकासु, मद्यं=मद्यप्रारंभः, उदितः । तदाह श्रीपतिः—'रौद्रे पित्र्ये वारुणे पौरुहूते याम्ये सार्पे नैर्ऋते चैव धिष्ण्ये । पूर्वाख्येषु त्रिष्वपि प्रोक्त उक्तो मद्यारंभः कालविद्भिः पुराणैः ॥' इति । अथ गोक्रयविक्रयमुहूर्तः । तत्र क्षिप्रांत्यवह्नीन्द्रभादित्यैन्द्राम्बुपवासवेषु=अश्विनीपुष्यहस्तरेवतीविशाखापुनर्वसुज्येष्ठाशततारकाधनिष्ठासु, गवां

क्रयः-मूल्येन परस्माद्ग्रहणं, विक्रयः-मूल्यग्रहणपूर्वकं दानं, स शस्तः । उक्तं च रत्नमालायाम्-'शाक्रवासवकरेषु विशाखापुष्यवारुणपुनर्वसुभेषु । अश्विपूषभयुतेषु विधेयो विक्रयक्रयविधिः सुरभीणाम् ॥' इति । एतानि नव भानि । भीमपराक्रमेण तु पंचदशभान्यभिहितानि-'हस्तेऽनुराधात्रितये सर्पौष्णे मृगे च पूर्वाश्विविशाखभेषु । पुष्ये धनिष्ठाद्वितयेऽदितीशे गवां क्रयं विक्रयमामनंति ॥' इति । अत्र श्रीपतिवाक्याद्यान्यधिकानि नक्षत्राणि, तान्यात्ययिकविषयाणि ॥ १३ ॥

अथ पशूनां रक्षामुहूर्तं स्थितिनिवेशयानमुहूर्तं चेंद्रवंशयाह—

लग्ने शुभे चाष्टमशुद्धिसंयुते रक्षा पशूनां निजयोनिभे चरे ।
रिक्ताष्टमीदर्शकुजश्रवोध्रुवत्वाष्ट्रेषु यानं स्थितिवेशनं न सत् १४

लग्ने इति ॥ शुभे शुभस्वामिके लग्नेऽष्टमशुद्धिसंयुते शुभपापाक्रांताष्टमभावरहिते सति स्वीययोनिनक्षत्रे पशूनां चतुष्पदानां रक्षा शस्ता । यदाह श्रीपतिः—'शुभग्रहोदये शुद्धे नैधने स्वर्क्षयोनिषु । रक्षाविधिक्रिया शस्ता पशूनां मुनिभिः स्मृता ॥' इति । स्वीययोनिनक्षत्राणि विवाहप्रकरणे (श्लो० २५) 'अश्विन्यंबुपयोर्हयः' इत्यादिना वक्ष्यंति । तथा चरे चरनक्षत्रेष्वपि रक्षा पशूनां विधेया । 'तीक्ष्णे पशूनां दमनं चरे स्यात्पशुपोषणम्' इति भीमपराक्रमोक्तेः । अथ रिक्ताः=चतुर्थीनवमीचतुर्दश्यः, अष्टमी, दर्शः=अमावास्या, कुजः=मंगलः, श्रवः=श्रवणः, ध्रुवाणि=उत्तरात्रयरोहिण्यः, त्वाष्ट्रं=चित्रा; एषु भेषु पशूनां यानं गृहाद्बहिर्निःसारणं स्थितिर्गोष्ठादौ वेशनं प्रवेशनं च न सत् । सत्फलजनकं न भवतीत्यर्थः । उक्तं च वसिष्ठेन—'त्वाष्ट्रध्रुवश्रीपतिभेषु रिक्तादर्शाष्टमीभौमदिने पशूनाम् । यात्रां प्रवेशं न कदाचिदेव कुर्याच्च तेषामभिवृद्धिकांक्षी ॥' इति चशब्दात् स्थितिमपि न कुर्यात् । व्यवहारतत्त्वे तु वाराधिक्यमुक्तम्—'स्वथानधिष्ण्ये विकुजे पशूनां कर्माथ कुर्याद्बुधेंदुमंदे । यानं प्रवेशं च तिथावशैवे चित्रोत्तरावैष्णवभान्यभेषु ॥' अशैवे=चतुर्दशीरहिते । उपलक्षणत्वादमावास्यादिरहिते । व्यवहारोच्चये—'पूर्वात्रये धनिष्ठेंद्रपौष्णे सौम्यविशाखयोः । आश्लेषायामथाश्विन्यां यात्रासिद्धिश्चतुष्पदाम् ॥' इति ॥ १४ ॥

अथौषधसूच्योर्मुहूर्तं मंदाक्रांताछंदसाह—

भैषज्यं सल्लघुमृदुचरे मूलभे द्व्यंगलग्ने
शुक्रेंद्विज्ये विदि च दिवसे चापि तेषां रवेश्च ।
शुद्धे रिःफद्युनमृतिगृहे सत्तिथौ नो जनेर्भे
सूचीकर्माप्यदितिवसुभत्वाष्ट्रमित्राश्विधिष्ण्ये ॥ १५ ॥

भैषज्यमिति ॥ लघुमृदुचरे अश्विनीपुष्यहस्तचित्रामृगानुराधारेवतीश्रवणधनिष्ठाशततारकास्वातिपुनर्वसुभेषु मूले च भैषज्यमौषधं प्रारब्धं भक्षितं

वा सत् । शुभफलदं भवतीत्यर्थः । तथा चाह श्रीपतिः–'पौष्णद्वये चादिति-मद्वये च हस्तत्रये च श्रवणत्रये च । मैत्रे च मूले च मृगे च शस्तं भैषज्य-कर्म प्रवदंति संतः ॥' इति । वसिष्ठोऽपि—'हस्तत्रये पुष्यपुनर्वसौ च विष्णुत्रये चाश्विनिपौष्णभेषु । मित्रेंदुमूलेषु च सूर्यवारे भैषज्यमुक्तं शुभवासरेऽपि ॥' इति । अथ अंगलग्ने द्विस्वभावराशिषु मिथुनकन्याधनुर्मीनेषु लग्नगतेषु सत्सु शुक्रेंदुज्ये विदि च शुक्रचन्द्रबृहस्पतिबुधेषु द्विस्वभावलग्नस्थेषु सत्सु च पुनस्तेषां शुक्रेंदुज्यबुधानां रवेश्च दिवसे वारे सत्तिथौ रिक्ताऽमारहिते दिने च भैषज्यं सत् । उक्तं च दीपिकायाम्—'अंगोदये गुरुबुधेंदुसितेषु तेषां वारे रवेश्च सुविधौ सुतिथौ सुयोगे' इति । अथ रिःफद्युनमृतिगृहे लग्नाद्वादश-सप्तमाष्टमगृहेषु शुद्धेषु शुभपापरहितेषु सत्सु भैषज्यं सत् । तत्र वर्षफल-प्रश्नादिना सत्यायुर्दाययोगे औषधसेवनं हितमित्ययं विशेषो ध्येयः । तदुक्तं श्रीपतिना–'द्यूनशत्रुनिधनव्ययशुद्धौ सद्ग्रहेषु नितरां बलवत्सु । आयुषश्च हितकारिणि योगे कीर्तिता नियतमौषधसेवा ॥' इति । कश्यपोऽपि 'षट-सप्ताष्टांत्यशुद्धौ च बलिनः शुभखेचराः । आयुर्दायकरे योगे कर्तव्या औषध-क्रिया ॥' इति । अथ जनेभं जन्मनक्षत्रे नो भैषज्यं सत् । तदुक्तं दीपिका-याम्—'जन्मनक्षत्रगश्चन्द्रः प्रशस्तः सर्वकर्मसु । क्षौरभेषजवादाध्वकर्त-नेषु च वर्जयेत् ॥' इति । अथ सूचीकर्ममुहूर्तः । अदितिवसुभस्वाष्ट्रमित्रा-श्विध्रिष्ण्ये पुनर्वसुधनिष्ठाचित्रानुराधाश्विनीषु सूचीकर्म सूच्याः संबंधि घटन-सीवनादि सकलं कर्म अपिशब्दात् कवचमपि कुर्यात् । उक्तं च व्यवहारो-च्चये—'अदितिवासवं त्वाष्ट्रमैत्रभैंदवबाजिनः । सूचीकर्म तनुत्राणमेभिर्ऋक्षैः प्रशस्यते ॥' इति । तनुत्राणं=कवचम् ॥ १५ ॥

अथ क्रयविक्रयनक्षत्रेषु परस्परनिषेधं वदन् क्रयविक्रयनक्षत्राण्यनुष्टुभाह

क्रयर्क्षे विक्रयो नेष्टो विक्रयर्क्षे क्रयोऽपि न ।
पौष्णांबुपाश्विनीवातश्रवश्चित्राः क्रये शुभाः ॥ १६ ॥

क्रयर्क्षे इति ॥ वक्ष्यमाणक्रयनक्षत्रे विक्रयो न कार्यः । तथा विक्रयर्क्षे क्रयोऽपि न कार्यः । नन्विदमयुक्तं; विक्रयो नाम मूल्यं गृहीत्वा वस्तुदानं, क्रयो नाम मूल्यं दत्त्वा वस्तुग्रहणं । यदा येन क्रयः कर्तव्यः तदान्येन विक्र-योऽपि कर्तव्यः, तत्र क्रयविक्रयनक्षत्राणां महाभेदादुभयविधमुहूर्तानुपपत्तिः । उच्यते—विक्रेत्रा यदा मुहूर्तो विक्रयार्थं गृह्यते तदा क्रयिणोऽनुज्ञां लब्ध्वा यावदिष्टं वस्तु स्वगृहात्पृथक् क्रियते तत्कर्म विक्रयशब्दवाच्यम्, यदा तु क्रयिणा क्रयमुहूर्तः प्राप्यते तदा विक्रेत्रे मूल्यं द्रव्यं दत्त्वा पृथक्कृतं विक्रीतं वस्तु गृह्यते तत्कर्म क्रयशब्दवाच्यमिति मत्वात्र समाधिः । अथवा क्रयि-विक्रेत्रोरन्यतरस्य क्रयिणः कदाचिन्मुहूर्तासंभवो श्रेयोऽनावश्यकत्वात् । आव-श्यकत्वे तु मुहूर्तगवेषणया कालविलम्बनिष्पत्तावस्येन तृतीयेन मुहूर्तविचार-मनंगीकृत्य समर्थवस्तुप्राप्त्या वस्तुग्रहणसिद्धिसंभवात् । तदा विक्रेतुरेव मुहूर्त-

विचारः। एवं विक्रेतुरप्यवश्यविक्रेतव्यस्य वस्तुनो यदा ग्रहीता संभवेत्तदैव मुहूर्तमनालोच्य वस्तुदानमावश्यकम्। मुहूर्तविचारतः कालविलम्बे तावद्ग्रहीत्रप्राप्त्यनुपपत्तेः। तदा तु क्रयिण एव मुहूर्तविचारः। नन्वेवमपि क्रयविक्रयनक्षत्राणां पार्थक्येनाभिधानात्तयोः परस्परगतनिषेधो न युज्यते। तथा राजदर्शनविहितनक्षत्रेभ्योऽन्यनक्षत्रेषु राजदर्शनं निषिद्धमित्यर्थाद्गम्यते। 'सर्वं वाक्यं सावधारणं भवती'ति न्यायात्। उच्यते,-क्रयनक्षत्रे क्रयः कार्य इत्युक्ते विक्रयस्य स्वतंत्रकर्मत्वात्तत्र क्रयर्क्षे निषेधाभावः। एवं विक्रयर्क्षेष्वपि क्रयनिषेधाभावः। तत्र निषेधे असत्यन्यनक्षत्राणां मध्यमत्वावगतेः। कदाचित् क्रयनक्षत्राणां मध्यमत्वमंगीकृत्य विक्रयस्य विहितमुहूर्तानुपलब्धौ तत्र मुहूर्तो मध्यमोऽपि ग्राह्यः स्यात्तदर्थमपि वाचनिकस्तन्निषेधः। अतः क्रयविक्रयनक्षत्रेभ्यो भिन्ननक्षत्रेषु क्रयविक्रययोः मध्यमत्वमनुमिमीमः। निषेधस्य वाचनिकत्वमुक्तं दीपिकायाम्—'यमाहिशक्राग्निहुताशपूर्वा नेष्टाः क्रये विक्रयणेऽतिशस्ताः। पौष्णाश्विचित्राशतविष्णुवाताः शस्ताः क्रये, विक्रयणे निषिद्धाः॥' इति। अथ क्रयमुहूर्त उच्यते। तत्र पौष्णं=रेवती, अंबुपः=शततारका, अश्विनी, वातः=स्वाती, श्रवः=श्रवणः, चित्रा; एतानि भानि क्रये शुभानि, विक्रयणे निषिद्धानि च। संमतिरत्रोक्तैव॥ १६॥

अथ विक्रयविपण्योर्मुहूर्तौ शार्दूलविक्रीडितेनाह—

**पूर्वाद्वीशकृशानुसार्पयमभे केंद्रद्विकोणे शुभैः**
**षट्त्र्यायेष्वशुभैर्विना घटतनुं सन्विक्रयः सत्तिथौ।**
**रिक्ताभौमघटान्विना च विपणिर्मैत्रध्रुवक्षिप्रभै-**
**र्लग्ने चंद्रसिते व्ययाष्टरहितैः पापैः शुभैर्द्व्यायखे॥१७॥**

पूर्वेति॥ पूर्वात्रितयं, द्वीशं=विशाखा, कृशानुः=कृत्तिका, सार्पं=आश्लेषा, यमभं=भरणी, समाहारद्वंद्वः। एषु नक्षत्रेषु विक्रयः सन् शुभो ज्ञेयः। क्रयो निषिद्धश्च। उक्तैवात्रापि संमतिः। अथ केंद्रे=प्रथमचतुर्थसप्तमदशमस्थानेषु, द्विकोणे=द्वितीयपंचमनवमस्थानेषु च, शुभैः शुभग्रहस्थितैः षट्त्र्यायेषु षष्ठतृतीयैकादशस्थानेषु अशुभैः पापग्रहैः स्थितैः कृत्वा घटतनुं कुंभलग्नं विहाय त्यक्त्वा सत्तिथौ शुभतिथौ विक्रयः सन् ज्ञेयः। तदुक्तं श्रीपतिना—'दशमैकादशे लग्ने वित्तकेंद्रत्रिकोणगैः। शुभैः पण्यस्य कर्मोक्तं वर्जयित्वा घटोदयम्॥' इति। केंद्रसंज्ञा बृहज्जातके—'कंटककेंद्रचतुष्टयसंज्ञाः सप्तमलग्नचतुर्थखभानाम्' इति। अथ विपणिः। रिक्ताः=चतुर्थीनवमीचतुर्दश्यः, भौमः=मंगलवारः, घटः=कुंभलग्नं; एतान्विना वर्जयित्वेत्यर्थः। अन्येषु तिथिवारलग्नेषु विपणिः हट्टे स्थित्वा क्रयविक्रयाख्यं कर्म तच्छुभम्। तथा मैत्रध्रुवक्षिप्रभैश्चित्रानुराधामृगरेवतीरोहिण्युत्तरात्रयाश्विनीपुष्यहस्तैर्विपणिः लग्ने चंद्रसिते मूर्तौ चंद्रे शुक्रे च सतीत्यर्थः। व्ययाष्टरहितैः पापैः क्रूरग्रहैर्द्व्यायखे द्वितीयैकादशदशमे शुभैः शुभ-

ग्रहैः । उक्तं च रत्नमालायाम्—'कुंभराशिमपहाय साधुषु द्रव्यकर्म भव-मूर्तिवर्तिषु । अव्ययेष्वशुभदायिपूरुषे भार्गवे विपणिरिंदुसंयुते ॥' इति ॥ १७॥

अथाश्वहस्तिमुहूर्तौ निंद्रवज्रयाह—

क्षिप्रांत्यवस्विंदुमरुज्जलेशादित्येष्वरिक्तारदिने प्रशस्तम् ।
स्याद्वाजिकृत्यं त्वथ हस्तिकार्यं कुर्यान्मृदुक्षिप्रचरेषु विद्वान् ॥ १८ ॥

क्षिप्रांत्येति ॥ क्षिप्रं=अश्विनीपुष्यहस्ताः, अंत्यं=रेवती, वसुः=धनिष्ठा, इंदुः=मृगः, मरुत्=स्वाती, जलेशः=शततारका, आदित्यं=पुनर्वसुः; एषु भेषु वाजिकृत्यमश्वसंबंधि क्रयविक्रयादिकृत्यं कार्यम् । तदुक्तं रत्नमालायाम्—'पुष्यश्रविष्ठाश्विनिसौम्यभेषु पौष्णानिलादित्यकराह्वयेषु । सवारुणर्क्षेषु बुधैः स्मृतानि सर्वाणि कार्याणि तुरंगमाणाम् ॥' इति ॥ अत्र अश्वचक्रं दैवज्ञमनोहरे-'अश्वाकारं लिखेच्चक्रं सामिजिद्भानि विन्यसेत् । स्कंधे च सूर्यभात्पंच पृष्ठे च दश भानि च ॥ पुच्छे द्वे स्थापयेत्प्राज्ञश्चतुष्पादे चतुष्टयम् । उदरे विन्यसेत्पंच मुखे द्वे तुरगस्य च ॥ अर्थलाभो मुखे सम्यग्वाजी नश्यति चोदरे । चरणस्थे रणे भंगः पुच्छे पत्नी विनश्यति ॥ अर्थसिद्धिर्भवेत्पृष्ठे स्कंधे लक्ष्मीपतिर्भवेत् ॥' इति । इदमश्वारोहणे विचार्यं, न ग्रहणे । तथा, अरिक्तारदिने-रिक्ताः=चतुर्थीनवमीचतुर्दश्यः । आरः=भौमः, 'आरो वक्रः क्रूरदृक् चावनेयः' इति वराहोक्तेः । रिक्ताभौमान् वर्जयित्वाऽन्यदिने वाजिकृत्यं प्रशस्तम् । अत्र सामान्य एव निषेध उपनिबद्धो न विशेषतः ॥ अथेति । अथ विद्वान् ज्ञाता मृदूनि=चित्रानुराधामृगरेवत्यः, क्षिप्राणि=अश्विनीपुष्यहस्ताः, चराणि=श्रवणधनिष्ठाशततारकापुनर्वसुस्वात्यः; एषु द्वादशनक्षत्रेषु हस्तिकार्यं कुर्यात् । तदाह वसिष्ठः—'हस्तत्रये सौम्यहरित्रये च पौष्णद्वये पुष्यपुनर्वसौ च । मैत्रेऽपि सर्वाण्यपि कुंजराणां कर्माणि शस्तान्यखिलानि यानि ॥' इति ॥ अथ हस्तिष्वंकुशार्पणमुहूर्तो व्यवहारोच्चये—'शुभवारे शुभे लग्ने शुभांशे शोभने तिथौ । अंकुशाः करिणां योज्याः शनिलग्ने शनेर्दिने ॥' इति । अथाश्वगजाद्यारोहणमुहूर्तोऽपि तत्रैव 'पौष्णाश्विनीवरुणमारुतशीतरश्मिचित्रादितिश्रवणपाणिसुरेज्यवित्तैः । वारेषु जीवशशिसूर्यसितेंदुजानामारोहणं गजतुरंगरथेषु शस्तम् ॥' इति । पाणिः=हस्तः, वित्तं=धनिष्ठा ॥ १८ ॥

अथ भूषाघटनादिमुहूर्तं शार्दूलविक्रीडितेनाह—

स्याद्भूषाघटनं त्रिपुष्करचरक्षिप्रध्रुवे रत्नयुक्-
तत्तीक्ष्णोग्रविहीनभे रविकुजे मेषालिसिंहे तनौ ।
तन्मुक्तासहितं चरध्रुवमृदुक्षिप्रे शुभे मत्तनौ
तीक्ष्णोग्राश्विमृगे द्विदैवदहने शस्त्रं शुभं घट्टितम् ॥ १९ ॥

स्याद्भूषेति ॥ त्रिपुष्करलक्षणं 'भद्रातिथौ रविज-' (श्लो० ४९) इत्यादिना वक्ष्यति । एवंविधे त्रिपुष्करदिवसे चरक्षिप्रध्रुवे श्रवणधनिष्ठाशततारकापुनर्वसु-

स्वातिपुष्याश्विनीहस्तरोहिण्युत्तरात्रितयेषु भेषु भूषाघटनं आभरणघटनं शुभं स्यात्। यदाह वसिष्ठः–'क्षिप्रचलाचलऋक्षे रिक्तामावर्जितेषु दिवसेषु। निखिलेषु वासरेष्वपि त्रिपुष्करे भूषणं कार्यम् ॥' इति। अथ तद्भूषाघटनं रत्नयुतं माणिक्यहीरकादिरत्नयुतं चेच्चिकीर्षितं तदा तीक्ष्णोग्रविहीनभे मूलज्येष्ठार्द्राश्लेषापूर्वात्रयभरणीमघास्त्यक्त्वाऽन्येष्वष्टादशनक्षत्रेषु कार्यम्। तथा रविभौमवारे कार्यम्। तथा मेषालिसिंहे मेषवृश्चिकसिंहलग्ने कार्यम्। तदुक्तं वसिष्ठेन–'स्थिरसाधारणचरभे लघुमैत्रेष्वर्ककुजवारे। तेषामेव विलग्ने माणिक्यमयं विभूषणं कार्यम् ॥' इति ॥ माणिक्यग्रहणमुपलक्षणं रत्नादेः। अथ चरध्रुवमृदुक्षिप्रसंज्ञकेषु नक्षत्रेषु तद्भूषणघटनं मुक्तासहितं शुभं भवति। मुक्ताफलग्रहणं श्वैत्यात् रजतादेरुपलक्षणम्। अत्र चंद्रशुक्रयोर्वारे कर्कवृषतुलालग्नेषु कार्यमित्यपि विशेषो ध्येयः। तदुक्तं वसिष्ठेन—'क्षिप्रमृदुध्रुवचरभे शशिसितयोर्वासरेषु तल्लग्ने। मुक्ताफलरजतमयं भूषणमखिलं सवज्रकं कार्यम् ॥' इति। केचिदिदं निष्पन्नमेवाभरणमस्मिन्नेव मुहूर्ते धार्यमित्याहुः। अथ तीक्ष्णानि चत्वारि भानि, उग्राणि पंच भानि, अश्विनी मृगः द्विदैवं विशाखा दहनः कृत्तिका: एषु नक्षत्रेषु घट्टितं शस्त्रं शुभं स्यात्। 'घट्ट चलने' संयोगांतश्चुरादिर्धातुस्ततः स्वार्थण्यंतान्निष्ठाक्तः। 'आर्धधातुकस्येड्वलादेः' इतीट्। 'निष्ठायां सेटि' इति णिलोपः। उक्तं च ज्योतिःसागरे—'कृत्तिकासु विशाखासु भौमार्कशनिवासरे। तद्दिने घट्टितं शस्त्रं नृपाणां जयदायकम् ॥' इति। दीपिकायाम्—'मूलेंदुपूर्वात्रययाम्यपित्र्यशक्राश्विसर्पानलशूलिनश्च। सन्नादिसाधारणकर्म कुर्यात्तिथौ विलग्ने च शुभे शुभाहे ॥' इति। साधारणं=घट्टनोज्वलीकरणादिकम्। अथ सुवर्णरूप्यादिभाजने भोजनमुहूर्तोऽपि प्रसंगादुच्यते। तत्र वसिष्ठः—'लघुमैत्रध्रुवमृदुभे सितेंदुबुधजीववारेषु। हेमरजतादिभाजनभोजनमारोग्यममृतयोगेषु ॥' इति। आरोग्यं=नीरोगत्वं, भोजनकर्तुः स्यादित्यर्थः ॥ १९ ॥

अथ मुद्रापातनवस्त्रक्षालनमुहूर्तं स्रग्धराछंदसाह—

**मुद्राणां पातनं सद्ध्रुवमृदुचरभक्षिप्रभैर्वीन्दुसौरे**
**घस्रे पूर्णाजयाख्ये न च गुरुभृगुजास्ते विलग्ने शुभैः स्यात्।**
**वस्त्राणां क्षालनं सद्वसुहयदिनकृत्पंचकादित्यपुष्ये**
**नो रिक्तापर्वषष्ठीपितृदिनरविजज्ञेषु कार्यं कदापि ॥ २० ॥**

मुद्राणामिति ॥ ध्रुवमृदुचरक्षिप्रसंज्ञकैर्नक्षत्रैः कृत्वा राजमुद्रांकितसुवर्णरूप्यादिनिष्पादनं मुद्रापातनमित्युच्यते। 'टंकसाल' इति यवनभाषयाहुः। तत् सत् शुभमित्यर्थः। तथा वींदुसौरे सोमशनिरहिते दिवसे तथा पूर्णाजयाख्ये पंचमीदशमीपूर्णिमातृतीयाष्टमीत्रयोदश्यः एतत्संज्ञके घस्रे दिवसे एतत्संज्ञितासु तिथिषु शुभम्। तथा गुरुशुक्रास्तयोर्मुद्रापातनं न कार्यम्। तथा विलग्ने शुभैः लग्ने शुभग्रहैः। सद्भिरित्यर्थः। उक्तं च सारसमुच्चये–

'मृदुध्रुवक्षिप्रचरेषु भेषु वारे प्रशस्ते शनिचंद्रवर्ज्ये । वारे तिथौ पूर्णजयाख्य-योश्च मुद्राप्रतिष्ठा शुभदा नराणाम् ॥ गुर्वंशे वा सितांशे वा मुद्राया धट्टनं कचित् । क्रूरग्रहर्क्षांशलग्ने न कार्यं भूतिमिच्छता ॥' इति । अथ वसुः=धनिष्ठा, हयः=अश्विनी, दिनकृत्पंचकं=हस्तचित्रास्वातीविशाखानुराधाः, आदित्यं=पुनर्वसुः, पुष्यः; एषु नक्षत्रेषु वस्त्राणां क्षालनं स्वतः शक्तौ स्वयं क्षालनं कार्यं, नो चेद्रजकाय धावनार्थं देयमित्यर्थः । नो रिक्तेति । रिक्ताः प्रसिद्धाः, पर्वाणि प्राग्योक्तानि, षष्ठी, पितृदिनं=अमावास्या, रविजज्ञेषु=शनैश्चरबुधदिवसेषु, कदापि वस्त्रधावनं नो कार्यं । उक्तं च केशवदैवज्ञैः—'पौष्णादित्यादिपंचाश्विवसुषु च भवेद्वाससां क्षालनार्थं हित्वा षष्ठीं च पर्वाख्यसुतशनिदिनं श्राद्धघस्रं शुभं स्यात् ॥' इति । अदितिः=पुनर्वसुः, आदिः=आदित्यः । कश्चिद्भौमशनिवारौ संक्रांत्यादिकं निषेधम् । यदाह चंडेश्वरः—'शनौ भूमिसुते श्राद्धे पक्षमावास्ययोस्तथा । वस्त्रक्षालनजो दोषो दहत्यासप्तमं कुलम् ॥ संक्रांत्यां पंचदश्यां च द्वादश्यां च रवेर्दिने । वस्त्रं निष्पीडयेन्नैव क्षारेणापि न योजयेत् ॥' इति ॥ २० ॥

अथ वस्त्रादिधारणं शय्याद्युपभोगं च स्रग्धरयाह—

संधार्याः कुंतवर्मेष्वसनशरकृपाणासिपुत्र्यो विरिक्ते
शुक्रेज्यार्केऽह्नि मैत्रध्रुवलघुमहितादित्यशाक्राद्विदैवे ।
स्युर्लग्ने हि स्थिराख्ये शशिनि च शुभदृष्टे शुभैः केंद्रगैः स्या-
द्भोगः शय्यासनादेर्ध्रुवमृदुलघुहर्यंतकादित्य इष्टः ॥ २१ ॥

संधार्या इति ॥ विरिक्ते रिक्तावर्जिते शुक्रबृहस्पतिरविवारे तथा मैत्रध्रुवलघुसंज्ञभमहितपुनर्वसुज्येष्ठाविशाखानक्षत्रेषु कुंतादयो धार्याः । कुंतः=प्रासः, 'प्रासस्तु कुंतः स्यात्' इत्यमरः । वर्म=कवचं, इषवः=बाणाः अस्यंते क्षिप्यन्तेऽनेनेति इष्वसनं-धनुः, शरः=बाणः, कृपाणः=खड्गः, असिपुत्री=छुरिका । मल्लाहोऽपीति केचित् ; तथा स्थिराख्ये=वृषसिंहवृश्चिककुंभानामन्यतमे राशौ, लग्ने स्थिते सति शशिनि च समीचीनस्थानस्थिते शुभदृष्टे शुभग्रहैः केंद्रगैः सद्भिः कुंतादयो धार्याः स्युः । तदुक्तं व्यवहारोच्चये—'पुष्ये चार्द्रादितिचित्रपद्मतनये शक्रोत्तरारेवतीवाजीहस्तविशाखमित्रसहिते भानौ गुरौ भार्गवे । कुंभे कीटगृहे वृषे मृगपतौ चंद्रे शुभैर्वीक्षिते मल्लाहः शरखड्गकुंतछुरिका धार्या नृपाणां हिताः ॥' इति ॥ अथ ध्रुवमृदुलघुनक्षत्रेषु हरौ श्रवणे अंतके भरण्यां आदित्ये पुनर्वस्वावेषु शय्यासनादेः शय्या खट्वादिरूपा आसनमौर्णपीठमृगत्वगादि आदिशब्दात्पादुकाः एषामुपभोग इष्टो हितः । उक्तं च दीपिकायाम्—'मैत्रेंदुपुष्ययमभादितिवाजिचित्राहस्तोत्तरात्रयहरीज्यविधातृभानि । एतेष्वतीव शयनासनपादुकानां संभोगकार्यमुदितं मुनिभिः शुभाहे ॥' इति । शुभाहे=शुभग्रहवारे ॥ २१ ॥

अथांधकादिनक्षत्राणि शार्दूलविक्रीडितेनाह—

अंधाक्षं वसुपुष्यधातृजलभद्वीशांत्यमार्यम्णभं
मंदाक्षं रविविश्वमैत्रजलपाश्लेषाश्विचांद्रं भवेत् ।
मध्याक्षं शिवपित्रजैकचरणत्वाष्ट्रैंद्रविध्यंतकं
स्वक्षं स्वात्यदितिश्रवोदहनभाहिर्बुध्न्यरक्षोभगम् ॥ २२ ॥

अंधाक्षमिति ॥ अंधाक्षमिति जात्यभिप्रायेणैकवचनम् । एवं मंदाक्षमित्यादावपि । वसुः=धनिष्ठा, पुष्यः, धाता=रोहिणी, जलभं=पूर्वाषाढा, द्वीशं=विशाखा, अंत्यभं=रेवती, आर्यम्णभम्=उत्तराफल्गुनी; एतान्यंधनक्षत्राणि । अथ रविः=हस्तः, विश्वे=उत्तराषाढा, मैत्रं=अनुराधा, जलपं=शततारका, आश्लेषा, अश्विनी, चांद्रं=मृगः; एतानि मंदाक्षनक्षत्राणि । अथ शिवः=आर्द्रा, पितरः=मघा, अजैकचरणः=पूर्वाभाद्रपदा, त्वाष्ट्रं=चित्रा, ऐंद्रं=ज्येष्ठा, विधिः=अभिजित्, अंतकं=भरणी; एतानि मध्याक्षनक्षत्राणि । अथ स्वाती, अदितिः=पुनर्वसुः, श्रवः=श्रवणः, दहनभं=कृत्तिका, अहिर्बुध्न्यं=उत्तराभाद्रपदा, रक्षः=मूलं, भगं=पूर्वाफल्गुनी; एतानि सुलोचननक्षत्राणि । यदाह वसिष्ठः—'अंधकमथ मंदाक्षं मध्यममंज्ञं सुलोचनं पश्चात् । पर्यायेण च गणयेच्चतुर्विधं ब्रह्मधिष्ण्यातः॥' इति । धिष्ण्याशब्दः स्त्रीलिंगे आर्षः । ब्रह्मधिष्ण्या=रोहिणी । ततश्चतुर्धा पुनःपुनः उक्तान्येव नक्षत्राणि भवंति । ननु लाघवार्थं ग्रंथकृत प्रवृत्तः, अतो वसिष्ठवचनवल्लघुपर्यंतेनैव तदर्थसिद्धेः प्रत्येकं नक्षत्रगणनारूपं गौरवं व्यर्थं कृतमिति चेत्स । यद्यपि तत्र शब्दलाघवमस्ति तथापि पुनःपुनर्गणनया प्रमादादन्यथापि गणनया मंदाक्षादिनक्षत्राणां विपर्याससिद्धौ गौरवमर्थतोऽस्त्येव । प्रस्तुते यद्यपि शब्दबाहुल्यं तथाप्यर्थस्य निःसंदेहोपनिबंधादतीव लाघवमस्तीत्यस्मिन्पाठे महान् गुणः ॥ २२ ॥

अथांधादिनक्षत्राणां फलान्यनुष्टुप्छंदसाह—

विनष्टार्थस्य लाभोऽधे शीघ्रं मंदे प्रयत्नतः ।
स्याद्दूरे श्रवणं मध्ये श्रुत्याप्ती न सुलोचने ॥ २३ ॥

विनष्टार्थस्येति ॥ अंधनक्षत्रेषु विनष्टस्यापहृतस्यार्थस्य शीघ्रं लाभः प्राप्तिर्भवति । मंदाक्षनक्षत्रेषु विनष्टार्थस्य प्रयत्नतो लाभो भवति । मध्ये मध्याक्षनक्षत्रेषु विनष्टार्थस्य दूरे स्वनगरादतीव दूरे भूभागे श्रवणं 'त्वदीयं द्रव्यममुकेन हृतममुकस्मिन् स्थले तिष्ठति' इति लोकश्रुतिर्भवति, लब्धिस्तु नास्त्येव । सुलोचननक्षत्रेषु श्रुत्याप्ती न, श्रवणमपि न लब्धिरपि नेत्यर्थः । उक्तं च रत्नमालायाम्—'लाभोऽधके निकट एव हृतस्य चौरैर्द्रव्यस्य लब्धिरिह केकरभे प्रयत्नात् । दूरश्रुतिश्चिपिटभेषु कथंचिदेव न प्राप्तिरुत्तमविलोचनभे कदाचित् ॥' इति । केकरभे=मंदाक्षनक्षत्रे । चिपिटभे=मध्यनक्षत्रे ॥ २३ ॥

अथ धनप्रयोगे निषिद्धनक्षत्राण्यनुष्टुभाह—

तीक्ष्णमिश्रध्रुवोग्रैर्यद्द्रव्यं दत्तं निवेशितम् ।
प्रयुक्तं च विनष्टं च विष्ट्यां पाते च नाप्यते ॥ २४ ॥

तीक्ष्णेति ॥ तीक्ष्णमिश्रध्रुवोग्रसंज्ञकैर्नक्षत्रैर्यद्द्रव्यं सुवर्णादि दत्तं कलांतरं विनैव दत्तं न तु स्वसत्तापरित्यागेन तद्दत्तमित्युच्यते । निवेशितं=स्वेष्टसमीपे प्रत्ययार्थं स्थापितं, प्रयुक्तं=कलांतररीतिपुरःसरोत्तमर्णाधमर्णव्यवहारेण कस्मैचिद्दत्तं, विनष्टं=चौरादिना हृतं स्वयमेव वा क्वचित्त्यक्तं, तद् द्रव्यं निश्चयेन कदाचिदपि नाप्यते । तथा विष्ट्यां भद्रायां पाते व्यतीपाते महापाते वा हृतं द्रव्यं न प्राप्यते । चकाराद्ग्रहणेऽपि न देयमिति व्याख्येयं, वसिष्ठवाक्यस्वरसात् । उक्तं च वसिष्ठेन—'ध्रुवोग्रसाधारणदारुणर्क्षे निक्षिप्तमर्थं त्वथवा प्रनष्टम् । चौरैर्हृतं दत्तमुपप्लवे वा विष्ट्यां च पाते च न लभ्यते तत् ॥' इति । उपप्लवे=ग्रहणे । यत्तु केचिद्व्याकुर्वते-निश्चयेन चौरहृतस्य द्रव्यस्य प्राप्त्यप्राप्तिविचारोऽधकादिनक्षत्रैरेव वा 'लाभोऽधके निकट एव हृतस्य चौरैः' इत्युक्तत्वात् । चौरनिर्णये त्वनेनैव विचारः । तच्चिंत्यम् । वसिष्ठवाक्येऽपि 'चौरैर्हृत'मिति साक्षाच्चौरपदोपादानाद्येनकेनापि विचारः, कर्तव्य इति युक्तमुत्पश्यामः । एवं, चौरनिर्णयेऽपि स्वेच्छया विचारः तत्रोभयैक्ये प्राप्त्यप्राप्तिनिश्चय एव, उभयैक्याभावे तु प्रयत्नेनेति ॥ २४ ॥

अथ जलाशयखननमृत्यारंभयोर्मुहूर्तं शार्दूलविक्रीडितेनाह—

मित्रार्कध्रुववासवांबुपमघातोयांत्यपुष्येंदुभिः
पापैर्हीनबलैस्तनौ सुरगुरौ ज्ञे वा भृगौ खे विधौ ।
आप्ये सर्वजलाशयस्य खननं व्यंभोमघैः सेंद्रभै-
स्तैर्नृत्यं हिबुके शुभैस्तनुगृहे ज्ञेऽब्जे ज्ञराशौ शुभम् ॥२५॥

मित्रार्केति ॥ मित्रः=अनुराधा, अर्कः=हस्तः, ध्रुवं=रोहिण्युत्तरात्रयं, वासवं=धनिष्ठा, अंबुपः=शततारका, तोयं=पूर्वाषाढा, अंत्यं=रेवती, पुष्यः, इंदुः=मृगः; एतैर्नक्षत्रैस्त्रयोदशभिः सर्वेषां जलाशयानां वापीकूपतडागनाम्नां तोयाधाराणां खननं शुभमुक्तम् । उक्तं च व्यवहारतत्त्वे—'आप्यांबुपांत्यपितृमित्रवसूत्तरार्कध्रुवमृगेज्यभेषु खननं सलिलाश्रयाणाम्' इति ॥ अथ जलाशयखनने लग्नविचारः । पापैः=पापग्रहैर्बलरहितैः सद्भिः, तनौ=लग्ने, सुरगुरौ=बृहस्पतौ, ज्ञे=बुधे स्थिते सतीत्यर्थः । लग्नात खे=दशमस्थाने, भृगौ=शुक्रे सति, आप्ये=जलचरराशौ विधौ सति, जलाशयखननं हितम् । उक्तं च रत्नमालायाम्—'लग्ने जीवे ज्ञेऽथवा दुर्बलैश्च क्रूरैः शुक्रे चापि मेषूरणस्थे । आप्ये चंद्रे सर्वतोयाश्रयाणामारंभाः स्युः सिद्धये निर्विकल्पम् ॥' इति । कश्यपेनाप्युक्तम्—'गुरौ ज्ञे वा लग्नगते शुक्रे कर्मगते विधौ । आप्यभे जलकार्याणामारंभः सिद्धिदः स्मृतः ॥' इति । दीपिकायां तु विशेषः—'पुष्ये मित्रकरोत्तरश्रवणमघांबु-

पित्र्यैंदुभिः शस्तेऽर्के शुभवारयोगतिथिषु क्रूरेष्ववीर्येषु च । पुष्टेंदौ जलराशिगे दशमगे शुक्रे शुभांशोदये प्रारंभः सलिलाशयस्य शुभदो जीवेंदुपुत्रोदये ॥' इति । स्वं=धनिष्ठा । ग्रंथेषु तु वापीकूपतडागानामाकृतिभेदात्प्रत्येकं भिन्नानि नक्षत्राण्युक्तानि । तत्र वापीखननमाह ऋक्षोच्चयः—'स्वात्यश्विपुष्य-हस्तेषु सर्वदा च पुनर्वसौ । रेवत्यां वारुणे चैव वापीकर्म प्रशस्यते ॥' इति ॥ कूपारंभमाह श्रीपतिः—'हस्तः पुष्यो वासवं वारुणं च मैत्रं पित्र्यं त्रीणि चैवोत्तराणि । प्राजापत्यं चापि नक्षत्रमाहुः कूपारंभे श्रेष्ठमाद्या मुनींद्राः ॥' इति ॥ तडागारंभमाह वसिष्ठः—'मैत्रेंदुपौष्णोत्तररोहिणीषु देवेज्यवारीश्वरवारिभेषु । प्रारंभणं सर्वजलाशयानां कार्यं सितेंदुशकवारलग्ने ॥' इति । अत्र वापीकूपनक्षत्राणां पार्थक्येनाभिधानात् तडागारम्भार्थमिदं वचनमवगम्यते । बहुवचनमाश्रयाभिप्रायेण । सर्वशब्दोपादानं छंदःपरिपूरणार्थम् । तत्र कूपतडागनक्षत्रेषु मद्दशनक्षत्रत्यागादवशिष्टानां मेलने त्रयोदश नक्षत्राणि भवंति । तत्र संक्षेपसुकामेन व्यवहारतत्त्वकर्त्रा सर्वजलाशयानामारंभे सामान्यतो जलाश्रयत्वसाधर्म्यादेतानि त्रयोदश भान्युक्तानि, तान्येव च ग्रंथकर्त्रोक्तानि । तत्र वापीकूपतडागानां भेदो लोकप्रसिद्ध एव । यत्तु पुनर्वसिष्ठेनोक्तम् 'शशांकतोयेशकरार्यमित्रध्रुवांबुपित्र्ये वसुरेवतीषु । उद्यानवाप्यादितडागकूपकार्याणि सिध्यंति जलं ध्रुवं स्यात् ॥' इति, तज्जीर्णोद्धारविषयम् । प्रागुक्तवाक्यं प्रारंभणपदोपादानान्नूतनखननविषयमिति पुनरुक्तिपरिहारः ॥ अथ नृत्यारंभः । तैः प्रागुक्तैर्नक्षत्रैः, त्र्यंभोमघैः=पूर्वाषाढामघारहितैः, सेंद्रभैः=ज्येष्ठासहितैः मित्रार्कध्रुववासवांबुपौष्ण्यपुष्येंदुज्येष्ठानक्षत्रैः नृत्यं शुभम्, नृत्यारंभः शुभ इत्यर्थः । नृत्यं=नर्तनम् । यदाह वसिष्ठः—'तिस्रोत्तरामित्रगुरुश्रविष्ठाहस्तेन्द्रवारीश्वरपौष्णभेषु । संगीतनृत्यादिसमस्तकर्म कार्यं विभौमार्कजवासरेषु ॥' इति । श्रीपतिरपि—'हस्तः पुष्यो वासवं चानुराधा ज्येष्ठा पौष्णं वारुणं चोत्तराश्च । पूर्वाचार्यैः कीर्तितश्चंद्रवर्गो नृत्यारंभे शोभनोऽयं प्रवर्गः ॥' इति । अथ लग्नशुद्धिः । तत्र हिबुके=लग्नाच्चतुर्थस्थाने, स्थितैः शुभग्रहैर्वीक्षिते इत्यध्याहारः । कश्यपवाक्यानुरोधात् । तनुगृहे=लग्ने, बुधसहिते सति, अब्जे=चंद्रे, शराशौ=मिथुनकन्यास्थे चतुर्थस्थैः शुभग्रहैर्वीक्षिते सति नृत्यारंभः शस्तः । यदाह कश्यपः 'लग्नसंस्थे बुधे चंद्रे बुधराशौ तु वीक्षिते । शुभग्रहैश्चतुर्थस्थैर्नाट्यारंभः प्रशस्यते ॥' इति । अत एव रत्नमालायामपि—'बुधे विलग्ने शशिनि शराशौ शुभवीक्षिते । हिबुकस्थैः शुभैर्नाट्यप्रारंभः सद्भिरिष्यते ॥' इति । अत्र पद्य एवमेव व्याख्येयम् ॥ २५ ॥

अथ सेवकस्य स्वामिसेवायां मुहूर्तं शालिन्याह—

**क्षिप्रे मैत्रे वित्सितार्केज्यवारे सौम्ये लग्नेऽर्के कुजे वा खलाभे ।**
**योनेर्मैत्र्यां राशिपोश्चापि मैत्र्यां सेवा कार्या स्वामिनः सेवकेन २६**

क्षिप्रे मैत्र इति ॥ क्षिप्रे मैत्रे=अश्विनीपुष्यहस्तचित्रानुराधामृगरेवतीनक्षत्रेषु, वित्सितार्केज्यवारे=बुधशुक्रसूर्यगुरुवारे, तथा सौम्यग्रहे लग्नसंस्थे सति

अर्के सूर्ये वा अथवा कुजे=भौमे, खलाभे=दशमैकादशस्थे सति, सेवकेन भृत्येन स्वामिनो राजादेः सेवा कार्या । राजादिदर्शनं प्रागुक्तम् । वेतनग्रहण-कार्याद्यंगीकाररूपा तु सेवाऽस्मिन्मुहूर्ते कार्या । तत्रापि स्वामिसेवकयोर्योनि-मैत्र्यां सत्यां, च पुनः राशिपोः स्वामिसेवकयोर्यौ जन्मराशी तयोर्यावधि-पती तयोरपि मैत्र्यां प्रीतौ सत्यां कार्या । उक्तं च श्रीपतिना—'शुभे विलग्ने दशमायगे च रवौ कुजे वाऽथ वशेन योनेः । विधायुधाभ्यासरतेन कार्यः समाश्रयः स्वामिनि सेवकेन ॥' इति । कश्यपोऽपि—'दशमैकादशे सूर्ये कुजे वा शुभलग्नगे । विद्यायुधाभ्यासयुक्तसेवाकर्मापि सिध्यति ॥' इति । राशिमैत्रीसाहित्यं तु 'बभ्रूरगं श्वैणमिभेन्द्रसिंहमोग्वाखुमंज्ञं स्वजवानरं च । गोव्याघ्रमश्वोत्तममाहिषं च वैरं नृनार्योर्नृपभृत्ययोश्च ॥' इति वसिष्ठोक्ति-मंगीकृत्य तुल्यन्यायत्वादत्राप्युक्तं ग्रंथकृता । योनिमैत्री राशिमैत्री च विवाह-प्रकरणे ( श्लो० २५ ) 'अश्विन्यंबुपयो'रिति, 'मित्राणि द्युमणेः' (६।२७) इति च वक्ष्यति ॥ २६ ॥

अथ द्रव्यप्रयोगऋणग्रहणमुहूर्तौ शार्दूलविक्रीडितेनाह—

स्वात्यादित्यमृदुद्विदैवगुरुभे कर्णत्रयाश्वे चरे
लग्ने धर्मसुताष्टशुद्धिसहिते द्रव्यप्रयोगः शुभः ।
नारे ग्राह्यमृणं तु संक्रमदिने वृद्धौ करेऽर्केऽह्नि यत्
तद्वंशेषु भवेदृणं न च बुधे देयं कदाचिद्धनम् ॥ २७ ॥

स्वात्यादित्येति ॥ स्वातीपुनर्वसुचित्रानुराधामृगरेवतीविशाखापुष्यश्रवण-धनिष्ठाशततारकाश्विनीष्वेकादशनक्षत्रेषु द्रव्यप्रयोगः शुभः द्रव्यं परस्मै ऋणत्वेन देयम् । यदाह भीमपराक्रमः—'मृदुपुष्याश्विनी चैव विशाखा श्रवणत्रयम् । पुनर्वसौ च शंसंति धनादिनिधिवर्तनम् ॥' इति । वर्तनं=ऋणा-दिरूपेण दानं, मिश्रनक्षत्रत्वाद्विशाखानिषेधे प्राप्ते ऋणदाने च न निषेध इति विशेषः । हतनष्टादौ तु निषिद्धैव । अथ लग्ने चरे=मेषकर्कतुलामकराणामन्य-तमे, धर्मः=नवमं, सुतः=पंचमं, अष्टशब्देन लक्षणयाष्टमस्थानमुच्यते; तेषां शुद्धिः नवमपंचमस्थानयोः शुभग्रहसत्त्वं पापग्रहराहित्यं च, अष्टमे तूभय-राहित्यमित्यर्थः । एवंरूपया शुद्ध्या सहिते लग्ने ऋणं देयम् । उक्तं च रत्न-मालायाम्—'शुद्धेषु धर्मात्मजनैधनेषु चरे विलग्ने द्रविणप्रयोगः ।' इति । अथ आरे मंगलवारे ऋणं न ग्राह्यम् । तदुक्तं ज्योतिःप्रकाशे—'ऋणं भौमे न गृह्णीयान्न देयं बुधवासरे । ऋणच्छेदं कुजे कुर्यात्संचयं सोमनन्दने ॥' इति । अथ तु विशेषे । संक्रमः=संक्रांतिः तद्दिवसे, वृद्धौ=वृद्धियोगे, करेऽर्केऽह्नि =हस्तनक्षत्रसहिते रविवारे हस्तार्कं इति यावत्, तत्रापि ऋणं न ग्राह्यमिति प्रत्येकं संबंधः । ननु कुतो न ग्राह्यमित्यत आह यदिति । यद्यस्मादेतेषूक्त-दृणं तद्वंशेषु ऋणग्रहीतृकुलेषु भवेत् । तदृणं तत्पुत्रपौत्रादिभिरपि परिहर्तु-मशक्यमित्यर्थः । अर्थादेषु भौमसंक्रांत्यादिदिनेषु ऋणमवश्यं परिहर्तव्य-

१ मूले द्वादश नक्षत्रगणनादर्शनादत्र 'द्वादशनक्षत्रेषु' इति पाठ उचित इति भाति; स चादर्शपुस्तकेनानाद्दृतः । स्वातिपूर्वो हि भीमपराक्रमपाठ एकादशसंख्यानुगुणः ।

मिति निष्कृष्टोऽर्थः । 'हस्तेऽर्कवारे संक्रांतौ यदृणं स्यात्कुलेषु तत् । वृद्धि-योगे तथा ज्ञेयमृणच्छेदं तु कारयेत् ॥' इति ज्योतिःप्रकाशकारोक्तेः । अथ बुधे बुधवारे कदाचिदप्यृणं न देयम् । 'न देयं बुधवासरे' इत्यपुनै-वोक्तत्वात् ॥ २७ ॥

अथ हलप्रवहणमुहूर्तं शार्दूलविक्रीडितेनाह—

मूलद्वीशमघाचरध्रुवमृदुक्षिप्रैर्विनार्कं शनिं
पापैर्हीनबलैर्विधौ जलगृहे शुक्रे विधौ मांसले ।
लग्ने देवगुरौ हलप्रवहणं शस्तं न सिंहे घटे
कर्काजैणघटे तनौ क्षयकरं रिक्तासु षष्ठ्यां तथा ॥ २८ ॥

मूलेति ॥ मूलविशाखामघाभिः चरध्रुवमृदुक्षिप्रैश्च एकोनविंशतिनक्षत्रै-[1]र्हलप्रवहणं हलप्रवृत्तिं कुर्यात् । यदाह नारदः—'मृदुध्रुवक्षिप्रचरविशाखा-पितृभेषु च । हलप्रवाहं प्रथमं विदध्यान्मूलभे वृषैः ॥' इति । विशेषमाह श्रीपतिः—'मृदुध्रुवक्षिप्रचरेषु मूले मघाविशाखासहितेषु भेषु । हलप्रवाहं प्रथमं विदध्यान्नीरोगमुष्कान्वितसौरभेयैः ॥' इति । नीरोगाः पीडारहिता ये मुष्का वृषणास्तैरन्विता ये सौरभेया वृषास्तैर्विदध्यादित्यर्थः । युक्तं चैतत् । वृषाणां वृषणास्तु फलरूपा अतस्तादृशैर्वृषैः कृतं कर्षणं सफलं स्यात् । चूर्णित-वृषणैर्वृषैः कृतं कर्षणं निष्फलमेव भवति । तथाऽर्कं सूर्यवारं शनिवारं विना त्यक्त्वाऽन्यवारेषु चंद्रमंगलबुधबृहस्पतिशुक्रवारेषु हलप्रवहणं शुभम् । 'पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्' इति विनायोगे द्वितीया । उक्तं च व्यवहारतत्त्वे—'पूर्वार्द्रेशयमाग्निभेऽर्कयमयो रिक्तासु नेष्टा कृषिः' इति ॥ अथ सामान्यतो लग्नशुद्धिः । तत्र पापग्रहैर्हीनबलैर्निर्बलैरुपलक्षिते लग्ने विधौ चंद्रे शुक्रे मांसले बलिनि पुष्टे उदित इत्यर्थः । तत्र विधौ चंद्रे जलगृहे जलराशिस्थे सति देवगुरौ लग्नस्थे च सति हलप्रवहणं शुभम् । उक्तं च रत्न-मालायाम्—'शक्तिशालिनि सितेऽथ शीतगौ दुर्बलैरसितभौमभास्करैः । आश्रिते शशिनि वारिजोदयं लग्नवर्तिनि गुरौ कृषिक्रिया ॥' इति । कश्य-पोऽपि—'गुरौ लग्नगते शुक्रे बलिन्याप्योदये विधौ । शस्ता कृषिक्रिया तत्र दुर्बलैः क्रूरखेचरैः ॥' इति । अथ विशेषतो लग्नशुद्धिः । तत्र सिंहे, घटे=कुंभे, कर्के, अजे=मेषे, एणे=मकरे, घटे=तुलायां; एषु लग्नेषु कृषिकर्म न शस्तम् । यतस्तत्क्षयकरं पीडाकरम् । तथा रिक्तासु=चतुर्थीनवमीचतुर्दशीषु, षष्ठ्यां च, क्षयकरम् । तथाशब्दोऽनुक्तसमुच्चयार्थस्तेनाष्टम्यामपि न शस्तं कृषिकर्म । उक्तं च ज्योतिःसारसागरे—'मेषलग्ने पशून् हंति कर्कटे जलजं भयम् । सिंहे सस्यभयं ज्ञेयं तुलायां हलसंक्षयः ॥ मकरे सस्यनाशः स्यात्कुंभे चौरभयं तथा । हंत्यष्टमी बलीवर्दान्नवमी सस्यघातिनी ॥ षष्ठी च कीटजननी पशून्हन्ति चतुर्दशी ॥' इति । चतुर्थ्यामपीदमेव फलं ध्येयम् ॥ २८ ॥

---

१ अत्र 'विंशतिनक्षत्राणि' इति पाठो युक्त इति प्रतीयते ।

अथ बीजोप्तिमुहूर्तंफणिचक्रहलचक्राणि शार्दूलविक्रीडितेनाह—

**एतेषु श्रुतिवारुणादितिविशाखोडूनि भौमं विना**
**बीजोप्तिर्गदिता शुभा त्वशुभतोऽष्टाग्नींदुरामेंदवः ।**
**रामेंद्वग्नियुगान्यसच्छुभकराण्युप्तौ हलेऽर्कोज्झिता-**
**द्भाद्रामाष्टनवाष्टभानि मुनिभिः प्रोक्तान्यसत्संति च ॥ २९ ॥**

**एतेष्विति** ॥ श्रुतिः=श्रवणः, वारुणं=शततारका, अदितिः=पुनर्वसुः, विशाखा–प्रसिद्धा; एतैरुडुभिर्नक्षत्रैर्विना न्यूनेष्वेतेषु पूर्वोक्तनक्षत्रेषु मूलमघाध्रुवमृदुक्षिप्रधनिष्ठास्वातीषु पंचदशनक्षत्रेषु बीजोप्तिर्बीजवापनं शुभम् । उक्तं च **रत्नमालायाम्**—'हस्ताश्विपुष्योत्तररोहिणीषु चित्रानुराधामृगरेवतीषु । स्वातौ धनिष्ठासु मघासु मूले बीजोप्तिरुत्कृष्टफला प्रदिष्टा ॥' इति । **वसिष्ठ**-नाप्येतावंत्येव नक्षत्राण्युक्तानि–'धातृद्वये कौणपपित्र्यपुष्ये हस्तत्रये त्र्युत्तरमैत्र-भेषु । पौष्णे धनिष्ठास्वथ वाश्विनीषु बीजोप्तिरुत्कृष्टफलप्रदा स्यात् ॥' इति । कौणपः=मूलम् । **नारदेनाप्युक्तानि**–'मृदुध्रुवक्षिप्रभेषु पितृवायुवसूडुषु । समूलभेषु बीजोप्तिरत्युत्कृष्टफलप्रदा ॥' इति । **कश्यपेनापि**–'वसुवायुज-नैर्ऋत्यक्षिप्रध्रुवमृदूडुषु । सीतां स्मृत्वाथ बीजोप्तिरत्युत्कृष्टफलप्रदा ॥' इति । अत्र मघा नोक्ता । अथ भौमो मंगलवारो निषिद्धः । अर्थात् सूर्यचंद्रबुधगुरु-शुक्रशनीनां वारेषु बीजोप्तिः शुभा । अत्र विनायोगे द्वितीया । 'पूर्वेंद्रश्रुति-वारुणेषु च कुजे बीजोप्ति'रिति व्यवहारतत्त्वे उक्तत्वात् । 'नेष्टा कृषिः' इत्यतो नकारोऽत्रानुवर्तते, तेन बीजोप्तिर्नेष्टेत्यर्थः । अत्र **कालविशेषनिषेधो राज-मार्तंडे**—'रवौ रौद्राद्यपादस्थे भूमेः संजायते रजः । तस्माद्दिनत्रयं तत्र बीज-वापे परित्यजेत ॥' इति ॥ अथ **बीजोप्तौ फणिचक्रमुच्यते** । अशुभतो न विद्यंते गावः किरणा यस्यासावगुः, यस्य स्वरूपाभावः तस्य कुतस्तरां किरणाः, तादृशोऽगुः राहुस्तस्य भं नक्षत्रं तस्मादित्यर्थः । राह्वधिष्ठितनक्षत्रादष्टौ भानि असत्यमर्मार्चीनानि । ततस्त्रीणि शुभानि । तत एकमशुभम् । ततस्त्रीणि शुभानि । ततोऽप्येकमशुभम् । ततस्त्रीणि शुभानि । ततोऽप्येकम-शुभम् । ततस्त्रीणि शुभानि । ततश्चत्वार्यशुभानि । एवं बीजोप्तौ सप्तविंशति-नक्षत्राणां शुभाशुभत्वमुक्तम् । उक्तं च **नारदेन**—'भवेद्भत्रितयं मूर्ध्नि धान्य-नाशाय राहुभात् । गले त्रयं कज्जलाय वृद्ध्यै द्वादश चोदरे ॥ निस्तंडुलत्वं लांगूले भचतुष्टयमीरितम् । नाशो बहिःपंचके स्याद्बीजोप्ताविति चिंतयेत ॥' इति । राहुर्यस्मिन्नृक्षेऽस्ति तस्मान्नक्षत्रत्रयं मूर्ध्नि मस्तके स्थाप्यं धान्यनाशकं भवति । ततस्त्रयं गले स्थाप्यं, कज्जलाय श्यामिकासंपादकं स्यात् । ततो द्वादश-भानि बहिर्नक्षत्ररहितानि उदरे स्थाप्यानि, तानि धान्यवृद्धये स्युः । ततो नक्षत्र-चतुष्टयं पुच्छे निस्तंडुलत्वकरं स्यात् । ततोऽवशिष्टं बहिर्नक्षत्रपंचकं धान्य-नाशकरं स्यात् । **रत्नमालायामपि**–'मूर्ध्नि त्रीणि गले त्रयं च जठरे धिष्ण्यानि च द्वादश स्यात्पुच्छे च चतुष्टयं बहिरतो भानां स्थितं पंचकम् । क्ष्वेडं

कजलमनावृष्टिरधिका मितेतुल्यं क्रमात्स्यादीतिभयं भयं च फणिभाद्री-
द्योतिकाले स्फुटम् ॥' इति । अत्र केचित् फणिभात्सूर्यनक्षत्राविति व्याचख्युः ।
तत्र युक्तिः–'सूर्यभादुरगः स्थाप्यः' इति स्वरोदयवाक्यैकवाक्यत्वभावात् ।
तन्न । नारदवाक्ये साक्षाद्राहुभादित्युक्तत्वात् । 'राहुधिष्ण्यात्समारभ्य धिष्ण्ये-
ष्वष्टसु निष्फलम्' इति कश्यपोक्तेश्च । 'सूर्यभादुरगः स्थाप्यः' इति तु
स्वरोदयवचनम् ॥ बीजवापने लग्नशुद्धिमाह वसिष्ठः—'भवरिपुसहजे
पापैस्त्रिकोणकेन्द्रस्थितैश्च शुभैः । कथितेषु च धिष्ण्येष्वपि शुभलग्ने बीजवापनं
कार्यम् ॥' इति । अथ हलप्रवहणे चक्रमुच्यते–हले इति । हले हलचक्रे-
ऽर्कोज्झितात्सूर्यभुक्तान्नक्षत्रात् क्रमेण त्रीणि नक्षत्राणि असंति अशुभफलानि ।
ततोऽष्ट भानि संति शुभफलदानि । ततो नव भान्यसंति । ततोऽष्टौ भानि
संति । यथा–सूर्य आर्द्रायां भुक्तभं मृगः, तत आरभ्य त्रीणि मृगार्द्रापुनर्वसु-
भान्यशुभानि । ततः पुष्याश्लेषामघापूर्वाफल्गुन्युत्तराफल्गुनीहस्तचित्रास्वाती-
नक्षत्राणि शुभानि । ततो विशाखानुराधाज्येष्ठामूलपूर्वाषाढोत्तराषाढाभि-
जिच्छ्रवणधनिष्ठानक्षत्राणि अशुभानि । ततः शततारकापूर्वाभाद्रपदोत्तराभा-
द्रपदारेवत्यश्विनीभरणीकृत्तिकारोहिणीनक्षत्राणि शुभानि । एवमष्टाविंशति-
भानि भवंति । यदाह वसिष्ठः—'अर्कगतागतसंस्थं भत्रितयं नेष्टमुभयत-
स्त्वष्टम् । षोडशधिष्ण्यैः नवकं शिष्टमनिष्टं च लांगले चक्रे ॥' इति । अर्केण
गतं भुक्तं, अगतं भोग्यं, संस्थमाक्रांतं; एतद्भत्रितयं नेष्टम् । तत उभयतः
षोडशधिष्ण्यं इष्टम् । यथा सूर्यभुक्तभात्प्राक्तनान्यष्टौ शुभानि, सूर्यभोग्यभा-
दग्रेतनानि शुभानि स्युरित्यर्थः । शिष्टमुर्वरितं मध्यगतनक्षत्रनवकमनिष्टं,
एवमत्राप्यष्टाविंशतिभानि । नारदोऽपि—'हलादौ वृषनाशाय भत्रयं सूर्यभु-
क्तभात् । अग्रे ऋक्षत्रयं लक्ष्म्यै सौख्यं पार्श्वस्थपञ्चके ॥ शूलत्रयेऽपि नवकं
मरणायान्यपंचकम् । श्रियै पुच्छत्रयं श्रेष्ठं स्याच्चक्रे लांगले शुभे ॥' इति ।
अस्यार्थः हलप्रवहणसमये सूर्यभुक्तनक्षत्रान्नक्षत्रत्रयं वृषनाशाय स्यात् । तदग्रे
नक्षत्रत्रयं लक्ष्म्यै स्यात् । तदग्रे पार्श्वनक्षत्रपंचकं सौख्याय स्यात् । तदग्रे शूल-
त्रयगतं नक्षत्रनवकं मरणाय स्यात् । तदग्रेऽन्यत्पार्श्वपंचकं श्रियै स्यात् । तदग्रे
पुच्छगतं नक्षत्रत्रयं श्रेष्ठं शुभफलदमिति । अनेनापि प्रकारेण मृगादीनि तान्येव
शुभाशुभानि संभवंति । तत्र हलचक्राकृतिर्लिख्यते । कश्यपोऽपि—'त्रि-
ष्वष्टसु नवर्क्षेषु सप्तस्वर्कविमुक्तभात् । हानिर्वृद्धिः कर्तृमृत्युर्लक्ष्मीश्चैव यथा-
क्रमम् ॥' इति हलनक्षत्रोक्त्यनन्तरमुक्तवान् । अस्यायमर्थः—अर्कविमुक्तभात्
त्रिषु भेषु हानिः । ततोऽष्टसु भेषु वृद्धिः । ततो नवसु भेषु कर्तुर्नाशः । ततः
सप्तसु भेषु लक्ष्मीप्राप्तिरिति यथाक्रमं फलं ज्ञेयम् । अत्र सप्तविंशतिनक्षत्रो-
क्तेरभिजिद्गणना नास्ति । एवं बहुमुनिसंवादे सति 'इनप्रोज्झितधिष्ण्यात्-
त्रीणि त्रीणि त्रिरामाण्य१।२।३।४।३।५।१।२ शुभाशुभदानि क्रमाल्लांगलाख्ये' इति
यदुक्तं केशवदैवज्ञैर्मुहूर्ततत्त्वे तच्चिन्त्यम् । ऋषिवाक्यमूलाभावात् । ननु
'अर्कोक्तिसंगतागतान्यशुद्धानि वाचाय मान्यव्रतो दृश्ये भत्रितयं ततश्च कृषि-

कृद्घाताय शूलत्रये। धिष्ण्यानां नवकं तदंतरगते स्यातां श्रियै पंचके यद्वा-न्यत्त्रितयं तदत्र कथितं चक्रे शुभं लांगले॥' इति श्रीपतिवाक्यालोचने-नोक्तम्। तथा हि—अर्काक्रांतगतागतानि भान्यनडुहां वृषाणां नाशाय स्युः। तदग्रतो भत्रयं वृद्ध्यै। ततः शूलत्रये धिष्ण्यानां नवकं लेख्यं कृषिकृद्घाताय स्यात्। शूलत्रयमध्यगते पंचके नक्षत्रदशकमित्यर्थः। श्रियै स्याताम्। यद्वा-न्यत्त्रितयं नक्षत्रत्रयं शुभं स्यात्। एवं सति हलचक्रन्यासः। अनेन प्रकारेण इनप्रोज्झितर्क्षात्त्रीणीत्यादीनि शुभाशुभानि भानि संभवंतीति चेत्,—तदेतद-विचारितरमणीयम्। न ह्ययं श्रीपतिवाक्ये शब्दार्थ उच्यते, किंतु मूलवाक्या-दर्शनाबोधपुरःसरस्वाज्ञानप्रकाशकः। शब्दार्थस्त्वयम्—अर्काक्रांतगतागतानि त्रीणि भानि वृषनाशकराणि स्युः। हलमध्यमभागप्रांते ततस्त्रीणि वृद्ध्यै हल-दंडाधोभागे। ततः पंचनक्षत्राण्यपास्याग्रिमाणि नवभानि शूलत्रये त्रिकं त्रिकं कृषिकृद्घाताय स्थाप्यानि। नन्वत्र पंचनक्षत्रत्यागे को हेतुरित्यत आह-तदं-तरगत इति। तच्छब्देन हलोर्ध्वदंडशूलोर्ध्वदंडावुच्येते। तयोरंतरगते मध्ये विद्यमाने पंचकं च पंचकं च पंचके श्रियै स्थाप्ये। नक्षत्रदशकमिति यावत्। तच्चान्यद्भत्रितयं हलदंडोर्ध्वभागे शुभफलदं लेख्यम्। एवं सति ऋषिवाक्यैः सहास्यैकार्थता संपद्यते। यत्तु महेश्वरः—'सूर्याधिष्ठितभात्त्रिवेदविषयांकां-शेशविश्वार्ककैस्तुल्यान्यप्यगतानि भानि मुनिभिः प्रोक्तानि शस्तानि च। आद्ये लांगलयोजने' इत्युवाच, तदपि चिंत्यमेव। यत्त्वेवमेव टोडरानंदे 'अर्का-क्रान्ते' इत्यादिपद्यव्याख्यानं पितृचरणकृतं, तदपि स्पष्टार्थवसिष्ठाद्यृषिवाक्य-विशेषादर्शनकृतं प्रतिभाति। विशेषवाक्यादर्शने हि सामान्यवाक्यस्य नाना-विधोऽर्थो व्याकर्तुं शक्यते। विशेषदर्शने तु सामान्यवाक्यस्य विशेष एव पर्यवसानमित्यलमतिप्रसक्तानुप्रसक्तेन। अत्र हलचक्रे बीजोप्तिचक्रे वा विहित-नक्षत्राणामिष्टफलदस्थानपाते सत्येव परिग्रहो न्याय्यः, अन्यथा तेषां त्यागः। निषिद्धानां तु सर्वथैव त्याग इति निष्कृष्टोऽर्थः॥ २९॥

अथ शिरोमोक्षविरेकादिधर्मक्रियामुहूर्तान् शार्दूलविक्रीडितेनाह—

त्वाष्ट्राग्निमित्रकभाद्वयेऽब्धुपलघुश्रोत्रे शिरामोक्षणं
भौमार्केज्यदिने विरेकवमनाद्यं स्याद्बुधार्की विना।
मित्राक्षिप्रचरध्रुवे रविशुभाहे लग्नवर्गे विदो
जीवस्यापि तनौ गुरौ निगदिता धर्मक्रिया तद्बले॥३०॥

त्वाष्ट्रादिति॥ त्वाष्ट्राद्वयं=चित्रास्वात्यौ, मित्राद्वयं=अनुराधाज्येष्ठे, कभा-द्वयं=रोहिणीमृगौ, अब्धुपः=शततारका, लघूनि=अश्विनीपुष्यहस्ताभिजितः, श्रोत्रं=श्रवणः,-एषु नक्षत्रेषु; तथा भौमार्केज्यदिने=मंगलगुरुरविवासरेषु शिरामोक्षणं रुधिरवाहिनी नाडी शिरा तस्या मोक्षणं सूक्ष्मशस्त्रघातेन शिरातो रक्तमोक्षणं कुर्यादित्यर्थः। उक्तं च ज्योतिःसारसागरे—'चित्राद्युगे विधियुगे

मित्रयुगे लघुषु वारुणे विष्णौ। बस्तिविरेचनवेधाः शुभदिनतिथिचंद्रलग्नेषु ॥' इति। वारे संमत्यभावः। अथ बुधार्की बुधशनैश्चरावपास्यान्यवारेषु पूर्वोक्तनक्षत्रेषु च विरेकवमनाद्यम्; औषधेन मुखप्रवृत्तिर्विरेकः, वमनं प्रसिद्धमेव, तदाद्यं कर्म कार्यं उक्तं। अथ मित्रक्षिप्रचरध्रुवे एषु त्रयोदशनक्षत्रेषु तथा रवौ रविवारे शुभाह्ने चंद्रबुधगुरुशुक्रवारेषु धर्मक्रिया कोटिहोमरुद्रानुष्ठानादिका कार्या। उक्तं च दीपिकायाम्—'शुभग्रहार्कवारेषु मृदुक्षिप्रध्रुवोडुषु। शुभराशिविलग्नेषु शुभं शांतिकपौष्टिकम् ॥' इति। शांतिकं=धर्मकृत्यं कोटिहोमाद्यम्। अथ विदो बुधस्य जीवस्य गुरोर्लग्नवर्गे यस्मिन् कस्मिंश्चिल्लग्ने गुरुबुधयोः षड्वर्गे सति तनौ लग्ने च गुरौ सति कर्तुश्च गुरुबले सति धर्मक्रिया हिता निगदिता। उक्तं च रत्नमालायाम्—'हिबुकेऽर्के गुरौ लग्ने धर्मारंभो रवेर्दिने' इति। अन्यच्च—'श्रुतिस्मृतिपुराणादिप्रोक्तानां धर्मकर्मणाम्। गुरुज्ञलग्नवर्गेषु प्रारंभस्तद्बले सति ॥' इति। षड्वर्गज्ञानं विवाहप्रकरणे ग्रंथकर्तैव वक्ष्यति ॥ ३० ॥

अथ धान्यच्छेदमुहूर्तं वसंततिलकेनाह—

तीक्ष्णाजपादकरवह्निवसुश्रुतींदु-
स्वातीमघोत्तरजलान्तकतक्षपुष्ये।
मंदाररिक्तरहिते दिवसेऽतिशस्ता
धान्यच्छिदा निगदिता स्थिरभे विलग्ने ॥ ३१ ॥

तीक्ष्णाजपादेति॥ तीक्ष्णसंज्ञानि=मूलज्येष्ठार्द्राश्लेषाः, अजपादः=पूर्वाभाद्रपदा, अन्यानि प्रसिद्धानि, तक्षा=चित्रा, पुष्यश्च; एतेष्वेकोनविंशतिनक्षत्रेषु तथा मंदः=शनिः, आरः=मंगलः, रिक्तातिथयः प्रसिद्धाः; एतेषां समाहारो मंदाररिक्तं तेन रहिते विहीने दिवसे तथा स्थिरभे स्थिरराशौ लग्ने सति धान्यच्छिदा धान्यच्छेदनम्। 'षिद्भिदादिभ्योऽङ्' इत्यङ्, स्त्रियां टाप्। धान्यानां सस्यानां छिदा निगदितोक्ता। निष्पन्नधान्यानां छेदनं कार्यमित्यर्थः। यदाह राजमार्तंडः—'रौद्रे पित्र्ये तथा सौम्ये हस्ते पुष्येऽनिले तथा। सस्यच्छेदं प्रशंसंति मूलश्रवणवासवे ॥' इति। दीपिकायां तु–'याम्याजपादहिधनानलतोयशक्रचित्रोत्तरोडुषु कुजार्कजवारवर्ज्यम्। शस्तेंदुयोगकरणेषु तिथावरिक्ते धान्यच्छिदा स्थिरनरस्वगृहोदयेषु ॥' इति। अहिः=आश्लेषा। अत्र पूर्ववाक्ये नव नक्षत्राण्युक्तानि। द्वितीयवाक्ये एकादश भानि। वाक्यद्वये धनिष्ठोपादानात्तत्यागे एकोनविंशतिभान्येव संपद्यंते। तानि वचनद्वयप्रामाण्याद्ग्रंथकर्त्रोपनिबद्धानि। व्यवहारतत्त्वे तु वारावुक्तौ–'धान्यानां लवनं कुर्याद्गुरौ शुक्रे च सर्वदा' इति ॥ ३१ ॥

अथ कणमर्दनसस्यरोपणमुहूर्तौ वसंततिलकेनाह—

भाग्यार्यमश्रुतिमघेंद्रविधातृमूल-
मैत्रांत्यभेषु कथितं कणमर्दनं सत्।

द्वीशाजपान्निर्ऋतिधातृशतार्यमर्क्षे
सस्यस्य रोपणमिहार्किकुजौ विना सत् ॥ ३२ ॥

भाग्येति ॥ भाग्यं=पूर्वाफल्गुनी, अर्यमा=उत्तराफल्गुनी, विधाता=रोहिणी, अन्यान्यतिप्रसिद्धानि; एषु नव नक्षत्रेषु कणाश्रणकादयस्तेषां मर्दनं पश्वाद्याघातादिना वितुषीकरणं सत् । समीचीनमित्यर्थः । तदुक्तं व्यवहारोच्चये 'फल्गुन्यौ श्रवणश्चैव मघा मूलं तथा मता । अनुराधा तथा ज्येष्ठा रेवती धान्यमर्दने ॥ केवले सिंहलग्ने वा गुरुशुक्रोदयेऽथवा ॥' इति । एवमत्राष्टौ भान्युक्तानि, 'रोहिण्यां मर्दनं कुर्यात्' इति राजमार्तण्डोक्तेः रोहिण्युपादानं च । तद्वाक्यमिदम्—'हस्ते च वापयेद्बीजं संग्रहं वैश्वदैवते । रोहिण्यां मर्दनं कुर्यादुत्तरासु प्रवेशयेत् ॥' इति । अत्र कर्मविशेषेष्वेकस्यैव नक्षत्रस्योपादानमतिमुख्यतासूचनार्थं, न त्वितरनिषेधार्थम् । कुतः? वाक्यांतराणां वैयर्थ्यापत्तेरिति । अथ द्वीशं=विशाखा, अजपात्=पूर्वाभाद्रपदा, निर्ऋतिः=मूलं, धाता=रोहिणी, शतं=शततारका, अर्यमर्क्षं=उत्तराफल्गुनी; एषु षट्सु भेषु सस्यस्य धान्यस्य रोपणं पूर्ववापितस्थानात्स्थलांतर आरोपणं सच्छुभम् । इह सस्यरोपणे आर्किकुजौ शनिभौमौ विना त्यक्त्वाऽन्यवारेषु सूर्यचंद्रबुधगुरुशुक्रवारेषु कार्यं सस्यस्य रोपणम् । उक्तं च राजमार्तण्डे—'पूर्वाभाद्रपदामूलं रोहिण्युत्तरफल्गुनी । विशाखा वारुणं चैव धान्यानां रोपणे वराः ॥' इति ॥ ३२ ॥

अथ धान्यस्थितिधान्यवृद्धिमुहूर्तौ वसंततिलकेनाह—

मिश्रोग्ररौद्रभुजगेंद्रविभिन्नभेषु
कर्काजतौलिरहिते च तनौ शुभाहे ।
धान्यस्थितिः शुभकरी गदिता ध्रुवेज्य-
द्वीशेंद्रदस्रचरभेषु च धान्यवृद्धिः ॥ ३३ ॥

मिश्रोग्रेति ॥ मिश्रं=विशाखाकृत्तिके, उग्रं=पूर्वात्रयभरणीमघाः, रौद्रं=आर्द्रा, भुजगः=आश्लेषा, इंद्रः=ज्येष्ठा; एभ्यो दशभ्यो विभिन्नेष्वन्येषु सप्तदशसु भेषु नक्षत्रेषु; तथा कर्कः, अजः=मेषः, तौलिः=तुला; एतैर्विहीनतनौ मकरस्थिरद्विस्वभावराशिलग्नेषु तथा शुभाहे शुभग्रहाणां वारे धान्यानां स्थितिरेकत्र राशीकरणं नाम सा निगदिता । उक्तं च दीपिकायाम्—'याम्याग्निरुद्राहिविशाखपूर्वामाहेंद्रपित्र्येतरभैः शुभाहे । धान्यादिसंस्थापनमेषु शस्तं मृगस्थिरद्व्यंगगृहोदयेषु ॥' इति । अथ ध्रुवाणि प्रसिद्धानि, इज्यः=पुष्यः, द्वीशं=विशाखा, इंद्रः=ज्येष्ठा, दस्रावश्विनी, चराणि प्रसिद्धानि; एषु धान्यवृद्धिः 'त्वं मह्यमेतावत् धान्यं देहि, ततोऽहं मासद्वयेन तुभ्यं तद्धान्यं सपादं सार्धं वा दास्यामि' इत्येवंरूपा सा निगदिता । उक्तं च दीपिकायाम्—'श्रवणत्रयं विशाखाध्रुवपुष्यपुनर्वसूनि वायुश्च । अश्विन्यथ च ज्येष्ठा धनधान्यविवर्धने शस्ताः ॥' इति ॥ ३३ ॥

अथ शांतिकपौष्टिकादिकृत्येषु मुहूर्तं वसंततिलकेनाह—

क्षिप्रध्रुवांत्यचरमैत्रमघासु शस्तं
स्याच्छांतिकं च सह पौष्टिकमंगलाभ्याम् ।
खेऽर्के विधौ सुखगते तनुगे गुरौ नो
मौढ्यादिदुष्टसमये शुभदं निमित्ते ॥ ३४ ॥

क्षिप्रेति ॥ क्षिप्रार्द्रानि मघांतानि प्रसिद्धानि, तेषु पौष्टिकं=पुष्टिकारकं, मंगलं=विनायकशांत्यादि, शांतिकं=दुष्टफलदमूलनक्षत्राद्युत्पन्नशांत्यादि; एतानि कर्माणि कार्याणि । उक्तं च दीपिकायाम्—'मित्रादित्यमघोत्तराशतभिषक्स्वातीविरंच्यच्युतस्वर्गाधीश्वरपूज्यपौष्णरविषु स्फीते तुषारत्विषि । रिक्तां पर्व विहाय सौम्यदिवसे शस्तं नृणां भूतये सर्वं शांतिकपौष्टिकं निगदितं गर्गादिभिर्निश्चयात् ॥' इति । अथ लग्नशुद्धिः । तत्रार्के सूर्ये खे दशमे सति विधौ चंद्रे सुखगते चतुर्थस्थे गुरौ तनुगे लग्नस्थे सति शांत्यादिकं कर्म कार्यम् । उक्तं च रत्नमालायाम्—'पूर्णे चंद्रे वेश्मगेऽर्केऽम्बरस्थे लग्ने जीवे वाक्पतेर्वासरे च । श्रीमंत्यायुष्याणि कार्याणि कार्याणि' इति । तच्छांतिकादि मौढ्ये गुरुशुक्रयोरस्तादिकं बाल्यवार्धकसिंहस्थगुर्वादिरूपे दुष्टसमये नो शुभदम् । तथा निमित्ते केत्वाद्युत्पातदर्शने सति गुरुशुक्रास्तादिदुष्टसमयेऽपि शुभदम् । उक्तं च दीपिकायाम्—'शांतिकर्माणि कुर्वीत रोगे नैमित्तिके तथा । गुरुभार्गवमौढ्येऽपि दोषस्तत्र न विद्यते ॥' इति । युक्तं चैतत्, यतोऽस्तीदं शांतिकं नैमित्तिकम् । 'अनिमित्तकृता शांतिर्निमित्तायोपजायते ।' इति स्मरणात् । तत्र निमित्ते रोगरूपे केत्वाद्युत्पातांतरदर्शनरूपे च भवति नैमित्तिकं, तच्च बहुदिनव्यापके गुरुशुक्रास्तादिदोषेऽप्यवश्यं विधेयम् । यतो जन्मांतरीयदुरदृष्टसूचकमिदं निमित्तमुत्पन्नं तस्य शान्त्या निरासादशुभादृष्टस्यापि निरासः । बहुदिनव्यापिनि निर्दूषणे काले क्रियमाणं शांतिकं किंचिद्दुरदृष्टशामकं यद्यपि भवति तथापि तावद्भिर्दिनैर्दुरदृष्टस्य प्राबल्याद्दुःखप्राप्तिः । यथाल्पोऽप्यग्निरल्पेनैव जलेन शांतो भवति, तथा सकलनगरदाहको मनुष्यैर्बहुभिर्युगपद्गृहीतजलपूर्णघटैरेकदेशनिर्वापितोऽपि सकलोऽग्निर्न निर्वाप्यते इत्यतः सर्वथा मौढ्यादिदोषं विनैव यथाकथंचित्कथितप्रकारेण दिनशुद्धिमंगीकृत्य शांतिकाद्यवश्यं विधेयम् ॥ ३४ ॥

अथ होमाहुतिशुद्धौ मुहूर्तमनुष्टुप्छंदसाह—

सूर्यभात्त्रित्रिभे चंद्रे सूर्यविच्छुक्रपंगवः ।
चंद्रारेज्यागुशिखिनो नेष्टा होमाहुतिः खले ॥ ३५ ॥

सूर्यभादिति ॥ सूर्यः स्पष्टमानेन यन्नक्षत्रेऽस्ति तस्मात्त्रित्रिके आदितो भत्रयमेकत्रिकमेवं सप्तविंशतिभेषु नवत्रिकानि भवंति । तत्र सूर्यनक्षत्रादारभ्य

प्रथमद्वितीयादित्रिकस्थे चंद्रे सति क्रमादेषां मुखे आहुतिः पतति । यथा प्रथमत्रिके सूर्यस्य, ततो बुधस्य, ततः शुक्रस्य, ततः पंगोः शनेः, ततश्चंद्रस्य, तत आरस्य भौमस्य, तत इज्यस्य गुरोः, ततोऽगो राहोः, ततः शिखिनः केतोः । एवं सति यद्दिने पापग्रहमुखे होमाहुतिः पतति सा नेष्टा न शुभदा । अर्थादेव शुभग्रहमुखे आहुतिपातः शुभफलदः । उक्तं च कश्यपेन—'नक्षत्रे यत्र भानुः स्यात्तदाद्यृक्षत्रिकं त्रिकम् । सूर्यज्ञशुक्रसौरीणामिंदुभौमबृहस्पतेः ॥ राहोः केतोश्च निर्दिष्टं वदनादौ शुभाशुभम् । सौख्यार्थनाशः सूर्ये स्यादिंदौ जलमयी कृषिः ॥ भौमेऽग्निदाहो राष्ट्रस्य बुधे बुद्धिविवर्धनम् । गुरौ लब्धिरभीष्टस्य राज्यं सौभाग्यनंदितम् ॥ भार्गवे कार्यसंपत्तिरैहिकामुष्मिकी भवेत् । शनेर्मुखाहुतौ ज्ञेयो राज्यभंगो धनक्षयः । राहोर्मुखाहुतौ हानिः सर्वस्य परिकीर्तिता । केतोर्मुखाहुतौ ज्ञेयं दुर्भिक्षं देशविप्लवम् ॥ मरणं प्राणिनां चैव राज्यभंगं तथैव च । तस्मात्सर्वप्रयत्नेन ग्रहनक्षत्रसंगमे ॥ दुष्टे न कुर्याद्धवनमित्याहुर्भार्गवादयः ॥' इति । तदयमत्र निष्कृष्टोऽर्थः—सूर्याक्रांतनक्षत्रात् चंद्रनक्षत्रस्य त्रिकत्रिकगणनया पापमुखे आहुतिर्निषिद्धा । शुभग्रहमुखे समीचीना । अत एव पितृचरणैरप्युक्तम् 'विवस्वदृक्षात्त्रिकमेकमेवं विधौ स्थितेऽर्कज्ञसितार्कजानाम् । चंद्रारजीवागुशिखावदास्ये होमाहुतिः पापमुखे निषिद्धा ॥' इति । गुर्जरदेशे प्रसिद्धमिदम् । अथ दैवात्कृतस्य पापग्रहमुखे हवनस्य शांतिरुक्ता विष्णुधर्मोत्तरे—'क्रूरग्रहमुखे चैव संजाते हवने शुभे । शांतिं विधाय गां दद्याद्ब्राह्मणाय कुटुंबिने ॥ आयसीं प्रतिमां कृत्वा निक्षिपेत्तामधोमुखीम् । गोमूत्रमधुगंधाद्यैरर्चितां प्रतिमां ततः । कुंडे निधाय संपूज्य तत्र होमो विधीयते ॥' इति ॥ ३५ ॥

अथ यद्दिने होमश्चिकीर्षितस्तद्दिने वह्निवासवशेन शुभाशुभफलमिंद्रवज्रयाह—

**सैका तिथिर्वारयुता कृताप्ता शेषे गुणेऽभ्रे भुवि वह्निवासः ।**
**सौख्याय होमे शशियुग्मशेषे प्राणार्थनाशौ दिवि भूतले च ३६**

सैकेति ॥ शुक्लादिमासगणनया वर्तमानतिथिर्गण्यैकयुता वर्तमानवारयुता चतुर्भक्ता यच्छेषं तद्गुणमितं शून्यमितं चेत्तदा वह्नेर्वासो वसतिस्थानं भुवि वर्तते । तत्फलमाह—सौख्यायेति । होमदिवसे भुवि वह्निवासः सौख्यजनको भवतीत्यर्थः । अथ शशियुग्मशेषे क्रमेणैकमिते शेषेऽग्निवासो दिवि स्वर्गे, तत्फलं कर्तुः प्राणनाशो मरणं भवेत् । द्विमिते शेषेऽग्निवासो भूतले पातालेऽस्ति, तत्फलं कर्तुरर्थनाशो द्रव्यनाशः । उक्तं च—'तिथिवारयुतिः सैका वेदभक्तावशेषकात् । निवासोऽग्नेर्व्योम्नि रूपे वित्तप्राणविनाशकः । पाताले द्विकशेषेण धनसंचयनाशकः । गुणवेदावशेषेण भूमौ विपुलसौख्यदः ॥ संस्कारेषु विचारोऽस्य न कार्यो नापि वैष्णवे । नित्ये नैमित्तिके कार्ये न चाब्दे मुनिभिः स्मृतः ॥' इति ॥ ३६ ॥

अथ प्रतिवर्षोत्पन्ननवान्नभक्षणमुहूर्तमनुष्टुभाह—

नवान्नं स्याच्चरक्षिप्रमृदुभे सत्तनौ शुभम्।
विना नंदाविषघटीमधुपौषार्किभूमिजान्॥ ३७॥

नवान्नमिति॥ चरक्षिप्रमृदुसंज्ञकद्वादशभेषु तथा सत्तनौ समीचीनलग्ने शुभग्रहैर्युते दृष्टे चेत्यर्थः। परंतु नंदाः=प्रतिपत्षष्ठ्येकादश्यः, विषघटीर्विवाहप्रकरणे वक्ष्यमाणाः, मधुं=चैत्रमासं, पौषं च, आर्कि=शनिं, भूमिजं=मंगलवारं, एतान्विना वर्जयित्वा नवान्नभक्षणं शुभं स्यात्। यदाह भुजबलः–'नवान्नभोजनं नृणां मृदुक्षिप्रचरैः शुभम्। शुभैश्चितयुते लग्ने विषनाडीं विवर्जयेत्॥ नवान्नं न च नंदायां मासे पौषे मधौ तथा॥' इति॥ ३७॥

अथ नौकाघटनमुहूर्तमनुष्टुभाह—

याम्यत्रयविशाखेन्द्रसार्पपित्र्येशभिन्नभे।
भृग्वीज्यार्कदिने नौकाघटनं सत्तनौ शुभम्॥ ३८॥

याम्येति॥ याम्यत्रयं=भरणीकृत्तिकारोहिण्यः, विशाखा, इन्द्रः=ज्येष्ठा, सार्पं=आश्लेषा, पित्र्यं=मघा, ईशः=आर्द्रा; एतैर्वर्जिते रहिते अवशिष्टेष्वष्टादशनक्षत्रेषु तथा शुक्रगुरुसूर्यवारे सत्तनौ प्राग्व्याख्यातगुणविशिष्टे लग्ने नौकायाः घटनं निर्माणं शुभम्। उक्तं च दीपिकायाम्—'ज्ञभहरिघटलग्ने शक्रपित्र्याद्रिदेवत्रिनयनविशियाम्यद्वंद्वसार्पोत्यभेषु। सुकरणतिथियोगे शुक्रजीवार्कवारे तरणिघटनमिष्टं चंद्रताराविशुद्धौ॥' इति। ज्ञभे=मिथुनकन्ये, हरिः=सिंहः। तरणिः=नौः। अथ घटनस्थानान्नौचालनमुहूर्तो मयोच्यते। तत्र दीपिका—'शुभाहे विष्णुयुग्मेंदुभगमैत्राश्विपाणिषु। चालनं घटनस्थानान्नावः शुभतिथींदुषु॥' इति। अथ दीपिकायां नौकायात्रामुहूर्तोऽपि–'अश्विकरेज्यमृगानिलपूर्वामित्रधनाच्युतभे शुभलग्ने। तारकयोगतिथींदुविशुद्धौ नौगमनं शुभदं शुभवारे॥' इति॥ ३८॥

अथ वीरसाधनाभिचारयोर्मुहूर्तमनुष्टुभाह—

मूलार्द्राभरणीपित्र्यमृगे सौम्ये घटे तनौ।
सुखे शुक्रेऽष्टमे शुद्धे सिद्धिर्वीराभिचारयोः॥ ३९॥

मूलेति॥ मूलार्द्रादिनक्षत्रपंचके तथा घटे तनौ कुंभलग्ने तत्र स्थिते सौम्ये बुधे सति तथा शुक्रे सुखे चतुर्थस्थे अष्टमे शुद्धे। शुद्धत्वं प्राग्व्याख्यातम्। तादृशे लग्ने वीरस्य वीरसाधनाया अभिचारकर्मणश्च सिद्धिर्निष्पत्तिः। उक्तं च वसिष्ठेन–'शशिनैर्ऋतयमपितृभेष्वष्टमशुद्धौ भृगौ च पाताले। घटलग्नगते शशिजे निखिला वेतालसिद्धिः स्यात्॥' इति। आर्द्राग्रहणं रत्नमालायाम्–'पित्र्येशयाम्यमूलेंदुभेषु शुद्धेऽष्टमेऽपि च। वेतालसिद्धिः पाताले भृगौ ज्ञे घटलग्नगे॥' इति। वेतालो नाम वीरसाधना॥ ३९॥

---

१ अत्र 'अवशिष्टेष्वष्टादशनक्षत्रेषु' इति पाठो विचार्योऽभियुक्तैः; यतो ग्रंथकृदुक्तान्यष्टनक्षत्राण्यष्टादशभिर्मिलितानि समस्तनक्षत्राणां षड्विंशतिसंख्यापादकानि स्युः।

अथ रोगनिर्मुक्तस्नानमुहूर्तं वसंततिलकेनाह—

व्यंत्यादितिध्रुवमघानिलसार्पधिष्ण्ये
रिक्तातिथौ चरतनौ विकवींदुवारे ।
स्नानं रुजा विरहितस्य जनस्य शस्तं
हीने विधौ खलखगैर्भवकेंद्रकोणे ॥ ४० ॥

व्यंत्येति ॥ अंत्यं=रेवती, अदित्यादीनि भानि प्रसिद्धानि; एतानि नव धिष्ण्यानि विगतानि येषु तान्यवशिष्टान्यष्टादश भानि तेषु तथा रिक्तासंज्ञासु तिथिषु तथा कविः=शुक्रः, इंदुः=चंद्रः, आभ्यां रहितेषु वारेषु तथा विधौ=चंद्रे, हीने=निषिद्धस्थानस्थिते । निषिद्धस्थानानि गोचरप्रकरणे वक्ष्यति । तथा भवे=एकादशे, केंद्रे=प्रथमचतुर्थसप्तमदशमस्थाने, कोणे=नवपंचमे; एषु स्थानेषु स्थितैः पापग्रहैरुपलक्षिते लग्ने सति रुजा रोगेण विरहितस्य निर्मुक्तस्य जनस्य स्नानं आरोग्यस्नानं शस्तं शुभम् ॥ उक्तं च कश्यपेन—'पितृमारुतसर्पांत्य-स्थिरर्क्षेष्विंदुशुक्रयोः । न कुर्याद्वारयो रोगमुक्तः स्नानं कदाचन ॥' इति । पुनर्वसोरपि निषेधो रत्नमालायाम्—'इंदोर्वारे भार्गवे च ध्रुवेषु सार्पादित्य-स्वातियुक्तेषु भेषु । पित्र्ये चांत्ये चैव कुर्यान्कदाचिन्नैव स्नानं रोगमुक्तस्य जंतोः ॥' इति । पुष्यशततारकयोर्निषेधो नारदसंहितायाम्-'स्थिरेज्या-दितिसार्पांत्यपितृवारुणभेषु च । न कुर्याद्रोगमुक्तस्य स्नानं वारे[illegible]शुक्रयोः ॥' इति । अर्थादन्यनक्षत्रेषु कार्यमित्यर्थः । अथ लग्नादिशुद्धिमाह श्रीपतिः—'लग्ने चरे सूर्यकुजेज्यवारे रिक्तातिथौ चंद्रबले च हीने । त्रिकोणकेंद्रायगतैश्च पापैः स्नानं हितं रोगविमुक्तकानाम् ॥' इति । दीपिकायां तु विशेषः—'त्र्यादित्येषु चरेषु शक्रदिनकृत्पुष्योग्रचंद्रेषु च क्रूराहव्यतिपातविष्टिदिवसं-ष्विद्रावशस्ते तिथौ । केंद्रस्थेष्वशुभेष्वकामतिथिषु स्नानं गदान्मुक्तिदं शस्तं नात्र सुशोभना विधिभुजंगर्क्षेंदुमद्धामराः ॥' इति । अकामतिथिषु=त्रयोदशी-रहितासु तिथिषु ॥ ४० ॥

अथ शिल्पविद्यामुहूर्तमनुष्टुभाह—

मृदुध्रुवक्षिप्रचरे ज्ञे गुरौ वा खलग्नगे ।
विधौ ज्ञजीववर्गस्थे शिल्पविद्या प्रशस्यते ॥ ४१ ॥

मृदुध्रुवेति ॥ मृदुगणध्रुवगणक्षिप्रगणचरगणेषु शिल्पं काष्ठतक्षणपाषाणा-दिघटननानावर्णनिर्मितमूर्त्यादिकं तद्विद्यायाः प्रारंभः प्रशस्यते । अथ लग्नशुद्धिः । तत्र ज्ञे बुधे खलग्नगे दशमस्थे लग्नस्थे च वा अथवा गुरौ बृहस्पतौ खलग्नगे दशमस्थे लग्नस्थे च सति तथा विधौ चंद्रे ज्ञजीववर्गस्थे बुधगुरुवर्गस्थे च सति शिल्पविद्या प्रशस्यते । उक्तं च रत्नमालायाम्—'लग्नकर्मगते सौम्ये जीवे वास्तवदीधितौ । तयोर्वर्गस्थिते शिल्पविद्यारंभः प्रशस्यते ॥' इति । कश्यपेन स्वेवमुक्तम्-'लग्नधर्मगते सौम्ये गुरौ वा हिमदीधितौ । तयोर्वर्गस्थिते शिल्प-

कर्मारंभः प्रशस्यते ॥' इति ॥ वसिष्ठेन त्वन्यथैवोक्तम्—'शशितनये जीवे वा चंद्रे वा लग्नगे बलिनि धर्मे । तद्वर्गे लग्नगते शिल्पारंभः प्रशस्यते सततम् ॥' इति ॥ ४१ ॥

अथ संधानमुहूर्तमनुष्टुभाह—

मृगेज्यमित्रभाग्येषु चाष्टम्यां तैतिले हरौ ।
शुक्रदृष्टे तनौ सौम्यवारे संधानमिष्यते ॥ ४२ ॥

मृगेज्येति ॥ मृगेज्यमित्राः प्रसिद्धाः, भाग्यं=पूर्वाफल्गुनी; एषु भेषु तथाऽष्टम्यां हरौ द्वादश्यां वा तैतिले करणे वा तथा शुक्रदृष्टे शुक्रयुत इत्यपि द्रष्टव्यम् । तादृशे तनौ लग्ने तथा सौम्यग्रहाणां वारे संधानं प्रीतिरिष्यते । उक्तं च रत्नमालायाम्—'भाग्ये मैत्रे शीतरश्मौ सपुष्ये द्वादश्यां वा शुक्रदृष्टे च लग्ने । अष्टम्यां वा तैतिलाख्ये प्रदिष्टा पूर्वाचार्यैस्तत्र संधानसिद्धिः ॥' अत्र [1]केचिदेवं व्याकुर्वते-पुष्येण सहिते सपुष्ये भाग्ये मैत्रे च एतन्नक्षत्रत्रयसंस्थे शीतरश्मौ चंद्रे सति संधानं कार्यम् । अनेन भाग्यमैत्रपुष्यात्मकं नक्षत्रत्रयमुक्तं भवति । यदाह वसिष्ठः—'सुरगुरुमैत्रे भाग्ये द्वादश्यां वाथ पक्षमध्यतिथौ । सितयुतवीक्षितलग्ने तैतिलकरणे च संधिः स्यात् ॥' इति । कश्यपोऽपि-'भाग्ये पुष्ये समैत्रे च लग्ने शुक्रेक्षिते युते । करणे तैतिलेऽष्टम्यां द्वादश्यां संधिरिष्यते ॥' इति । एतदेव रत्नमालापद्यव्याख्यानं न्याय्यः । संमतिवाक्ययोरार्षत्वात् । 'भाग्ये मैत्रे शीतरश्मौ' इति वक्रोक्ताश्रयं न विद्मः । एवं च मूलपद्ये 'देवेज्यमित्रभाग्येषु' इत्येव पठनीयम् ॥ ४२ ॥

अथ परीक्षामुहूर्तं वसंततिलकेनाह—

त्यक्त्वाष्टभूतशनिविष्टिकुजाङ्जनुर्भ-
मासौ मृतौ रविविधू अपि भानि नाड्याः ।
ध्रुवे चरे तनुलवे शशिजीवतारा-
शुद्धौ करादितिहरींद्रकपे परीक्षा ॥ ४३ ॥

त्यक्त्वेति ॥ अष्ट=अष्टमी, भूतः=चतुर्दशी, शनिकुजौ वारौ प्रसिद्धौ, विष्टिः=भद्रा, जनुर्भमासौ=जननकालीननक्षत्रं जन्ममासं च, मृतौ=अष्टमस्थाने, रविविधू=जन्मराशेः सकाशादष्टमं सूर्यं चंद्रं च; तथा नाड्याः भान्यपि=नाडीनक्षत्राण्यपि । रविविधू अपीत्यत्र 'ईदूदेद्द्विवचनं प्रगृह्यम्' इति प्रगृह्यसंज्ञायां 'प्लुतप्रगृह्या अचि नित्यम्' इति प्रकृतिभावः । एतावत्पदार्थकदंबकं त्यक्त्वा परीक्षा कार्या । परीक्षा नाम सुवर्णस्तेयादिमहापातकाभिशस्तशुद्ध्यशुद्धिविचारात्मिका तप्तमाषादिरूपा । दिव्यमिति यावत् । सामान्यतो भद्रानिषेधेऽपि पुनर्भद्रानिषेधो 'रात्रिभद्रा यदाह्नि स्यात्' इत्यादिपरिहाराणामप्यनवकाशतां सूचयितुमुपात्तः । जन्मभस्य नाडीनक्षत्रत्वादेव निषेधे पुनरुपादानमावश्यकत्वं द्योतयितुम् । जन्ममासस्य तु पुनर्निषेधो नाक्षत्रभे-

१ अत्र 'मृगेज्यमित्रभाग्येषु' इत्यपि पाठो लभ्यते । २ 'जीर्णाः' इति पाठः ।

तीर्थवारिणा ॥ कुंभं च वस्त्रगंधाद्यैस्तत्तन्मंत्रैश्च पूजयेत् ॥ याः फलिनीरित्यनया क्षिपेद्वौषधादिकान् ॥ कुंभोपरिस्थपात्रे तु आश्लेषाप्रतिमां यजेत् । निष्कनिष्कार्धपादैर्वा कारयित्वा स्वशक्तितः ॥ तत्पूर्वोत्तरनक्षत्रे दक्षिणोत्तरयोर्यजेत् । ऐंद्रादीशानपर्यंतमितरर्क्षाणि पूजयेत् ॥ मूलोक्तेन विधानेन कुंभयोरभिमंत्रणम् । रुद्रार्चा रुद्रकुंभे तु पूर्ववच्छेषमाचरेत् ॥ नमोऽस्तु सर्पेभ्य इति पूजामंत्र इतीरितः । सर्पो रक्तस्त्रिनेत्रश्च द्विभुजः पीतवस्त्रकः ॥ फलकासिधरस्तीक्ष्णो दिव्याभरणभूषितः । एवं ध्यात्वा ततोऽभ्यर्च्य होमकर्म समाचरेत् ॥ कर्तुः शास्त्रोक्तमार्गेण आचार्यस्त्वथवा चरेत् ॥ मुखांतं कर्म निर्माय हविरादाय शास्त्रतः । इदं सर्पेभ्यो जुहुयात्साधिप्रत्यधिदैवतम् ॥ अष्टोत्तरशतं वाथ अष्टाविंशतिमेव च । मूलनक्षत्रवच्छेषं होमशेषं समापयेत् ॥ पूर्णाहुत्यंतकर्माणि कृत्वा संपातकं तथा । कुंभाज्जलं तु प्रक्षिप्य अभिषेकमथाचरेत् । दारपुत्रसमेतस्य यजमानस्य पूर्ववत् ॥ अभिषिंचेत्तदाचार्यऋत्विग्भिः सहितस्ततः ॥ अभिमंत्रितकुम्भाद्भिरभिषेचनमाचरेत् । तथा पौराणमंत्रैश्च पल्लवैरभिषेचयेत् ॥ आश्लेषाऋक्षजातस्य मातापित्रोर्धनस्य च । भ्रातृज्ञातिकुलस्थानां दोषं सर्वं व्यपोहतु ॥ योऽसौ वागीश्वरो नाम अधिदेवो बृहस्पतिः । मातापित्रोः शिशोश्चैव गंडांतं च व्यपोहतु ॥ पितरः सर्वभूतानां रक्षंतु पितरः सदा । सर्पनक्षत्रजातस्य वित्तं च ज्ञातिबांधवान् ॥ एवं कृतेऽभिषेके तु सर्पशांतिर्भवेद्ध्रुवम् ॥ ततः शुक्लांबरधरो यजमानः सुभूषितः ॥ दक्षिणाभिस्ततो विप्रान्मूलवच्च प्रतोषयेत् । भुक्तवत्सु च विप्रेभ्यः स्वीकुर्यादाशिषं गृही ॥ इत्युक्तेन विधानेन सर्वारिष्टं व्यपोहति । सर्वे कामाश्च सिध्यंति वेदोक्तायुर्भविष्यति ॥ इत्युक्तं सर्पशांत्यर्थं सारमागमचोदितम् । मानवानां हितार्थाय मनुना सार्वकामिकम् ॥ सर्पाधीश नमस्तुभ्यं नागानां च गणाधिप । गृहाणार्घ्यं मया दत्तं सर्पारिष्टप्रशांतये ॥' इत्यर्घ्यमंत्रः । 'मूलनक्षत्रवत्कुर्यात्सर्पगंडे स्वनामतः' । इति श्रीमानवसंहितायामाश्लेषाशांतिविधिः । एतच्च मूलाश्लेषाशांतिकद्वयं विवाहे उपस्थिते श्वशुरस्य श्वश्र्वाश्च सत्वे मूलाश्लेषोत्पन्नयोरपि वधूवरयोस्तत्तदनिष्टनिवृत्त्यर्थं विधेयम् । उपलक्षणत्वाच्च ज्येष्ठाविशाखोत्पन्नाया वध्वा वरस्य ज्येष्ठबंधुकनिष्ठबंधुपीडाशांतये च । यदाह वसिष्ठः—'नैर्ऋत्यभोत्पन्नसुतः सुता वा क्षिप्रादवश्यं श्वशुरं निहंति । तदंत्यपादे जनिता निहंति नैवोत्क्रमेणाहिभवः कलत्रम् ॥' इति । अहिः=आश्लेषा । अहिभव इति पुंस्त्वमविवक्षितम् । 'सुरेशताराजनिता धवाग्रजं द्विदैवताराजनिता तु देवरम्' इति । नारदोऽपि 'मूलजा श्वशुरं हंति व्यालजा च तदंगनाम् । ऐंद्री पत्यग्रजं हंति देवरं तु द्विदैवजा ॥ शांतिर्वा पुष्कला चेत्स्यात्तर्हि दोषो न कश्चन ॥' इति ॥

अथान्याः शांतयः श्लोकक्रमेणोच्यंते । तत्र तावन्नक्षत्रगंडांतशांतिविधिरुच्यते—'गंडशांतिं प्रवक्ष्यामि सोममंत्रेण भक्तिमान् । कांस्यपात्रं प्रकुर्वीत पलैः षोडशभिर्नवम् ॥ अष्टभिश्च चतुर्भिर्वा द्वाभ्यां वा शोभनं तथा । तन्मध्ये पायसं शंखे नवनीतेन पूरिते ॥ राजतं चंद्रमर्चेत्तु

सितपुष्पसहस्रकैः। दैवज्ञः क्षौमवासाश्च शुक्लमाल्यांबरार्चितः॥ सोमोऽहमिति संचिंत्य पूजां कुर्यादतंद्रितः। जपेत्साहस्रकं मंत्रं श्रद्दधानः समाहितः॥ आप्यायस्वेति मंत्रेण पूजां कुर्यात्समाहितः। दद्याद्वै दक्षिणामिष्टां गंडदोषप्रशांतये॥ शुक्लं वागीश्वरं चैव ताम्रपात्रसमन्वितम्। गंडदोषोपशांत्यर्थं दद्याद्वेदविदे शुचिः॥' इति श्रीमानवसंहितायां नक्षत्रगंडांतशांतिविधिः॥ ॥ अथ नक्षत्रगंडांतलक्षणमन्यैर्मुनिभिरेवमुक्तम्—'अश्विनीमघमूलादौ त्रिषड्नवनाडिकाः। रेवतीसार्पशाक्रांते मासाश्च ऋतुसायकाः॥ अश्विनीमघमूलादौ नाडिकाद्वितयं तथा। रेवतीसार्पशाक्रांते नाडिकाद्वितयं तथा॥ अश्विनीमघमूलानां पूर्वार्धे बाध्यते पिता। पूषाहिशक्रचश्चार्धे जननी बाध्यते शिशोः॥ पितृहा तु दिवाजातो रात्रिजातस्तु मातृहा। आत्मध्रुक् संध्ययोर्जातो नास्ति गंडो निरामयः॥ सर्वेषां गंडजातानां परित्यागो विधीयते। वर्जयेद्दर्शनं तावत्तत्र षाण्मासिकं भवेत्॥' इति॥

अथ तिथिलग्नगंडांतशांतिविधिरुच्यते—'अभुक्तेनरजातस्य सूतकांत्यदिने पिता। शांतिं शुभेऽह्नि वा कुर्यात्तावत्पुत्रं न लोकयेत्॥ तिथिगंडे त्वनड्वाहं नक्षत्रे धेनुरुच्यते। कांचनं लग्नगंडे तु गंडदोषो विनश्यति॥ आद्यभागे पितुर्गंडं त्रयाणामभिषेचनम्। इतरत्र शिशोर्मातुरभिषेकं च कारयेत्॥ उत्तरे तिलपात्रं स्यात्तिष्ये गोदानमुच्यते। अजाप्रदानं त्वाष्ट्रे च पूर्वाषाढे च कांचनम्॥ उत्तरातिष्यचित्रासु पूर्वाषाढोद्भवस्य च। कुर्याच्छांतिं प्रयत्नेन नक्षत्राकारजां बुधः॥ सुवर्णेन तदर्धेन यथावित्तानुसारतः। नक्षत्राधिपते रूपं कृत्वा वस्त्रद्वयान्वितम्॥ वरुणस्यार्चनं कार्यं स्वस्तिवाचनपूर्वकम्। शतौषधानि रत्नानि मृत्स्वकपल्लवसंयुतान्॥ पूजांते समिदाज्यैर्होमं तिलयवैस्तथा। ततः पूर्णाहुतिं हुत्वा वेदाध्यायिकुटुंबिने॥ उत्तराप्रथमे पादे तिलपात्रं तथैव च। तिष्ये तु गां सवत्सां च सुशीलां च पयस्विनीम्॥ अजां चित्रासु वै दद्यात्पूर्वाषाढे तु कांचनम्। यवांश्च व्रीहिमाषांश्च तिलमुद्गांश्च दापयेत्॥ यथा वित्तानुसारेण कुर्याद्ब्राह्मणभोजनम्। पितुरायुष्यवृद्ध्यर्थं शांतिरत्र विधीयते॥ एवं यः कुरुते सम्यक् शांतिकर्म समाहितः। न दोषैर्लिप्यते नूनं पद्मपत्रमिवांभसा॥ आयुरारोग्यमैश्वर्यं संप्राप्नोति दिने दिने। धनधान्यसमृद्धिं च पुत्रपौत्रसमृद्धिमान्॥' इत्युत्तरगार्ग्योक्ततिथ्यादिगंडांतशांतिविधिः॥

अथ ज्येष्ठाशांतिविधिरुच्यते। तत्र प्रत्येकं घटिकापट्कस्य फलान्याह भरद्वाजः—'ज्येष्ठादौ मातृजननीं मातामहं द्वितीयके। तृतीये मातुलं हंति चतुर्थे जननीं तथा॥ आत्मानं पंचमे हंति षष्ठे गोत्रक्षयो भवेत्। सप्तमे कुलनाशः स्यादष्टमे ज्येष्ठसोदरम्। नवमे श्वशुरं हंति सर्वस्वं दशमे तथा॥' इति। 'सुखासीनमृषिश्रेष्ठं गर्गं मुनिगणान्वितम्। कृतांजलिपुटो भूत्वा पप्रच्छ किल शौनकः॥ शौनक उवाच ज्येष्ठानक्षत्रसंभूतगंडदोषविनिर्णयम्। तस्य शांतिविधानं च वद मे मुनिसत्तम॥ शौनकस्य वचः श्रुत्वा प्रत्युवाच महामुनिः। शृणु शौनक यत्नेन गंडदोषविनिर्णयम्॥ तस्य

शांतिविधानं च यथावत्कथयाम्यहम्। घटिकैका च मैत्रांते ज्येष्ठादौ घटिकाद्वयम् ॥ तयोः संधिरिति ज्ञेयं शिशुगंडं समीरितम्। प्रथमे च द्वितीये च ज्येष्ठर्क्षे च तृतीयके ॥ पादत्रये जातनरः श्रेष्ठोऽप्यत्र प्रजायते। ज्येष्ठांत्यपादजातस्तु पितुः स्वस्य विनाशनः। जायते नात्र संदेहो दशाहाभ्यंतरे तथा। ज्येष्ठर्क्षे कन्यका जाता हंति शीघ्रं धवाग्रजम् ॥ तच्छांतिं तस्य वक्ष्यामि गंडदोषप्रशांतये। सुदिने शुभनक्षत्रे चंद्रताराबलान्विते। सूतकांते तथा कुर्याज्ज्येष्ठाशांतिं विधानतः। वज्रांकुशधरं देवमैरावतगजान्वितम् ॥ कुर्याच्छचीपतिं रम्यं देवेंद्रं सुरनायकम्। कर्षमात्रसुवर्णेन कर्षार्धेनाथ पादतः ॥ तद्विधानं प्रकुर्वीत वित्तशाठ्यं न कारयेत्। शालितंदुलसंपूर्णकुंभस्योपरि पूजयेत् ॥ इंद्रायेंद्रोमरुत्वते इति मंत्रेण वाग्यतः। गंधपुष्पैर्धूपदीपैर्नानाभक्ष्यनिवेदनैः ॥ पूजयेद्विधिना विप्र लोकपालगणान्वितम्। रक्तवस्त्रद्वयोपेतं पूजयेत्सुरनायकम् ॥ तत्र संस्थापयेत्कुंभांश्चतुर्दिक्षु विशेषतः। पुण्योदकसमायुक्तान् वस्त्रयुग्मेन वेष्टितान् ॥ तन्मध्ये स्थापयेत्कुंभं शतच्छिद्रसमन्वितम् ॥ कुंभेषु विन्यसेद्धीमान पंचगव्यं समंत्रकम्। पंचामृतं पंचरत्नं मृत्तिकाः पंचसंख्यकाः। पंचवृक्षकषायांश्च पंचपल्लवकांस्तथा ॥ सुवर्णकुशदूर्वाश्च शतौषधिं विनिक्षिपेत्। पूजयेद्वारुणैर्मंत्रैः कुंभान्धीमान्प्रयत्नतः ॥ त्वं नो अग्ने जपेदादौ सत्वं नोऽपि द्वितीयकम्। समुद्रज्येष्ठा इति चेमं मे गंगे चतुर्थकम् ॥ पूजयेद्वस्त्रयुग्माद्यैश्चतुरः कलशानपि। जपं कुर्युः प्रयत्नेन मंत्रैरेभिर्द्विजोत्तमाः ॥ आनो भद्राजपं चादौ भद्राअग्नेर्द्वितीयकम्। इंद्रसूक्तं रुद्रजाप्यं जपं मृत्युंजयं ततः ॥ इत्थं संपूज्य देवेशं वरुणं कुंभसंस्थितम्। सुसंकल्पविधानेन होमकर्म ततश्चरेत् ॥ समिद्भिश्चाश्ववृक्षस्य शतमष्टोत्तरं तथा। सर्पिषा चरुणा चैव मूलमंत्रेण वाग्यतः ॥ हुनेज्जाप्यं च तेनैव यतइंद्रभयेति च। तिलान् व्याहृतिभिर्हुत्वा शतमष्टोत्तरं पृथक् ॥ भार्याशिशुसमोपेतं यजमानं विशेषतः। अभिषेकं प्रकुर्वीत सूक्तैर्वारुणसंज्ञितैः ॥ समुद्रज्येष्ठादिभिर्मंत्रैरिमं मे वरुणस्तथा। द्यौः शांतेत्यादिभिर्मंत्रैरभिषेकं समाचरेत् ॥ अभिषेकनिवृत्तौ तु यजमानः समाहितः। शुक्लांबराणि धृत्वा च कुर्यादाज्यावलोकनम् ॥ रूपंरूपेति मंत्रेण चित्रं तच्चक्षुरेव च। देवतापुरतः स्थित्वा धूपदीपनिवेदनम् ॥ दद्यादाचमनं सम्यक् तांबूलाद्यं तथैव च। नमस्ते सुरनाथाय नमस्तुभ्यं शचीपते ॥ गृहाणार्घ्यं मया दत्तं गंडदोषप्रशांतये। कार्यं तत्पूजकादीनां कारितं यत्फलं शुभम् ॥ लब्ध्वा तु तत्फलं सर्वं देवेंद्राय समर्पयेत्। आचार्याय च गां दद्यात्सुशीलां च पयस्विनीम् ॥ रक्तवर्णां वत्सयुतां सर्वालंकारभूषिताम्। वस्त्रयुग्मपिधानां च यथाविभवसारतः ॥ यक्षगंधर्वसिद्धैश्च पूजितोऽसि शचीपते। दानेनानेन देवेश गंडदोषं विनाशय ॥ अष्टोत्तरशतं संख्यां कुर्याद्ब्राह्मणभोजनम्। तेभ्योऽपि दक्षिणां दत्त्वा प्रणिपत्य क्षमापयेत् ॥ ज्येष्ठाशांतिमिमां कृत्वा यथाविध्युक्तमार्गतः। गंडदोषं विनिर्जित्य आयुष्मान् जायते नरः ॥ इत्युक्तं वृद्धगार्ग्येण शौनकाय विशेषतः। ज्येष्ठानक्षत्रसंभूतगंडदोषप्रशांतये ॥ अज्ञानाद्वाऽथवा ज्ञानाद्वैकल्याद्वा भवत्य

च । यन्न्यूनमतिरिक्तं च तत्सर्वं क्षंतुमर्हसि ॥' इति श्रीवृद्धगार्ग्यसंहितायां ज्येष्ठानक्षत्रप्रसूतिशांतिः ॥

अथ शूलयोगस्य महागणितसाध्ययोर्वैधृतिव्यतीपाताख्ययोः पातयोश्च परिघव्याघातगंडावमानां च भद्रायाश्च वज्रस्य यमघंटस्य मृत्युयोगदग्धयोगयोश्च शांतिविधिरभिधीयते—'अथातः संप्रवक्ष्यामि जन्मकाले विशेषतः । गंडांतानां च नामानि महादोषकराणि च ॥ दिनक्षये व्यतीपाते व्याघाते विष्टिवैधृतौ । शूले गंडे च परिघे वज्रे च यमघंटके ॥ कालगंडे मृत्युयोगे दग्धयोगे सुदारुणे । तस्मिन्गंडदिने प्राप्ते प्रसूतिर्यदि जायते ॥ अतिदोषकरी प्रोक्ता तत्र पापयुते सति । विचार्य तत्र दैवज्ञान् शांतिं कुर्याद्यथाविधि ॥ यजनं देवतानां च ग्रहाणां चैव पूजनम् ॥ दीपं शिवालये भक्त्या घृतेन परिदापयेत् ॥ अभिषेकं शंकराय अश्वत्थस्य प्रदक्षिणम् । आयुर्वृद्धिकरं जाप्यं सर्वारिष्टविनाशनम् ॥ गुरुदैवतविप्राणां पूजनं गोत्रवर्धनम् । पुष्टयायुस्तुष्टिशांत्यर्थमभीष्टफलसिद्धये ॥ सर्वारिष्टपरीहारार्थाय यज्ञं समाचरेत् । शिवाय विधिवद्भक्त्या दीपदानं करोति यः ॥ अखंडं गोघृतेनैव स वै मृत्युं जयेन्नरः । विष्णुमूर्तिं महापुण्यमश्वत्थं श्रीकरं सदा । प्रदक्षिणं नरो भक्त्या कृत्वा मृत्युंजयं जपेत् । सर्वसंपत्समृद्ध्यर्थं नित्यं कल्याणवृद्धये ॥ अभीष्टफलसिद्ध्यर्थं कुर्याद्ब्राह्मणभोजनम् । अभिषेकं शिवे शांतिं कृत्वा भक्त्या नरोत्तमः ॥ अकालमृत्युं निर्जित्य दीर्घायुर्जायते नरः । गाणपत्यं पुरुषसूक्तं सौरं मृत्युंजयं शुभम् ॥ शांतिजाप्यं पुनश्चैव कृत्वा मृत्युंजयी भवेत् । मूले वा सार्पगंडे वा कुर्यादेतानि यत्नतः । आयुर्वृद्धिकरार्थाय गंडदोषप्रशांतये ॥' इति श्रीउत्तरगार्ग्यप्रोक्तशूलादिदुष्टयोगशांतिविधिः ॥

अथ सूर्यसंक्रांतिव्यतीपातवैधृतियोगानां शांतिरभिधीयते—'अथातः संप्रवक्ष्यामि जन्मकाले विशेषतः । वैधृतौ च व्यतीपाते महादोषोऽभिजायते ॥ कुमारजन्मकाले तु व्यतीपातश्च वैधृतिः । संक्रांतिश्च रवेस्तत्र जातो दारिद्र्यकारकः ॥ दरिद्राणां महद्दुःखं व्याधिपीडा महद्भयम् । अप्रियं मृत्युमाप्नोति नात्र कार्या विचारणा ॥ स्त्रीणां च शोको दुःखं च सर्वनाशकरं भवेत् । शांतिर्वा पुष्कला चेत्स्यात्तत्र दोषो न कश्चन ॥ गोमुखप्रसवं कुर्याच्छांतिं कुर्यात्प्रयत्नतः । जपाभिषेकदानैश्च होमादपि विशेषतः ॥ नवग्रहमुखं कुर्यात्तस्य दोषोपशांतये । प्रथमं गोमुखाज्जन्म ततः शांतिं समाचरेत् ॥ गृहस्य पूर्वदिग्भागे गोमयेनानुलिप्य च । स्वलंकृतप्रदेशे तु व्रीहिराशिं प्रकल्पयेत् ॥ पंचद्रोणमितं धान्यं तदर्धं तंडुलेन च । तदर्धं तु तिलैः कुर्यादन्योन्योपरि कल्पयेत् ॥ द्रव्यत्रितयराशौ तु अष्टपत्रं लिखेद्बुधः । पुण्याहं वाचयित्वा तु आचार्यं वृणुयात्पुरा ॥ आचारवंतं धर्मज्ञं कुलिनं च कुटुंबिनम् । मंत्रतत्त्वार्थतत्त्वज्ञं शांतिकर्मणि कोविदम् ॥ पंचांगं भूषणं दद्यात्पट्टवस्त्रांगुलीयकम् । राशौ प्रतिष्ठितं कुंभमव्रणं सुमनोहरम् ॥ तीर्थोदकेन संपूर्य सप्तदीपधिपल्लवम् । पंचगव्यं पंचरत्नं वस्त्रयुग्मेन वेष्टयेत् ॥ तस्योपरि न्यसेत्पात्रं सूक्ष्मवस्त्रेण संयुतम् । प्रतिमां स्थापयेद्धीमान्साधिप्रत्यधिदेवताम् ॥

चंद्रादित्याकृती पार्श्वे मध्ये वैधृतिमर्चयेत् । एवमेव व्यतीपातशांतौ संक्रमणस्य च ॥ भानोरुत्तरतो रुद्रमग्निं दक्षिणतो यजेत् । निष्कमात्रेण चार्धेन पादेनापि स्वशक्तितः ॥ प्रतिमाः कारयेद्धीमांस्तत्तल्लक्षणलक्षिताः । प्रतिमापूजनार्थाय वस्त्रयुग्मं निवेदयेत् । अधिदैवं भवेत्सूर्यश्चंद्रः प्रत्यधिदैवतम् । तत्तद्व्याहृतिपूर्वेण तत्तन्मंत्रेण पूजयेत् ॥ त्रैयंबकेन मंत्रेण प्रधानप्रतिमां यजेत् । उत्सूर्य इति मंत्रेण सूर्यपूजां समाचरेत् ॥ आप्यायस्वेति मंत्रेण सोमपूजां समाचरेत् । उपचारैः षोडशभिर्यद्वा पंचोपचारकैः ॥ अर्चितं गंधपुष्पाद्यैर्गुडनैवेद्यमर्पयेत् । मृत्युंजयेन मंत्रेण प्रधानप्रतिमां स्पृशन् ॥ अष्टोत्तरसहस्रं वा अष्टोत्तरशतं तु वा । अष्टाविंशति वा चाथ प्रजप्याथ स्वशक्तितः । सर्वसौरं प्रजप्याथ सोमार्थं सोममंत्रतः । आनोभद्रेतिसूक्तं च भद्राअग्नेश्च सूक्तकम् ॥ जपेच्च पौरुषं सूक्तं त्रैयंबकमतः परम् । कुंभं स्पृष्ट्वा चतुर्दिक्षु जपं कुर्युस्त्वथर्त्विजः ॥ कुंभस्य पश्चिमे देशे स्थंडिलेऽग्निं प्रकल्पयेत् । स्वगृह्योक्तविधानेन कारयेत्संस्कृतानलम् ॥ त्रैयंबकेण मंत्रेण समिदाज्यचरून्हुनेत् । अष्टोत्तरसहस्रं वा अष्टोत्तरशतं तु वा ॥ अष्टाविंशति वा कुर्यात्स्वस्वशक्त्यनुसारतः । मृत्युंजयेन मंत्रेण तिलहोमं समाचरेत् । ततः स्विष्टकृतं हुत्वा अभिषेकं च कारयेत् । समुद्रज्येष्ठाःसूक्तेन आपोहिष्ठात्वृचेन च ॥ मक्षीभ्यामिति सूक्तेन पावमानीभिरेव च । त्रैयंबकेण उत्सूर्य आप्यायस्वेति मंत्रतः ॥ सुरास्त्वामिति मंत्रेण अभिषेकं समाचरेत् । अभिषेकाप्लुतं वस्त्रमाचार्याय प्रदापयेत् ॥ श्वेतवस्त्रधरो भूत्वा भूषणाद्यैरलंकृतः । यजमानः स्त्रिया युक्त आज्यावेक्षणमाचरेत् ॥ आचार्यं पूजयेत्पश्चाद्वस्त्रहेमांगुलीयकैः । गोदानं वस्त्रदानं च स्वर्णदानं विशेषतः ॥ ग्रहोपशमनार्थाय आचार्याय प्रदापयेत् । प्रच्छादनपटं दद्यात्ततः शांतिर्भविष्यति ॥ जापकेभ्यो ब्राह्मणेभ्यो दक्षिणाभिश्च तोषयेत् । दीनांधकृपणेभ्यश्च प्रदद्याद्भूरिदक्षिणाः ॥ ब्राह्मणान् शतसंख्याकाग्मिष्टान्नैर्भोजयेच्च तान् । बंधुभिः सह भुंजीत यथाविभवसारतः । एवं यः कुरुते मर्त्यो नैव दुःखमवाप्नुयात् ॥ आयुरारोग्यमैश्वर्यं मातापित्रोः शिशोरपि ॥ सर्वदुःखनिवृत्त्यर्थं पुत्रपौत्रप्रवर्धनम् । सर्वान्कामानवाप्नोति शांतिं कुर्वन् हि मानवः ॥' इति श्रीउत्तरगार्ग्योक्तव्यतीपातवैधृतिसंक्रांतिशांतिविधिः ॥

अथ कुहूसिनीवालीदर्शशांतिरुच्यते । तत्रेयमुपपत्तिः-यद्विविधो दर्शः कुहूरूपः सिनीवालीरूप उभयलक्षणव्यतिरिक्तश्चेति । यतो द्विविधामावास्या । 'अमावास्या त्वमावस्या दर्शः सूर्येंदुसंगमः । स्याद्दृष्टेंदुः सिनीवाली सा नष्टेंदुकला कुहूः ॥' इत्यमरोक्तेः । 'निशि चंद्रवती सा तु पूर्णिमानुमतिश्च सा । दिवा चंद्रवती राका तद्वदेव द्विधाप्यमा । सिनीवाली चंद्रवती नष्टचंद्रा कुहूर्मता' इति कश्यपोक्तेश्चामावास्याया द्विविधत्वमेवावसीयते । युक्तं चैतत्, दृष्टचंद्रात्वं नष्टचंद्रात्वं वाऽमावास्यायाः संभवति न पुनरुभयाभावेन तृतीयाऽमावास्येति । नन्विदमप्ययुक्तं, यतो रवेर्द्वादशांशविप्रकर्षे चंद्रदर्शनं कालांशवशेनोक्तम् । तदाह भास्करः-'दलेंदवः शैलभुवश्च शक्रा रुद्राः खचंद्रा-

स्तिथयः क्रमेण । चंद्रादितः काललवा निरुक्ता ज्ञशुक्रयोर्वक्रगतौ द्विहीनाः ॥' इति । द्वादशांशमितेन चांतरेणामावास्यालक्षणस्य तिथेर्निष्पत्तिः । उक्तं च सूर्यसिद्धांते–'अर्काद्विनिःसृतः प्राचीं यद्यात्यहरहः शशी । तच्चांद्रमानमंशैस्तु ज्ञेयो द्वादशभिस्तिथिः ॥' इति । एवं च कथं दृष्टचंद्रा सिनीवालीत्युक्तं, कथं च नष्टचंद्रा कुहूरिति, कथं चानयोर्भेद इति विनाप्रयोजनं चैकस्य वस्तुनोऽनेकसंज्ञाकरणं न युक्तमिति चेत् । उच्यते–'नहि कालांशवशेन ग्रहाणामस्तोदयौ, किं तर्हि क्षेत्रांशवशेन । तदुक्तं सूर्यसिद्धांते–'अष्टादशशताभ्यस्ता दृश्यांशाः स्वोदयांशुभिः । विभज्य लब्धं क्षेत्रांशास्तैर्दृश्यादृश्यता मता ॥' इति । तथा च–'सूर्यास्तकालिकौ पश्चात्प्राच्यामुदयकालिकौ । दिवाकरग्रहौ कुर्याद्दृक्कर्माथ ग्रहस्य तु ॥' इत्यादिना प्रकारेण द्विविधदृक्कर्मसंस्कारसंस्कृतात्तच्चंद्रादेः राश्युदयवैषम्येण देशभेदेन चाऽनियतत्वात्कदाचिदमावास्यायामपि सार्धैर्दशभिरंशैरंतरितश्चंद्रो दर्शनगोचरो भवति । कदाचित्षोडशांशांतरितो द्वितीयायामपि चंद्रो दृग्गोचरो न भवति । एवमेव कदाचिच्चतुर्दशीशेषे च न दृश्यते । कदाचिदल्पावशिष्टायां प्रतिपद्यपि दृश्यते । अत एव गर्गेण प्रतिपदुदितस्य चंद्रस्य फलविशेषोऽभिहितः । तथा च गर्गसंहितायाम्–'यदा चंद्रः प्रतिपदि नौस्थाय संप्रदृश्यते । उत्तरोन्नतशृंगः स्यात्स्निग्धश्चातिमनोहरः । क्षेमं सुभिक्षमारोग्यं सर्वभूतेषु निर्दिशेत् ॥' इति । अतएव भारविणापि–'प्रणमन्त्यनपायमुत्थितं प्रतिपच्चंद्रमिव प्रजा नृपम्' इति किरातार्जुनीये प्रयुक्तम् । अत्रैतस्य टीकाकाराः प्रतिपच्छब्देन प्रतिपत्सहचरिता द्वितीया गृह्यते । प्रतिपदि चंद्रदर्शनाभावादिति व्याचख्युस्ते चिंत्योक्तयो ध्येयाः । ननु प्रतिपदि चंद्रोदय उत्पातस्तद्दर्शनमशुभफलमिति चेन्न । गणितविसंवादिबुधादिदर्शनं गणितज्ञानाशक्यमेव, केत्वादिदर्शनं चोत्पात इति तल्लक्षणं प्रागुक्तं मया । चंद्रोदयस्तु कदापि गणितं न व्यभिचरति इति प्रत्यक्षदर्शनात् प्रतिपदुदितचंद्रस्य गर्गेण प्रशस्तफलाभिधानाच्च । नत्सुत्पातानां समीचीनं फलं कुत्राप्युक्तं स्वर्नुजानुत्पातान्विहाय वचनात । येन प्रतिपदि चंद्रोदय उत्पात इत्युच्यते तेन चतुर्दशीशेषे प्रातश्चंद्रोदयाभावे सुत्पातो वाच्य इति । तच्चायुक्तं उक्तादेव हेतोः । तस्मात् क्षेत्रांशवशेनैव ग्रहाणामस्तोदयौ भवतः । कालांशोक्तिस्तु क्षेत्रांशनिदानभूतत्वात्सामान्यत उदयास्तज्ञानसिद्ध्यै च । तदेतत्पितृचरणैस्तोडरानंदे चंद्रचारविलासे सम्यक् प्रतिपादितं । तस्माद्दृक्कर्मसंस्कारवशेन चतुर्दशीशेषे प्रातश्चंद्रोदये दृश्यते न दृश्यते च । एवं प्रातरमावास्यायामपि चंद्रोदयो न दृश्यते दृश्यते च । तस्मात्सुष्ठूक्तम्–'स्याद्दृष्टेंदुः सिनीवाली सा नष्टेंदुकला कुहूः' इति । 'तद्वदेव द्विधा ह्यमा । सिनीवाली चंद्रवती नष्टचंद्रा कुहूर्मता ।' इति कश्यपोऽपि द्विधैवामावास्येत्याह स्म । तस्मादिदं युक्तमेव । यद्यमावास्यायां चंद्रो दृश्यते तदामावास्या सिनीवाली, यदा चंद्रोऽमावास्यायां न दृश्यते तदा कुहूरिति । परंत्विदमयुक्तम् । यदुभयराहित्येनामावास्यांतरमप्यस्तीति । असंभवात् । अत्र समाधिं वैदिकास्तावदाहुः–यस्याः कस्या-

श्चिदमावास्याया अष्टौ विभागान् कृत्वा प्रथमविभागे चंद्रदर्शनमस्ति नवेति । यदा चंद्रदर्शनं तदा सिनीवाली, यदा चंद्रदर्शनं तदामावास्या, सकलचंद्रक्षये कुहूरिति । तदेतदुक्तं छंदोगपरिशिष्टे 'इंदुक्षयकालः श्राद्धकाल' इति प्रस्तुत्येंदुक्षयकालपरिमाणमुक्तम्—'अष्टमेंऽशे चतुर्दश्याः क्षीणो भवति चंद्रमाः । अमावास्याष्टमे भागे पुनः किल भवेदणुः ॥ आग्रहायण्यमावास्या तथा ज्येष्ठस्य या भवेत् । विशेषमाभ्यां ब्रुवते चंद्रचारविदो जनाः ॥ अत्रेंदुराद्ये प्रहरेऽवतिष्ठते चतुर्थभागोनकलावशिष्टः । तदंत एव क्षयमेति कृत्स्न एवं ज्योतिश्चक्रविदो वदंति ॥' इति । आभ्यामिति ल्यब्लोपे पंचमी । एते अमावास्ये प्रकृत्येत्यर्थः । एतत्कारिकात्रयं तद्भाष्यकारेण व्याख्यातम्—'प्रहरनवात्मकश्चंद्रक्षयकालः' इति । तत्रामायाः सप्तमाष्टमयामौ कृत्स्नक्षयकालः चतुर्दशीशेषयामदर्शादियामौ चंद्रसूक्ष्मताकाल इति । पुनः किलशब्दाभ्यामयमर्थो द्योत्यते । चतुर्दश्यां क्षैण्यं सूक्ष्मं अमांत्यभागे कृत्स्नक्षयकाल इति । अमावास्याविशेषे ज्येष्ठादावमाद्ययामे चंद्रो दृश्यत इत्यर्थः । ज्योतिश्चक्रविद इत्यस्यार्थः पितृचरणैरभिहितः । देशकालगणनाकुशला यथा गणयंति तदेवांगीकार्यमिति सूच्यते । ततश्च ज्येष्ठादिकालभिन्नकालेऽप्येवंविधोपलंभः ज्येष्ठादौ च नोपलंभो देशकालभेदेन संभवतीति । तदयमत्र विषयविवेकः—यस्याममावास्यायां प्रथमे प्रहरे शास्त्रात्प्रत्यक्षतो वा चंद्रदर्शनं स्यात्सा सिनीवाली सर्ववादिसिद्धा । तत्रोत्पन्नस्य सिनीवालीजननफलमादेश्यं सिनीवालीप्रयुक्ता शांतिश्च विधेया । अथ तस्यामेवामावास्यायां यदा नष्टेंदुकलात्वं स्यात्तदा कुहूरिति । तत्रैकस्याश्चंद्रकलायाः किंचिन्नाशो वाखिलनाशो वेति संदेहे विनिगमनाविरहात्कृत्स्नकलाक्षय एव विवक्षितो मुख्यत्वात् । यत्किंचिन्नाशस्त्वपर्नीयमानत्वाद्गौणः 'गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः' इति न्यायान्मुख्यस्यैव ग्रहणं युक्तं । स च कृत्स्नक्षयकालोऽमावास्यांतिमक्षण एव । तस्य चातिसूक्ष्मत्वात्पुण्यत्वात्संक्रांतिकालवदित्यमावास्यायाः सप्तमाष्टमप्रहरयोः कृत्स्नक्षयकालस्य भाष्यकारेण परिभाषितत्वात्सप्तमाष्टमप्रहरात्मकः कालः कुहूशब्दवाच्यः । तत्रोत्पन्नस्य कुहूजननफलं तच्छांतिश्चादेश्या । पुनस्तस्यामेवामावास्यायां प्रथमप्रहरादनंतरं सप्तमप्रहरादर्वाक् प्रहरपंचकात्मकः कालो दर्शशब्दवाच्यः । इति तत्रोत्पन्नस्य दर्शजननफलं तच्छांतिश्चादेश्या । एवमेकस्यामेवामावास्यायां कालभेदेन त्रयं संभवति । यदा त्वमावास्यायां चंद्रदर्शनाऽभावः तदा द्वयमेव दर्शत्वकुहूत्वरूपं संभवति । अत्र केचित्सिनीवाल्यां विशेषमाहुः—चतुर्दशीशेषे सूर्योदयात्प्राक् चंद्रदर्शने जाते सति परदिने याऽमावास्या सा सिनीवाली । तथा च जगन्मोहने बौधायन इत्युक्त्वा पठितम्—'मध्याह्नसमयं यावच्चतुर्दश्यनुवर्तते । सिनीवालीति सा ज्ञेया पितृकर्मणि शस्यते ॥' इति । धर्मशास्त्रेऽप्येतादृशानि भूयांसि वचनानि संति, तेषामिदं श्राद्धकालनिर्णयोपयोगि पारिभाषिकं सिनीवालीत्वं न पुनर्जननादौ । कुतः ? निरुक्तिविरोधात् । तथा हि—'दृष्टेंदुः सिनीवाली' इत्यादिवाक्येषु दृष्टश्चंद्रो यस्यां सा सिनीवालीति बहुव्रीहिः । स च 'अनेकमन्यपदार्थे' इति विहित-

त्वत्रान्यपदार्थतयोपस्थिताऽमावास्यैव गृह्यते प्रकरणात् । न चैवं सति चतुर्दश्यां चंद्रोदये सिनीवालीत्वं स्यात् । दृष्टचंद्रा सिनीवालीत्येतावतैव लक्षणेन सर्वासामपि दृष्टेंदुत्वात्सिनीवालीत्वे तच्छांतिकोक्तिरनर्थिका स्यात् । ननु च दृष्टश्चंद्रो यस्यामित्यन्यपदार्थे सप्तमी सामीप्यपरेति व्याख्यायते इति चेन्न । तस्याः सामीप्यसप्तम्या गौणाधारपरत्वात् मुख्यासंभवे हि गौणग्रहणं युक्तम् । अत्र तु मुख्य एवाधारः संभवत्यमावास्यारूप इति गृह्यते । 'गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः' इति न्यायात् । ननु दृष्टश्चंद्रो यस्या इति षष्ठ्यंतेऽन्यपदार्थे बहुव्रीहौ संबंधमात्रं मुख्य एव षष्ठ्यर्थ इति सामीप्यसंबंधवाचिषष्ठ्यंतेऽन्यपदार्थे बहुव्रीहिरयं भविष्यतीति चेत् । सामीप्यादिसंबंधे मत्वर्थीयः प्रत्ययो बहुव्रीहिर्वा न कैरपि वैयाकरणैरिष्यते । तदेतत् 'तदस्यास्त्यस्मिन्निति मतुप्' इत्यत्र महाभाष्यकारेण प्रत्यपादि । ननु च येष्वपि—'कुहूः सिनीवाल्यपि नष्टदृष्टे चंद्रे स्मृते चासितपंचदश्यौ' इत्यादिवाक्येषु बहुव्रीहिनिर्देशो मतुन्निर्देशो वा नास्ति, तत्र कृष्णचतुर्दश्यामपि चंद्रोदयस्य दृष्टत्वादमावास्यायाः सिनीवालीति संज्ञा स्यादिति चेन्न । संभवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वात् चंद्रोदयसमानाधिकरणामावास्याग्रहणस्यैव युक्तत्वात् । किंच सिनीपदेन श्वेतचंद्रकलोच्यते । सितशब्दः श्वेतवर्णवाची तस्मात्स्त्रियाम् । 'वर्णादनुदात्तात्तोपधात्तोनः' इति ङीप्नकारौ । सिनी तां वलते प्राप्नोतीति सिनीवालीति व्युत्पत्तिश्चतुर्दश्युदितचंद्राश्रयायाममावास्यायां न युज्यते 'कृत्तद्धितसमासानामभिधानं नियामकम्' इति भाष्यकारस्मरणादिति । तस्माद्दृष्टेंदुः सिनीवालीत्यमावास्यैवाभिधीयते इति यत्प्रागुक्तं तदेव ज्यायः । एवमेकस्यामेवामावास्यायां सिनीवाली-कुहू-दर्शरूपं भेदत्रयं युक्तम् । अथ सिद्धांतविदोऽन्यथा समादधुः । तत्र 'स्याद्दृष्टेंदुः सिनीवाली सा नष्टेंदुकला कुहूः' इत्यादिषु हि दर्शनशब्देन चाक्षुषं दर्शनं विवक्षितं, तच्चोदयास्ताधिकाररीत्या दर्शनयोग्यत्वे सति पूर्वक्षितिजक्रांतिवृत्तसंबंधवत्त्वं ग्रहादेर्दर्शनशब्दवाच्यम् । मेघाद्यावरणे हि शास्त्रीये दर्शने दर्शितत्वात् । 'आत्मा द्रष्टव्यः' इत्यादिवत् । अत्रार्थे 'पश्यार्थैश्चानालोचने' इति पाणिनिरप्यनुकूलः । अतो भास्करेणाप्युक्तम्—'निजनिजोदयलग्नसमुद्गमे समुदयोऽपि भवेद्गनभःसदाम्' । इति । तयैव रीत्या दर्शनायोग्यत्वे पूर्वक्षितिजक्रांतिवृत्तसंबंधवत्त्वमदर्शनशब्दवाच्यम् । यत्तु-'भवति चास्तविलग्नसमुद्गमे प्रतिदिनेऽस्तमयः प्रवहभ्रमात्' इति भास्करेणोक्तम्, तद्गनभःसदां क्रांतिवृत्तपश्चिमक्षितिजसंनिधिवशेनास्तलक्षणमुक्तं ननु पूर्वक्षितिजे दर्शनाभाव-

---

१ अस्यार्थः–एवं सति ( प्रकरणादमावास्याया अन्यपदार्थत्वेन ग्रहणे ) चतुर्दश्यां चंद्रोदये ( जाते रात्रौ अमावास्यायाः ) सिनीवालीत्वं ( केचित्सिनीवाल्यां इत्यादिना प्रागुक्तं ) न च स्यात् । ( नैव भवति ) किंच 'दृष्टचंद्रा ( अमावास्या ) सिनीवाली' एतावतैव लक्षणेन सर्वासामपि ( सर्वविधामावास्यानामपि ) दृष्टेंदुत्वात्सिनीवालीत्वे ( सिनीवालीसंज्ञायां प्राप्तायां सत्यां ) तच्छांतिकोक्तिः ( दर्शकुहूशांतिकविधानं ) अनर्थिका स्यात्, सर्वासामपि सिनीवालीत्वेन दर्शकुहूसंज्ञानामेवाभावात् । तस्मात्केचिन्मतोक्तं सिनीवालीत्वं जननादौ नोपयुज्यते इति ।

लक्षणमिति मयोक्तं दर्शनाभावलक्षणम् । अतो दर्शनलक्षणवत्यमावास्या सिनीवालीनाम । अदर्शनलक्षणवत्यमावास्या कुहूर्नाम । लक्षणद्वयानाक्रांता अमावास्या दर्शशब्दवाच्या इति । यदा खल्वमावास्या सूर्योदयात्प्राग्घटिकात्रयवती तदा दृक्कर्मसंस्कारवशेन चंद्रस्य दृश्यत्वमागतं चेत्तदा सा संपूर्णामावास्या सिनीवालीनाम । तादृश्याममायां द्वितीयसूर्योदयावधिकायामुत्पन्नस्यारिष्टशांतये सिनीवालीशांतिस्तत्फलं चादेश्यम् । अनिवृत्तौ वा तस्या अमावास्याया द्वितीयसूर्योदयानंतरमवशिष्टामावास्याघटीषूत्पन्नस्य कुहूशांतिरेव, चंद्रादर्शनलक्षणत्वात् । यदि सैवामावास्या सूर्योदयात्प्राग्घटिकात्रयं घटिकाचतुष्टयं वा प्रतिपत्संबद्धा तदा सिनीवाल्येव । अथ तादृश्यामेव न्यूनायां वाऽधिकायां वाऽमावास्यायां तु दृक्कर्मसंस्कारवशेन चंद्रस्यादृश्यत्वमागतं सामावास्या संपूर्णा कुहूर्नाम चंद्रादर्शनलक्षणसत्वादेव । तत्र कुहूजननफलं शांतिश्चादेश्या । यदा तु सूर्योदयानंतरं कियतीषु घटीष्वतिक्रांतास्वमावास्याप्रवृत्तिस्ततः पूर्वं च चतुर्दश्येवावस्थिता तस्यामुषसि दृक्कर्मवशातश्चंद्रो दृष्टो मा वा दर्शि तथाप्यमावास्यायां चन्द्रदर्शनादर्शनलक्षणानाक्रांतत्वात्सामावास्या संपूर्णा दर्शो नाम । तत्र दर्शजननफलं शांतिश्च विधेयेति । एवममावास्याभेदेन सिनीवालीकुहूदर्शरूपसंज्ञात्रयं सावकाशमित्यलमतिप्रसंगेन ॥ अथ सुगमप्रकारेण भेदत्रयं ब्रूमः ॥ तत्र सिनीवाली सर्वशास्त्रप्रसिद्धा सैव । कुहूस्तु प्रकारांतरेण पारिभाषिकी । यदाह वसिष्ठः—‘नक्षत्रे यस्य दर्शांतो विषनाड्यां भवेद्यदि । कुहूयोग इति ख्यातो व्याधिमृत्युभयादिकृत् ॥’ इति । अयमर्थः—यस्मिन्नक्षत्रे या विषनाड्युक्तास्मिन्काले यदि दर्शस्य समाप्तिर्दर्शांतरमनाडी भवेत् तन्नक्षत्रं यस्य पुरुषस्य जन्मर्क्षं जन्मकाले कालांतरे वा स्यात्तस्य पुंसो व्याधिमृत्युभयकृत्कुहूयोगो ध्येयः । तत्र कुहूजननफलं शांतिश्च स्यात् । कालांतरेऽपि कुहूयोगसंभवे शांतिर्विधेया । अत्र कुहूयोगे विशेषमाह स एव—‘कुहूः स्याद्यदि जन्मांशे षण्मासान्मृत्युमाप्नुयात् । जन्मलग्नेऽथ जन्मांशे मृत्युर्मासत्रयाद्भवेत् ॥’ इति । पूर्वोक्तकुहूयोगकाले यदि जन्मनवांशे चंद्रस्तदा षण्मासमध्ये मृत्युः । यदि जन्मलग्नं तस्मिन्काले जन्मांशगश्चंद्रश्चेत्युभयसंभवे मासत्रयेण मृतिरिति भावः । अत एवोक्तं जगन्मोहने वसिष्ठेन—‘यस्य जन्मर्क्षगश्चंद्रो विषनाड्यां कुहूर्भवेत् । अभिचारेण किं तस्य स्वयमेव मरिष्यति ॥’ इति । अतो विषघटिकातः पूर्वकालो दर्शशब्दवाच्य इति । एवमस्माभिः प्रकारत्रयेण सिनीवाली-कुहू-दर्शानां भेद उपपादितस्तत्र यथासंप्रदायं व्यवस्थेत्यलमतिप्रसंगेन ।

ज्योतिःशास्त्रमहोदन्वदवगाहनिविष्टधीः ।
नीलकंठांशगोविंदहनूमान्केन वार्यताम् ॥

अथ प्राक् प्रतिज्ञाता सिनीवालीकुहूशांतिस्तावदुच्यते ॥ ‘सिनीवाल्यां प्रसूता स्याद्यस्य भार्या पशुस्तथा । गवाश्वं महिषी चैव शक्रस्यापि श्रियं हरेत् ॥ ये च संति द्विजाश्चान्ये स्वप्रसादोपजीविनः । वर्जयेत्तानशेषांस्तु पशुपक्षिमृगादिकान् ॥’ द्विजाः=पक्षिणः । ‘कुहूप्रसूतिरत्यर्थं सर्वदोषकरी

नृणाम्। यस्य प्रसूतिरत्र स्यात्तस्यायुर्धननाशनम् ॥ सर्वगंडसमस्तत्र दोषस्तु प्रबलो भवेत् । नारीं विनाऽवशेषाणां परित्यागो विधीयते ॥' गोमहिष्यादीनां सिनीवालीकुहूप्रसवे तासां त्यागो ननु नारीणामिति भावः। 'परित्यागात्तत्र शांतिं कुर्याद्धीमान्विचक्षणः। तत्फलं तत्क्षणार्धेन पुनरेव विलीयते ॥ न त्यजेत्पंडितो मोहादर्थादज्ञानतोऽपि वा। तद्योगं नाशयेदाशु स्वयं वा नाशमृच्छति ॥ कल्पोक्तशांतिः कर्तव्या शीघ्रं दोषापनुत्तये ॥ रुद्रः शक्रश्च पितरः पूज्याः स्युर्देवताः क्रमात्। कर्षमात्रसुवर्णेन तदर्धार्धेन वा पुनः ॥ अथवा शक्तितः कुर्याद्वित्तशाठ्यविवर्जितः । प्रतिमां कारयेच्छंभोश्चतुर्भुजसमन्विताम् ॥ त्रिशूलखड्गवरदाभयहस्तां यथाक्रमात् । श्वेतवर्णां श्वेतपुष्पां श्वेतांबरवृषस्थिताम् ॥ त्र्यंबकेण मंत्रेण पूजां कुर्याद्यथाविधि। इंद्रश्चतुर्भुजो वज्रांकुशचापमसायकः॥ रक्तवर्णो गजारूढो यतइंद्रेति मंत्रतः। पितरः कृष्णवर्णाश्च चतुर्हस्ता विमानगाः ॥ यष्ट्यक्षसूत्रकमंडल्वभयानां च धारिणः। ये सत्या इति मंत्रेण पूजां कुर्यादनंतरम् ॥ आग्नेयीं दिशमारभ्य कुंभान्कोणेषु विन्यसेत्। तन्मध्ये स्थापयेत्कुंभं शतच्छिद्रसमन्वितम्॥ तेष्वेव पंचगव्यादींस्तत्तन्मंत्रैश्च निक्षिपेत् । कल्पोक्तशांतिः कर्तव्या कुर्याच्छीघ्रं प्रयत्नतः ॥ गोदानं वस्त्रदानं च सुवर्णं चौर्णकं शुभम्। दशदानानि चोक्तानि क्षीरमाज्यं गुडं तथा॥ आज्यावेक्षणमेतानि तत्तन्मंत्रैश्च कारयेत्। समिदाज्यचरोर्होमं तिलमाषैश्च सर्षपैः ॥ अश्वत्थप्लक्षपालाशसमिद्भिः खादिरैः शुभैः। अष्टोत्तरशतं मुख्यं प्रत्येकं जुहुयाद्द्विजः॥ त्र्यंबकेण मंत्रेण तिलान्व्याहृतिभिः पुनः। चतुर्भिः कलशैर्युक्तं बृहत्कुंभसमन्वितम् ॥ शांतिवत्कलशे कार्यमभिषेकं च कारयेत्। पितृमातृशिशूनां च अभिषिंचेत्तु वारुणैः ॥ शंकरस्याभिषेकं च कुर्याद्ब्राह्मणभोजनम् ॥ अन्येषां चैव सर्वेषां ब्राह्मणानां च तर्पणम् ॥ यथाशक्त्यनुसारेण द्विजवाचनकं तथा॥' इत्युत्तरगार्ग्योक्तसिनीवालीकुहूशांतिविधिः॥

अथ दर्शशांतिविधिरुच्यते–'अथातो दर्शजातानां मातापित्रोर्दरिद्रता। तद्दोषपरिहारार्थं शान्तिं वक्ष्यामि नारदः ॥ पुण्याहं वाचयित्वादौ क्रतुसंकल्पपूर्वकम् ॥ कुंडं वा मंडलं कुर्यात्तद्देशे स्थापयेद्घटम् ॥ तत्कुंभे निक्षिपेद्द्रव्यं दधिक्षीरघृतादिकम्। न्यग्रोधोदुंबराश्वत्थाः सचूतनिंबकास्तथा ॥ एतेषां वृक्षमूलानां त्वगादीन्पल्लवांस्तथा । पंचरत्नानि निक्षिप्य वस्त्रयुग्मेन वेष्टयेत् ॥ सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः । आयांतु यजमानस्य दुरितक्षयकारकाः ॥ आपोहिष्ठातृचेनाथ कयानश्चित्र इत्यृचा । यत्किंचेदमृचा चैव समुद्रज्येष्ठ इत्यृचा ॥ अभिमंत्र्योदकं पश्चादग्नेः पूर्वप्रदेशके।' उदकमभिमंत्र्य पश्चाद्दर्शदेवताः स्थापयेदित्यर्थः । मंडलं कुर्यादिति यदुक्तम्। 'हारिद्रं रक्तकं चैव कृष्णं श्वेतं च नीलकम् । एतेषां तंदुलैश्चैव सर्वतोभद्रमुद्धरेत् ॥ दर्शस्य देवतायाश्च सोमसूर्यस्वरूपकाः । प्रतिमाः स्वर्णजा नित्यं राजतीं ताम्रजां तथा ॥ सर्वतोभद्रमध्ये च स्थापयेद्दर्शदेवताम्। दर्शदेवतारूपसोमसूर्यस्वरूपप्रतिमाः स्थापयेदित्यभेदेनान्वयः। कुहूमपि तत्रापीदम् 'मद्यवर्णं वस्त्रयुग्मं तद्वर्णं गंधपुष्पकम् ॥ आप्यायस्वेति मंत्रेण सवितापश्चात्तमेव च। उपचारैः समाराध्य ततो होमं समाचरेत् ॥

कृत्वा वह्निं प्रतिष्ठाप्य कुर्यात्संकल्पमीदृशम् । आयुरारोग्यसिद्ध्यर्थं सर्वारिष्टप्रशांतये ॥ पुत्रस्य दर्शजननदोषनिर्हरणाय च । मातापित्रोः कुमारस्य सर्वारिष्टप्रशांतये ॥ तेषामायुः श्रियं चैव शांतिहोमं करोम्यहम् । समिधश्च चरुद्रव्यं क्रमेण जुहुयाद्बुधी ॥ हुनेत्सवितृमंत्रेण सोमोधेनुं च मंत्रतः । एतैर्मंत्रैश्च प्रत्येकं हुनेदष्टोत्तरं शतम् ॥ दर्शस्य देवताहोममष्टाविंशतिसंख्यया । होममेवं तु कृत्वाथ विध्याचाराभिषेचनम् ॥ श्रीसूक्तमायुष्यसूक्तं समुद्रज्येष्ठऋचा ॥ एतैर्मंत्रैरभिषेकं मातापित्रोः शिशोस्तथा । ततः स्विष्टकृदादि स्याद्धोमशेषं समापयेत् । हिरण्यं रजतं चैव कृष्णधेनुश्च दक्षिणा ॥ अन्येभ्योऽपि यथाशक्ति दातव्या दक्षिणा तथा । ब्राह्मणान्भोजयेत्तत्र कारयेत्स्वस्तिवाचनम् ॥' इति श्रीनारदोक्तो दर्शशांतिविधिः ॥

अथ कृष्णचतुर्दशीशांतिविधिरुच्यते—'मंदरस्थं सुखासीनं गर्गं मुनिवरं शुभम् । नमस्कृत्वाथ पप्रच्छ शौनको मुनिपुंगवः ॥ शांतिकर्माणि सर्वाणि त्वत्तो जानाम्यहं पुरा । अधुना श्रोतुमिच्छामि कृष्णपक्षचतुर्दशीम् । दिवा वा यदि वा रात्रौ प्रसूतेः किं फलं वद ॥ गर्ग उवाच—कृष्णपक्षे चतुर्दश्यां प्रसूतेः षड्विधं फलम् । चतुर्दशीं च षड्भागां कुर्यादादौ शुभं स्मृतम् ॥ द्वितीये पितरं हंति तृतीये मातरं तथा । चतुर्थे मातुलं हंति पंचमे वंशनाशनम् । षष्ठे तु धनहानिः स्यादात्मनो वंशनाशनम् । तस्मात्सर्वप्रयत्नेन शांतिं कुर्याद्विधानतः ॥ आचार्यं वरयेद्धीमान् पुत्रदारसमन्वितम् । स्वकर्मनिरतं शांतं श्रोत्रियं वेदपारगम् ॥ सर्वालंकारसंयुक्तं सर्वलक्षणसंयुतम् । ब्राह्मणानृत्विजश्चैव स्वस्तिवाचनपूर्वकम् ॥ रुद्रोऽधिदेवता तस्याः कर्षमात्रसुवर्णतः । तदर्धेन च वा कुर्याद्वित्तशाठ्यविवर्जितः ॥ प्रतिमां कारयेच्छंभोः सर्वलक्षणसंयुताम् । वृषभे च समासीनं वरदाभयपाणिकम् ॥ शुद्धस्फटिकसंकाशं श्वेतमाल्यांबरान्वितम् । त्र्यंबकेण मंत्रेण पूजां कुर्याद्विधानतः ॥ स्थापयेच्चतुरः कुंभांश्चतुर्दिक्षु यथाक्रमम् । पुण्यतीर्थजलोपेतान् धान्यस्योपरि विन्यसेत् ॥ तन्मध्ये स्थापयेत्कुंभं शतच्छिद्रसमन्वितम् । पंचमृत्पंचरत्नानि पंचत्वक्पंचपल्लवान् ॥ पंचधान्यं सुवर्णं च तत्तन्मंत्रैर्विनिक्षिपेत् ॥ शतौषधानि निक्षिप्य श्वेतवस्त्रैश्च वेष्टयेत् । सुरभीणि च पुष्पाणि श्वेतानि परिवेष्टयेत् । सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः । आयांतु यजमानस्य दुरितक्षयकारकाः ॥ आवाह्य वारुणैर्मंत्रैरनेन च विधानतः । इमं मे वरुणेत्यनया तत्त्वायामीत्यृचा तथा ॥ त्वं नो अग्ने इत्यनया स त्वं न इति मंत्रतः । आग्नेयकुंभमारभ्य पूजां कुर्याद्यथाक्रमम् । आनोभद्राख्यसूक्तेन भद्राअग्नेश्च सूक्तकम् । जप्त्वा पुरुषसूक्तं च कद्रुद्रं तु क्रमाज्जपेत् ॥ ईश्वरस्याभिषेकं च ग्रहपूजां च कारयेत् । पूजाकर्म सुनिर्वर्त्य होमं कुर्याद्विधानतः ॥ गेहस्येशानदिग्भागे कुंडं कुर्याद्विधानतः । विस्तारायामखातं च अरत्निद्वयसंयुतम् ॥ कुंडकंठं परित्यज्य समंताद्वंगुलिक्रमात् । मेखलोच्छ्रायविस्तारौ चतुस्त्र्यंगुलिक्रमात् ॥ पश्चिमे मध्यभागे तु योनिं कुर्याद्विधानतः । योनिं षडंगुलां तिर्यग्द्वादशांगुलदैर्घ्यकाम् ॥ अश्वत्थ-

दुकसंकाशां किंचिज्जिह्मायतां शुभाम् । कुर्यादाधारपर्यंतं स्वगृह्योक्तविधानतः ॥ समिदाज्यचरूंश्चैव तिलमाषांश्च सर्षपैः । अश्वत्थप्लक्षपालाशसमिद्भिः खादिरैः शुभैः ॥ अष्टोत्तरसहस्रं वा अष्टोत्तरशतं तु वा । अष्टाविंशतिमेतैश्च होमं कुर्यात्पृथक्पृथक् ॥ त्रैयंबकेण मंत्रेण तिलान् स्वाहुतिभिः क्रमात् । ग्रहा एवं च होतव्या अस्मदुक्तविधानतः ॥ एवं क्रमेण होतव्यं होमशेषं समापयेत् । सर्वालंकारयुक्तानां त्रयाणामभिषेचनम् ॥ चतुर्भिः कलशैरद्भिर्बृहत्कुंभसमन्वितम् । धौताम्बराणि धृत्वाथ कुर्यादाज्यावलोकनम् ॥ पूर्णाहुतिं च जुहुयाद्यजमानः समाहितः । तत्सर्वं परया भक्त्या ईश्वराय निवेदयेत् ॥ सर्वालंकारसंयुक्तां सवत्सां गां पयस्विनीम् । प्रतिमां वस्त्रयुग्मं च आचार्याय निवेदयेत् ॥ अन्येषां चैव सर्वेषां कुर्याद्ब्राह्मणभोजनम् । तस्मादनेन विधिना वित्तशाठ्यविवर्जितः । एवं यः कुरुते शांतिं सर्वपापैः प्रमुच्यते । सर्वान् कामानवाप्नोति चिरंजीवी सुखी भवेत् ॥' इत्युत्तरगार्ग्योक्ता कृष्णचतुर्दशीशांतिः ॥

अथैकनक्षत्रजातानां शांतिविधिरुच्यते-'एकस्मिन्नेव नक्षत्रे भ्रात्रोर्वा पितृपुत्रयोः । प्रसूतिश्च तयोर्मृत्युर्भवेदेकस्य निश्चयः ॥ तद्दोषनाशाय तदा प्रशस्तां शांतिं च कुर्यादभिषेचनं च । संपूज्य ऋक्षप्रतिमां तदग्रे दानं च कुर्याद्विभवानुरूपम् ॥ तत्र शांतिं प्रवक्ष्यामि सर्वाचार्यमतेन तु । शुभर्क्षे शुभवारे च चंद्रताराबलान्विते ॥ रिक्ताविष्टिविवर्ज्ये तु प्रारभेद्दिवसे सुधीः । आचार्यं वरयेत्पूर्वं चतुरोऽथ द्विजोत्तमान् ॥ पुण्याहं वाचयित्वा तु शांतिकर्म समाचरेत् । अग्नेरीशानदिग्भागे नक्षत्रप्रतिमां ततः ॥ तन्नक्षत्रोक्तमंत्रेण अर्चयेत्कलशोपरि । रक्तवस्त्रेण संछाद्य वस्त्रयुग्मेन वेष्टयेत ॥ स्वशाखोक्तेन मार्गेण कुर्यादग्निमुखं ततः । अनेनैव तु मंत्रेण हुनेदष्टोत्तरं शतम् ॥ प्रत्येकं समिदाज्यैः प्रायश्चित्तांतमेव च । अभिषेकं ततः कुर्यादाचार्यः पितृपुत्रयोः । वस्त्रालंकारगोदानैराचार्यं पूजयेत्पुनः । ऋत्विग्भ्यो दक्षिणां दद्यान्माषत्रयसुवर्णकम् ॥ देवताप्रतिमादानं धान्यवस्त्रादिभिः सह । यानशय्यासनादींश्च दद्यात्तद्दोषशांतये ॥ भोजयेद्ब्राह्मणान्सर्वान्वित्तशाठ्यविवर्जितः ॥' इति गार्ग्योक्तैकनक्षत्रजननशांतिविधिः ॥ ॥ अत्र-'एकस्मिन्नेव नक्षत्रे भ्रात्रोर्वा पितृपुत्रयोः' इति गर्गवाक्ये भ्रात्रोरिति पदे किं भ्राता च स्वसा च भ्रातरौ, 'भ्रातृपुत्रौ स्वसृदुहितृभ्याम्' इत्येकशेषः, उत भ्राता च भ्राता च भ्रातरौ, 'सरूपाणामेकशेष एकविभक्तौ' इत्येकशेषः । तत्र प्रथमपक्षे सोदरयोर्भ्रातृभगिन्योरेवैकनक्षत्रजननिषेधः स्यान्न तु पुंभ्रात्रोः । द्वितीयपक्षे तु सोदरयोः पुंभ्रात्रोरेव निषेधः स्यात्, नतु भ्रातृभगिन्योः । दृश्यते च द्वयोरपि भ्रात्रोर्निषेधः । न च भ्रातरौ च भ्रातरौ चेति द्वंद्वे सत्येकशेषेण सिद्धमिति वाच्यम् । तथा सति तेषां चतुर्णां भ्रातॄणामिति पाठ्यं स्यात् । एवं पितृपुत्रयोरित्यत्रापि पिता च पुत्रश्चेति द्वंद्वे पितापुत्रयोरेकनक्षत्रजननिषेधः स्यात्, न तु मातापित्रोः । न च माता च पिता च पितरौ । 'पिता मात्रा' इत्येकशेषः । पितरौ च पुत्रश्चेति द्वंद्वे मातापित्रोः पुत्रस्यैकनक्षत्रनिषेधः स्यात् । तथा पुत्रश्च दुहिता च पुत्रौ 'भ्रातृपुत्रौ' इत्यादिनैकशेषः । पितरौ च पुत्रौ चेति द्वंद्वे मातापित्रोः पुत्रस्य

कन्यायाश्चैकनक्षत्रजननिषेधः स्यादिति वाच्यम् । यतः प्रथमपक्षे पितृपुत्राणामिति बहुवचनांतं पदं पाठ्यं स्यादिति । द्वितीयपक्षे तु स दोषोऽस्त्येव । परंतु यथासंख्यमपि लगति । यथा मातापुत्रयोरेव पितादुहित्रोरेव चैकनक्षत्रजननिषेधः स्यात् । न तु मातादुहित्रोः पितापुत्रयोश्चेति । दृश्यते चानयोरपि निषेध इत्यतो नैतद्वचनं निर्णयपदवीमवगाहते । सत्यम् । गर्गवाक्यस्य त्वेतावानेवार्थः, परं तु वचनांतरानुरोधादिष्टविषयोऽपि संगृहीतो भवति । यदाह वसिष्ठः–'पित्रोस्तु जन्मकर्मर्क्षे जातस्तु पितृमातृहा । जन्मर्क्षांशे च तल्लग्ने जातः मद्यो मृतिप्रदः ॥' इति । देवकीर्तिः–'यद्येकस्मिन्धिष्ण्ये जायंते दुहितरोऽथवा पुत्राः । पितुरंतकरा ह्येते यद्यपरे प्रीतिरतुला स्यात् ॥' इति । अपरे=अन्यनक्षत्रे । 'पूर्वादिभ्यो नवभ्यो वा' इति स्निग्धभावपक्षे रूपम् । गर्गसंहितायामपि–'यस्यैव जन्मनक्षत्रे जायेद्भ्राता सुतोऽपि वा । सजातीयः सजात्या वा सोऽस्य प्राणान्प्रसाधयेत् ॥' इति । यस्यैति पुंस्त्वमविवक्षितं, तेन मातुरपि निषेधो वसिष्ठवाक्यस्वरसात् ॥ ॥ अथ मूलश्लोके दुष्टनिमित्तस्योपलक्षणत्वेन व्याख्यानात् सूर्यचंद्रग्रहणसमयजननशांतिविधिरुच्यते—'ग्रहणे चंद्रसूर्यस्य प्रसूतिर्यदि जायते । व्याधिपीडा तदा स्त्रीणामादौ नु ऋतुदर्शनात् ॥ इत्थं संजायते यस्तु तस्य मृत्युर्न संशयः । व्याधिपीडा च दारिद्र्यं शोकश्च कलहो भवेत् ॥ शांतिं तेषां प्रवक्ष्यामि नराणां हितकाम्यया । यस्मिन्नृक्षे विशेषेण ग्रहणं संप्रजायते ॥ तदृक्षाधिपते रूपं सुवर्णेन प्रकल्पयेत् । यथाशक्त्यनुसारेण वित्तशाठ्यं न कारयेत् ॥ सूर्यग्रहे सूर्यरूपं सुवर्णेन स्वशक्तितः । चांद्रं चंद्रग्रहे धीमान् रजतेन विशेषतः ॥ राहुरूपं प्रकुर्वीत नागेनैव विचक्षणः ॥' नागेन=सीसकेन । 'शुचौ देशे प्रयत्नेन गोमयेन प्रलेपयेत् । तस्योपरि न्यसेद्धीमान्नववस्त्रं सुशोभनम् । त्रयाणां चैव रूपाणां स्थापनं तत्र कारयेत् ॥ रक्ताक्षतान् रक्तगंधं रक्तपुष्पांबराणि च । सूर्यग्रहे प्रदातव्यं सूर्यप्रीतिकरं च यत् ॥ श्वेतवस्त्रं श्वेतमाल्यं श्वेतगंधाक्षतादिकम् । चंद्रग्रहे प्रदातव्यं चंद्रप्रीतिकरं च यत् ॥ राहवे चैव दातव्यं कृष्णपुष्पांबराणि च । दद्यान्नक्षत्रनाथाय श्वेतगंधानुलेपनम् ॥ सूर्यं संपूजयेद्धीमानाकृष्णेनेति च मंत्रतः । चंद्रग्रहे च पालाशैः समिद्भिर्जुहुयान्नरः ॥ दूर्वाभिर्जुहुयाद्धीमान् राहोः संप्रीणनाय च । समिद्भिर्नक्षत्रवृक्षोत्थैर्भेशाय जुहुयाद्बुधः ॥' भेशाय=नक्षत्राधिपतये । 'आज्येन चरुणा चैव तिलैश्च जुहुयात्ततः । पंचगव्यैः पंचरत्नैः पंचत्वक्पंचपल्लवैः ॥ जलैरोषधिकल्कैश्च सहितैः कलशोदकैः । (ओषधिकल्कैः=सर्वौषधिकल्कैः) । अभिषेकं प्रकुर्वीत यजमाने प्रयत्नतः ॥ मंत्रैर्वारुणदैवत्यैरापोहिष्ठादिभिस्त्रिभिः । इमंमेगङ्गे पितरस्तत्वायामीति मंत्रकैः ॥ अभिषेके निवृत्ते तु यजमानः समाहितः । आचार्यं पूजयेत्पश्चात्सुशांतो विजितेंद्रियः ॥ तस्मै दद्यात्प्रयत्नेन भक्त्या प्रतिकृतित्रयम् । दक्षिणाभिश्च संयुक्तं यथाशक्त्यनुसारतः । ब्राह्मणान्भोजयित्वा तु प्रणिपत्य क्षमापयेत् । तेभ्योऽपि दक्षिणां दद्याद्यजमानः समाहितः ॥ अनेन

विधिना शांतिं कृत्वा सम्यग्विशेषतः । अकालमृत्युं शोकं च व्याधिपीडां न चाप्नुयात् ॥ सौख्यं सौमनसं नित्यं सौभाग्यं लभते नरः । इत्थं ग्रहणजातानां सर्वारिष्टविनाशनम् ॥ कथितं भार्गवेणेदं शौनकाय महात्मने ॥' इति श्रीशौनकविरचितः सूर्यचंद्रग्रहणसमयजननशांतिविधिः ॥

अथ त्रीतरशांतिरप्युच्यते । सा च शांतिसर्वस्वेऽभिहिता—'सुतत्रये सुता चेत्स्यात्तत्रये वा सुतो यदि । मातापित्रोः कुलस्यापि तदारिष्टं महद्भवेत् ॥ ज्येष्ठनाशो धने हानिर्दुःखं वा सुमहद्भवेत् । तत्र शांतिं प्रकुर्वीत वित्तशाठ्यविवर्जितः ॥ जातस्यैकादशाहे वा द्वादशाहे शुभे दिने । आचार्यमृत्विजो वृत्वा ग्रहयज्ञपुरःसरम् ॥ सह वा ग्रहयज्ञः स्याद्यथावित्तानुसारतः । ब्रह्मविष्णुमहेशेंद्रप्रतिमाः स्वर्णतः कृताः ॥ पूजयेद्धान्यराशिस्थकलशोपरि शक्तितः । पंचमे कलशे रुद्रं पूजयेद्रुद्रसंख्यया ॥ रुद्रसूक्तानि चत्वारि शांतिसूक्तानि सर्वशः ॥ द्विज एको जपेद्धोमकाले शुचिसमाहितः । आचार्यो जुहुयात्तत्र समिदाज्यतिलांश्चरुम् । अष्टोत्तरं सहस्रं वा शतं वा विंशतिं तु वा ॥ देवताभ्यश्चतुर्वक्त्रादिभ्यो ग्रहपुरःसरम् । ब्रह्मादिमंत्रैरिंद्रस्य यतइंद्रभयामहे ॥ ततः स्विष्टकृतं हुत्वा बलिं पूर्णाहुतिं ततः । अभिषेकं कुटुंबस्य कृत्वाचार्यं प्रपूजयेत् ॥ हिरण्यं धेनुरेका च ऋत्विग्भ्यो दक्षिणा ततः । प्रतिमा गुरवे देया उपस्कारसमन्विता । कांस्याज्यवीक्षणं कृत्वा शांतिपाठं तु कारयेत् । ब्राह्मणान्भोजयेच्छक्त्या दीनानाथांश्च तर्पयेत् ॥ एवं शांतिविधानेन सर्वारिष्टं प्रलीयते ॥' इति ॥ ५६ ॥

आलोक्यार्षान्पौरुषांश्च ग्रंथान्मूलादिशांतयः ।
नीलकंठतनूजेन गोविंदेनोदिताः क्रमात् ॥

अथ नक्षत्रप्रसंगादेवाश्विन्यादिभानां तारकामानमुपजातिकयाह—

**त्रित्र्यंगपंचाग्निकुवेदवह्नयः शरेषुनेत्राश्विशरेंदुभूकृताः ।**
**वेदाग्निरुद्राश्वियमाग्निवह्नयोऽब्धयः शतं द्विद्विरदा भतारकाः ॥ ५७**

त्रीति ॥ अश्विन्यादीनां भानां तारकाः क्रमतो ज्ञेयाः । यथा अश्विन्यास्तारकास्तिस्रः ३, भरण्यास्तिस्रः ३, कृत्तिकायाः षट् ६, रोहिण्याः पंच ५, मृगस्य तिस्रः ३, आर्द्राया एका १, पुनर्वसोश्चतस्रः ४, पुष्यस्य तिस्रः ३, आश्लेषायाः पंच ५, मघायाः पंच ५, पूर्वाफल्गुन्या द्वे २, उत्तराफल्गुन्या द्वे २, हस्तस्य पंच ५, चित्राया एका १, स्वात्या एका १, विशाखायाश्चतस्रः ४, अनुराधायाश्चतस्रः ४, ज्येष्ठायास्तिस्रः ३, मूलस्यैकादश ११, पूर्वाषाढाया द्वे २, उत्तराषाढाया द्वे २, अभिजितस्तिस्रः ३, श्रवणस्य तिस्रः ३, धनिष्ठायाश्चतस्रः ४, शततारकायाः शतं १००, पूर्वाभाद्रपदाया द्वे २, उत्तराभाद्रपदाया द्वे २, रेवत्या द्वात्रिंशत्तारकाः ३२, एतावतीभिस्तारकाभिरश्विन्यादीनां स्वरूपं ज्ञेयम् । उक्तं च रत्नमालायाम्—'वह्नित्रिऋत्विषुगुणेंदुकृताग्निभूतबाणाश्विनेत्रशरभूकुयुगाब्धिरामाः । रुद्राब्धिरामगुणवेदशतद्वियुग्मं दंता बुधैर्निगदिताः क्रमशो भताराः ॥' इति । नन्व-

ष्मिन् श्रीपतिवाक्ये सप्तविंशतिभानि प्रनीयंते, ग्रंथकृद्वाक्येऽष्टाऽविंशतिरिति विरोधः। अत्र समाधिः-उत्तरार्धे रुद्राब्धीत्यत्र अब्धयः चतस्रस्तारा: पूर्वाषाढोत्तराषाढयोस्तत्र द्वे पूर्वाषाढाया द्वे तूत्तराषाढाया इत्यर्थः। एवमष्टाविंशतिनक्षत्राणि। नारदेनापि द्वयोराषाढयोर्द्वितारकत्वमुक्तम्। 'रामाग्निऋतुबाणाग्निभूवेदाग्निशरेषवः। नेत्रबाहुशरद्वीन्दुयुगवेदाग्निशंकरः॥ बाहुनेत्राम्बधिशतं बाहुनेत्ररदाः क्रमात्। भानां संख्या च विज्ञेया दस्रादीनां पृथक्पृथक्॥' इति। अवश्यं चैतदेवं विज्ञेयम्। अन्यथा-'तुरगमुखमदृशम्' इत्यादिनाष्टाविंशतिनक्षत्राणामाकृतिकथनात्सप्तविंशतिनक्षत्राणां च तारामानोक्तिरिति पूर्वापरविरोधः शंक्येत। तारकामानोक्तिप्रयोजनं विवाहे नक्षत्रतारकातुल्यैर्वर्षैस्तत्सद्सत्फलावाप्तिरित्यादि। तदुक्तं वराहेण—'नक्षत्रजमुद्वाहे फलमब्दैस्तारकामितैः सदसत्। दिवसैर्ज्वरस्य नाशो व्याधेरन्यस्य वा वाच्यः॥' इति। तद्यथा शौनकेन विवाहे प्रत्येकं नक्षत्रफलान्यभिहितानि। तत्र—'प्राजापत्ये सुभगा भोगयुताऽतिप्रिया भर्तुः। पुत्रधनानि च लभते सा कन्या पंचमे वर्षे॥' इति रोहिण्यामुद्वाहफलमुक्तं तद्रोहिण्यास्तारा: पंच तावद्भिर्वर्षैर्भवति। 'अष्टाग्प्राणवियोगं त्वाष्ट्रे प्राप्नोति भूतसंसर्गात्। त्यक्त्वा स्वज्ञातिकुलं कामपरा याति दास्यत्वम्॥' इति चित्राया असत्फलं तच्चित्रातारकाऽत एकेन वर्षेण भवति। एवं ज्वराद्युत्पत्तावपि तारकामानदिवसैर्ज्वरस्य वान्यस्य व्याधेः अन्यरोगस्य वा नाशो वाच्य इत्याद्यूह्यम्। ननु नक्षत्रभेदेन पूर्वमपि ज्वरनाशका दिवसाः प्रोक्ताः। अत्र तु तारकामितसंख्यादिवसा उक्ता इति ग्रंथविरोध इति चेन्न। चरणभेदान्न विरोध इति वयं ब्रूमः॥ ५७॥

अथाश्विन्यादीनामाकृतिमुपजात्या रथोद्धतया चाह—

अश्व्यादिरूपं तुरगास्ययोनिक्षुरोऽन एणास्यमणिर्गृहं च।
पृषत्कचक्रे भवनं च मंचः शय्या करो मौक्तिकविद्रुमं च ५८
तोरणं बलिनिभं च कुंडलं सिंहपुच्छगजदंतमंचकाः।
त्र्यस्रि च त्रिचरणाभमर्दलो वृत्तमंचयमलाभमर्दलाः॥५९॥

अश्व्यादिरूपमिति। तोरणमिति॥ अश्विन्यादीनां नक्षत्राणां रूपमाकृतिरुच्यते—तत्राश्विन्यास्तुरगास्यमश्वमुखसदृशं रूपं, भरण्या योनिर्भगस्तद्रूपं, कृत्तिकाया नापितक्षुराकृति, रोहिण्या अनः शकटरूपं, मृगस्य एणास्यं हरिणमुखसदृशं, आर्द्राया मणिसदृशं, पुनर्वसोर्गृहतुल्यं, पुष्यस्य पृषत्को बाणस्तत्सदृशं, आश्लेषायाश्चक्राकारं, मघाया भवनं गृहसदृशं, पूर्वाफल्गुन्या मंचः खट्वा तदाकारं, उत्तराफल्गुन्याः शय्याकारं, हस्तस्य हस्ताकारं, चित्राया मौक्तिकाकारं, स्वात्या विद्रुमं प्रवालस्तदाकारं, विशाखायास्तोरणाकारं, अनुराधाया बलिभक्तपुंजस्तदाकारं, ज्येष्ठायाः कुंडलाकृति, मूलस्य सिंहपुच्छाकारं, पूर्वाषाढाया गजदंतसदृशं, उत्तराषाढाया मंचकसदृशं, अभिजितस्त्रिकोणाकारं, श्रवणस्य त्रिविक्रमत्रिचरणो वामनस्तत्स्वरूपं, धनिष्ठाया मर्दलसदृशं, शततारकाया वृत्तं वर्तुलं,

पूर्वाभाद्रपदाया मंचसदृशं, उत्तराभाद्रपदाया यमलाभं, रेवत्या मर्दलाकारं स्वरूपमित्यर्थः । उक्तं च रत्नमालायाम्–'तुरगमुखसदृक्षं योनिरूपं क्षुराभं शकटसममथैणस्योत्तमांगेन तुल्यम् । मणिगृहशरचक्राभानि शालोपमाभं शयनसदृशमन्यच्चात्र पर्यंकतुल्यम् ॥ हस्ताकारमतश्च मौक्तिकसमं चान्यत्प्रवालोपमं धिष्ण्यं तोरणवत्स्थितं बलिनिभं सत्कुंडलाभं परम् । क्रुध्यत्केसरिणः क्रमेण सदृशं शय्यासमानं परं चान्यद्दंतिविषाणवत्स्थितमतः शृंगाटकव्यक्ति च ॥ त्रिविक्रमाभं च मृदंगरूपं वृत्तं ततोऽन्यद्यमलद्वयाभम् । पर्यंकरूपं मुरजानुकारमित्येवमश्व्यादिभचक्ररूपम् ॥' इति ॥ ५८ ॥ ५९ ॥

अथ जलाशयारामदेवप्रतिष्ठामुहूर्तं सपादोपजातिकयाह—

जलाशयारामसुरप्रतिष्ठा सौम्यायने जीवशशाङ्कशुक्रे ।
दृश्ये मृदुक्षिप्रचरध्रुवे स्यात्पक्षे सिते स्वर्क्षतिथिक्षणे वा ॥६०॥
रिक्तारवर्ज्ये दिवसेऽतिशस्ता—

जलाशयेति ॥ जलाशयोत्सर्गः आरामोत्सर्गश्च देवानां विष्ण्वादीनां प्रतिष्ठा वक्ष्यमाणप्रकारेणोच्यते–तत्र त्रयाणामपि सामान्यतो दिनशुद्धिरियं विचार्या । यथा सौम्यायने उत्तरायणे मकरादिषड्राशिस्थिते सूर्ये सति तथा जीवशशांकशुक्रेषु दृश्यमानेषु सत्सु तथा मृदुगणक्षिप्रगणचरगणध्रुवगणनक्षत्रेषु तथा सिते शुक्ले पक्षे स्वर्क्षतिथिक्षणे यस्य देवस्य प्रतिष्ठा कर्तुमिष्टा तस्य तत्स्वामिके नक्षत्रे तिथौ वा क्षणे मुहूर्ते वा, तथा रिक्तारवर्ज्ये रिक्ताः=पूर्वमुक्तास्तिथयः, आरः=भौमः; एतान्वर्जयित्वान्यतिथिषु अन्यवारेषु च एवंविधेषु दिनेषु जलाशयः=तडागादिः, आरामः=उपवनं, सुराः=देवाः, तेषां प्रतिष्ठा क्रमेण कर्मार्हस्वोपभोगयोग्यस्वपूजायोग्यस्वरूपानिप्रशस्तातिविहितास्ति । अत्र दक्षिणायनगुर्वस्तशुक्रास्तचंद्रास्तानां सामान्यतः शुभकार्येषु निषेधात् परिशेषतो गुरुशुक्रचंद्रोदयोत्तरायणानि प्रशस्तानि । दक्षिणायननिषेधश्चाग्रे वक्ष्यते । तत्र जलप्रतिष्ठायां दीपिका–'मार्तंडेंदुशुद्धौ मुरजिदशयने माधवद्रस्य शुक्ले मूलापाढोत्तराश्विश्रवणगुरुकरे पौष्णशाक्राजचांद्रे । मैत्रे ब्राह्मे च पूर्णामदनरविनिथौ सद्द्वितीयातृतीये कार्या तोयप्रतिष्ठा ज्ञगुरुसितदिने कालशुद्धे सुलग्ने ॥' इति । मुरजिद्विष्णुस्तस्य अशयनं शयनाभावः । विष्णुशयनव्यतिरिक्ते काले इत्यर्थः । 'देवतारामवाप्यादिप्रतिष्ठासुत्तरायणे । माघादिपंचमासेषु कृष्णेऽप्यापंचमीदिनम् ॥ दक्षिणे त्वयने कुर्वन्न तत्फलमवाप्नुयात् ।' इति । अयं चोत्तरायणे जलं जलाशये स्थास्यतीत्येवं निश्चिते निषेधः । मत्स्यपुराणेऽपि–'चैत्रे वा फाल्गुने वापि ज्येष्ठे वा माधवेऽपि वा । माघे वा सर्वदेवानां प्रतिष्ठा शुभदा भवेत् ॥ प्राप्य पक्षं शुभं शुक्लमतीते चोत्तरायणे ।' देवानामित्युपलक्षणं, तेन देवारामवाप्यादिप्रतिष्ठा शुभदेत्यर्थः । मकरसंक्रम उत्तरायणपदेनोपलक्ष्यते ।

१ आजम्=अभिजित् । अथवा आप्येति पाठः, आप्यं=पूर्वाषाढा ।

अतो मकरसंक्रमोत्तरः कालः शुभ उच्यते । अन्यथा माघादिपंचकं साक्षाद्विहितम् । उत्तरायणातिक्रमे हि दक्षिणायनसंग्रह इति सर्वकालसंग्रहे वर्ज्यामावात्कालोपदेशानर्थक्यमापद्येत । उपलक्षणत्वं च 'भविष्यत्ययने पुण्यमतीते चोत्तरायणे' इत्यत्र दृश्यते । यदा तु दक्षिणायन एव जलस्थितिसंभवस्तदा न कालनियमः । 'न कालनियमस्तत्र प्रमाणं सलिलं यतः' इति भविष्यत्पुराणोक्तेः । तत्रापि कार्तिकमासे शुभफलदसंक्रांतौ वा शुभतिथौ मेषधनुःसिंहवर्जिते लग्ने वापीकूपतडागादि प्रतिष्ठाप्यमिति ध्येयम् । उक्तं च भविष्यत्पुराणे-'तस्मिन्सलिलसंपूर्णे कार्तिके च विशेषतः । तडागस्य विधिः कार्यः स्थिरनक्षत्रयोगतः ॥' इति । अग्निपुराणे संक्रांतिभेदेन फलभेदोऽप्यभ्यधायि-'वापीकूपतडागानां तस्मिन्काले विधिः स्मृतः । सुदिने शुभनक्षत्रे प्रतिष्ठा शुभदा स्मृता ॥ कर्कटे पुत्रलाभश्च सौख्यं तु मकरे भवेत् । मीने यशोऽर्थलाभश्च कुंभे च सुबहूदकम् ॥ वृषे च मिथुने वृद्धिर्वृश्चिके च जलं भवेत् । पितृतृप्तिश्च कन्यायां तुलायां शाश्वती गतिः ॥ सिंहे मेषे धनुर्लग्ने लक्ष्मीश्च द्विज गच्छति ॥' इति ॥ देवप्रतिष्ठायां तु विशेषस्तत्र वसिष्ठः—'अथ प्रतिष्ठां कथयामि सम्यक्शिवस्य विष्णोरथवा परेषाम् । सौम्यायने देवगुरौ च शुक्रे संदृश्यमाने परिवारकाणाम् ॥' इति । शिवविष्णुग्रहणं प्राधान्यख्यापनार्थम् । अत्र सौम्यप्रकृतीनां देवानामुत्तरायणे स्थापनमुक्तम् । उग्रप्रकृतीनां तु दक्षिणायनेऽपि कार्यम् । तदुक्तं वैखानससंहितायाम् 'मातृभैरववाराहनारसिंहत्रिविक्रमाः । महिषासुरहंत्री च स्थाप्या वै दक्षिणायने ॥' इति । शैवसिद्धांतशेखरे तु-'श्रेष्ठोत्तरे प्रतिष्ठा स्यादयने मुक्तिमिच्छताम् । दक्षिणे तु मुमुक्षूणां मलमासे न सा द्वयोः ॥' इत्युक्तम् । अत्र 'दक्षिणे तु मुमुक्षूणाम्'इत्यपि मातृभैरवेत्यादिपरतया योज्यम्, अन्यथा प्रतिपदं मासगणना वसिष्ठादिषु न युज्येत । यदाह वसिष्ठः-'मासे तपस्ये तपसि प्रतिष्ठा धनायुरारोग्यकरी च कर्तुः । चैत्रे महाकष्टभयदा च शुक्रे ससाधवे पुत्रधनाप्तये स्यात् ॥' इति । नारदोऽपि 'विचैत्रेष्वेव मासेषु माघादिषु च पंचसु ॥' इति । वसिष्ठः-'आषाढमासादिचतुष्टयेऽपि कलत्रसंतानविनाशदा स्यात् । ऊर्जे च कर्तुर्निधनप्रदा च सौम्ये सपौषेऽखिलदुःखदा स्यात् ॥ वलक्षपक्षः शुभदः समस्तः सदैव तत्राद्यदिनं विहाय । अंत्यत्रिभागं परिहृत्य कृष्णपक्षोऽपि शस्तः खलु पक्षयोश्च ॥ रिक्तावमस्यक्तदिनेष्वनिंद्ययोगेषु वैनाशिकवर्जितेषु । दिने महादोषविवर्जिते च शशांकताराबलसंयुते च ॥' इति । वैनाशिकनक्षत्राणि नारदेनोक्तानि-'जन्मभाद्दशमं कर्मसंघातर्क्षं च षोडशम् । अष्टादशं सामुदायं त्रयोविंशं विनाशभम् ॥ मानसं पंचविंशर्क्षं नाचरेच्छुभमेषु तु ॥' इति । अथ तिथीनाह नारदः 'यद्दिनं यस्य देवस्य तद्दिने तस्य संस्थितिः । द्वितीयादिद्वयोः पंचम्यादितस्तिसृषु क्रमात् ॥ दशम्यादिचतसृषु पौर्णमास्यां विशेषतः ॥' इति । मुख्यतिथ्यसंभवे उक्ततिथौ स्थापनं कार्यमित्यर्थः । अथ वारानाह नारदः-'कुजवर्जितवारेषु कर्तुः सूर्ये बलप्रदे । चंद्रताराबलोपेते पूर्वाह्णे

शोभने दिने ॥' इति । प्रत्येकं वारफलमाह वसिष्ठः—'कीर्तिप्रदं क्षेमकरं कृशानुभयप्रदं वृद्धिकरं दृढं च । लक्ष्मीकरं सुस्थिरदं त्विनादिवारेषु संस्थापनमामनंति ॥' इति । अथ नक्षत्रविवेकः । तत्र जलप्रतिष्ठार्थं दीपिकायामुक्तान्यधुना नक्षत्राणि आरामप्रतिष्ठार्थं नक्षत्राणि ॥ अथ देवप्रतिष्ठानक्षत्राणि वसिष्ठेनोक्तानि–'हस्तत्रये मित्रहरित्रये च पौष्णद्वयादित्यसुरेज्यभेषु । तिस्रोत्तराधातृशशांकभेषु सर्वामरस्थापनमुत्तमं तत् ॥' इति । अत्र षोडश भानि ध्रुवमृदुक्षिप्रलघुरूपाण्येवोक्तानि, तत्र ग्रंथकर्त्रा जलाशयारामसुरप्रतिष्ठानक्षत्राणि बहुधा तुल्यत्वादेतानि उक्तानि । द्वित्राणि तु भिन्नानि तान्युक्तविशेषवचनेभ्योऽवसेयानि इति । तत्र जलाशयारामयोर्निर्मित्यधीनत्वात् तन्मुहूर्तः प्रागुक्तः । देवताघटनमुहूर्तस्तु उच्यते मया । तत्र दीपिका–'ध्रुवलघुमृदुवर्गे वारुणे विष्णुदैवे मरुददितिधनिष्ठे शोभने वासरे च । त्रिदशमदनजन्मैकादशे ३ । १० । ७ । १ । ११ शीतरश्मौ विबुधकृतिरभीष्टा नाडिनक्षत्रहीने ॥' इति । नाडिनक्षत्राणि=वैनाशिकनक्षत्राणि ॥ ६० ॥

अथ देवताप्रतिष्ठायां सामान्यतो लग्नशुद्धिं देवताविशेषाणां लग्नविशेषं नक्षत्रविशेषं च पादोनोपजातिकाभ्यामाह—

शशांकपापैस्त्रिभवांगसंस्थैः ।
व्यष्टांत्यगैः सत्खचरैर्मृगेंद्रे सूर्यो घटे को युवतौ च विष्णुः ६१
शिवो नृयुग्मे द्वितनौ च देव्यः क्षुद्राश्चरे सर्व इमे स्थिरर्क्षे ।
पुष्ये ग्रहा विघ्नपयक्षसर्पभूतादयोऽन्त्ये श्रवणे जिनश्च ॥ ६२ ॥

शशांकेति ॥ जलाशयप्रतिष्ठायामारामप्रतिष्ठायां च सुलग्नमात्रं विचार्यम् । देवप्रतिष्ठायां शशांकश्चंद्रः पापाः सूर्यभौमशनिराहुकेतवस्तैस्त्रिभवांगसंस्थैस्तृतीयषष्ठैकादशस्थानस्थितैरुपलक्षिते लग्ने तथा सत्खचरैः सोमबुधगुरुशुक्रैर्व्यष्टांत्यगैरष्टमद्वादशव्यतिरिक्ताखिलस्थानस्थैः सद्भिर्देवप्रतिष्ठाऽतिप्रशस्ता । तदुक्तं रत्नमालायाम्—'केंद्रत्रिकोणभवमूर्तिषु सद्ग्रहेषु चंद्रार्कभौमशनिषु त्रिषडायगेषु । सांनिध्यमेति नियतं प्रतिमासु देवः कर्तुः सुखार्थसुतसंपदरोगता च ॥ सौम्या लग्नाद्याश्रिता मूर्तिपूर्वान्भावान् वीर्योत्कटा वर्धयंति । षष्ठं हित्वा भावमेते हि तत्र शत्रुध्वस्तिं कर्तुरुत्पादयंति ॥' इति । शनिग्रहणं राहुकेत्वोरप्युपलक्षणम् । यदाह वसिष्ठः—'सूर्येन्दुभौमार्कजराहुकेतवश्च लग्नस्थिता नैधनदाश्च भर्तुः । सौम्यग्रहा लग्नगतास्सदैव ह्यायुर्बलारोग्यकराश्च नूनम् ॥' इति । अन्यच्च तत्रैव—'सर्वे ग्रहा नैधनदास्त्वजस्रं सौम्या असौम्याः खलु मृत्युसंस्थाः' इति । अथ प्रसंगान्नवांशविचारः । तत्र स्थिरद्विस्वभावनवांशा ग्राह्या न चरांशास्तत्रापि[1] तुलांशः साध्यायान् । यदाह वसिष्ठः–'पंचेष्टके जीवशशांकसूर्यमुख्यग्रहैः सौम्यनवांशयुक्तैः । लग्ने स्थिरे चोभयराशियुक्ते नवांशके चोभयगे स्थिरे वा ॥' उभयगे=द्विस्वभावे । 'चरो-

---

१ तत्रापि=चरांशेष्वपि ।

दये लग्नगते न कार्यं संस्थापनं नैव चरांशकेऽपि । चरोऽपि मुख्यः सतुलांशकश्च सदा मृदुत्वात्सुरसंनिवेशे ॥' इति । मृदुत्वात्=शुभस्वामित्वात् । नारदोऽपि–'शुभलग्ने शुभांशे च कर्तुर्न निधनोदये । राशयः सकलाः श्रेष्ठाः शुभग्रहयुतेक्षिताः ॥' इति ॥ अथ लग्नदौष्ट्येऽपवादो वसिष्ठेनोक्तः—'एकोऽपि जीवो बलवांस्तनुस्थः सितोऽपि सौम्योऽप्यथवा बली चेत् । दोषानशेषान्विनिहंति सद्यः स्कंदो यथा तारकदैत्यवर्गम् ॥' इति । नारदः—'गुणाधिकतरे लग्ने दोषेऽत्यल्पतरे यदि । सुराणां स्थापनं तत्र कर्तुरिष्टार्थसिद्धिदम् ॥' इति । मृगेंद्र इति । सूर्यो मृगेंद्रे सिंहलग्ने स्थाप्यः । तथा को ब्रह्मा घटे कुंभलग्ने, विष्णुर्युवतौ कन्यालग्ने, शिवो महादेवो नृयुग्मे मिथुनलग्ने, च पुनर्द्वितनौ मिथुनकन्याधनुर्मीनलग्नेषु देव्यो दुर्गादक्षिणामूर्त्यादयः, चरे मेषकर्कतुलामकरलग्नेषु क्षुद्रा देव्यश्चतुःषष्टियोगिनीप्रभृतयः सर्वे इमे उक्ता अनुक्ताश्च देवा इत्यर्थः । उक्ता महादेवादयः, अनुक्ता इंद्रादयः, ते स्थिरर्क्षे वृषसिंहवृश्चिककुंभलग्नेषु स्थाप्याः । यदाह श्रीपतिः–'सिंहोदये दिनकरो मिथुने महेशो नारायणश्च युवतौ घटभे विधाता । देव्यो द्विमूर्तिभवने च निवेशनीयाः क्षुद्राश्चरे स्थिरगृहे निखिलाश्च देवाः ॥' इति । पुष्ये ग्रहा इति । ग्रहाश्चंद्रादयोऽष्टौ पुष्यनक्षत्रे स्थाप्या इत्यर्थः । उपलक्षणं चैतत्–तत्र सूर्यस्य हस्तनक्षत्रे स्थापनं, महादेवब्रह्मणोः पुष्यश्रवणाभिजित्सु स्थापनं, कुबेरस्कंदयोरनुराधायां दुर्गाप्रभृतीनां मूले स्थापनं, सप्तर्षीणां स्वाधिष्ठितनक्षत्रे. लक्ष्मीव्यासवाल्मीक्यगस्त्यानामपि सप्तर्ष्यधिष्ठितनक्षत्रे स्थापनम् । उक्तं च रत्नमालायाम्–'पुष्यश्रुत्यभिजित्सु चेश्वरकयोर्वित्ताधिपस्कंदयोर्मैत्रे तिग्मरुचेः करे निर्ऋतिभे दुर्गादिकानां शुभम्' इति । कः=ब्रह्मा । तथा 'सप्तर्षयो यत्र चरंति धिष्ण्ये कार्या प्रतिष्ठा खलु तत्र तेषाम् । श्रीव्यासवाल्मीकिघटोद्भवानां तथा स्मृता वाक्पतिभे ग्रहाणाम् ॥' इति । सप्तर्षयस्तु—'कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः । जमदग्निर्वसिष्ठश्च सप्तैते ऋषयः स्मृताः ॥' इति स्मृतेः । ते यस्मिन्नक्षत्रे संचरंतो दृश्यन्ते तस्मिन्नक्षत्रे तेषां स्थापनम् । श्रीव्यासवाल्मीकिघटोद्भवानां तथा सप्तर्ष्यधिष्ठितनक्षत्रे ग्रहाणां वाक्पतिभे पुष्ये । घटोद्भवः=अगस्त्यः । विघ्नपेति । विघ्नपः=गणेशः, यक्षः=देवयोनिः, सर्पाः=वासुक्यादयः, भूतः=देवयोनिः । 'विद्याधराप्सरोयक्षरक्षोगंधर्वकिन्नराः । पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः ॥' इत्यभिधानात् । आदिशब्देन राक्षसासुरप्रमथसरस्वतीप्रभृतयो गृह्यंते । ते रेवत्यां स्थाप्याः ॥ तथा श्रवणे श्रवणनक्षत्रे जिनो बुद्धः स्थाप्यः । उपलक्षणं चैतत्–इंद्रकुबेरवर्जितानां लोकपालानां धनिष्ठायां स्थापनम् । इतोऽवशिष्टानां देवानां त्र्युत्तरारोहिणीषु स्थापनं स्यादित्यर्थः । एतदप्युक्तं रत्नमाला-

१ यत्तु-तत्र सप्तर्ष्यधिष्ठितनक्षत्रे लक्ष्मीस्थापनं यदुक्तं तदनुचितम् । ग्रंथांतरसंवादाभावात् । मूलादर्शनाच्च । रत्नमालायां—श्रीव्यासेत्यत्रत्यपूज्यताबोधकश्रीशब्ददर्शनाट्टीकाकृदुक्तिरियं भ्रान्तिप्रसूतेति भाति ।

स्याम्—'गणपरिवृढरक्षोयक्षभूतासुराणां प्रमथफणिसरस्वत्यादिकानां च पौष्णे । श्रवसि सुगतनाम्नो वासवे लोकपानां निगदितमखिलानां स्थापनं हि स्थिरेषु ॥' इति । परिवृढः=स्वामी, 'प्रभौ परिवृढ' इति साधुः ॥ गणपरिवृढः=गणेशः । प्रमथाः=महादेवस्य पारिषदाः । श्रवसि=श्रवणनक्षत्रे । सुगतः=बुद्धः । 'सर्वज्ञः सुगतो बुद्धः' इत्यमरः । स्थिरेषु=रोहिणीष्युत्तरास्वित्यर्थः ॥ ६१ ॥ ६२ ॥

अथ नक्षत्रप्रकरणं गद्येनोपसंहरति—

## इति श्रीदैवज्ञानंतसुतदैवज्ञरामज्योतिर्विद्विरचिते मुहूर्तचिंतामणौ नक्षत्रप्रकरणं समाप्तम् ॥ २ ॥

इदं पूर्ववद्व्याख्येयम् । ज्योतिर्विद्वरनीलकंठविदुषः श्रीचंद्रिकायामथ पुत्रेणाहिगवीप्रसारितधिया मौहूर्तचिंतामणेः ॥ गोविंदेन विनिर्मिते नयनिधौ पीयूषधाराभिधे व्याख्याने तिथिवारभप्रकरणं संपूर्णतामभ्यगात् ॥ १ ॥ इति श्रीविद्वद्दैवज्ञमुकुटालंकारनीलकंठज्योतिर्वित्पुत्रगोविंदज्योतिर्विद्विरचितायां मुहूर्तचिंतामणिटीकायां पीयूषधाराभिधायां सविचारं तिथिवारनक्षत्रप्रकरणं समाप्तम् ॥ २ ॥

---

## संक्रांतिप्रकरणम् ३ ।



गौरीनंदनमिष्टसिद्धिसदनं विघ्नावलीभेदनं
नत्वा ज्योतिषिकाग्र्यरामरचिते मौहूर्तचिंतामणौ ।
गोविंदो बुधनीलकंठविबुधिस्सूनुः सतामग्रणी-
र्बह्वर्थं खलु संक्रमप्रकरणं व्याख्याति विद्वन्मुदे ॥ १ ॥

अथ संक्रांतिप्रकरणं व्याख्यायते । तत्र ग्रहाणां प्राग्राशितोऽपरराशौ संक्रमणं संक्रांतिरिति संक्रांतिलक्षणम् । सा च द्विविधा—मध्यमा स्पष्टा च । षट्कर्मसंस्कृतो मध्यमग्रहो राश्यंतरं यदा संक्रामति सा मध्यमसंक्रांतिरुच्यते । यदा तु स्पष्टीकृतसंस्कारविशिष्टो ग्रहो राश्यंतरं गच्छेत्सा स्पष्टसंक्रांतिरुच्यते । तत्र मध्यममानस्य स्पष्टीकरणार्थत्वादेव तज्जनितसंक्रांत्यनुपयोगादत्र तत्त्यागे स्पष्टसंक्रांतिरेव गृह्यते । सापि द्विविधा—सायनांशा निरयनांशा चेति । तत्र यत्र सिद्धांतगणनागतायनांशसंस्कृता ग्रहा राश्यंतरगमनमुर्रीकुर्वते सा सायनांशा संक्रांतिरुच्यते । यदा त्वयनांशसंस्काररहिता ग्रहा राश्यंतरगास्तदा निरयनांशा संक्रांतिरुच्यते । तत्रान्यासां चंद्रादिसंक्रांतीनां तु 'देवाब्धंकर्तवोऽष्टाष्टौ नाड्योंऽकाः खनृपाः क्रमात् । वर्ज्याः संक्रमणेऽर्कादेः प्रायोऽर्कस्यातिनिंदिताः ॥' इति वर्ज्यघटीत्वमेव विवाहप्रकरणे वक्ष्यति । ननु फलकथने आसां संक्रांतीनां कश्चिदुपयोगः । सूर्यसंक्रांतीनां तु नक्षत्रवारसमयभेदेन बवादिकरणभेदेन च शुभाशुभफलकथनयोग्यता पुण्यकालता संक्रांतिविशेषे वर्ज्यघटीष्वूनाधिक-

भावश्चासीत्ततो बहुवक्तव्यत्वात्स्वतंत्रमेव सूर्यसंक्रांतिप्रकरणमारिप्सुर्नक्षत्रवारभेदेन फलं तावत्सार्धवसंततिलकयाह—

घोरार्कसंक्रमणमुग्ररवौ हि शूद्रा-
न्ध्वांक्षी विशो लघुविधौ च चरर्क्षभौमे ।
चौरान्महोदरयुता नृपतीन्ज्ञमैत्रे
मंदाकिनी स्थिरगुरौ सुखयेच्च मंदा ॥ १ ॥
विप्रांश्च मिश्रभभृगौ तु पशूंश्च मिश्रा
तीक्ष्णार्कजेऽन्त्यजसुखा खलु राक्षसी च ।

घोरेति ॥ अर्कस्य सूर्यस्य संक्रमणं निरयनांशा संक्रांतिरुग्ररवावुग्रसंज्ञकनक्षत्रे रविवारे वा चेत् स्यात्तदा घोरेति नाम्नी सा शूद्रान्सुखयेत् सुखमुत्पादयेत् । अत्रार्कसंक्रमणमिति पदोपादानसामर्थ्यात्सूर्यसंक्रांतिष्वेवायं विचारो नाखिलग्रहसंक्रांतिष्विति फलितोऽर्थः । ननूग्ररवावित्यत्र सप्तम्यंतो द्वंद्वसमासोऽस्ति स किमितरेतरयोगद्वंद्वः समाहारद्वंद्वो वा ? नाद्यः । इतरेतरयोगद्वंद्वस्योद्भूतावयवत्वाद्द्विवचनांतता स्यात्तया सत्युग्ररव्योरिति भवितव्यम् । उग्रनक्षत्राणां बहुत्वादुग्ररविष्विति बहुवचनांतता च स्यादिति केचिदाहुः । उभयथापि पाठे छंदोभंगदोषः प्राप्नोति । न द्वितीयः । समाहारद्वंद्वस्य 'सर्वो द्वंद्वो विभाषयैकवद्भवति' इत्येकवद्भावविधानात 'स नपुंसकम्' इति नपुंसकलिंगतायां सत्यां समाहारस्यैकत्वादेकवचनं ङिप्रत्यये परतः 'इकोऽचि विभक्तौ' इति नुमागमे उग्ररविणीति स्यात् । तादृशपाठेऽपि छंदोभंग एव दूषणम् । अत्र समाधिः—इतरेतरयोगद्वंद्वोऽत्र नो कार्यः किंतु समाहारद्वंद्वः कार्यः । तथा हि—'स्तोः श्चुना श्चुः' इत्यत्र सूत्रे स्तोरिति ज्ञापकादागमशासनस्यानित्यत्वावगतेर्नुमभावे 'अच्च घेः' इत्यौत्वे अत्वे च सिद्धमुग्ररवाविति । अथवोग्रैः सहितो रविरुग्ररविरिति शाकपार्थिवादेराकृतिगणत्वान्मध्यमपदलोपी तत्पुरुषः समासः, ततः सप्तम्येकवचने पूर्ववत्सिद्धमिष्टमतश्छंदोभंगाभावोऽपि सिद्धः । एवं लघुविधावित्यादावपि समाधेयम् । अनेनैवाशयेन 'मर्यादाभिविधौ च यः' इति काशिकाप्रयोगोपपत्तिरित्यलमतिप्रसंगेन । अथ लघुनक्षत्रे विधौ चंद्रवारे वा सूर्यसंक्रांतिर्ध्वांक्षीनाम्नी विशो वैश्यान्सुखयेत् । चरर्क्षे चरनक्षत्रे भौमे मंगलवारे वा संक्रांतिर्महोदरयुता महोदरीनाम्नी चौरान्सुखयेत् । ज्ञमैत्रे बुधे मैत्रसंज्ञकनक्षत्रे वा संक्रांतिर्मंदाकिनीनाम्नी नृपतीन्राज्ञः सुखयेत् । स्थिरनक्षत्रे गुरुवारे वा संक्रांतिर्मंदानाम्नी विप्रान्सुखयेत् । मिश्रनक्षत्रे भृगुवारे वा संक्रांतिर्मिश्रानाम्नी पशून्सुखयेत् । तीक्ष्णनक्षत्रे अर्कजे शनिवारे वा संक्रांतिः खलु निश्चयेन राक्षसीनाम्नी अंत्यजांश्चांडालान्सुखयतीत्यंत्यजसुखा स्यादित्यर्थः । यदाह कश्यपः—'घोराध्वांक्षीमहोदर्यो मंदा मंदाकिनी तथा । मिश्रा राक्षसिका सूर्यसंक्रांतिस्त्वर्कवासरात् ॥' वसिष्ठः—'घोरोग्रर्क्षे

ध्वांक्षी लघुभे चरभे महोदरी मृदुभे । मंदाकिन्युग्रचरक्षे मंदा मिश्रा मिश्रे च राक्षसी तीक्ष्णे ॥' अत्र छंदोभंगस्त्वार्षः । देवीपुराणे–'मंदा ध्रुवेषु विज्ञेया मृदौ मंदाकिनी तथा । क्षिप्रे ध्वांक्षी विजानीयादुग्रे घोरा प्रकीर्तिता ॥ चरे महोदरी ज्ञेया तीक्ष्णैर्ऋक्षैस्तु राक्षसी । मिश्रिता चैव विज्ञेया मिश्रैर्ऋक्षैस्तु संक्रमे ॥' इति । रत्नमालायाम्—'उग्रक्षिप्रचरैर्मैत्रध्रुवमिश्राख्यदारुणैः । ऋक्षैः संक्रांतिरर्कस्य घोराद्या क्रमशो भवेत् ॥' नारदकश्यपौ—'शूद्र-तस्करवैश्यक्ष्मादेवभूपगवां क्रमात् । अनुक्तानां च सर्वेषां घोराद्याः सुखदाः स्मृताः ॥' क्ष्मादेवाः=ब्राह्मणाः । अनुक्तानां=चांडालादीनाम् । ननूक्तं वक्ष्य-माणं वा शुभाशुभफलं सायनांशसंक्रांतितः कुतो न विचार्यत इति चेत् । उच्यते,—सायनांशसंक्रांतेः स्नानदानजपादावेव कार्यं न सर्वत्र । यदाह पुलस्त्यः—'स्नानदानजपश्राद्धव्रतहोमादिकर्मसु । सुकृतं चलसंक्रांतावक्षयं पुरुषोऽश्नुते ॥' इति । चलसंक्रांतिः=सायनांशसंक्रांतिः । अतश्चलसंक्रांतेः परि गणितस्नानादिकविषयत्वादेव कृत्यांतरेषु विवाहादिशुभकर्मसु संक्रांतिमासांगी-कारे शुभाशुभफलकथने च नास्या उपयोग इति युक्तमुत्पश्यामः । इदं चाग्रे सम्यक्तया निर्णेष्यते ॥ १ ॥

अथ दिनरात्रिविभागेन संक्रांत्यशुभफलमुत्तरायणदक्षिणायनसंज्ञां च सार्ध-वसंततिलकयाह—

त्र्यंशे दिनस्य नृपतीन्प्रथमे निहंति
मध्ये द्विजानपि विशोऽपरके च शूद्रान् ॥ २ ॥
अस्ते निशाप्रहरके[1] च पिशाचकादी-
न्नक्तंचरानपि नटान्पशुपालकांश्च ।
सूर्योदये सकललिंगिजनं च सौम्य-
याम्यायनं मकरकर्कटयोर्निरुक्तम् ॥ ३ ॥

त्र्यंश इति॥ अत्रार्कसंक्रमणमित्यनुवर्तते। दिनप्रमाणं त्रिभिर्भक्तं घट्यात्मक-स्तृतीयांशो भवति,तत्र दिनस्य प्रथमत्र्यंशेऽर्कसंक्रमणं नृपतीन्हंति। मध्ये द्वितीय-त्र्यंशे द्विजान्ब्राह्मणान्हंति । अपरके तृतीयत्र्यंशे वैश्यान्हंत्येवं सर्वत्र व्याख्येयम् । अस्ते सूर्यास्तसमयेऽर्कसंक्रमणं शूद्रान् । अथ रात्रिसंक्रांतिफलम् । तत्र रात्रि-प्रथमप्रहरे पिशाचकादीन् आदिशब्देन भूतादीन्, द्वितीयप्रहरे नक्तंचरान् राक्षसान्, तृतीयप्रहरे नटाननेकान्, चतुर्थप्रहरे पशुपालकानाभीरान्, सूर्यो-दयसमयेऽर्कसंक्रमणं सकललिंगिजनं पाखंडादिकं हंतीत्यर्थः । 'पाखंडाः सर्व-लिंगिनः' इत्यभिधानात् । यदाहतुर्नारदकश्यपौ–'पूर्वाह्णे नृपतीन्हंति विप्रा-न्मध्यंदिने विशः । अपराह्णेऽस्तगे शूद्रान् प्रदोषे च पिशाचकान् ॥ निशि रात्रिं-चरान्नाट्यकारानपररात्रके । गोचारिणश्च[2] संध्यायां लिंगिनं रविसंक्रमे ॥' इति । संक्रांतेः क्रूरसौम्यवारपरत्वेन फलविशेषमाह वसिष्ठः—'रविरविजभौम-

---

१ निशाप्रहरकेषु इति पाठः । २ गोपानुत्तरसंध्यायामिति पाठः ।

वारे संक्रांतौ दिनकरस्य तन्मासे । पित्तकफानिलजामयनरपतिकलहस्त्व-वृष्टिश्च ॥ बुधगुरुसितचंद्राह्ने सति संक्रांतावनामयं नृणाम् । क्षितिपतिनिकर-क्षेमं सस्यविवृद्धिर्विधर्मिणां पीडा ॥' अत्र मेषसंक्रांतौ विशेषमाह कश्यपः—'यदा मेषगतः सूर्यो भरण्यादिचतुष्टये । सस्यवृद्धिर्भवेत्तत्र वृद्धिरार्द्राचतुष्टये ॥ मघादिदशके हानिः क्षेमं चानुक्तभेषु च ॥' अस्यार्थः—यस्मिन्दिने मेषसंक्रम-स्तद्दिने चंद्रो यदि भरण्यादिनक्षत्रचतुष्टये स्यात्तदा सस्यवृद्धिः फलम् । एवमग्रे-ऽपि व्याख्येयम् । अथ जन्मनक्षत्रे संक्रांतिफलं दीपिकायाम्—'यस्य जन्मर्क्षमासाद्ये रविसंक्रमणं भवेत् । तन्मासाद्यंतरे तस्य रोगः क्लेशो धनक्षयः ॥' इति । तत्र शांतिकमपि दीपिकायामुक्तम्—'तगरसरोरुहपत्रै रजनीसि-द्धार्थलोध्रसंयुक्तैः । स्नानं जन्मन्यृक्षे रविसंक्रांतौ नृणां शुभदम् ॥' इति । अथ संक्रांतिषु वृष्टौ जातायां फलमुक्तं वसिष्ठेन—'अजकन्याझषकर्किणि संक्रांतौ यदि भवेद्वर्षम् । अतुलं क्षेम सुभिक्षं नृपसज्जनगोकुलक्षेमम् ॥ घटचापसिंहमि-थुनसंक्रांतौ यदि भवेद्वर्षम् । आमयडामरभूभृद्युद्धमनर्घं त्ववृष्टिश्च ॥ वृषवृश्चि-कतुलमकरे वृष्टिः स्यात्संक्रमे समये । विस्फोटामयतस्करपीडा वृष्टिः कृशानु-भयम् ॥' इति । अथ सौम्येति । मकरकर्कटयोः संक्रांतिश्चेत्तदा क्रमेण सौम्य-याम्यायनं निरुक्तं कथितम् । मकरे उत्तरायणं कर्कटे याम्यायनं स्यादित्यर्थः । यदाह नारदः—'सौम्ययाम्यायने नूनं भवतो मृगकर्किणोः' इति ॥ २ ॥ ३ ॥

अथावशिष्टानां दशसंक्रांतीनां षडशीतिमुखाः संज्ञा अनुष्टुभाह—

षडशीत्याननं चापनृयुक्कन्याझषे भवेत् ।
तुलाजौ विषुवं विष्णुपदं सिंहालिगोघटे ॥ ४ ॥

षडशीतीति ॥ धनुर्मिथुनकन्यामीनेषु संक्रांतिश्चेत्तदा षडशीतिमुखनाम्नी संक्रांतिः । तुलामेषयोः संक्रांतिर्विषुवनाम्नी । सिंहवृश्चिकवृषकुंभेषु संक्रांति-र्विष्णुपदाख्या । उक्तं च नारदेन—'स्थिरभेष्वर्कसंक्रांतिर्ज्ञेयं विष्णुपदाह्वयं । षडशीतिमुखं ज्ञेयं द्विस्वभावेषु राशिषु ॥ तुलाधराजयोर्ज्ञेयं विषुवं सूर्यसंक्रमे ॥' संज्ञाप्रयोजनं च—'याम्यायने विष्णुपदे चाद्या मध्यास्तुलाजयोः । षडशीत्या-नने सौम्ये परा नाड्योऽतिपुण्यदाः ॥' इति ग्रंथकृदग्रे वक्ष्यति । अथ ननु—'संक्रांतौ यानि दत्तानि हव्यकव्यानि दातृभिः । तानि नित्यं ददात्यर्कः पुन-र्जन्मनि जन्मनि ॥ रविसंक्रमणे पुण्ये न स्नायाद्यदि मानवः । सप्तजन्मसु रोगी स्याद्दुःखभागी हि जायते ॥' इति शातातपोक्तेः स्नानदानश्राद्धादिकृत्यस्य संक्रांतिकालेऽवश्यकर्तव्यता प्रतीयते । तत्र श्राद्धादेरनेकक्षणसाध्यत्वादननु-ष्ठानलक्षणमप्रामाण्यमापद्येत, संक्रांतिकालस्यातिसूक्ष्मत्वात् । तदुक्तं देवी-पुराणे—'सुस्थे नरे सुखासीने यावत्स्पंदति लोचनम् । तस्य त्रिंशत्तमो भाग-स्तत्परः परिकीर्तितः । तस्माच्छततमो भागस्त्रुटिरित्यभिधीयते । त्रुटेः सहस्र-भागो यः स कालो रविसंक्रमे ॥' इति । देवलोऽपि—'संक्रांतिसमयः सूक्ष्मो दुर्ज्ञेयः पिशितेक्षणैः' इति । पिशितेक्षणैः=मनुष्यैः । अतो मुख्यकालानुपलब्धौ गौणकालेऽपि कार्यं, वचनप्रामाण्यात् ॥ ४ ॥

स च गौणकालो निरवधिरित्यतो गौणकालमुपजातिकाछंदःपूर्वार्धेनाह—

संक्रांतिकालादुभयत्र नाडिकाः
पुण्या मताः षोडश षोडशोष्णगोः ।

संक्रांतीति ॥ गणितमार्गेण यः उष्णगोः सूर्यस्य संक्रांतिकाल आगतस्तत उभयत्र पूर्वतः परतश्च षोडश नाड्यो घट्यः पुण्यसंपादकत्वात्पुण्या मताः संमताः । सूर्यसंक्रांतिसमयात् पूर्वं षोडश पश्चाच्च षोडश घटिकाः पुण्यकालो मिलित्वा द्वात्रिंशद्घटिका भवंतीत्यर्थः । तदाह वसिष्ठः—'दिनपतिसंक्रमणात्प्राक् षोडश नाड्यश्च पुण्यकालः सः । परतः षोडश नाड्यः सर्वत्र स्नानदानकार्येषु ॥' ब्रह्मसिद्धांतेऽपि—'संक्रांतेः प्राक् परस्ताच्च सार्धाः षोडश नाडिकाः । त्रयस्त्रिंशत्संक्रमस्य पुण्याः सर्वस्य नाडिकाः ॥' अनेन—'संक्रांतेः पुण्यकालस्तु षोडशोभयतः कलाः' इति स्मृतिवाक्ये यैः पूर्वतः परतश्चाष्टावष्टौ घटिकाः पुण्यकाल इत्येवं षोडशेति व्याख्यातं तदपाकृतं भवति । किंचायमर्थो वासनासिद्धः सूर्यसिद्धांतेऽभिहितः—'अर्कमानकलाः षष्ठ्या गुणिता भुक्तिभाजिताः । तदर्धनाड्यः संक्रांतेरर्वाक् पुण्यं तथा परे ॥' इति । सिद्धांतशिरोमणावपि—'षष्टिघ्नबिंबं ग्रहभुक्तिभक्तं संक्रांतिनाड्योऽखिलधर्मकृत्ये । रवेस्तु ताः पुण्यतमा ग्रहः स्वसंक्रांतिगो मिश्रफलं विधत्ते ॥' इति । वासना चेयम्—यदि ग्रहस्पष्टगतितुल्यकलाभिरहोरात्रमानरूपाः षष्टिघटिका लभ्यंते तदा ग्रहबिंबकलाभिः किमिति त्रैराशिकेन, ग्रहे बिंबकलानां षष्टिर्गुणको ग्रहभुक्तिर्भाजको निष्पन्न इत्यर्थः । एवं सर्वग्रहाणामपि संक्रांतिः स्यात् । तत्र सामान्यतः सूर्यबिंबं त्रयस्त्रिंशत्कलाः । ग्रहगतेर्ह्रासवृद्धिभ्यां बिंबस्यापि ह्रासवृद्धिसंभवात् । तदुक्तं सिद्धांत एव । अत्र तु विस्तरभयादनुपयुक्तत्वाच्च नास्माभिरलेखि । अत एव त्रिंशदेकत्रिंशत्सार्धद्वात्रिंशत्त्रयस्त्रिंशदादिभेदेन स्मृतिषु पुण्यघटिकाभिधानं स्पष्टीकृत्या[1]भेदसंभवाद्भिन्नम् । तदेवं सामान्यतः संक्रांतिषु द्वात्रिंशद्घटिकारूपः पुण्यकालो निर्णीतः । देवीपुराणे तु मंदादिसंज्ञाभेदात्पुण्यकालविशेष एवोक्तः—'द्विचतुष्पंचसप्ताष्ट नव द्वादश एव च । क्रमेण घटिका ह्येतास्तत्पुण्यं पारमार्थिकम् ॥' इति । अस्यार्थः—मंदायामंतरालवर्ति घटिकाद्वयं, मंदाकिन्यां चतस्रो घटिकाः, ध्वांक्ष्यां पंच, घोरायां सप्त, महोदर्यामष्टौ, राक्षस्यां नव, मिश्रायां द्वादश । प्रागभिहितदेवीपुराणोक्तमंदादिसंज्ञावाक्यान्नक्षत्रजनितसंज्ञासु मंदादिष्वयं विचारो न वारप्रयुक्तास्ववचनात् ॥

एवं संक्रांतिषु पुण्यकालमभिधाय इदानीं रात्रिसंक्रांतौ विशेषमुपजात्युत्तरार्धेनाह—

निशीथतोऽर्वागपरत्र संक्रमे
पूर्वापराहांतिमपूर्वभागकौ ॥ ५ ॥

निशीथत इति ॥ निशीथमर्धरात्रं तस्मादर्वाक् पूर्वत्र अपरत्र पश्चाच्च संक्रमे संक्रांतिकाले सति पूर्वापरयोरह्नोः क्रमेणांतिमपूर्वभागकौ पुण्यौ स्याताम् ।

[1] स्पष्टीकृत्याः स्पष्टीकरणस्य अथवा स्पष्टीकृत्या स्पष्टीकरणेनेत्यर्थः ।

भागकाविति 'स्वार्थे कः'। यद्यर्धरात्रात्प्राक् संक्रांतिस्तदा पूर्वदिनस्योत्तरार्धं पुण्यम्। यद्यर्धरात्रादुपरि संक्रांतिस्तदोत्तरदिनस्य पूर्वार्धमेव पुण्यमित्यर्थः। उक्तं च ब्रह्मसिद्धांते—'भवनांतं बिंबमध्यं राज्यर्धात्प्रागुदेति चेत्। स्नानदानादि मध्याह्नात्कुर्यात्पूर्वे गते दिने॥ राज्यर्धादुपरि क्षेत्रं याति चेदन्यथा-र्यमा। अह्न्यागामिनि मध्याह्नात्पूर्वं स्नानादि पुण्यदम्॥ भवनं=राशिः। बिंब-मध्यं-रवेः। क्षेत्रं=राशिः। वृद्धवसिष्ठोऽपि-'अह्नि संक्रमणे पुण्यमहः कृत्स्नं प्रकीर्तितम्। रात्रौ संक्रमणे भानोर्दिनार्धं स्नानदानयोः॥ अर्धरात्रादधस्तस्मि-न्मध्याह्नस्योपरि क्रिया। ऊर्ध्वं संक्रमणे चोर्ध्वमुदयात्प्रहरद्वयम्॥' इति। ननु रात्रौ दिनसंक्रांतिवत् रात्रावपि पुण्यकालसत्त्वात्तदा स्नानादि कुतो न क्रियते यदर्थमयमुद्यम आरब्धः? उच्यते,-'रात्रौ स्नानं न कुर्वीत दानं चैव विशेषतः' इति सुमंतुवाक्याद्रात्रौ स्नानाद्यधिकाराभावात्। यत्तु नैमित्तिकं ग्रहणादि-प्रयुक्तं तद्भवत्येव। 'नैमित्तिकं च कुर्वीत स्नानं दानं च रात्रिषु।' इति सुमंतुवाक्यशेषात्॥ ५॥

अर्धरात्रसमये संक्रमणे मकरकर्कटयोश्च विशेषमुपजातिकयाह—

**पूर्णे निशीथे यदि संक्रमः स्याद्दिनद्वयं पुण्यमथोदयास्तात्।**
**पूर्वं परस्ताद्यदि याम्यसौम्यायने दिने पूर्वपरे तु पुण्ये॥ ६॥**

पूर्ण इति॥ 'अर्धरात्रनिशीथौ द्वौ द्वौ यामप्रहरौ समौ' इत्यभिधानादर्ध-रात्रं निशीथशब्दवाच्यम्। तस्मिन्निशीथे पूर्णे रात्रिद्वितीयप्रहरांतिमपला-वच्छिन्ने यदि संक्रमः स्यात्तदा प्रागपरं दिनद्वयं पुण्यमुक्तम्। उक्तं च वृद्ध-वसिष्ठेन-'पूर्णे चेदर्धरात्रे तु यदा संक्रमते रविः। प्राहुर्दिनद्वयं पुण्यं मुक्त्वा मकरकर्कटौ॥' इति। ब्रह्मसिद्धांतेऽपि-'यद्यर्धरात्र एव स्यात्संपूर्णे संक्रमो रवेः। तदा दिनद्वयं पुण्यं स्नानदानादिकर्मसु॥' अथ 'मुक्त्वा मकरकर्कटौ' इत्युक्तं, तत्र मकरकर्कटयोस्तु कथमित्यत आह—अथेति। अथानंतरमुदया-स्तात्सूर्योदयास्ताच्च पूर्वं परस्ताच्च यदि याम्यसौम्यायने कर्कमकरसंक्रांती भवत-स्तदा पूर्वपरदिने पुण्ये स्याताम्। यदि सूर्योदयात्पूर्वं कर्कसंक्रमणं स्यात्तदा पूर्वदिन एव पुण्यकालो न परदिने॥ तथा यदि सूर्यास्तादनंतरं मकरसंक्रांतिः स्यात्तदोत्तरदिने एव पुण्यकालो न पूर्वदिने। तदाह वृद्धगार्ग्यः—'यदास्त-मयवेलाया मकरं याति भास्करः। प्रदोषे वार्धरात्रे वा स्नानं दानं परेऽहनि॥ अर्धरात्रे तदूर्ध्वं वा संक्रांतौ दक्षिणायने। पूर्वमेव दिनं ग्राह्यं यावन्नोदयते रविः॥' इति। अस्तसमयवेलाया इति पंचम्यंतं पदम्। वाशब्द इवार्थे। भविष्योत्तरपुराणेऽपि—'कार्मुकं तु परित्यज्य मृगं संक्रमते रविः। प्रदोषे वार्धरात्रे वा स्नानं कुर्यात्परेऽहनि॥ मिथुनात्कर्कसंक्रान्तिर्यदि स्यादंशु-मालिनः। प्रभाते वा निशीथे वा कुर्यादहनि पूर्वतः॥' इति। प्रदोषलक्षणं स्कंदपुराणे—'त्रिमुहूर्तः प्रदोषः स्याद्रवावस्तंगते सति' इति॥ ६॥

'अथोदयास्तात्' इति वचनस्याप्यपवादमिंद्रवंशाछंदसाह—

**संध्या त्रिनाडीप्रमितार्कबिंबादर्धोदितास्तादध ऊर्ध्वमत्र।**
**चेद्याम्यसौम्ये अयने क्रमात्तः पुण्यौ तदानीं परपूर्वघस्रौ॥७॥**

---

१ समयावच्छिन्न इति पाठः।

अर्धेति ॥ अर्कबिंबादर्कमंडलादर्धोदितात्तादर्धोदितादर्धास्ताच्च ऊर्ध्वं च क्रमात् त्रिनाड्यः त्रिघटिकास्ताभिः प्रमिता संध्या संध्याकालः स्यात् । अर्धोदितार्कबिंबात्पूर्वं त्रिघटीप्रमिता प्रातःसंध्या तथार्धास्तादर्कबिंबादुपरि त्रिनाडीप्रमिता सायंसंध्येत्यर्थः । तदाह वराहः–'अर्धास्तमितानुदितात्सूर्यादस्पष्टभं नभो यावत् । तावान्संध्याकालश्चिह्नैरेतैः फलं ब्रूयात् ॥' इति । तत्प्रमाणमाह नारदः–'अर्धास्तमयसंध्या हि घटिकात्रयसंमिता । तथैवार्धोदयात्प्रातर्घटिकात्रयसंमिता ॥' इति । स्कंदपुराणेऽपि–'उदयात्प्राक्तनी संध्या घटिकात्रयमुच्यते । सायंसंध्या त्रिघटिका ह्यस्तादुपरि भास्वतः ॥' इति । अत्र संध्यालक्षणे अर्धास्तमितानुदितवाक्यस्य स्कंदपुराणीयवाक्यस्य च व्रीहियववद्विकल्पः । अथ संध्यालक्षणप्रयोजनमाह–अत्रेति । अत्र संध्यायां प्रातःसंध्यायां सायंसंध्यायां च क्रमाद्याम्यसौम्ये अयने दक्षिणोत्तरायणे स्तः तदानीं परपूर्वौ घस्रौ दिवसौ पुण्यौ । 'याम्यसौम्ये अयने' इत्यत्र 'ईदूदेद्द्विवचनं प्रगृह्यम्' इति प्रगृह्यत्वात् 'प्लुतप्रगृह्या अचि–' इति प्रकृतिभावः । यदि प्रातःसंध्यायां दक्षिणायनप्रवृत्तिस्तदा सूर्योदयादनंतरं संपूर्णमहः पुण्यम् । तथा यदि सायंसंध्यायामुत्तरायणप्रवृत्तिस्तदा सूर्यास्तात्पूर्वं संपूर्णमहः पुण्यं स्यादित्यर्थः । यदाह नारदः–'सूर्यस्योदयसंध्यायां यदि याम्यायनं भवेत् । तदोदयादहः पुण्यं पूर्वाह्नः पूर्वतो यदि ॥ सूर्यास्तमयसंध्यायां यदि सौम्यायनं भवेत् । तदहः पुण्यकालः स्यात्परतश्चोत्तरेऽहनि ॥' इति । अत्र यद्युदयसंध्यातः प्राक्कर्कसंक्रमस्तदा प्राग्दिन एव पुण्यकालो नोत्तरदिने । तथा यद्यस्तसंध्यामतिक्रम्य मकरसंक्रांतिस्तदोत्तरदिन एव पुण्यकालो नतु प्राग्दिने इति निष्कृष्टोऽर्थः । अतो वृद्धगार्ग्यादिवाक्यनारदवाक्ययोः प्रदोषसंध्यापदोपादानेन सामान्यविशेषभावोऽवगंतव्यः । यत्तु हेमाद्रौ स्कंदपुराणीयं वाक्यम्–'धनुर्मीनावतिक्रम्य कन्यां च मिथुनं तथा । पूर्वापरविभागेन रात्रौ संक्रमते यदा ॥ दिनांते पंच नाड्यस्तु तदा पुण्यतमाः स्मृताः । उदये च तथा पंच दैवे पित्र्ये च कर्मणि ॥' इति, तदपि संध्याविषयकमेवेत्याहुरभियुक्ताः । विषुवे तु यथाश्रुतमेवेति । अन्यदपि संध्यालक्षणप्रयोजनम्–'प्राक्संध्यागर्जित–' ( ५।४८ ) इत्यादिषु वक्ष्यति । ननु नायमयनपुण्यकालोक्त्युद्यमः सफलः, शास्त्रांतरविरुद्धत्वात् । तथा हि–'अह्नि संक्रमणे पुण्यमहः कृत्स्नं प्रकीर्तितम् । रात्रौ संक्रमणे भानोर्दिनार्धं स्नानदानयोः ॥ अर्धरात्रादधस्तस्मिन्मध्याह्नस्योपरि क्रिया । ऊर्ध्वं संक्रमणे चोर्ध्वमुदयात्प्रहरद्वयम् ॥ पूर्णे चेदर्धरात्रे तु यदा संक्रमते रविः । प्राहुर्दिनद्वयं पुण्यं मुक्त्वा मकरकर्कटौ ॥' इति वृद्धवसिष्ठेनायनव्यतिरिक्तेषु दशसु संक्रमेषु रात्रिगतेषु 'या याः सन्निहिता नाड्यस्तास्ताः पुण्यतमाः स्मृताः ॥' इति कश्यपोक्तसामान्यवाक्यात्प्राप्तं रात्रावेवानुष्ठानं प्रसक्तं 'अह्नि संक्रमणे' इत्यादिनाऽपोह्य दिवैवाऽनुष्ठानं विहितं तत्रापि पर्युदासः क्रियते 'मुक्त्वा मकरकर्कटौ' इति । तस्मान्मकरकर्कटयोः संक्रमणे रात्रावेवानुष्ठानं कर्तव्यमित्युक्तं भवति । अत एवाह याज्ञवल्क्यः–

राहुदर्शनसंक्रांतिविवाहात्ययवृद्धिषु। स्नानदानादिकं कार्यं निशि काम्यव्रतेषु च॥' इति। वसिष्ठोऽपि—'सुतजनने संक्रांतावुपरागे चंद्रसूर्ययोर्नियतम्। रात्रावपि कर्तव्यं स्नानं दानं विशेषतो नृणाम्॥' इति। सुमंतुश्च—'ग्रहणोद्वाहसंक्रांतियात्रार्तिप्रसवेषु च। श्रवणे चेतिहासस्य रात्रौ दानं प्रशस्यते॥' इति। एषु वाक्येषु सामान्यवाचिनोऽपि संक्रांतिपदस्य मकरकर्कटसंक्रांतिपरत्वमवसीयते। यस्तु—'रात्रौ स्नानं न कुर्वीत दानं चैव विशेषतः।' इति निषेधः स संक्रांत्यंतरे व्यवतिष्ठते। अत एवोक्तं कश्यपेन—'स्नानं दानं ग्रहणवत्सौम्ययाम्यायनद्वये' इति। तस्मादयनसंक्रमे रात्रौ सत्यां तत्रैव स्नानदानाद्यनुष्ठातव्यमिति। अत्राहुः—शास्त्रद्वयेन तुल्यबलत्वाद्विकल्पसिद्धौ तत्तद्देशप्रसिद्धशिष्टाचारेण व्यवस्था द्रष्टव्या। तत्र गौर्जरास्तु-कश्यपादिवाक्यमभ्युपेत्य रात्रावयनसंभवे सति रात्रावेव स्नानदानादिकं कुर्वंति। दाक्षिणात्यास्तु—वृद्धगार्ग्यादिवाक्यमंगीकृत्य दिवस एव स्नानदानादि कुर्वन्तीत्यलमतिप्रसंगेन। यदा तु दिने कर्कमकरसंक्रमस्तदा क्रमेण पूर्वोत्तरघटिकानियममाह वृद्धवसिष्ठः—'अतीतानागते पुण्ये द्वे तूदग्दक्षिणायने। त्रिंशत्कर्कटके नाड्यो मकरे विंशतिः स्मृताः॥' इति। उत्तरायणमतीतं सत्पुण्यं कर्कटायनमागामि पुण्यम्। तत्र कर्कटसंक्रांतेः प्राक् त्रिंशद्घटिकाः पुण्याः, मकरे तूत्तरा विंशतिघटिकाः पुण्या इत्यर्थः। अत्र वाक्ये यद्यपि दिनपदानुपादानं तथापि 'यदास्तमयवेलायाम्' इति रात्रिपरविशेषवाक्यालोचनादिदं दिनपरं प्रतिभाति। तथासति केनापि हेतुना समीपघटीषु श्राद्धाद्यनुष्ठानासंभवे परमावधित्वेन त्रिंशदाद्या घटिका अभ्यनुज्ञायंते। यदा तु प्रतिबंधाभावस्तदा 'या याः सन्निहिता नाड्यस्तास्ताः पुण्यतमाः स्मृताः' इति कश्यपोक्तेः समीपघटिकास्वेव श्राद्धादि विधेयम्। 'सन्निहितपरित्यागे कारणाभावात्' इति न्यायाच्च॥ ७॥

अथ पूर्वपराः षोडशघटिकाः पुण्या इति पूर्वं सामान्येनोक्तमिदानीं विष्णुपदादिषु संक्रमेषु विशेषमनुष्टुभाह—

**याम्यायने विष्णुपदे चाद्या मध्यास्तुलाजयोः।**
**षडशीत्यानने सौम्ये परा नाड्योऽतिपुण्यदाः॥ ८॥**

याम्येति॥ याम्यायने कर्कसंक्रांतौ तथा विष्णुपदे वृषसिंहवृश्चिककुंभसंक्रांतिषु संक्रांतिकालादाद्या नाड्यः प्रथमाः षोडशघटिकाः अतिपुण्यदाः स्नानदानादावनंतफलदा ज्ञेयाः। अग्रिमास्तु न तथेति निष्कृष्टोऽर्थः। तुलाजयोस्तुलामेषयोः मध्या उभयतः षोडश षोडश घटिकाः पुण्याः। अथवा षोडशैव घटिकाः पुण्याः। षडशीत्यानने मिथुनकन्याधनुर्मीनसंक्रांतिषु तथा सौम्ये मकरसंक्रांतौ संक्रांतिकालात्परा अग्रिमाः षोडश घटिका अतिपुण्यदाः। प्रथमास्तु न तथेति निष्कृष्टोऽर्थः। यदाह श्रीपतिः—'याम्यायने

विष्णुपदे तथादौ दानाद्यनंतं विषुवे च मध्ये । यदंत्यतीते षडशीतिवक्त्रे महर्षयः खल्वयने च सौम्ये ॥' तत्र कर्के प्रागेव मकरसंक्रांतौ पश्चादेव पुण्यकाल इति तु प्राङ्गिरणायि । विष्णुपदे तु अग्रिमादिमघटीनां पुण्यकाले तरतमभावः । 'पुण्यायां विष्णुपद्यां च प्राक् पश्चादपि षोडश' इति वृद्धवसिष्ठोक्तवाक्येनास्यैकवाक्यतावशात् । विषुवे तु सामान्यनिर्णय एवेति केचित् । दीपिकाटीकाकारस्त्वेवमाह-'मेषे तुलायां च संक्रांतिमध्ये एव संक्रांतिकालात्पूर्वमष्टौ घटिकाः परतश्चाष्टौ घटिकाः पुण्यकालः' इति । युक्तं चैतत् । 'विषुवे च मध्ये' इति मध्यपदोपादानान्मध्ये षोडश घटिकाः पुण्या इत्युच्यते । कस्मात्कालान्मध्य इत्यपेक्षायां संक्रांतिकालादेवेत्यतः पूर्वमष्टौ पश्चाच्चाष्टौ घटिकाः पुण्या इत्यर्थः । यदुक्तं बृहस्पतिना—'वर्तमाने तुला मेषे नाड्यस्तूभयतो दश' इति तुलामेषसंक्रांतिकालात्प्राक् पश्चाच्च पंच पंच घट्यः पुण्या इति । यदप्युक्तं आद्यंतसापेक्षत्वान्मध्यशब्दस्य गणितागतपुण्यकालघटिकानां मध्यत्रिभागः स्थूलदृशा दशघटिकात्मको भवतीति तदंतिपुण्यतमत्वसूचनार्थम् । 'या याः सन्निहिता नाड्यः' इति कश्यपोक्तेः । षडशीतिमुखेऽप्याद्याग्रिमघटीनां पुण्यकाले तरतमभावः । यत्तु 'षडशीत्यां व्यतीतायां षष्टिस्तुल्यास्तु नाडिकाः' इति वृद्धवसिष्ठवाक्यं तत्प्राग्घटीषु प्रतिबंधवशाच्छ्राद्धादरसंभवे सत्यंतिमघटीषु श्राद्धादिक्रियाभ्यनुज्ञायाः परमावधिकालोक्त्यर्थम् । इदं सर्वं दिनसंक्रांतिविषयं वेदितव्यम् । 'अह्नि संक्रमणे पुण्यमहः कृत्स्नं प्रकीर्तितम्' इति सामान्यवाक्यस्य 'सौ(या ?)म्यायने विष्णुपदे' इत्यस्य च विशेषवाक्यस्यैकवाक्यतावशतः । अत एव-'रात्रौ संक्रमणे भानोर्दिनार्धं स्नानदानयोः' इति रात्रिपरविशेषस्य सत्त्वाच्च । एवं निर्णीते पुण्यकाले स्नानदानाद्यवश्यं विधेयमिति फलितोऽर्थः । तत्र स्नानदानाद्यकुर्वतश्च प्रत्यवायमाह वसिष्ठः—'इति संचिंत्य विनिर्णयमादेष्टव्यं सदैव दैवज्ञैः । विषुवत्ययने ग्रहणे संक्रांतौ पुण्यदिवसे वा ॥ पितृतृप्तिं न करोति हि दत्त्वा शापं व्रजति तस्य पिता । आगतगतसमयेऽपि च करोति यद्दानजपहोमाद्यम् ॥ ऊपरवापितबीजं यद्वत्तद्वच्च निष्फलं भवति ॥' इति । अयने अयनप्रवृत्त्याख्ये चलसंक्रमण आगतगतसमये निर्णीते पुण्यकालातिरिक्तसमये स्नानादि नि—मित्यर्थः । संक्रांतिषु स्नानदानादेः फलमाह भारद्वाजः—'षडशीत्यां तु यद्दानं यद्दानं विषुवद्द्वये । दृश्यते सागरस्यांतस्तस्यांतो नैव दृश्यते ॥' वृद्धवसिष्ठोऽपि—'अयने कोटिपुण्यं च सहस्रं विषुवे फलम् । षडशीत्यां सहस्रं तु फलं विष्णुपदेषु च ॥' इत्यलमतिप्रसंगेन । इति सूर्यसंक्रांतिनिर्णयः ॥ अथ नायं केवलं सूर्यसंक्रमण एव पुण्यकालः किंतु चंद्रादीनां ग्रहाणां नक्षत्रसंक्रमे राशिसंक्रमे च पुण्यकालो भवति, सोऽपि सोपपत्तिकः प्रसंगतः प्रोच्यतेऽस्माभिः । यदाह जैमिनिः—'नक्षत्रराश्योः रविसंक्रमे स्युरर्वाक् परत्रापि रसेंदुनाड्यः । पुण्यास्त्वथेंदोस्त्रिधरापलैर्युगेकैर्वे नाडी मुनिभिः शुभोक्ता ॥ १ ॥ नाड्यश्चतस्रः सपलाः कुजस्य बुधस्य तिस्रो मनवः पलानि ॥ षड्भ्यद्रिघनाड्यः पलसप्तयुक्ता गुरौ च शुक्रे सपलाश्चतस्रः ।

१ [illegible] इति पाठः

॥ २ ॥ द्विनागनाड्यः पलसप्तयुक्ताः शनैश्चरस्याभिहिताः सुपुण्याः । आद्यंतमध्ये जपदानहोमं कुर्वन्नवाप्नोति सुरेंद्रधाम ॥ ३ ॥' अस्यार्थः—सूर्यस्य नक्षत्रसंक्रमे राशिसंक्रमे च प्राक् परतश्च षोडशघटिकाः पुण्याः । एवं चंद्रस्यैका घटी त्रयोदश पलानि । भौमस्य चतस्रो घटिका एकं पलम् । बुधस्य तिस्रो घटिकाश्चतुर्दश पलानि । गुरोश्चतुश्चत्वारिंशद्घटिकाः सप्त पलानि । शुक्रस्य चतस्रो घटिकाः पलमेकम् । शनेर्द्व्यशीतिर्घटिकाः सप्त पलानि चोभयतः पुण्यकाल इत्यर्थः । यथा—सू. चं. मं. बु. गु. शु. श. ग्रहाः । अत्रोपपत्तिः—

| सू. | चं. | मं. | बु. | गु. | शु. | श. | ग्रहाः |
|---|---|---|---|---|---|---|---|
| १६ | १ | ४ | ३ | ४४ | ४ | ८२ | घटी. |
| ० | १३ | १ | १४ | ७ | १ | ७ | पला. |

'भानोर्गतिः स्वदशभागयुतार्द्धिता वा बिंबं विधोस्त्रिगुणिता युगशैल ७४ भक्ता ॥ तिथ्यद्रि ७१५ हीनशशि भुक्तिरिषुद्वि २५ भक्ता नंदाश्वि २९ युग्भवति वा विधुबिंबमेवम् ॥' इति सिद्धांतशिरोमण्युक्तप्रकारेण रविचंद्रयोर्मानकला आनेयाः । 'व्यंघ्रीषवः सचरणा कृतवह्निभागयुक्ताद्रयो नव च सत्रिलवेषवश्च । स्युर्मध्यमास्तनुकलाः क्षितिजादिकानां त्रिज्याग्रुकर्णविवरेण पृथग्विनिघ्नाः ॥' इति तत्रैवोक्ताः भौमादीनां मानकलास्तत्र क्रमेण मानकलाः ॥ सू.चं.मं.बु.गु.शु.श.

| सू. | चं. | मं. | बु. | गु. | शु. | श. |
|---|---|---|---|---|---|---|
| ३२ | ३२ | ४ | ६ | ७ | ९ | ५ |
| ३१ | १ | ४५ | १५ | २० | ० | २० |

तत्र 'षष्टिघ्नबिंबं ग्रहभुक्तिभक्तं संक्रांतिनाड्योऽखिलधर्मकृत्ये । रवेस्तु ताः पुण्यतमा ग्रहः स्वसंक्रांतिगो मिश्रफलं विधत्ते ॥' इति भास्करोक्तदिशा संक्रांतिनाड्यः स्युः । तत्र ग्रहभुक्तयस्तेनैवोक्ताः 'नंदाक्षा भुजगा रवेः शशिगतिः स्वांकाद्रयोऽक्षाग्रयस्तुंगस्यांगकलाः कुवेदविकलाः पातस्य रामाभवाः । माहेयस्य महीगुणा रसकरा ज्ञस्येषुसिद्धा रदाः पंचेज्यस्य सितस्य षण्णवमिता अष्टौ शनेर्द्वे कले ॥' इति । बुधशुक्रयोस्तु संक्रांतिघटिकानयने सूर्यगतिरेव हारः कक्ष्यस्तद्गतितुल्यत्वात्तयोः । वासना भाष्ये हि । 'बुधशुक्रौ तु रवेरासन्नावेव कदाचिदग्रतः कदाचित्पृष्ठतस्तस्यानुचराविव सदा व्रजंतौ दृश्येतेऽतस्तयोरपि रविभगणतुल्या एव भगणा इत्युपपन्नम्' इति भास्करेणाभिहितत्वात् । पठ्यमाना तु गतिस्तच्छीघ्रोच्चयोः शीघ्रफलानयनार्थं

वासनासिद्धा जीर्णैः कल्पिता । तदेवं ग्रहगतय इमाः अतो यथोक्त-

| सू. | चं. | मं. | बु. | गु. | शु. | श. | ग्र. |
|---|---|---|---|---|---|---|---|
| ५९ | ७९० | ३१ | ५९ | ५ | ५९ | २ | अं. |
| ८ | ३५ | २६ | ८ | ० | ८ | ० | कला. |

प्रकारेण साधिताः पुण्यकालघटिकाः सूर्यस्य त्रयस्त्रिंशद्घटिका एव, चंद्रस्य द्वे घटिके षड्विंशतिपलानि, भौमस्य नव घटिकाश्चत्वारि पलानि, बुधस्य षट्घटिका विंशतिपलानि, गुरोरष्टाशीतिर्घटिकाः, एवं शुक्रस्य नवघटिका अष्टौ पलानि, शनेः षष्ट्यधिकं शतं घटिकाः, पूर्वापरकालौ मिलित्वा पुण्यकाल इत्यर्थः । यथा

| र. | चं. | मं. | बु. | गु. | शु. | श. | र. | चं. | मं. | बु. | गु. | शु. | श. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १६ | १ | ४ | ३ | ४४ | ४ | ८० | ३३ | २ | ९ | ६ | ८८ | ९ | १६० |
| ३० | १३ | ३२ | १० | ० | ३४ | ० | ० | २६ | ४ | २० | ० | ८ | ० |

अत्र वासना प्रागुक्ता । एतदर्धनाड्यः प्राक्परतश्च पुण्याः । अत्र गणितागतघटीपलेषु लिखितजैमिनिवाक्ये च क्वचित्किंचित्पलभेदो घटिकाभेदश्च स गतिस्पष्टकृतिवशतः । युक्तं चैतत् । आकाशे हि वेधादिना स्पष्टा एव खगा दृश्यंते न मध्यमाः । 'दिनद्वयस्पष्टखगांतरालकालः स्फुटस्तु स्फुटभुक्तिबिंबैः' इति स्पष्टगत्यैव बिंबसंक्रांतिघट्यानयनमुचितम् । उक्तं च केशवार्केण— 'कुजादिकानामपि बिंबलिप्ताः षष्ट्या गुणाः स्वस्वजवेन भक्ताः । नाड्यादिकः संक्रमणांतरालकालः स्फुटस्तु स्फुटभुक्तिबिंबैः ॥' इति । अपिशब्दात्सूर्याचंद्रमसोर्ग्रहणं । तथात्मनि मध्यमापेक्षया स्पष्टगतिबिंबयोरुपचयापचयसाम्यैस्तत्तद्घटिकानामप्युपचयापचयसाम्यानि क्रमेणापतंति । तेषां चानियतत्वात्पद्ये उपनिबंधायोगात् जीर्णैर्नियतमध्यगत्या सूर्यादीनां ग्रहाणां पुण्यकालघटीरानीयोपनिबंधः कृतः । अत्र मत्कृतं पद्यम्—'नाड्यो रामगुणा ३३ रवेरथ विधोः षट्दोःपलैर्युग्द्वयं २।२६ भौमस्याब्धिपलैर्युता नव ९।४ विदो युक्ताः पलैः खाश्विभिः । षण्णाड्यो ६।२० ऽष्टगजा ८८ गुरोरथ भृगोर्नंदाः पलैरष्टभिः ९।८ पुण्याः स्युः खनृपाः १६० शनेरुभयतो राश्यृक्षयोः संक्रमे ॥' अतो यो जैमिनिवाक्ये–'सार्धाश्चतस्रः पलसप्तयुक्ता गुरोः' इति पाठो माधवादिभिरपाठि । तथा हेमाद्रिणापि—'द्विनागनाड्यो' इति पदे नागा अष्टौ द्विरावृत्ता नागा द्विनागाः षोडशनाडिकाः शनैश्चरसंक्रांतौ पुण्यकाल इति यत् व्याख्यायि च तदुभयमपाकृतं भवति । तथा च रामचंद्राचार्या अपि कालनिर्णयदीपिकायां हेमाद्र्यादिमूलकमसुमर्थं स्वपद्येनोपनिबध्नंत-

स्त्रिलोकयो ज्ञेयाः। तस्मात्सर्वग्रहाणां राशिनक्षत्रयोः संक्रांतिषु पुण्यकालताऽस्ति। भास्करोऽपि-'रवेस्तु ताः पुण्यतमाः' इति वदंश्चंद्रादिसंक्रांतिषु नाल्पः पुण्या इत्यसूचयत्। 'अतिशायने तमबिष्ठनौ' इति पाणिनिवचनात् 'ग्रहः स्वसंक्रांतिगो मिश्रफलं विधत्ते' इति सूर्यादिसंक्रांतिसाधारणं, तत्र सकलसंक्रांतिषु दिनरात्रिविष्णुपदादिभेदेन सूर्यसंक्रमवन्निर्णयो ध्येयः। एतत्संक्रांतिमान्यता हि गुर्जरदेशेऽस्तीत्यलं प्रसक्तानुप्रसक्तेन॥ इति सकलग्रहसंक्रांतिनिर्णयः॥ ८॥

अथैवं निरयनांशसंक्रांतिकालमभिधायेदानीं सायनांशग्रहसंक्रांतिषु पुण्यकालमुपजातिकयाह—

**तथायनांशाः खरसाहताश्च स्पष्टार्कगत्या विहृता दिनाद्यैः।**
**मेषादितः प्राक्चलसंक्रमाः स्युर्दाने जपादौ बहुपुण्यदास्ते॥ ९॥**

तथायनांशा इति॥ यथा राशिसंक्रमाः बहुपुण्यदास्तथा चलसंक्रमा अपीति व्यवहितस्तथाशब्दः अयनांशाः षष्ट्या गुण्याः स्पष्टसूर्यगत्या विहृता लब्धैः दिनाद्यैः दिनघटीपलैः कृत्वा मेषादिद्वादशराशिसंक्रांतिकालात्प्राक् चलसंक्रमाः स्युस्ते चलसंक्रमा दाने ब्राह्मणेभ्यो दक्षिणादाने जपादौ जपश्राद्धहोमादौ बहुपुण्यदा भवंति। तदुक्तं वसिष्ठसिद्धांते—'चलसंस्कृततिग्मांशोः संक्रमो यः स संक्रमः। अजागलस्तन इव राशिसंक्रांतिरुच्यते॥' इति। पुलस्त्यः—'अयनांशसंस्कृतो भानुर्नालि चरति सर्वदा। अमुख्या राशिसंक्रांतिस्तुल्यः कालविधिस्तयोः॥ स्नानदानजपश्राद्धव्रतहोमादिकर्मभिः। सुकृतं चलसंक्रांतावक्षयं पुरुषोऽश्नुते॥' इति। रत्नमालायां—'यावद्भिरंशैरयनच्युतिः स्यात्तद्भोग्यकालेन दिवाकरस्य। च्युतिर्भवेद्विष्णुपदादिकानां रहस्यमेतन्मुनिभिः प्रदिष्टम्॥' इति। जाबालिरपि—'संक्रांतिषु यथा कालस्तदयेऽप्ययने तथा। अयने विंशतिः पूर्वा मकरे विंशतिः परा' इति। अयने=चलसंक्रमे। अत्र चलसंक्रमाख्ये मकरायणे पूर्वा विंशतिघटिकाः पुण्यकालः। मकरसंक्रांतौ तु परा विंशतिघटिकाः पुण्यकालः। मकरव्यतिरिक्तैकादशचलसंक्रमेषु तत्तत्संक्रमवत् पुण्यकालो ज्ञेय इत्यर्थ इति माधवो व्याख्यत्॥ अथायनांशानयनं तु सूर्यसिद्धांते—'त्रिंशत्कृत्वो युगे भानां चक्रं प्राक् परिलंबते। तद्गुणाद्भूदिनैर्भक्ताद्द्युगणाद्यदवाप्यते॥ तद्दोस्त्रिघ्ना दशाप्तांशा विज्ञेया अयनाभिधाः। तत्संस्कृताद्ग्रहात् क्रांतिच्छायाचलदलादिकम्। स्फुटं दृक्तुल्यतां गच्छेदयने विषुवद्वये। प्राक् चक्रं चलितं हीने छायार्कात्करणागते॥ अंतरांशैरथावृत्य पश्चाच्छेषैस्तथाधिके॥' इति च। ते च सांप्रतं सार्धषोडशायनांशा धनगताः संति छायार्कात्करणागतस्य सूर्यस्याल्पत्वात्। अत एव प्राक् इत्युक्तं ग्रंथकर्त्रा। अत्र प्रागित्युपलक्षणम्। कदाचित्संक्रांतिकालात्परतोऽप्ययनांशवशेन चलसंक्रमसंभवात्। तथा च 'पश्चाच्छेषैस्तथाधिके' इत्युक्तम्। वेदांगज्योतिषेऽपि—'प्रपद्येते श्रविष्ठादौ सूर्याचंद्रमसावुदक्। सार्पार्धे दक्षिणार्कस्तु माघश्रावणयोः

सदा ॥' इति । तत्र मेषादिसंक्रांतिकालस्य सौरसावनघटिकात्मकस्य अयनांशानां च सौराणामतुल्यजातीयत्वाद्योगवियोगौ न स्तः । इत्ययनांशानां दिनीकरणायानुपातः । यदि सूर्यस्य स्पष्टगतिभोगेन षष्टिघटिकात्मकं दिनं लभ्यते तदायनांशैः किमिति । तत्रायनांशानां षष्टिर्गुणकः सूर्यस्पष्टगतिर्भाजक इत्युपपन्नम् । लब्धानि सौरसावनदिनानि सघटीपलानि अतस्तुल्यजात्योर्योगो वियोगो वा कार्यः । ननु चैकस्यैव सूर्यस्यैकस्मिन्नेव राशौ राशिसंक्रमणं चल-संक्रमणं च कथं संभवति ? कुतः स्वकक्षास्थिताकाशभागस्य द्वादशधा विभ-क्तस्य राशिरिति संज्ञा ? तत्र रविमंडलस्य तत्तद्राश्यादिमप्रदेशस्पर्शो राशिसंक्र-मणमित्युच्यते तस्मिन्नेव राशौ चलसंक्रमस्तु कीदृश इति चेच्छृणु,-ईश्वरेच्छा-लोकादृष्टवशतस्तद्राश्यादिभागस्य सूर्यतेजःसंपर्कश्चलसंक्रमो मंडलमध्यसंप-र्कश्च राशिसंक्रम इति विषयविवेकः । तद्यथा—रथ्यां प्राक् पश्चाच्च नीयमानस्य दीपस्याग्रे दीपप्रभा यस्मिन् प्रदेशे गच्छति तस्मिन्नेव प्रदेशे क्षणांतरे दीपोऽपि गच्छति । एवं सर्वेषामपि ग्रहाणां चलसंक्रमा द्रष्टव्याः । एवं चलसंक्रमस्य मुख्यत्वमुक्तं रोमशसिद्धांतेऽपि—'दिनरात्रिप्रमाणानां निर्णयो गमसंक्रमात् । यतः सकलकर्माणि पुण्योऽतश्चलसंक्रमः ॥' नन्वेवमयनसंक्रमस्य मुख्यत्वे तेन मानेन पंचांगगणना स्यात्, चंद्रादीनामप्ययनचलनदर्शनात् । न च सायनांशाभ्यां निरयनांशाभ्यां वा सूर्याचंद्रमोभ्यां तिथेस्तुल्यत्वादस्तु पंचांगगणनेति वाच्यम् । अश्विन्यादिभानां विष्कंभादियोगानां च विसंवा-दात् । किंच सायनसंक्रमरहितस्य चांद्रमासस्याधिमासत्वव्यवहारप्रसंगः । तथा तादृक्संक्रांतिद्वययुतस्य क्षयमासत्वव्यवहारप्रसंगः । विवाहादौ च सौरमासगणनाप्यनेनापि मानेन स्यादिति चेत् । उच्यते,-सायनसंक्रमस्तु पुण्यकालार्थमेवोपयुज्यते न सर्वत्र । स्नानदानजपश्राद्धेतिपरिगणितविषयपुल-स्त्यवाक्यालोचनात् । तेन पंचांगगणना न्यूनाधिमाससौरमासादि किमप्यनेन मानेन न भवति । तथा सति यात्रादिमुहूर्तेषु भरणीव्यतीपातादिदुष्टयोगानां गुरुपुष्यादिशुभयोगानां च व्यवहारो निरयनेनैवोपपद्यते न सायनेन । किंच सायनगणनया सर्वथा ग्रहणविसंवादः । तद्यथा—षोडशोत्तरपंचदश १५१६ सभी-मिते शालिवाहनशककाले वैशाखपूर्णिमायां पंचत्रिंशन्नाडीमितायामिन्दूपराग उपलब्धः । तत्र चंद्रः ६।२६।१८ राहुः ११३।५८ अत्र निरयनगणनया शरां-गुलानि १२ मानैक्यखंडं २० ग्रासांगुलानि ८ यद्यत्रायनांशाश्चंद्रे योजयित्वा शर आनीयेत तदा शरोऽगुलादिः ३० अस्य मानैक्यखंडाधिक्याद्ग्रहणं नाया-तीति सर्वजनप्रत्यक्षविसंवादः । सायनगणनया त्वयोग्येऽपि काले ग्रहणोपलंभः स्यात् । अन्यच्च स्पष्टीकरणेन साधितो भौमादिर्ग्रहो यन्नक्षत्रे गणितेनागतस्त-न्नक्षत्रसमीप एवोपलभ्यते प्रत्यक्षतः । सायनत्वे हि ग्रहः कदाचिदेकनक्षत्रांतरे नक्षत्रद्वयांतरे वोपलभ्यते । सूर्यचंद्रयोस्तु तेजोबाहुल्यान्नक्षत्रतेजःपरिभवा-त्तन्नक्षत्रसन्निधौ उपलंभाभावो यद्यपि तथापि कदाचित्क्षीणचंद्रस्याप्युपलंभो दृश्यते । एवं संहितासु मीनशनैश्चरादिविषयकदुष्टफलानि एकराश्यवस्थित-

ग्रहयोगफलानि च निरयणेनैव । तथा वसिष्ठसंहितायाम्—'चद पौष्ण-भाद्वाद्यरौद्रधिष्ण्यान्तुराशिपादानि नव क्रमेण । पूर्वार्धमध्यापरभागत-श्चन्द्रे कुजेऽर्केऽर्कजव्योमचरास्तथैव ॥' इति ग्रहाणां पूर्वार्धमध्यापरभागयोगि-त्वमपि निरयनेनैवोपलभ्यते । तस्मात् निरयनगणनयैव सर्वोऽपि व्यवहारो युक्तः । ननु सायनगणना दत्ततिलांजलिरिति चेत् । उच्यते,—सायनगणना हि नियतविषया । उक्तं च—'अयनांशाः प्रदातव्या लग्ने क्रांतौ चरागमे । सन्निभे विन्निभे याते तथा दृक्कर्मपातयोः ॥' इति । सूर्यसिद्धांतेऽपि—'तत्संस्कृताद्‌ग्रहात्क्रांतिच्छायाचरदलादिकम् । स्फुटं दृक्तुल्यतां गच्छेदयने विषुवद्भवे ॥' इति । आदिशब्देन लग्नम् । अतोऽयनांशानां वासनासिद्धनियत-विषयत्वाद्द्वयोरपि मानयोरसंकीर्णो व्यवहार इति सर्वमनाकुलम् । पुण्यकाल-स्तूभयविधसंक्रमेऽपि ज्ञेयः । पूर्वलिखितवसिष्ठादिवाक्यस्वरसात् । यत्तु वसिष्ठसिद्धांते—'पुण्यदां राशिसंक्रांतिं केचिदाहुर्मनीषिणः । नैतन्मम मतं यस्मात्स्पृशेत्क्रांतिकक्षया ॥' इति, तदयनसंक्रमपुण्यकालाऽतिस्तुतिपरं; न तु राशिसंक्रांतिपुण्यकालनिराकरणार्थम् । अन्यथा—'दिनपतिसंक्रमणात्प्राक् षोडश नाड्यश्च पुण्यकालः सः । परतः षोडश नाड्यः सर्वत्र स्नानदान-कार्येषु ॥' इति स्वसंहितोक्तराशिसंक्रमपुण्यकालप्रतिपादकवचनस्यानेन सह विरोधो दुष्परिहरः स्यादित्यलमतिप्रसंगेन ॥ ९ ॥

अथ संक्रांत्युपयोगित्वाज्जघन्यबृहत्समनक्षत्राण्युपजातिकयाह—

सम मृदुक्षिप्रवसुश्रवोऽग्निमघात्रिपूर्वास्रपभं बृहत्स्यात् ।
ध्रुवद्विदैवादितिभं जघन्यं सार्पांबुपार्द्रानिलशाक्रयाम्यम् ॥१०॥

सममिति ॥ मृदूनि=मृगरेवत्यनुराधाचित्राः, क्षिप्राणि=अश्विन्यभिजित्पुष्यहस्ताः[1], वसु:=धनिष्ठा, श्रव:=श्रवणः, अग्नि:=कृत्तिका, मघा प्रसिद्धा, त्रिपूर्वा=पूर्वाफल्गुनीपूर्वाषाढापूर्वाभाद्रपदाः, अस्रप:=राक्षसः, 'राक्षसः कौणपः क्रव्यात् क्रव्यादोऽस्रपः' इत्यमरः । तस्य भं मूलम् । अत्र समाहार-द्वंद्वः । एतानि पंचदश भानि समसंज्ञानि । ध्रुवाणि=रोहिण्युत्तराः, द्विदैवं=विशाखा, अदितिभं=पुनर्वसुः; एतानि षड्भानि बृहत्संज्ञानि । सार्पं=आश्लेषा, अंबुप:=शततारका, आर्द्रा प्रसिद्धा, अनिल:=स्वाती, शाक्रं=ज्येष्ठा, याम्यं=भरणी; एतानि षड्भानि जघन्यसंज्ञानि । उक्तं च नारदेन—'तारा जघन्याः सार्पेन्द्रा वातार्द्रान्तकतोयपाः । ध्रुवादितिद्विदैवत्यं बृहत्ताराः पराः समाः ॥' इति । वसिष्ठेनापि 'जघन्यधिष्ण्यानि जलेशसर्परौद्रेन्द्रयाम्यानिलदैवतानि । अध्यर्धधिष्ण्यान्यदितिद्विदैवस्थिराणि शेषाणि समाह्वयानि ॥' इति ॥ १० ॥

अथ संज्ञाप्रयोजनमुपेन्द्रवज्रयाह—

जघन्यभे संक्रमणे मुहूर्ताः शरेंदवो १५ बाणकृता ४५ बृहत्सु ।
खराम ३० संख्याः समभे महार्घसमर्घसाम्यं विधुदर्शनेऽपि ११

---

१ अत्र प्राचीनादर्शेषु 'अश्विनीपुष्यहस्ताः' इति पाठो लभ्यते, अत एवाग्रे—'एतानि पंचदश भानि समसंज्ञानि' इति टीकाकृद्भिरभिजिन्नक्षत्रविरहितैव गणनान्यत्रवदत्राप्युचितेति युज्यते ।

जघन्यभ इति ॥ जघन्यनक्षत्रे यदि संक्रमणं तदा शरेंदवः पंचदश मुहूर्ता ज्ञेयाः। बृहन्नक्षत्रे संक्रमणे सति बाणकृताः पंचचत्वारिंशन्मुहूर्ता ज्ञेयाः। समनक्षत्रे संक्रमणे सति खरामसंख्यास्त्रिंशन्मुहूर्ता ज्ञेयाः। उक्तं च नारदेन—'तासां प्रमाणं घटिकास्त्रिंशन्नवतिषष्टयः' इति। अत एव त्रिंशद्घटिकाः पंचदशमुहूर्ताः, नवतिघटिकाः पंचचत्वारिंशन्मुहूर्ताः, षष्टिघटिकास्त्रिंशन्मुहूर्ताः स्युरित्यर्थः। अथास्य फलमुच्यते—महार्घसमर्घसाम्यमिति। यदा पंचदशमुहूर्ता संक्रांतिस्तदा सर्वमन्नं महार्घं दुर्लभं भवति। यदा पंचचत्वारिंशन्मुहूर्ता संक्रांतिस्तदा समर्घं सुलभमन्नम्। यदा तु त्रिंशन्मुहूर्ता संक्रांतिस्तदा साम्यं न महार्घं न समर्घं किंतु यथास्थितमित्यर्थः। इदं तु मुहूर्तानां न्यूनाधिकसमभावाज्जायते। उक्तं च संवित्प्रकाशे—'मुहूर्ताः पंचभूतुल्या जघन्यानां परामिधा। बृहतां पंच वेदास्ते समानां ते खवह्नयः॥ पंचेंदुषु मुहूर्तेषु दुर्भिक्षं रविसंक्रमे। पंचाब्धिषु समर्घं स्यात्त्रिंशत्सु समता मता॥' इति। अथ विधुदर्शनेऽपीति। चंद्रदर्शनेऽप्येवमेव फलं वाच्यम्। अयमर्थः—यदि जघन्यनक्षत्रे चंद्रोदयस्तदा महार्घम्। बृहन्नक्षत्रे चंद्रोदयस्तदा समर्घम्। समनक्षत्रे चंद्रोदयस्तदा साम्यमन्नस्य। उक्तं च रत्नमालायाम्—'बृहत्सु धान्यं कुरुते समर्घं जघन्यधिष्ण्येष्वुदितो महार्घम्। समेषु धिष्ण्येषु समं हिमांशुर्वदंत्यसंदिग्धमिमं महांतः॥' वसिष्ठोऽपि—'धान्यैवमेवं मणिजीवधातुमूलोर्णकर्पूररसादिकानाम्। अर्घं वदेज्ज्यौतिषिकः प्रजानां समर्घवस्तूत्तमसंग्रहार्थम्॥' इति॥ ११॥

अथ प्रसंगात्कर्कसंक्रांतावब्दविंशोपकानुष्टुभाह—

अर्कादिवारे संक्रांतौ कर्कस्याब्दविंशोपकाः।
दिशो नखा गजाः सूर्या धृत्योऽष्टादश सायकाः॥ १२॥

अर्कादिवारे इति॥ कर्कसंक्रांतौ सूर्यादिवारे सत्यामेते वक्ष्यमाणा अब्दविंशोपका ज्ञेयाः। तद्यथा—रविवारे दश, सोमवारे विंशतिः, भौमेऽष्टौ, बुधे द्वादश, गुरौ धृत्योऽष्टादश, शुक्रेऽप्यष्टादश, शनिवारे कर्कसंक्रांतौ सत्यामब्दविंशोपकाः पंचेत्यर्थः॥ १२॥

अथ कीदृशस्य रवेः संक्रमो जातस्तं सफलमिंद्रवज्रयाह—

स्यात्तैतिले नागचतुष्पदे रविः सुप्तो निविष्टस्तु गरादिपंचके।
किंस्तुघ्न ऊर्ध्वं शकुनौ सकौलवेऽनिष्टः समः श्रेष्ठ इहार्घवर्षणे १३

स्यादिति॥ करणानि भद्राप्याख्याने यथोक्तानि। तत्र रविः तैतिलनागचतुष्पदाख्यकरणेषु सुप्तः सन् संक्रमितः स्यात्। गरादिपंचके गरवणिजभद्राबवबालवाख्यकरणेषु निविष्ट उपविष्टः सन्संक्रमितः स्यात्। किंस्तुघ्नशकुनिकौलवाख्यकरणेषु ऊर्ध्वमूर्ध्वस्थितः सन् संक्रमितः स्यात्। इह करणाधिकरणकसंक्रांतौ रविः अर्घवर्षणे अर्घे मूल्ये वर्षणे वृष्टौ अमयोक्तलक्षणस्वाद्वाच्ये-

अपि, क्रमादनिष्टः समः श्रेष्ठः स्यात् । अयमर्थः—सुप्तरविसंक्रमोऽर्घवर्षण-धान्येष्वनिष्टः महार्घवृष्ट्यभावाद्धान्याभावकारको भवति । एवं निविष्टरवि-संक्रमोऽर्घवर्षणधान्येषु समो न शुभो नाप्यशुभः । तथोर्ध्वरविसंक्रमो-ऽर्घवर्षणधान्येषु श्रेष्ठः समर्घवृष्टिबाहुल्यधान्यबाहुल्यकारक इति । उक्तं च नारदेन—'निविष्टो वणिजे विष्ट्यां बालवे च बवे गरे । कौलवे शकुनौ भानुः किंस्तुघ्ने चोर्ध्वसंस्थितः ॥ चतुष्पात्तैतिले नागे सुप्तः क्रांतिं करोति सः । धान्यार्घवृष्टिषु समं श्रेष्ठं हीनं भवेत्क्रमात् ॥' क्रांतिं=संक्रांतिम् । रत्न-मालायामपि—'चतुष्पदे तैतिलनागयोश्च सुप्तो रविः संक्रमणं करोति । विष्ट्यां बवाख्ये च गराह्वये च सबालवाख्ये वणिजे निविष्टः ॥ किंस्तुघ्ननाम्नि शकुनावपि कौलवाख्ये चोर्ध्वस्थितस्य खलु संक्रमणं रवेः स्यात् । धान्यार्घ-वृष्टिषु भवेत्क्रमशस्त्वनिष्टमध्येष्टतेति मुनयः प्रवदंति पूर्वे ॥' इति । अस्या-न्यदपि फलमग्रे वक्ष्यति ॥ १३ ॥

अथ रविसंक्रांतेः करणपरत्वेन वाहनवस्त्रायुधभक्ष्यलेपनजातिपुष्पाणि स-कलानि शार्दूलविक्रीडितत्रयेणोपजातिकया चाह—

सिंहव्याघ्रवराहरासभगजावाहद्विपक्षोटकाः
  श्वाजो गौश्चरणायुधश्च बवतो वाहा रवेः संक्रमे ।
वस्त्रं श्वेतसुपीतहारितकपाण्डारक्तकालासितं
  चित्रं कंबलदिग्घनाममथ शस्त्रं स्याद्भुशुंडी गदा ॥१४॥
खड्गो दंडशरासतोमरमथो कुंतश्च पाशोऽङ्कुशो-
  ऽस्त्रं बाणस्त्वथ भक्ष्यमन्नपरमान्नं भैक्ष्यपक्वान्नकम् ।
दुग्धं दध्यपि चित्रितान्नगुडमध्वाज्यं तथा शर्करा-
  ऽथो लेपो मृगनाभिकुंकुममथो पाटीरमृद्रोचनम् ॥१५॥
यावश्चोतुमदो निशांजनमथो कालागुरुश्चंद्रको
  जातिर्दैवतभूतसर्पविहगाः पश्वेणविप्रास्ततः ।
क्षत्त्रावैश्यकशूद्रसंकरभवाः पुष्पं च पुन्नागकं
  जातीबाकुलकेतकानि च तथा बिल्वार्कदूर्वांबुजम् ॥१६॥
स्यान्मल्लिका पाटलिका जपा च संक्रांतिवस्त्राशनवाहनादेः ।
नाशश्च तद्वस्त्युपजीविनां च स्थितोपविष्टस्वपतां च नाशः ॥१७॥

सिंहेति ॥ खड्गेति ॥ यावश्चेति ॥ स्यान्मल्लिकेति ॥ बवतो ल्यब्लोपे पंचमी । बवमारभ्य सप्त चरकरणानि स्थिराणि चत्वारि शकुन्यादीनि एते-ष्वेकादशसु करणेषु क्रमेण वाहनानि वस्त्राणि तथाऽऽयुधानि भक्ष्याणि लेप-

कानि जातयश्च पुष्पाणि च ज्ञेयानीत्यर्थः । तत्र वाहनानि—सिंहव्याघ्रौ प्रसिद्धौ, वराहः सूकरः, रासभो गर्दभः, गजो हस्ती, वाहद्विषन् महिषः, 'लुलायो महिषो वाहद्विषत्कासरसैरिभाः' इत्यमरः । घोटकोऽश्वः, श्वा कुक्कुरः, अजो मेषः, गौर्वृषः, चरणायुधः कुक्कुटः; एतान्येकादशकरणेषु वाहनानि । एवं बवादीन्यपि व्याख्येयानि । तदाह कश्यपः—'सिंहशार्दूलवाराहखरकुंजर-माहिषाः । तुरगश्वाजवृषभकुक्कुटाश्च बवादिषु ॥ तिथ्यर्धजेषु संक्रांतिवाहनानि यथाक्रमात् ॥' तिथ्यर्ध=करणं । नारदेन तु विशेषोऽभिहितः–'लाटवाह्लीक-वंगेषु संक्रांतेर्धिष्ण्यवाहनम् । अन्यदेशेषु तिथ्यर्धवाहनाः स्युर्बवादयः ॥' इति । यदि संक्रांतिरश्विन्यां तदाऽश्विन्या योनिरश्वस्तद्वाहनं स्यात् लाटवाह्लीक-वंगदेशेषु । एवं सर्वनक्षत्रेषु ज्ञेयम् । अमुमर्थं स्पष्टमाह कश्यपः—'भयोनि-वाहनं वंगवाह्लीकविषये स्मृतो ।' इति । अतोऽन्यदेशेषु करणैरेव वाहन-निर्णय इत्यर्थः ॥ अथ वस्त्रमुच्यते-श्वेतं शुभ्रं, सुपीतं प्रसिद्धं, हारितकं नील-वर्णं, पांडु अरुणवर्णं, आरक्तमलक्तकवर्णं, कालं श्यामवर्णं, असितं कज्जलवर्णं, चित्रमनेकवर्णं, कंबलः प्रसिद्धः, दिक् वस्त्राभावः, नग्नत्वमित्यर्थः । घनाभं मेघवर्णम् । उक्तं च–'श्वेतपीतहरितपांडुररक्तं श्यामवर्णमसितं बहुवर्णम् । कंबलो विवसनांबुदवर्णान्यंशुकानि च रवेः करणेषु ॥' ॥ अथ शस्त्रमुच्यते–तत्र भुशुंड्यादीन्येकादशायुधानि प्रसिद्धानि । शरासः=धनुः । यदाहतु-र्नारदकश्यपौ—'भुशुंडीभिंदिपालासिदंडकोदंडतोमरान् । कुंतपाशांकुशा-स्त्रेषून्बिभर्ति करणेष्विनः ॥' भिंदिपालं गदा, इषुर्बाणः ॥ अथ भक्ष्यमुच्यते–तत्रान्नं मोदकादि, परमान्नं पायसं, भैक्षं भिक्षाणां समूहो भैक्षम्, 'भिक्षा-दिभ्योऽण्' इत्यण् । संन्यासिवद्गृहे गृहे गत्वा यत्किंचिदन्नं प्राप्यते तद्भैक्ष-मुच्यते । पक्वान्नकं अपूपादि, दुग्धं दधि च प्रसिद्धमेव, चित्रितान्नं बहुभिस्तं-दुलमुद्गमसूरिकाहरिद्रादिभिः पक्वमन्नं, गुडमध्वाज्यशर्कराः प्रसिद्धाः । उक्तं च नारदेन—'अन्नं च पायसं भैक्ष्यमपूपं च पयो दधि । चित्रान्नगुडमध्वाज्य-शर्करा च बवादिषु ॥' ॥ अथ लेपो विलेपनमुच्यते–तत्र मृगनाभिः कस्तूरी, कुंकुमं प्रसिद्धं, पाटीरं रक्तचंदनं, मृत् प्रसिद्धा, रोचनं गोरोचनं, यावोऽलक्तकः, ओतुमदो मार्जारघर्मः, दक्षिणदेशभाषया 'जवादी'त्युच्यते, निशा हरिद्रा, अंजनं स्रोतोंजनं, 'सुरमे'ति भाषायां, कालागुरुः अगरुविशेषः, चंद्रकः कर्पूरः । उक्तं च–'कस्तूरिकाकुंकुमचंदनं मृद्गोरोचनं यावक ओतुघर्मः । निशांजनं चागुरुरिंदुरेभिर्विलेपनं संक्रमणे बवात्स्यात् ॥' अथ जातिरुच्यते–दैवतादयो दश प्रसिद्धाः, संकरभवाः अनुलोमजाः प्रतिलोमजाश्च । उक्तं च–'देवभूताहिविहगाः पशवो मृग एव च । ब्राह्मणक्षत्रियौ वैश्याः शूद्रा मिश्रा बवादिषु ॥ तज्जातीया विनश्यंति षण्मासाभ्यंतरे ध्रुवम् ॥' इति ॥ अथ पुष्पाण्युच्यंते–पुन्नागकं नागकेसरवृक्षस्य पुष्पं, जात्यादी-न्यंबुजांतानि प्रसिद्धानि, मल्लिका वेलिः, पाटलिका पाटलिः, जपा ओंढ्र-पुष्पम् । उक्तं च–'पुन्नागजातीबकुलाः सुकेतकीबिल्वार्कदूर्वाशतपत्र-

मल्लिकाः। ततो भवेत्पाटलिकाजपा ततः पुष्पाणि सूर्यस्य ववादिषु क्रमात् ॥' शतपत्रं=कमलम्। कश्चिद्ग्रंथोऽप्युक्तम्-'शिशुः कुमारश्च गताक्षका युवा प्रौढा प्रगल्भा च ततश्च वृद्धा । वंध्यातिवंध्या च सुतार्थिनी च प्रव्राजिका चेति ववादिकानाम् ॥ यद्यद्वयोनुरूपं स्यात्तस्य तस्य महद्भयम्' इति। कश्चिद्-वस्था अप्युक्ताः-'पंथाश्च भोगो रतिहास्यदुर्मुखी ज्वरान्विता शुष्कसुकंपिता मृता। ध्यानस्थिता कर्कशवृद्धरूपा ववाद्यवस्थाः कथिता मुनींद्रैः ॥' एवं च संक्रमकाले यानि वस्त्राशनवाहनादीन्यभिहितानि, आदिशब्देनायुधलेपन-जातिपुष्पाणि, तेषां नाशो भवेत् । च पुनस्तद्द्रव्युपजीविनां नाशो भवेत्। स्थितोपविष्टस्वपतां च 'स्यात्तैतिले' इत्यादिना सुप्तत्वादीन्युक्तानि तद्गुणविशि-ष्टानां नाशः स्यादित्यर्थः। उक्तं च नारदेन—'आयुधं वाहनाहारौ यज्जातीयं धनं च यत्। सुप्तोपविष्टतिष्ठंतस्ते लोकाः क्षयमाप्नुयुः ॥' इति ॥ १४-१७ ॥

अथ संक्रांतिवशेन प्रतिमनुष्यं शुभाशुभफलमुपजात्याह—

**संक्रांतिधिष्ण्याधरधिष्ण्यतस्त्रिभे स्वभे निरुक्तं गमनं ततोऽङ्गभे।**
**सुखं त्रिभे पीडनमंगभेंऽशुकं त्रिभेऽर्थहानी रसभे धनागमः॥१८॥**

संक्रांतीति ॥ संक्रांतिर्यस्मिन्धिष्ण्ये नक्षत्रे स्यात्ततोऽधरधिष्ण्यं पूर्वनक्षत्रं तस्मात्स्वजन्मनक्षत्रं गण्यं, तच्चेत्प्रथमे त्रिभे भवति तदा गमनं यात्रा स्यात्। ततः प्रथमत्रिकादनंतरमंगभेषु षण्णक्षत्रेषु यदि स्वभं तदा सुखं स्यात्। ततस्त्रिभे स्वभे पीडनं शरीरपीडा, पुनरंगभे स्वभे अंशुकं वस्त्रादिप्राप्तिः स्यात्। ततस्त्रिभे स्वभेऽर्थहानिः द्रव्यनाशः । ततो रसभे षण्नक्षत्रे स्वभे धनागमो द्रव्यप्राप्तिः स्यादित्यर्थः । उक्तं च नारदेन—'संक्रांतेर्ग्रहणर्क्षं वा जन्मन्युभयपार्श्वयोः। नेष्टं त्रयं षट् शुभदं पर्यायाच्च पुनः पुनः ॥ हानिर्वृद्धिः स्थानहानिस्तथा प्राप्तिरिति क्रमात् ॥' संक्रांतेर्यन्नक्षत्रं ग्रहणनक्षत्रं वा यदि जन्मभं भवेदथवा ताभ्यामुभयपार्श्वगतं जन्मभं भवेत्तदा अनिष्टमेव नक्षत्र-त्रयं निषिद्धम्। ततो नक्षत्रषट्कं शुभं, ततस्त्रिकेऽर्थहानिः, ततः षट्के वृद्धिः, ततस्त्रिके स्थानहानिः, ततः षट्सु वृद्धिः (?) षट्सु स्थानप्राप्तिरिति। अत एव पठंति दाक्षिणात्याः-'संक्रांत्यधरनक्षत्राद्गणयेज्जन्मभावधि । त्रिकं षट्कं त्रिकं षट्कं त्रिकं षट्कमिति क्रमात्। पंथा भोगो व्यथा वस्त्रं हानिश्च विपुलं धनम् ॥' इति। त्रिकमशुभं षट्कं शुभमिति फलितोऽर्थः । अत्राशुभफलदायां संक्रांतौ सत्यां दानमाह नारदः—'तिलोपरि लिखेच्चक्रं त्रिस्त्रिशूलं त्रिकोणकम्। तत्र हेम विनिक्षिप्य दद्याद्दोषापनुत्तये ॥' इति । अत्र चक्राकृतिरियम्। एवं संक्रांतिसंबंधि फलमभिहितम् ॥ १८ ॥

अथ कार्यविशेषे बलं सामान्यतः संक्रममाणग्रहबलं चोपजात्याह—

**नृपेक्षणं सर्वकृतिश्च संगरः शास्त्रं विवाहो गमदीक्षणे रवेः।**
**[1]वीर्येऽथ तारावलतः शुभो विधुर्विधोर्बलेऽर्कोऽर्कबले कुजादयः॥१९॥**

---

१ 'वीर्येऽथ तारावलतो विधुर्विधोर्बलाद्रविस्तद्बलतः शुभाःपरे ॥' इति पाठो दृश्यते स एव टीकानुगुणो लिखितपुस्तकानुसारी चेति ज्ञेयम्।

नृपेक्षणमिति ॥ रवेरिति ल्यब्लोपे पंचमी, रविमारभ्येत्यर्थः। रवेः सूर्यस्य वीर्ये बले सति सूर्यवारे वा नृपेक्षणं राजदर्शनं विधेयम्। एवं चंद्रादावपि व्याख्येयम्। ततश्चंद्रे सर्वकृतिः सर्वकृत्यानि, भौमे संगरो युद्धं, बुधे शास्त्रमध्येतव्यमध्याप्यं वा, गुरौ विवाहः, शुक्रे गमो गमनं, शनौ दीक्षणं यागादिदीक्षा विधेयेत्यर्थः। उक्तं च श्रीपतिना—'रविर्नृपविलोकने सुरगुरुर्विवाहोत्सवे रणे धरणिनंदनो भृगुसुतः प्रयाणे बली। शनिश्च मखदीक्षणे सकलशास्त्रबोधे बुधः शशी सकलकर्मसु ध्रुवमुदाहृतः सूरिभिः॥' वसिष्ठेनापि—'राजालोकनसमये रविरार्यः करतलग्रहे सुबली। रणसमये धरणिसुतः प्रयाणसमये सितोऽतिबली॥ दीक्षणसमयेऽर्कसुतः शशितनयो ज्ञानशिल्पविधौ। निखिलेष्वपि कार्येषु च चंद्रबलं मुख्यमखिलनृणाम्॥' इति। एतान्यपि कार्याणि सबलग्रहवारे क्रियमाणानि सिध्यंतीत्याह वसिष्ठः—'बलप्रदस्य ग्रहवासरे यद्यथोपदिष्टं समुपैति सिद्धिम्। सुदुर्बलस्य ग्रह वासरे तत्प्रयत्नपूर्वं त्वपि नैव साध्यम्॥' इति। ग्रहेति लुप्तषष्ठीकं पृथक्पदं ग्रहस्येत्यर्थः। बलप्रदत्वदुर्बलत्वे गोचरप्रकरणोक्तविहिताशुभस्थानवशेन ज्ञेये। तदाह श्रीपतिः—'वारे ग्रहस्योपचयावहस्य कार्यं यथोद्दिष्टमुपैति सिद्धिम्। भवेत्तदेवापचयावहस्य प्रयत्नतो निर्मितमप्यसाध्यम्॥' इति ॥ अथेति। ताराबलतो विधुः शुभो ज्ञेयः। यदा चंद्रसंक्रमणं स्यात्तत्र ताराबलं चेत्स्यात्तदा सपाददिनद्वयं चंद्रोऽशुभोऽपि शुभः। तारादौष्ट्ये तु शुभोऽप्यशुभ इत्यर्थः। एवं विधोर्बलाद्रविः संक्रमणेऽशुभोऽपि मासपर्यंतं शुभः, शुभस्तु सुतरां समीचीन एव, चंद्रदौष्ट्ये तु शुभोऽप्यशुभ इत्यर्थः। परे भौमादयः संक्रांतिचिकीर्षतः संतः तद्बलतः सूर्यबलादशुभा अपि शुभा ज्ञेयाः। स्वराशिभोगकालावधिरविदौष्ट्ये तु शुभा अप्यशुभा इत्यर्थः। यदाह कश्यपः—'ताराबलेन शीतांशुर्बलवांस्तद्वशाद्रविः। बली संक्रममाणस्य यशाच्चेटा बलाधिकाः॥ यादृशेनेंदुना भानोः संक्रांतिस्तादृशं फलम्। नरः प्राप्नोति तद्राशेः शीतांशोः साध्वसाधुते॥' इति। संक्रममाणस्य रवेरित्यध्याहारः। यत्तु दीपिकायाम्—'यादृशेन शशांकेन ग्रहः संचरते नृणाम्। तादृशं फलमाप्नोति शुभं वा यदि वाऽशुभम्॥' इति चंद्रबलेनैवाखिलग्रहसंबंधि शुभाशुभत्वमुक्तम्। तत्र ग्रह इत्येकवचननिर्देशाल्लिखितकश्यपवाक्यस्वरसाच्च सूर्य एव ग्राह्यो नान्य इति तट्टीकाकारो व्याख्यत्। अन्यथा 'संचरेयुर्ग्रहा नृणाम्' इत्यवक्ष्यत्॥ १९॥

अथाधिमासक्षयमासयोः संक्रांत्यधीनत्वात्तयोर्निर्णयः प्रस्तूयते, तत्र तल्लक्षणमुपजात्याह—

**स्पष्टार्कसंक्रांतिविहीन उक्तो मासोऽधिमासः क्षयमासकस्तु।**
**द्विसंक्रमस्तत्र विभागयोः स्तस्तिथेर्हि मासौ प्रथमांत्यसंज्ञौ॥२०॥**

स्पष्टार्केति ॥ शुक्लपक्षप्रतिपदादिदर्शांतश्चांद्रो मासः स चेत्स्पष्टसूर्य-

संक्रांत्या विहीनो रहितो भवेत्तदाधिकमास उक्तः । उक्तं च ब्रह्मसिद्धांते—'चांद्रो मासो ह्यसंक्रांतो मलमासः प्रकीर्तितः ।' इति । तुर्विशेषे कदाचिच्छब्दापरपर्यायः । कदाचित्स चांद्रो मासो द्विसंक्रमः द्वौ संक्रमौ सूर्यसंक्रमौ यस्मिन्नसौ द्विसंक्रमः स्पष्टसूर्यसंक्रांतिद्वययुतः क्षयमास उक्तः । यदाह वसिष्ठः—'यस्मिन्दर्शान्तादर्वागेवापरं दर्शम् । उल्लंघ्य भवति भानोः संक्रांतिः सोऽधिमासः स्यात् ॥ आद्यंतदर्शयोर्मध्ये भानोरेवं तयोर्यदा । संक्रांतिद्वितयं स्याच्चेन्न्यूनमासः स उच्यते ॥' एतौ चाधिमासक्षयमासौ स्पष्टमानेनैव ज्ञेयौ । तदाह कश्यपः—'यस्मिन्मासेऽर्कसंक्रांतिर्दर्शान्तात्प्राक् पुनः परम् । दर्शमुल्लंघ्य भवति स संसर्पोऽधिमासकः ॥ आरभ्य शुक्लप्रतिपत्प्रवेशात्संक्रमद्वयम् । आगामींदुक्षयस्यांतात्प्राङ्न्यूनाख्यस्त्वहर्पतेः । स्फुटार्कसंक्रमाद्वियात्न्यूनमासाधिमासकौ । मासौ न्यूनाधिकौ तौ तु सर्वकर्मबहिष्कृतौ ॥' इति । सिद्धांतशिरोमणावपि—'असंक्रांतिमासोऽधिमासः स्फुटः स्याद्विसंक्रांतिमासः क्षयाख्यः कदाचित्' इति । स्फुटः=स्फुटेंदुमासः । स्फुटत्वमपि तत्रैव—'स्पष्टोऽधिमासः पतितोऽप्यलब्धो यदा यदा वाऽपतितोऽपि लब्धः । सैकैर्निरेकैः क्रमशोऽधिमासैस्तदा दिनौघः सुधिया प्रसाध्यः ॥' इति । इदमग्रे स्पष्टं व्याख्यास्यते । अत्राधिमासक्षयमासलक्षणप्रयोजनं नोक्तम्, आद्यप्रकरणे (श्लो० ४७) 'वृद्धत्वास्तशिशुत्व इज्यसितयोर्न्यूनाधिमासे तथा' इत्यादिनोक्तत्वात् । क्षयमासे परः कश्चिद्विशेषो वक्तव्योऽस्ति, सोऽत्रैवाभिधातुमुचित इत्याह—तत्रेति । तत्र क्षयमासे मासद्वयसंज्ञा शुक्ल-कृष्णपक्षभेदेन । तस्याः सप्रयोजनविषयकल्पनोच्यते । विभागयोरिति । तत्र क्षयमासे जातानां वर्धापने मृतानां श्राद्धे च तिथेर्विभागयोः पूर्वोत्तरदलयोः संबंधेन प्रथमांत्यसंज्ञौ मासौ ज्ञः स्याताम् । तिथिपूर्वार्धे जातानां मृतानां च पूर्वमासे वर्धापनं श्राद्धं च विधेयम् । तिथेरुत्तरार्धे जातानां मृतानां चोत्तरमासे वर्धापनं श्राद्धं च विधेयम् । तदुक्तम्—तिथ्यर्धे प्रथमे पूर्वोऽपरस्मिन्नपरस्तथा । मासाविति बुधैश्चिन्त्यौ क्षयमासस्य मध्यगौ ॥' इति । एवं यथाश्रुतोऽर्थो व्याख्यातः । तत्र न्यूनाधिमासविषयको भूयान् विचारो वक्तव्योऽस्ति । सोऽस्मत्पितृचरणैस्तोडरानंदे कालशुद्धिसौख्ये सप्रपंचं निरूपितस्तत एवाऽवधार्यः । इह तु ग्रंथगौरवभयात्प्रस्तुतविचारानर्हत्वाच्च नास्माभिरुक्त इति शिवम् ॥

## इति श्रीदैवज्ञानंतसुतदैवज्ञरामज्योतिर्विद्विरचिते मुहूर्तचिंतामणौ संक्रांतिप्रकरणं समाप्तम् ॥ ३ ॥

स्पष्टार्थम् । 'ज्योतिर्विद्वरनीलकंठविबुधः श्रीचंद्रिकायास्तथा पुत्रेणाद्रिगवीप्रसारितधिया मौहूर्तचिंतामणेः ॥ गोविंदेन विनिर्मिते नयनिधौ पीयूषधाराभिधे व्याख्याने खलु संक्रमप्रकरणं संपूर्णतामभ्यगात् ॥ १ ॥' इति श्रीविद्वद्दैवज्ञमुकुटालंकारनीलकंठज्योतिर्वित्पुत्रगोविंदज्योतिर्विद्विरचितायां मुहूर्तचिंतामणिटीकायां पीयूषधाराभिधायां संक्रांतिप्रकरणं समाप्तम् ॥ ३ ॥

## गोचरप्रकरणम् ४ ।

विघ्नराजमभिवंद्य सिद्धिदं नीलकंठतनयेन धीमता ।
शिष्यमोहविनिवृत्तिकारणं गोचरप्रकरणं विविच्यते ॥

अथ गोचरप्रकरणं व्याख्यायते । तत्र जन्मराशितः *प्रोक्तनिषिद्धस्थानस्थितेदानींतनग्रहवशेन शुभाशुभनिरूपणं गोचर इत्युच्यते । तत्र ग्रहाणां गोचरफलं शुभाशुभरूपमुपजातिकाद्वयेनेंद्रवज्रयोपजातिकापूर्वार्धेन चाह—

सूर्यो रसांत्ये खयुगेऽग्निनंदे शिवाक्षयोर्भौमशनी तमश्च ।
रसांकयोर्लाभशरे गुणांत्ये चंद्रोऽम्बराब्धौ गुणनंदयोश्च ॥ १ ॥
लाभाष्टमे चाद्यशरे रसांत्ये नगद्वये ज्ञो द्विशरेऽब्धिरामे ।
रसांकयोर्नागविधौ खनागे लाभव्यये देवगुरुः शराब्धौ ॥ २ ॥
व्यंत्ये नवांशेऽद्रिगुणे शिवाष्टौ शुक्रः कुनागे द्विनगेऽग्निरूपे ।
वेदांबरे पंचनिधौ गजेषौ नंदेश्वयोर्भानुरसे शिवाग्नौ ॥ ३ ॥
क्रमाच्छुभो विद्ध इति ग्रहः स्यात्पितुः सुतस्यात्र न वेधमाहुः ।

सूर्य इति ॥ लाभाष्टमे इति ॥ व्यंत्ये इति ॥ क्रमादिति ॥ 'सूर्यो रसांत्ये' इत्यादौ 'सर्वो द्वंद्वो विभाषयैकवद्भवति' इति समाहारद्वंद्व एकवचनांतः । शिवाक्षयोरित्यादावितरेतरयोगद्वंद्वः । अंबराब्धावित्यादिषु तु 'अनित्यमागमशासनम्' इति नुमभावो ज्ञेयः । एवं सर्वत्र व्याख्येयम् । अत्र चतुर्थश्लोकेनान्वयः । स्वजन्मराशेरिति पंचमश्लोकस्थपदमत्राध्याहार्यम् । तत्र सूर्यो ग्रहः स्वजन्मराशेः रसांत्ये क्रमाच्छुभो विद्धश्च स्यात् । सूर्यः स्वजन्मराशेः सकाशाद्यदि षष्ठस्थाने तदा शुभः, तत एव जन्मराशेर्द्वादशस्थानस्थिताश्चेदन्ये ग्रहाः स्युस्तदा विद्धः । शुभोऽप्यशुभफलदाता । अत्र शनैश्चरस्य सूर्यपुत्रत्वात्तद्वेधो नांगीकार्यः । यतः पितुर्जनकस्य सुतसंबंधिनं वेधं नाहुः । सुतस्यापि पितृसंबंधिवेधं नाहुः । तथा खयुगे जन्मराशेर्दशमे सूर्यः शुभश्चतुर्थस्थानस्थिताश्चेदन्ये ग्रहाः शनिवर्जिताश्च स्युस्तदा विद्ध इत्येवं श्लोकत्रयं सम्यग्व्याख्येयं । तथा अग्निनंदे तृतीयनवमयोः शिवाक्षयोरेकादशपंचमयोः सूर्यः क्रमाच्छुभो विद्धश्च ज्ञेयः । उक्तं च नारदेन—'शुभोऽर्को जन्मतस्त्र्यायदशषट्सु न विध्यते । जन्मतो नवपंचांत्यव्ययगैर्व्योमगैर्मिथस्तदा ॥' अथ भौमेति । भौमशनी तमो राहुश्चैते ग्रहाः स्वजन्मराशितः रसांकयोः षष्ठनवमस्थानयोः लाभशरे एकादशपंचमयोः गुणांत्ये तृतीयद्वादशयोः क्रमाच्छुभा विद्धाश्चेत्यर्थः, परंतु शनेः सूर्यवेधो नास्तीत्युक्तमेवेति । यदाह वसिष्ठः—'त्रिषडेकादशसहितो धरासुतो रिःफधर्मसुतसंस्थैः । दिनकरतनयोऽपि शुभो न विध्यते खेचरैर्विनोष्णकरम् ॥' इति । शनिवद्राहु-

ज्ञेय इति वचनाद्राहोरप्येवमेवैव विचारः। राहोरुपलक्षणत्वात्केतोरपि। उक्तं च शार्ङ्गधरेण–'राहुकेतुफलं सर्वं मंदवत्कथितं बुधैः। वेधोऽपि तद्वदेवोक्तो वामवेधस्तथैव च॥ अथ चंद्र इति। जन्मराशितः अंबराब्धौ दशमचतुर्थयोः गुणनंदयोस्तृतीयनवमयोः लाभाष्टमे एकादशाष्टमयोः आद्यशरे प्रथमपंचमयोः रसांत्ये षड्द्वादशस्थानयोः नगद्वये सप्तमद्वितीययोः स्थानयोश्चंद्रः क्रमाच्छुभो विद्धश्च ज्ञेयः। परंतु चंद्रस्य बुधवेधो नास्ति। उक्तं च नारदेन–'विध्यते जन्मतो नैतुर्यूनाद्यायारिखत्रिषु। खेष्वष्टांत्यांबुधर्मस्थैर्विबुधैर्जन्मतः शुभः॥' इति। ज्ञ इति। जन्मराशेः द्विशरे द्विपंचमयोः अब्धिरामे चतुर्थतृतीययोः रसांकयोः षष्ठनवमयोः नागविधौ अष्टमप्रथमयोः खनागे दशमाष्टमयोः लाभव्यये एकादशद्वादशयोः स्थानयोर्ज्ञो बुधः क्रमाच्छुभो विद्धश्च ज्ञेयः। परं त्वत्र चंद्रवेधो नास्ति। यदाह नारदः—'ज्ञः स्वाब्ध्यर्यष्टखायेषु जन्मतश्चेन्न विध्यते। सुतव्यंकाद्याष्टमांत्यसंस्थितैरिंदुजः शुभः॥' इति। देवगुरुरिति। जन्मराशितः शराब्धौ पंचमचतुर्थयोः द्व्यंत्ये द्वितीयद्वादशस्थानयोः नवांशे नवमदशमयोः अग्निगुणे सप्तमतृतीययोः शिवाष्टौ एकादशाष्टमयोः स्थानयोः देवगुरुर्बृहस्पतिः क्रमाच्छुभो विद्धश्च ज्ञेयः। उक्तं च नारदेन—'जन्मतः स्वायगोध्यद्रिध्वंस्था-ष्टखजकत्रिभैः। जन्मराशेर्गुरुः श्रेष्ठो ग्रहैर्यदि न विध्यते॥' इति। धीः=पंचमं। शुक्र इति। जन्मराशेः कुनागे प्रथमाष्टमयोः द्विनगे द्विसप्तमयोः अग्निरूपे तृतीयप्रथमयोः वेदांबरे चतुर्थदशमयोः पंचनिधौ पंचमनवमयोः गजेषौ अष्टमपंचमयोः नंदेशयोर्नवमैकादशयोः भानुरसे द्वादशषष्ठयोः शिवाग्नौ एकादश-तृतीययोः स्थानयोः शुक्रः क्रमाच्छुभो विद्धश्च ज्ञेयः। यदाह नारदः–'जन्म-भाद्यासुताष्टांकांत्यायेष्विष्टो न विध्यते। भार्गवो मृत्युसप्ताद्यखांकेष्वायारिपु-त्रिगैः॥' इति। आसुतेत्यभिविधावाङ्। 'सह तेनेत्यभिविधि'रिति। तेन प्रथमद्वितीयतृतीयचतुर्थपंचमानां ग्रहणमित्यर्थः। इदमत्राकूतम्–'सूर्यो रसांत्ये' इत्यादौ प्राक्पठितेषु स्थानेषु विद्यमानः स ग्रहः शुभदः। शुभस्थानव्यतिरि-क्तास्विलस्थानेषु विद्यमानः स स ग्रहोऽशुभफलदाता। अत एवाह श्रीपतिः–'सर्वे लाभगृहस्थिताखिलरिपुष्वर्कः कुजार्की त्रिषट्प्राप्तौ त्र्यायसमन्मथारिषु शशी खाद्यादिवर्ज्यं भृगुः। धीधर्मात्तधनेषु वाक्पतिररिस्वाष्टांबुखस्थो बुधः श्रेष्ठो जन्मग्रहादि गोचरविधौ विद्धो न चेत्स्याद्ग्रहैः॥' इति। यथोदितानुक्तस्था-नेष्वशुभः स स ग्रहः। अत्र ग्रहाणां विहितनिषिद्धस्थानफलानि विधिरत्ने–'स्थानं जन्मनि नाशयेदिनकरः कुर्याद्द्वितीये भयं दुश्चिक्ये श्रियमातनोति हिबुके मानक्षयं यच्छति। दैन्यं पंचमगः करोति रिपुहा षष्ठोऽध्वहा सप्तमे पीडामष्टमगः करोति परुषां कांतिक्षयं धर्मगः॥ कर्मसिद्धिजनकस्तु कर्मगो वित्त-लाभकृदथायसंस्थितः। द्रव्यनाशजनितां महापदं यच्छति व्ययगतो दिवाकरः॥'

–इति रविः। 'जन्मन्यन्नं दिशति हिमगुर्वित्तनाशं द्वितीये दद्याद्द्रव्यं सहजभवने कुक्षिरोगं चतुर्थे। कार्यभ्रंशं तनयगृहगो वित्तलाभं च षष्ठे द्यूने द्रव्यं युवतिस-हितं मृत्युसंस्थोपमृत्युम्। नृपभयं कुरुते नवमः शशी दशमधामगतस्तु महत्सु-

स्वम् । विविधमायगतः कुरुते धनं व्ययगतस्तु रुजं धनसंक्षयम् ॥'-इति चंद्रः । 'प्रथमगृहगः क्षोणीसूनुः करोत्यरिजं भयं क्षपयति धनं वित्तस्थाने तृतीयगतोऽर्थदः । अरिभयमतः पातालेऽर्थाप्तिक्षिणोति हि पंचमो रिपुगृहगतः कुर्याद्दृप्तं रुजं मदनस्थितः ॥ जनयति निधनस्थः शत्रुबाधां धराजो दिशति नवमसंस्थः कायपीडामतीव । शुभमपि दशमस्थो लाभगो भूरिकामं व्ययभवनगतोऽसौ व्याध्यनर्थार्थनाशान् ॥'-इति भौमः । 'बुधः प्रथमगो भयं दिशति पंचमर्थं धने धनं रिपुभयान्वितं सहजगश्चतुर्थोऽर्थदः । अनिर्वृतिकरो भवेत्तनयगोऽरिगः स्थानदः करोति मदनस्थितो बहुविधां शरीरव्यथाम् ॥ अष्टमे शशिसुतो धनवृद्धिं धर्मगस्तु महतीं तनुपीडाम् । कर्मगः सुखमथायगतोऽर्थं द्वादशे भवति वित्तविनाशः ॥'-इति बुधः । 'भयं जन्मन्यार्यो जनयति धनस्थोऽर्थमतुलं तृतीयेऽङ्गक्लेशं दिशति च चतुर्थेऽर्थविलयम् । सुखं पुत्रस्थाने रुजमपि च कुर्याद्रिपुगृहे गुरुर्द्यूने पूजां धननिचयनाशं च निधने ॥ धर्मगतो धनवृद्धिकरः स्यात्प्राप्तिहरो[1] दशमेऽमरपूज्यः । स्थानधनानि ददाति स चाये द्वादशगस्तु मानसपीडाम् ॥'-इति गुरुः । 'जन्मन्यरिक्षयकरो भृगुजोऽर्थदोऽर्थे दुश्चिक्यगः सुखकरो धनदश्चतुर्थः । स्यात्पुत्रदस्तनयगोऽरिगतोऽरिवृद्धिं शोकप्रदो मदनगो निधनेऽर्थदाता ॥ जनयति विविधांबराणि धर्मे न सुखकरो दशमस्थितस्तु शुक्रः ॥ धननिचयकरः स लाभसंस्थो व्ययभवनेऽपि धनागमं करोति ॥'-इति शुक्रः । 'वित्तभ्रंशं रुगार्तिं दिनकरतनये जन्मराशिं प्रपन्ने वित्तक्लेशं द्वितीये धनहरणकृतं वित्तलाभं तृतीये । पाताले शत्रुवृद्धिं सुतभवनगतः पुत्रभृत्यार्थनाशं षष्ठे स्थानेऽर्थलाभं जनयति मदने दोषसंघातमार्किः ॥ शरीरपीडां निधने च धर्मे धनक्षयं कर्मणि दौर्मनस्यम् । उपांत्यगो वित्तमनर्थमंत्ये शनिर्ददातीत्यवदद्वसिष्ठः ॥'-इति शनिः । 'राहुर्जन्मगतो भयं च कलहं सौभाग्यमानक्षयं वित्तभ्रंशमहासुखं नृपभयं कार्यक्षयं यच्छति । संतापं कलहं च वित्तमधिकं शीघ्रं विनाशं नृणां केतुस्तत्फलमेव राशिषु वदेच्छंसंति गर्गादयः ॥'-इति राहुः । एतच्च शुभाशुभफलं ग्रहा ऋक्षसंधिगतास्तथा राशिसंधिगता एष्यराशेः फलं ददति, वक्रिणस्तु प्राग्राशेरित्याह कमलासनः—'ऋक्षसंधिगताः खेटा राशिसंधिगता ग्रहाः । एष्यराशेः फलं दद्युर्वक्रे तद्विपरीतगम् ॥' इति । राशिग्रहणं नक्षत्रस्याप्युपलक्षणम् । वसिष्ठोऽपि—'भवनांत्यगताश्च यदा धिष्ण्यांतगताश्च गगनचराः । दद्युः परभवनफलं प्राग्भवनफलं च वक्रिता ये च ॥' इति । अस्यार्थः—ऋक्षं नक्षत्रं तस्य संधिः एकस्मान्निर्गत्यापरत्र संक्रमणं संधिरेवं राशिसंधिश्च । तत्र संधिज्ञानम्—'देवर्क्षकर्तवोऽष्टाष्टौ नाड्योंकाः सनृपाः क्रमात् । वर्ज्याः संक्रमणेऽर्कादेः प्रायोऽर्कस्यातिनिंदिताः ॥' इति विवाहप्रकरणे वक्ष्यति ग्रंथकृत् । संक्रमणकाल एव संधिकालः, सर्वेषां ग्रहाणां 'षष्टिघ्नबिंबं ग्रहभुक्तिभक्तम्' इत्यादिना भास्करेणोक्तत्वात् । तदेतदस्माभिः संक्रांतिप्रकरणे सप्रपंचं निरूपितं तत एवावधार्यम् । तत्र सूर्यादिग्रहाः देवद्वयंकेतिपद्योक्तार्धघटिकोपलक्षिते नक्षत्रांते

१ प्रीतिहर इति पाठः ।

राश्यंते वा स्थिता जिगमिषितस्य नक्षत्रस्य राशेर्वा फलं प्रयच्छंति । यस्मिन्नस्तु पूर्वोक्तलक्षणोपलक्षिते नक्षत्रादौ राश्यादौ वा स्थिता भुक्तस्य नक्षत्रस्य राशेर्वा फलं ददति । तत्र भौमाद्या ग्रहाः वक्रातिचारयोः प्राग्राशिफलं कियंति दिनानि प्रयच्छंतीत्याह वसिष्ठः—'दशदिवसं पंचदिनं त्रिपक्षमतिचारवक्रयोर्दद्युः । भौमाद्याः पंच दिनं प्राग्राशिफलं च पंचमासांश्च ॥' इति । भौमाद्याः स्वगत्या यावता कालेन राशिं जहति न ततोऽल्पन्यूनाधिकभावेन स्पष्टगत्या राशिं जहति स चारः । यदा त्वसमये एव राशिं जहति सोऽतिचारः । वक्रं प्रसिद्धमेव ॥ १ - ३ ॥

अथ वामवेधं शुक्लपक्षे चंद्रबलं चोपजात्युत्तरार्धेनाह—

**दुष्टोऽपि खेटो विपरीतवेधाच्छुभो द्विकोणे शुभदः सितेऽब्जः ॥४॥**

दुष्टोऽपीति ॥ दुष्टोऽपि स्वजन्मराशेः सकाशादनिष्टस्थानस्थितोऽपि खेटो ग्रहो विपरीतवेधात् वामवेधाच्छुभः शुभफलदाता । अयमर्थः—तेषु षष्ठदशमतृतीयैकादशेषु स्थितः सूर्यः शुभफलदाता तद्भिन्नान्यष्टौ स्थानान्यशुभान्येव । तत्र द्वादशचतुर्थनवमपंचमाख्येष्वनिष्टस्थानेषु स्थितः सूर्यस्तदैवानिष्टफलदः स्याद्यदा प्राक् पठितैः क्रमेण षष्ठादिस्थानस्थितैः शनिवर्जितैर्ग्रहैर्न विद्धः । यदा तु विद्धस्तदाऽशुभफलदोऽपि षष्ठादिस्थानशुभफलदातैव स्यात् । अन्येषु स्थानेषु प्रथमद्वितीयसप्तमाष्टमेषु स्थितः सूर्योऽनिष्टफलदातैव । एवं चंद्रबुधयोः यत्र विरुद्धस्थानानि यत्रैव शुभस्थानानीति क्रमवेधवामवेधौ स्याताम् । भौमस्य तु त्रीण्येव शुभस्थानानीतराण्यशुभान्येव, तत्र नवमपंचमद्वादशस्थानस्थितभौमस्याशुभस्य क्रमेण षष्ठैकादशतृतीयस्थानस्थैर्ग्रहैर्वामवेधेन शुभत्वमेव । अन्येष्वशुभस्थानेष्वशुभ एव भौमः । एवं शनिराहुकेतवो ध्येयाः । गुरोरप्येवमेव । तत्र तु प्रथमषष्ठस्थानस्थो गुरुरशुभ एव । शुक्रस्य तु नवस्थानानां शुभत्वात्तद्व्यतिरिक्तानि त्रीणि षष्ठसप्तमदशमस्थानान्यशुभानि, तेषामेव क्रमेण द्वादशद्वितीयचतुर्थस्थानस्थग्रहजनितवामवेधेन शुभत्वमेव । अन्येषां तूत्तरपठितस्थानानां शुभत्वादेव न वामवेधविचारार्हत्वमिति परिच्छिन्नोऽर्थः । यदाह कश्यपः—'अपि विद्धो ग्रहः कश्चिन्न ददाति शुभं फलम् । वामवेधविधानेन त्वशुभोऽपि शुभप्रदः । अतस्तद्द्विविधं मूलं विचार्यैव फलं वदेत् ॥' इति । वसिष्ठोऽपि—'वेधसमन्वितखचरा न नृणां प्रदिशंति सत्फलं किंचित् । व्यत्ययवेधविधानादप्यशुभास्ते शुभप्रदाः सततम् ॥' इति । व्यत्ययवेधः=वामवेधः । द्विकोण इति । सिते शुक्लपक्षेऽब्जश्चंद्रो द्विकोणे द्वितीयनवमपंचमस्थानेषु स्थितः शुभदः । अत्रापि क्रमेण षष्ठाष्टमचतुर्थस्थानस्थितैर्बुधवर्जितैर्ग्रहैर्यदि न विद्ध इत्यपि ध्येयम् । उक्तं च नारदेन—'शुक्लपक्षे शुभश्चंद्रो द्वितीयनवपंचमैः । रिपुमृत्यंबुसंस्थैश्चेन्न विद्धो गगनेचरैः ॥' इति । यदि विध्यते तदाऽशुभफलद एव ॥ ४ ॥

अथ द्विविधवेधे मतद्वयमुपजात्याह—

**स्वजन्मराशेरिह वेधमाहुरन्ये ग्रहाधिष्ठितराशितः सः ।**
**हिमाद्रिविंध्यांतर एव वेधो न सर्वदेशेष्विति कश्यपोक्तिः ॥५॥**

स्वजन्मेति ॥ इह द्विविधवेधविधावन्वये नारदाद्यः स्वजन्मराशेः सका-शाद्द्विविधं वेधं क्रामिकं वेधं वामवेधं चाहुः । तथा कोमवत्रापि नारदेन जन्मत इत्युक्तम् । अथ कश्यपादिमतमुच्यते । स पुनर्द्विविधोऽपि वेधो ग्रहाधिष्ठितराशितो ज्ञेयः । यथा सूर्यो जन्मराशेः सकाशात्तृतीयस्थितः शुभः स सूर्यः स्वाक्रांतराशितो द्वादशस्थानस्थितैः शनिवर्जितैर्ग्रहैर्न विद्धः, तथा सूर्यो जन्मराशेर्द्वादशस्थोऽनिष्टः, स सूर्यः स्वाक्रांतराशितृतीयस्थितैव शनि-वर्जितैर्ग्रहैर्विद्धश्चेत्तदा शुभफलद इत्यर्थः । अथैतस्य द्विविधवेधस्य देशविशेष-विषयत्वमुच्यते । हिमाद्रिविंध्यनामानौ पर्वतौ प्रदेशविशेषावस्थितया प्रसिद्धौ, तयोरंतरालवर्तिन्येव देशे स द्विविधोऽपि वेधो ज्ञेयः, न सर्वदेशेषु । हिमाद्रि-विंध्यांतरालबहिर्भूतसर्वदेशेषु द्विविधोऽपि वेधदोषो नास्तीति कश्यपस्य मुनेरुक्तिर्वचनमस्ति । यदाह कश्यपः—'ज्ञातव्यं जन्मराशेस्तु निखिलं यद्बलाबलम् । हिमाद्रिविन्ध्ययोर्मध्ये वेधजं तद्ग्रहालयात् ॥' इति । वयं तु—'सूर्यो रसान्त्ये' इति क्रामिको वेधो जन्मराशित एव ज्ञेयः, वामवेधस्तु अधिष्ठितराशितः—इति ब्रूमः । तदाह गुरुः—'जन्मतः क्रमवेधः स्याद्वामवेधो ग्रहालयात् ॥' इदमपि हिमाद्रिविंध्यांतरविषयमेवेत्यन्ये । एतज्ज्ञानं दुर्घट-मित्याहतुर्नारदकश्यपौ—'अज्ञात्वा द्विविधं वेधं यो ग्रहज्ञो बलं वदेत् । स मृषावचनाभाषी हास्यं याति जनैः सदा ॥' इति । एवं प्रकारेण गोचरबलं ज्ञात्वा ग्रहदौःस्थ्ये यात्रादिकं न कार्यम् । तदुक्तं श्रीपतिना—'अकालचर्यां मृगयां च साहसं सुदूरयानं गजवाजिवाहनम् । गृहे परेषां गमनं विवर्जये-द्ग्रहेषु राजा विषमस्थितेषु हि ॥' अत एव तत्र ग्रहशान्तिरपि विधेया । यदाह नारदः—'ग्रहेषु विषमस्थेषु शांतिं यत्नात्समाचरेत् । हानिवृद्धी ग्रहाधीने तस्मात्पूज्यतमा ग्रहाः ॥' इति । विपर्यये चानिष्टमित्याह वसिष्ठः—'ग्रहेषु विषमस्थेषु यः शान्तिं न करोति सः । अर्थहानिं च मरणं चाप्नुते सर्वसंक-टम् ॥' इति । सा च शान्तिर्वसिष्ठसंहितोक्तप्रकारेण मत्स्यपुराणोक्तप्रकारेण वाऽनुष्ठेया । तत्र शान्तिकालमाह वसिष्ठः—'मासि मासवने चैव चन्द्र-सूर्यग्रहेऽपि वा । विषुवत्यर्कसंक्रांतौ व्यतीपाते दिनक्षये ॥' इति । कदाचि-च्छांत्यविषयग्रहकृतशुभपापफलाभावोऽपि भवतीत्याह नारदः—'सौम्येक्षि-तोऽनिष्टफलः शुभदः पापवीक्षितः । निष्फलौ तौ ग्रहौ, स्वेन शत्रुणा चावलो-कितः ॥ नीचराशिगतः स्वस्य शत्रुक्षेत्रगतोऽपि वा । शुभाशुभफलं नैव दद्यादस्तं-गतोऽपि वा ॥' इत्येतादृशस्थले 'दुष्टत्वाभावादेव शान्त्यभावः निमित्तापाये नैमित्तिकस्याप्यपाय' इति न्यायात् । 'अनिमित्तकृता शांतिर्निमित्तायोपजायते' इति विपक्षबाधकस्मरणाच्चेति भावः ॥ ५ ॥

अथ गोचरप्रस्तावाद्ग्रहणनक्षत्रफलं ग्रहणीयराहुकेतुगोचरफलं ग्रहणाशुभ-प्रतीकारं च दुष्टग्रहणदर्शननिषेधं च शार्दूलविक्रीडितेनाह—

**जन्मर्क्षे निधनं ग्रहे जनिभतो घातः क्षतिः श्रीर्व्यथा**
**चिंतासौख्यकलत्रदौःस्थ्यमृतयः स्युर्माननाशः सुखम् ।**
**लाभोऽपाय इति क्रमात्तदशुभध्वस्त्यै जपः स्वर्णगो-**
**दानं शांतिरथो ग्रहं त्वशुभदं नो वीक्ष्यमाहुः परे ॥ ६ ॥**

जन्मर्क्षे इति ॥ अत्र ग्रहणीयनक्षत्रनिषेधस्तावदुच्यते । यस्य पुंसो जन्मनक्षत्रे ग्रहो ग्रहणं 'उपरागो ग्रहो राहुग्रस्ते त्विंदौ च पूष्णि चे'त्यमरः । तस्मिन्ग्रहणे सति निधनं मृतिः स्यात् । यदाह वसिष्ठः–'यस्यैव जन्मनक्षत्रे ग्रस्येते शशिभास्करौ । तस्य व्याधिभयं घोरं जन्मराशौ धनक्षयः' इति । ज्योतिर्निबंधे फलप्रदीपे–'ग्रहणं जन्मनक्षत्रे जायते शशिसूर्ययोः । यस्य तस्याशुभं हानिर्घोररोगोऽपि संभवेदि'ति । ज्योतिःपराशरः–'यन्नक्षत्रगतो राहुर्ग्रसते शशिभास्करौ । तज्जातानां भवेत्पीडा ये नराः शांतिवर्जिताः' इति ॥ भार्गवीये विशेषोऽपि–'यस्य राज्यस्य नक्षत्रे स्वर्भानुरुपरज्यते । राज्यभंगं सुहृन्नाशं मरणं चात्र निर्दिशेत् ॥' इति ॥ राज्यस्य नक्षत्रे=अभिषेकनक्षत्रे । यदा कदाचिद्राहुभुज्यमाननक्षत्रमुपरागनक्षत्रं चैकमेव तदाऽसंदिग्धः फलनिर्देशः । यदा तु नक्षत्रभेदस्तदोपरज्यमाननक्षत्रेणैव फलनिर्देशः । एवं राशिभेदेऽप्युपरज्यमानराशिनैव जायते । अस्मन्मते राहोर्दिग्देशकालावरणादिभेदाद्वेधकत्वमेव नास्ति । तदुक्तं सिद्धांतशिरोमणौ—'दिग्देशकालावरणादिभेदे न वेधको राहुरिति ब्रुवंति ।' एतदुपपत्तिर्भास्करेण स्वपद्यैरेव निरूपिता । पितृचरणैश्च तोडरानंदे राहुचारविलासे प्रपंचेनाभ्यधायि । परंतु राहुसाहित्यं विना ग्रहणानयनस्य शरसंस्कृतिमानैक्यखंडाद्यानयनविशिष्टस्यासुकरत्वादिति साहित्यविवक्षयैव राहोरुपरक्तत्वमुच्यते । अत एवोक्तं वराहेण—'तस्मिन्काले सान्निध्यमस्य तेनोपचर्यते राहुः । याम्योत्तरा शशिगतिर्गणिते ह्युपचर्यते तेन ॥' इति ॥ अथ राशिफलमुच्यते—जनिभत इति । पंचम्यास्तसिल् । जन्मराशेरारभ्य द्वादशसु राशिषु ग्रहणे सति क्रमादनुक्रमेण घातादिफलं भवति । यथा जन्मराशौ ग्रहणे सति घातः शरीरपीडा, द्वितीयराशौ क्षतिः द्रव्यनाशः, तृतीयराशौ श्रीः लक्ष्मीः, चतुर्थराशौ शरीरपीडा, पंचमराशौ चिंता पुत्रादीनां, षष्ठराशौ सौख्यं, सप्तमराशौ कलत्रदौःस्थ्यं स्त्रीमरणं, अष्टमराशौ मृतिर्मरणं, नवमराशौ माननाशः, दशमराशौ सुखं, एकादशराशौ लाभः, द्वादशराशौ अपायो नाशः । आत्मन इति केचित् । द्रव्यस्येत्यपरे । इदं च फलं षण्मासपर्यंतमित्यनुक्तमपि ज्ञेयम् । तदुत्तरं हि ग्रहणांतरसंभवात् । उक्तं दैवज्ञमनोहरे—'घातं हानिमथ श्रियं जननमाप्नोर्ति च चिंतां क्रमात्सौख्यं दारवियोजनं च कुरुते व्याधिं च मानक्षयम् । सिद्धिं लाभमपायमर्कशशिनोः षण्मासमध्ये ग्रहः' इति । क्वचित्तु स्थानान्येव शुभमध्यमाधमान्युक्तानि । तदुक्तं दैवज्ञमनोहरे–'प्रासात्तृतीयोऽष्टमगश्चतुर्थस्तथायसंस्थः शुभदः स्वराशिः । नवांत्यधीसप्तमगश्च मध्योऽपूज्यो द्विषट्गो दशमाद्यसंस्थः ॥' इति । अत्र वाक्ये ग्रासराशेर्गणनोक्ता । क्वचित् स्वराशेरपि । तद्वाक्यं च–'त्रिषड्दशायोपगतं नराणां शुभप्रदं स्याद्ग्रहणं रवींद्वोः । द्विसप्तनंदेषु च मध्यमं स्याच्छेषेष्वनिष्टं मुनयो वदंति ॥' इति । अत्रावध्यपेक्षायां स्वजन्मराशेरित्यध्याहार्यमेव । अत्र ग्रहणीयराशेर्देशविशेषेणाशुभफलानि वराहसंहितायामभिहितानि । 'तथा च भफलं कूर्मोपदेशाद्वदेदि'ति वराहोक्तेः ग्रहणीयनक्षत्राशुभफलानि स्वरोदयाभिहितकूर्मचक्रे पराशरसंहितायां चाभिहितानि, तथा मंडलभेदेनाप्यशुभफलानि गर्गसंहितायामभिहितानि, तानि

सर्वाण्यपि पितृचरणकृततोडरानंदे राहुचारविलासतोऽवधार्याणि । नात्राग्रस्तु-तत्वात् लिख्यंतेऽस्माभिः ॥ अथाशुभसूचकग्रहणप्रतीकारमाह—तदशुभेति । तस्य सूर्यचंद्रयोर्ग्रहणस्य संबंधि यदशुभं दुष्टफलं तस्य यस्तस्य नाशाय जपः स्वर्ण-गोदानम् । जपो गायत्र्यादीनां मंत्राणां, स्वर्णं प्रसिद्धं, गौः प्रसिद्धा, भूमिर्वा; उप-लक्षणत्वादन्येषां रूप्यादीनां यथाशक्ति दानं कार्यमिति शेषः । उक्तं च दैव-ज्ञमनोहरे—'तद्दोःस्थग्रहणदुष्फलजपविधिः स्वर्णादिदाने भवेदि'ति । ज्योति-र्निबंधे कालनिर्णये—'यस्मिन् राशौ तपनशशिनोः सैंहिकेयावमर्दस्तद्राश्यानां भवति नियतं ग्रासपुंसां विनाशः । तस्माच्छांतिं मुनिभिरुदितां तत्तदालोकपूर्वां कुर्याद्दानादिभिरिह नृणां नाशमायात्यरिष्टम् ॥' इति । दानमपि तत्रैव—'सु-वर्णनिर्मितं नागं सतिलं ताम्रभाजनम् । सदक्षिणं सवस्त्रं च श्रोत्रियाय निवे-दयेत् ॥ सौवर्णं राजतं वापि बिंबं कृत्वा स्वशक्तितः । उपरागोद्भवक्लेश-च्छिदे विप्राय कल्पयेत् ॥' दानमंत्रश्च—'तमोमय महाभीम सोमसूर्यविमर्दन । हेमनागप्रदानेन मम शांतिप्रदो भव' इति ॥ स्कंदपुराणे—'गोदानं भूमि-दानं च स्वर्णदानं विशेषतः । ग्रहणक्लेशनाशाय दैवज्ञाय निवेदयेत् ॥' इति । किंचात्र देशविशेषः पात्रविशेषो द्रव्यविशेषश्च नापेक्षित इत्याह व्यासः—'सर्वं गंगासमं तोयं सर्वे ब्रह्मसमा द्विजाः । सर्वा भूमिः कुरुक्षेत्रं ग्रहणे चंद्र-सूर्ययोः ॥' इति । तत्र स्नानदानादिकं कस्मिन्काले कर्तव्यमित्याह माधवः—'ग्रस्यमाने भवेत्स्नानं ग्रस्ते होमो विधीयते । मुच्यमाने भवेद्दानं मुक्ते स्नानं विधीयते ॥' इति । तस्मिन्काले जपादिकमपि विधेयम् । 'सूर्येन्दुग्रहणं याव-त्तावत्कुर्याज्जपादिकम्' इति शिवरहस्योक्तेः । आदिशब्दात्सुरार्चनमपि । अत्र जन्मनक्षत्रजन्मराश्योर्ग्रहणे शांतिमाह वसिष्ठः—'यस्यैव जन्मनक्षत्रे ग्रस्येते शशिभास्करौ । तस्य व्याधिभयं घोरं जन्मराशौ धनक्षयः ॥ द्रव्य-मंत्रविधानेन तस्य दोषापनुत्तये । उपरागस्नानविधिं सम्यग्वक्ष्ये समासतः ॥ मंडलं चतुरस्रं तु गोमयेन विलेपयेत् । ग्रहस्यैशानदिग्भागे वर्णकैः समलं-कृते ॥ स्थापयेच्चतुरः कुंभांस्तत्र तान्सागरात्मकान् । सर्ववेदात्मकान्स्मृत्वा सर्वतीर्थात्मकाञ्छुभान् ॥ पंचत्वक्पल्लवोशीरगतौषधिसमन्वितान् । मृत्ति-काहेमरत्नेभदंतगुग्गुलुचंदनैः ॥ पंचगव्यामृतभाजनस्फटिकैः सर्षपांबरैः । शंख-कुंकुमतीर्थाम्बुरोचकैः पद्मकैर्युतान् ॥ चत्वारः प्राङ्मुखा विप्राः प्रार्थयेयुः पृथक् पृथक् ॥ आद्यलिंगैर्वारुणैः सूक्तैः स्वस्तिवाचनपूर्वकम् ॥ तिलहोमं चाहु-तिभिः सहस्रं चाष्टसंयुतम् । एवं कृत्वा प्रयत्नेन स्नानकर्म समाचरेत् ॥ आमंत्र्य नवभिर्मंत्रैः कुंभान्संकल्पपूर्वकान् । एतानेव ततो मंत्रान्स्वर्णपट्टे च संलिखेत् ॥ कर्तुः शिरसि तं बध्वा चाद्यलिंगैर्वेदमंत्रकैः । सुमंत्रितैः कुंभजलैः स्नाप्य नीराजयेत्ततः ॥ दद्यात्पदं ग्रहेभ्यः शुक्लमाल्यांबरः शुचिः । ऋत्वि-ग्भ्यो दक्षिणां दद्याच्छिष्टेभ्यश्च स्वशक्तितः ॥ योऽसौ वज्रधरो देव आदित्यानां प्रभुर्मतः । सहस्रनयनश्चंद्रग्रहपीडां व्यपोहतु ॥ मुखं यः सर्वदेवानां सप्ता-र्चिरमितद्युतिः । चंद्रोपरागसंभूतामग्निः पीडां व्यपोहतु ॥ यः कर्मसाक्षी

---

१ सर्वं भूमिसमं दानमित्येव पाठः प्रायो लिखितपुस्तकाद्यनुगुणः ।

लोकानां धर्मो महिषवाहनः । यमश्चंद्रोपरागोत्थग्रहपीडां व्यपोहतु ॥ रक्षोगणाधिपः साक्षात्प्रलयानलसंनिभः । खड्गव्यग्रोऽतिकायश्च रक्षःपीडां व्यपोहतु ॥ नागपाशधरो देवः सदा मकरवाहनः । वरुणोंऽबुपतिः साक्षात् ग्रहपीडां व्यपोहतु ॥ प्राणरूपो हि लोकानां सदा कृष्णमृगप्रियः । वायुश्चंद्रोपरागोत्थां पीडामत्र व्यपोहतु ॥ योऽसौ निधिपतिर्देवः खड्गशूलगदाधरः । चंद्रोपरागकलुषां पीडां चापि व्यपोहतु ॥ योऽसाविंदुधरो रुद्रः पिनाकी वृषवाहनः । चंद्रोपरागपापानि स नाशयतु शंकरः ॥ त्रैलोक्ये यानि भूतानि चराणि स्थावराणि च । ब्रह्मविष्ण्वर्कयुक्तानि तानि पापं दहंतु मे ॥ आमंत्रणे लेखनोक्तास्त्वेते वै नवमंत्रकाः । अर्चयित्वा पितॄन्देवान्गोभूस्वर्णांबरादिभिः ॥ अनेन विधिना यस्तु ग्रहस्नानं समाचरेत् । न तस्य ग्रहपीडा स्यान्नानबंधुधनक्षयः ॥ परमां सिद्धिमाप्नोति पुनरावृत्तिदुर्लभाम् । सूर्यग्रहेऽप्येवमेव सूर्यनाम्ना विधीयते ॥' इति वृद्धवसिष्ठप्रोक्ता ग्रहणशांतिः ॥ अत्र यद्यपि 'जन्मराशौ धनक्षय' इत्युक्तं तत्र च दोषाल्पताप्रतिभानेन शांतेरकर्तव्यता प्रतीयते, तथापि प्राग्विलिखितबहुवचस्सु विरुद्धफलाभिधानादवश्यं जन्मराशावपि ग्रहणे शांतिर्विधेया । उभयानुवादेन शांत्यभिधानात् । उक्तं च मत्स्यपुराणे—'यस्य राशिं समासाद्य भवेद्ग्रहणसंभवः । तस्य शांतिं प्रवक्ष्यामि मंत्रौषधिविधानतः ॥' इति । अतो जन्मनक्षत्रजन्मराशिव्यतिरिक्ते विरुद्धे ग्रहणे शांतिर्न विधेया, वचनाभावात्; किंतु स्वविभवरूपं दानादि विधेयमिति तात्पर्यार्थः । सूर्यग्रहेऽप्येवमेवेति—'योऽसौ वज्रधरो देव आदित्यानां प्रभुर्मतः । सहस्रनयनः सूर्यग्रहपीडां व्यपोहतु ॥' इत्युक्तदिशा चंद्रपदस्थाने सूर्यपदं पूर्वमंत्रश्लोकेषु प्रयोज्यमित्यर्थः ॥ अथेदं ग्रहणं स्थानविशेषेणानिष्टजनकमित्युक्तं तत्र किं ग्रहणं दृष्टमदृष्टमित्याह—अथो इति । उक्तं च 'जन्मसप्ताष्टरिःफांकदशमस्थे निशाकरे । दृष्टोऽनिष्टप्रदो राहुर्जन्मर्क्षे निधनेऽपि च ॥' इति । जन्मर्क्षं=जन्मनक्षत्रं, निधनं=वधतारा सप्तमी । अत्र दृष्ट इति पदश्रवणाद्दुष्टस्थानावस्थितो राहुः दृष्टश्चेत् पुंसां दोषजनकः । यदा तु मेघाद्यावरणेन गृहमध्यावस्थित्या वा चक्षुष्मतोऽपि पुंसो राहुदर्शनाभावेन सत्यप्यरिष्टेऽरिष्टं नास्ति इति । एवं चांधस्य यत्र कुत्राप्यवस्थितस्य गृहाद्बहिर्गंतुमशक्नुवतो वृद्धातुरादेश्च सर्वथाऽरिष्टं स्नानादि वा नास्ति इति तेषां नाशयः ॥ अत्रेदं चिंत्यते—किमिदं ग्रहणं दृष्टमेव स्नानाद्यधिकारसंपादकम्, उत मेघाद्यावरणेनादृष्टमपि? कुतः? उभयथा वचनोपलब्धेः । तथा हि-वृद्धवसिष्ठः—'सर्वेषामेव वर्णानां सूतकं राहुदर्शने । सचैलं तु भवेत्स्नानं सूतकान्नं विवर्जयेत् ॥' इति । षट्त्रिंशन्मते—'सर्वेषामेव वर्णानां सूतकं राहुदर्शने । स्नात्वा कर्माणि कुर्वीत शृतमन्नं विवर्जयेत् ॥' इति । शृतं=पक्वम् । 'शृतं पाके' इति निपातनात् । यद्यपि तस्मिन् सूत्रे क्षीरहविषोरेवेति महाभाष्यकृतोक्तम्, तथापि महामुनिप्रयोगादन्यस्मिन्नपि द्रव्ये ओदनादौ पाकसामान्यवद्वृत्तिः । विष्णुः-'राहुदर्शनदत्तं हि आद्यमाचंद्रतारकम्' इति । शातातपः-'स्नान-

दानतपःश्राद्धमनंतं राहुदर्शने' इति । एवमादीनि वचांसि दर्शनपदसहितान्युपलभ्यन्ते । अन्यथापि वसिष्ठः—'ग्रहणे संक्रमे वापि न स्नायाद्यदि मानवः । सप्तजन्मसु कुष्ठी स्याद्दुःखभागी च जायते ॥' इति । लिङ्गपुराणेऽपि—'चंद्रसूर्यग्रहे स्नायात्सूतके मृतकेऽपि च । अस्नायी मृत्युमाप्नोति स्नायी पापं न विंदति ॥' इति । एवमादीनि दर्शनपदानाक्रांतानि वचांस्युपलभ्यंते। तत्र दर्शनवादिन आहुः—दर्शनपदानाक्रांतेषु वचस्सु ग्रहणस्य निमित्तत्वं च प्रतिपाद्यते, 'ग्रहणे संक्रमे वापि' इति निमित्तसप्तम्युपलंभात् । ज्ञातमेव च ग्रहणं स्नानदानादिकं प्रति निमित्तं भवति, तज्ज्ञानापेक्षायां च राहुदर्शनपदोपेतवचनालोचनेन चाक्षुषज्ञानस्यैव निमित्तत्वम् । यतश्चाक्षुष एव ज्ञाने दर्शनमुख्यत्वं, ज्योतिःशास्त्रीयज्ञाने तु लक्षणाप्रसक्तिः । एवं सति मेघाच्छन्नग्रहणदिवसजातचंद्रग्रहणरात्रिभवसूर्यग्रहणेषु न स्नानदानादावधिकारः । तस्माद्ग्रहणं दृष्ट्वा स्नानदानादिकं विधेयमित्यर्थः संपन्नो भवति । नैतत्सहृदयहृदयंगमम् । यतो वचनेषु राहुदर्शन-ग्रहपदयोः समानार्थकता नास्ति । कथम्? 'अदृश्यरूपाः कालस्य मूर्तयो भगणाश्रिताः । शीघ्रमंदोच्चपाताख्या ग्रहाणां गतिहेतवः ॥' इति सूर्यसिद्धांते चंद्रादिग्रहपातानामदृश्यतोक्ता । पातो राहुश्च पर्यायः । उक्तं च तत्रैव—'दक्षिणोत्तरयोरेवं पातो राहुश्च रंहसा। विक्षिपत्येष विक्षेपश्चंद्रादीनामपक्रमात् ॥' इति । केशवार्केणाप्युक्तम्—'पर्यायेण ननु राहुपातयोर्नामनी विदधुरेव तांत्रिकाः ॥' इति । अतो राहुदर्शनमेव गगनकुसुमायमानम् । ननु ग्रहणे सूर्यचंद्रयोश्छादको राहुर्दृश्यत एव । अत एव 'राहुग्रस्ते निशाकरे' इत्यादिपुराणोक्तिः साधीयसीति चेन्न । 'भानोर्भार्धमहीच्छाया तत्तुल्येऽर्कसमेऽपि वा । शशांकपाते ग्रहणं कियद्भागाधिकोनके ॥' इत्युपक्रम्य,—'छादको भास्करस्येंदुरधःस्थो घनवद्भवेत् । भूच्छायां प्राङ्मुखश्चंद्रो विशत्यस्य भवेदसौ ॥' इति । असौ भूच्छायाऽस्य चंद्रस्य च्छादको भवेदित्यर्थः । इति सूर्यसिद्धांतोक्तः स्पष्ट एव छायाच्छादकभावोऽभिहितः । पुराणेन सह विरोधपरिहारस्तु—'दिग्देशकालावरणादिभेदान्न च्छादको राहुरिति ब्रुवंति । यन्मानिनः केवलगोलविद्यां स्वसंहितावेदपुराणवाक्यम् ॥' इति पूर्वपक्षं विधाय ततो 'राहुः कुभामंडलगः शशांकं शशांकगश्छादयतीनबिंबम् । तमोमयः शंभुवरप्रदानात् सर्वागमानामविरुद्धमेतत्' इति भास्कराचार्यैरेवोक्तः । 'तस्मिन्काले सान्निध्यमस्य तेनोपचर्यते राहुरि'ति वराहेणाप्युक्तम् । तस्माद्राहुदर्शनं तु नास्त्येव । भवन्मते दर्शनं चाक्षुषमेवोच्यते नान्यत् । एवं सति राहोर्दर्शनं राहुदर्शनमिति तत्पुरुषोऽनुपपन्नः । अथ तु समीपलक्षकदर्शनशब्दमंगीकृत्य चेदर्थः क्रियते, तथापि यस्य स्वरूपमेवानुपपन्नं तस्य सामीप्यं तु सुतरामिति बालैरप्येतद्बुध्यते। तस्माद्दर्शनशब्देन नोपरागो लक्ष्यते, राहुदर्शनं राहूपरागस्तस्मिन् राहुदर्शने इति । अयमर्थः—राहुर्नाम पातः, तस्य तत्संबंधेन दर्शनमुपराग इति । न च राहुरेव लक्षणयोपरागपरस्तस्य दर्शनमिति पूर्वपक्षाभिमतार्थसिद्धिरिति वाच्यम्।

लक्षणा त्वर्थांतरासंभवे सति वक्तव्या, 'अत्यंतादर्शनं राहोस्तथा चात्यन-दर्शने । प्रजापीडा विनिर्देश्या व्याधिदुर्भिक्षतस्करैः ॥' इति विष्णुधर्मो-त्तरादिवाक्येषु पदांतरासन्निधानाद्राहुशब्देनोपरागो लक्ष्यते । इह च राहोः पातनामकं ग्रहगतिहेतुरूपमर्थांतरमस्तीत्यतो राहुदर्शन-ग्रहपदयोः समा-नार्थकताऽस्तीत्येव सिद्धमिति प्रागुक्तानां सर्ववचसां ग्रहणे स्नायादित्येव वाक्यार्थः फलितो भवति । किंच ग्रहणे चाक्षुषमेव दर्शनं विवक्षितं चेत्तदा 'नेक्षेतोद्यंतमादित्यं नास्तं यन्तं कथंचन । नोपरक्तं न वारिस्थं न मध्यं नभसो गतम् ॥' इति मनूक्तोपरक्तसूर्यदर्शननिषेधो नोपपद्येत । नन्वयं निषेधः सूर्योपरागदर्शन एव, न चंद्रोपराग इति चेन्न । 'नाशुची राहुतारके' इत्यत्र राहुमात्रग्रहणाद्रविचंद्रोपरागद्वयविषयकोपसंहारस्य युक्तत्वात् । अशुचे रजस्व-लापतितादेर्ग्रहणं तु दोषाधिक्यसूचनार्थम् । यथा श्राद्धे कुलीनानां ब्राह्म-णानामामंत्रणे उक्ते अन्येषां निषिद्धत्वादेव कुंडगोलकब्राह्मणानामामंत्रणे-ऽसिद्धे पुनर्निषेधो दोषाधिक्यार्थमेव । 'भास्करालोकनाश्लीलपरिवादं विवर्ज-येत्' इति स्मृतिवाक्यस्य तूद्यदस्तगाम्यादित्यदर्शनपरतया व्याख्यानस्य युक्त-त्वात् । केचित्तु दर्शनादर्शनविषयकयोर्विध्योस्तुल्यबलत्वात्सकृद् दृष्ट्वा स्नाया-दिति व्याचख्युः । तच्चिंत्यम् । 'जन्मसप्ताष्टरिःफांक ' इत्यादिना सामा-न्यतो निषिद्धस्योपरक्तदर्शनस्य पुनर्निषेधात् । प्रागुक्तदिशा राहुदर्शनपदस्य राहू-परागलक्षकत्वेन तुल्यबलत्वाभावाच्च । तस्मादुपरक्तयोः सूर्याचंद्रमसोर्यस्य कस्यापि दर्शननिषेधसत्त्वात् ग्रहणे च स्नानदानाद्युक्तेस्तज्ज्ञानं च ज्योतिः-शास्त्रैकदेशगणितग्रंथेभ्यो बुद्ध्वा तस्मिन्काले स्नानदानादि विधेयमिति सिद्धांतः । अत एव मेघाद्यावृतेऽप्युपरागे स्नानादिकं विधेयमेव । ननु गणित-ग्रंथाधीनमुपरागज्ञानमेव चेत्स्नानादिप्रयोजकं तदा रात्रौ सूर्यग्रहणस्य दिवा चंद्रग्रहणस्य जायमानत्वात्तदापि स्नानादिकं स्यात् । सत्यमेवैतत् । वचनात्तु तथा न क्रियते । तदुक्तं निगमे—'सूर्यग्रहो यदा रात्रौ दिवा चंद्रग्रहो यदि । तत्र स्नानं न कुर्वीत दद्याद्दानं न च क्वचित् ॥' इति । अत एव तादृशे ग्रहणे दृष्टेऽपि दौष्ट्यं नास्तीत्यपि सूच्यते । न चैतद्भागिप्रतिषेधादित्यधि-करणेन पृथिव्यामग्निश्चेतव्यो नांतरिक्षे न दिवीत्युदाहृतवाक्यवन्नित्यानुवाद इति वाच्यम् । विधिशेषत्वाभावात् । यथा पृथिव्यामग्निर्न चेतव्य इति निषेधविधिरस्ति तत्र नांतरिक्षे न दिवीति दृष्टांतो निषेधविधेः शेषस्तथात्र सूर्यग्रहो यदा रात्राविल्येतद्वाक्यं कस्य विधेः शेष इति । किंचैवं ब्रुवतस्तव मतेऽनर्थकमेव वाक्यं स्यात्? नचैतद्युक्तम् । अत एवाह जाबालिः—'संक्रांतेः पुण्यकालस्तु षोडशोभयतः कलाः । चंद्रसूर्योपरागे तु यावद्दर्शनगोचरः ॥' इति । ग्रस्तस्यास्तमनपर्यंतं दर्शनगोचरत्वात्तावान्कालः पुण्यकालो भवतीति माधवो व्याचख्यौ । तदुक्तं विश्वरूपनिर्णये—'दिवा चंद्रग्रहो रात्रौ सूर्य-पर्व न पुण्यदम् । संधिस्थं पुण्यवज्ज्ञेयं यावद्दर्शनगोचरम् ॥' इति । अन्ये तु मेघावृते तदनावृते चोपरागे गणितागतस्थितिघटिकाः पुण्यकाल इत्याहुः ।

दर्शने त्वेवंविधे निर्णये भूजवृत्तादुपरिस्थितत्वमेव विवक्षितम् । तदाह वसिष्ठः स्वसिद्धांते—'सूर्यस्यादर्शनं रात्रिर्दिनं तद्दर्शनात्मकम् । भूजवृत्तादुपरि च स्थितोऽर्कोऽदर्शनं स्मृतम् ॥' इति । अर्क इत्युपलक्षणं चंद्रादिग्रहनक्षत्राणाम् । आकाशप्रदेशः समंतात्भूसंलग्न इव यत्र भाति स प्रदेशो भूजशब्दवाच्यः । अत एव विष्णुधर्मोत्तरे—'अहोरात्रं न भोक्तव्यं सूर्यचंद्रग्रहो यदा । मुक्तिं दृष्ट्वा तु भोक्तव्यं स्नानं कृत्वा ततः परम् ॥' इति । ग्रस्तास्ते भृगुः—'ग्रस्तावेवास्तमानं तु रवींदू प्राप्नुतो यदि । तयोः परेद्युरुदये स्नात्वाभ्यवहरेन्नरः ॥' इत्यनयोर्वाक्ययोर्दर्शनोदयशब्दौ भूजवृत्तोपरिस्थितत्वोपलक्षकौ । अन्यथा मेघाद्यावरणेन परदिवसेऽपि दर्शनाभावे उपवासः प्रसज्येत । तथा च यत्र स्पर्शकाले ग्रहणं दृष्ट्वा स्नानं विहितं तत्रांतरा मेघाद्यावरणात्सूर्यचंद्रयोर्दर्शनाभावो दिवसद्वयं त्रयं वा स्यात्तत्राप्युपवासप्रसंगः । न च सर्वे शिष्टास्तथाचरंति । तस्माद्दर्शनार्थमभ्युपेत्य शास्त्रीयज्ञानपरतैव कर्तव्या । तस्यां च सत्यां पूर्वोक्तरीत्या च मेघानावृतेऽप्युपरागे तमदृष्ट्वैव प्रगल्भचक्षुषा अंधेन च गंतुमशक्नुवद्भिर्वृद्धातुरैश्च स्नानदानादिकं विधेयमिति फलितोऽर्थः । अत एव भागवते रविग्रहे कुरुक्षेत्रे स्नानाद्यर्थं मिलितानां पांडवीयलोकानां मध्ये धृतराष्ट्रोऽपि परिगणित इति, शिष्टाचारोऽप्यस्ति । एवं च सत्यरिष्टजनकत्वाभावेऽपि ग्रहणदर्शननिषेधः किं पुनररिष्टजनकत्वे । तस्मात् 'जन्मशशांके'त्यादिपद्यं निर्मूलत्वाद्युक्त्यसहत्वाच्चोपेक्ष्यम् । प्रत्यक्षोपलभ्यमानवसिष्ठमत्स्यपुराणादिवाक्येषु दर्शनपदाभावाच्च । अत एव मूले परे इति पदं प्रयुक्तम् । शांतिस्तु दर्शनाभावेऽपि विधानुमुचिता, यतोऽरिष्टयोगानां स्वरूपसतामेवारिष्टजनकत्वमस्ति । अन्यथा ग्रहवैषम्योत्पातादिसूचिताऽरिष्टनिवृत्तिहेतुः शांतिर्दर्शनाभावे न विधीयेतेत्यलमतिप्रसक्तानुप्रसक्तेन ॥ ६ ॥

*अथ चंद्रबले विशेषमनुष्टुभाह—*

**पापांतः पापयुग्द्यूने पापाच्चन्द्रः शुभोऽप्यसन् ।**
**शुभांशे चाधिमित्रांशे गुरुदृष्टोऽशुभोऽपि सन् ॥ ७ ॥**

पापांत इति । शुभोऽपि शुभफलदोऽपि चंद्रः पापांतः पापयुक् द्यूने । कोऽर्थः? पापद्वयमध्यवर्ती पापग्रहयुक्तः पापात् द्यूने सप्तमस्थाने वर्तमानश्चेत्स्यात्तदासन्नशुभ एव । यदा त्वशुभोऽप्यशुभफलदातापि चंद्रः शुभांशे सौम्यग्रहनवांशे स्यादथवाऽधिमित्रस्य नवांशे स्यात्तथा गुरुणा बृहस्पतिना दृष्टः सन् शुभफलदाता भवेत् । यदाह राजमार्तंडः—'पापग्रहेण संयुक्तः पापजामित्रसंस्थितः । पापद्वयान्तरगतः शुभोऽप्यशुभदः शशी ॥ अनिष्टस्थानसंस्थोऽपि भवेच्छुभकरः शशी । सौम्यभागेऽधिमित्रांशे गुरुणा वापि वीक्षिते ॥' इति ॥ ७ ॥

*अथ चन्द्रबलस्य विधानांतरमनुष्टुभाह—*

**सितासितादौ सद्दुष्टे चन्द्रे पक्षौ शुभाशुभौ ।**
**व्यत्यासे चाशुभौ प्रोक्तौ संकटेऽब्जबलं त्विदम् ॥ ८ ॥**

सितेति ॥ सितादौ शुक्लपक्षप्रतिपदि समीचीने चंद्रे सति संपूर्णः शुक्ल-

पक्षः शुभः । असितादौ कृष्णपक्षप्रतिपदि चंद्रे तुष्टे सति संपूर्णः कृष्णपक्षः शुभः । व्यत्यासे च पूर्वोक्तादर्थाद्विपरीत्ये द्वावपि पक्षावनिष्टौ । यदा शुक्लपक्षप्रतिपदि चंद्रो दुष्टश्चेत्तदा सकलः शुक्लपक्षोऽनिष्टः । यदा कृष्णपक्षप्रतिपदि चंद्रः शुभश्चेत्तदा संपूर्णः कृष्णपक्षोऽनिष्ट इति । उक्तं च रत्नमालायाम्—'वलक्षपक्षादिगते हिमांशौ शुभे शुभं पक्षमुदाहरंति । सितेतरादावशुभे शुभं च पक्षावनिष्टौ भवतोऽन्यथा तौ ॥' कश्यपोऽपि—'मासार्द्धेंदुः शुभो यस्य तत्पक्षस्तस्य शोभनः । कृष्णार्द्धेंदौ त्वशुभदे शुभं तद्व्यत्ययेऽन्यथा ॥' इति । इदमेतादृशमक्षबलं, चंद्रबलं तु संकटे विवाहयात्रादावावश्यकर्तव्ये तात्कालिकचंद्रबलाभावे एव ग्राह्यं नान्यथेत्यर्थः ॥ ८ ॥

अथ ग्रहाणां दौष्ट्यपरिहारपूर्वकं तुष्टिसंपादनार्थं नवरत्नसमुदायधारणं शालिन्याह—

वज्रं शुक्रेऽब्जे सुमुक्ता प्रवालं भौमेऽगौ गोमेदमार्कौ सुनीलम् ।
केतौ वैडूर्यं गुरौ पुष्पकं ज्ञे पाचिः प्राङ्माणिक्यमर्के तु मध्ये ॥९॥

वज्रं शुक्र इति ॥ अत्रैकां सुवर्णमुद्रिकां कृत्वा तत्र दृश्यभागे वर्तुलाकारे नवधा विभक्ते प्रागादिक्रमेण नवरत्नानि दृढं निधेयानि । तत्र प्रागिति पंचम्यन्तमव्ययम् । पंचमी चेयं ल्यब्लोपे । अतः प्रागादिदिक्षु इत्ययमर्थो जातः । तत्र शुक्रप्रीतये पूर्वस्यां दिशि वज्रकं हीरकं निधेयम् । एवं चंद्रप्रीत्यर्थं शोभनं मुक्ताफलमाग्नेय्याम् । भौमप्रीत्यर्थं प्रवालं दक्षिणस्याम् । अगौ राहुप्रीत्यर्थं गोमेदं नैर्ऋत्याम् । आर्कौ शनिप्रीतये शोभनं नीलं पश्चिमायाम् । केतुप्रीतये वैडूर्यं वायव्याम् । गुरुप्रीतये पुष्पकं पुष्परागं उत्तरस्याम् । बुधप्रीतये पाचिः गरुडपाचिरैशान्याम् । सूर्यप्रीतये माणिक्यं मध्यमकोष्ठे इति ॥ ९ ॥

अथ सति द्रव्यसामर्थ्ये नवरत्नसमुदायधारणस्य शक्यत्वात्तदुक्त्वेदानीमसति द्रव्यसामर्थ्ये यद्ग्रहकृतं दौष्ट्यं तद्ग्रहरत्नधारणमिंद्रवज्रयाह—

माणिक्यमुक्ताफलविद्रुमाणि गारुत्मतं पुष्पकवज्रनीलम् ।
गोमेदवैडूर्यकमर्कतः स्यू रत्नान्यथो ज्ञस्य मुदे सुवर्णम् ॥ १० ॥

माणिक्येति ॥ सूर्यप्रीत्यर्थं माणिक्यं धार्यं, एवं चंद्रस्य मुक्ताफलं, भौमस्य विद्रुमं, बुधस्य गारुत्मतं गरुडपाचिः, गुरोः पुष्पकं पुष्परागः, शुक्रस्य वज्रं, शनेर्नीलं, 'लहसुनिया' इति कान्यकुब्जभाषयाहुः । राहोर्गोमेदं, केतोर्वैडूर्यम्; इत्येवमर्कतोऽर्कादीनां ग्रहाणां रत्नानि धार्याणि स्युः । तत्र यद्ग्रहकृतं दौष्ट्यं तस्य ग्रहस्य तुष्ट्यै तद्रत्नं धार्यमित्यर्थः । यदाह कश्यपः—'सूर्यादीनां च संतुष्ट्यै माणिक्यं मौक्तिकं तथा । सुविद्रुमं मरकतं पुष्परागं च वज्रकम् ॥ नीलगोमेदवैडूर्यं धार्यं त्वत्वरक्रमात् ॥' अथो ज्ञस्य मुदे सुवर्णमित्यस्याग्रिमश्लोकेन संबंधः ॥ १० ॥

अथ महामूल्यरत्नधारणे यस्य सामर्थ्याभावस्तदर्थमल्पमूल्यानि रत्नानि ताराबलं च शालिन्याह—

धार्यं लाजावर्तकं राहुकेत्वो रौप्यं शुक्रेंद्वोश्च मुक्ता गुरोस्तु ।
लोहं मंदस्यारभान्वोः प्रवालं ताराजन्मर्क्षात्रिरावृत्तितः स्यात् ११

धार्यमिति ॥ अथो ज्ञस्य बुधस्य मुदे संतोषार्थं सुवर्णं यथाशक्ति धार्यं, राहुकेत्वोः प्रीत्यै लाजावर्तकं मणिविशेषो धार्यः, एवं शुक्रेंद्वोस्तुष्ट्यै रौप्यं, गुरोस्तुष्ट्यै मुक्ता, मंदस्य शनेस्तुष्ट्यै लोहं, आरभान्वोर्मंगलसूर्ययोः प्रीत्यै प्रवालं धार्यम् । उक्तं च श्रीपतिना—'धार्यं तुष्ट्यै विद्रुमं भौमभान्वो रूप्यं शुक्रेंद्वोश्च हेमेंदुजस्य । मुक्ता सूरेर्लोहमर्कात्मजस्य लाजावर्तः कीर्तितः शेषयोश्च ॥' इति । सूरेः=सुरगुरोः । शेषयोः=राहुकेत्वोः । दीपिकाकारस्तु औषधीमूलानि धार्याणीत्याह—'मूलं धार्यं त्रिशूल्याः सवितरि विगुणे क्षीरिकामूलमिंदौ जिह्वाहेर्भूमिपुत्रे रजनिकरसुते वृद्धदारोश्च मूलम् । भार्ङ्गी जीवेऽथ शुक्रे भवति शुभकरं सिंहपुच्छस्य मूलं विच्छोलं (?) चार्कपुत्रे तमसि मलयजं केतुदोषेऽश्वगंधम् ॥' इति । त्रिशूली=बिल्वः, क्षीरिका=क्षीरिणी, जिह्वाहिः=नागजिह्वा, वृद्धदारुः=विधारः, भार्ङ्गी प्रसिद्धा, सिंहपुच्छं=वाघोटं, 'चरिवार' इति मध्यदेशभाषया प्रसिद्धम्, मलयजं=चंदनं, अश्वगन्धं प्रसिद्धं, एतदोषधीमूलधारणं सर्वथा रत्नधारणाशक्तौ वेदितव्यम् । तारेति । यद्दिने ताराबलमस्ति वा न वेति विचारश्चिकीर्षितस्तद्दिने या तारा सा जन्मर्क्षाज्जन्मनक्षत्रात्त्रिरावृत्तितः पुनःपुनरावृत्तित्रयेण गणनीया स्यात् । त्रिरिति 'द्वित्रिचतुर्भ्यः सुच्' इति सुजंतमव्ययम् । स्वजन्मनक्षत्राद्दिननक्षत्रे गणिते नवभिर्भक्ते तिस्र आवृत्तयो भवंत्यवशिष्टतारया शुभमशुभं च वाच्यमिति फलितोऽर्थः ॥ ११ ॥

अथ शेषक्रमेण सफलास्तारासंज्ञा अनुष्टुभाह—

जन्माख्यसंपद्विपदः क्षेमप्रत्यरिसाधकाः ।
वधमैत्रातिमैत्राः स्युस्तारा नामसदृक्फलाः ॥ १२ ॥

जन्माख्येति ॥ स्पष्टार्थमिदं पद्यम् । यदाह नारदः—'जन्मसंपद्विपत्क्षेमप्रत्यरिः साधको वधः । मित्रं परममित्रं तु जन्मभाच्च पुनः पुनः ॥' इति । एवं तारा गणनीया इति शेषः । तत्र तृतीयापंचमीसप्तम्यस्तारा निषिद्धाः, अनिष्टफलश्रवणात् । अर्थादन्याः समीचीनाः, समीचीनफलश्रवणात् । उक्तं च-'जन्मतारा द्वितीया च षष्ठी चैव चतुर्थिका । अष्टमी नवमी चैव षट् स्युस्ताराः शुभावहाः ॥' इति । जन्मनक्षत्रं तु कार्यविशेषे गृहीतं प्रतिषिद्धं च तच्चाग्रे निर्णेष्यते । तदिदं ताराबलं कृष्णपक्षविषयं नतूभयपक्षसाधारणम् । तदाह नारदः—'कृष्णे बलवती तारा शुक्लपक्षे बली शशी' इति । युक्तं चैतत् । यतोऽत्रार्थवादो रत्नमालायाम्—'न खलु बहुलपक्षे शीतरश्मेः प्रभावः कथितमिह हि ताराबीर्यमार्यैः प्रधानम् । अतिविकल-

शरीरे प्रेयसि प्रोषिते वा प्रभवति खलु कर्तुं सर्वकार्याणि योषा ॥ शुक्ले पक्षे शीतरश्मिर्बलीयान्न प्राधान्यं तारकायास्तु तत्र । शक्त्या युक्ते विद्यमानेऽपि कान्ते न स्वातंत्र्यं योषितः क्वापि दृष्टम् ॥' इति ॥ १२ ॥

अथावश्यककृत्ये दुष्टताराणां प्रकारद्वयेन परिहारं शार्दूलविक्रीडितेनाह—

मृत्यौ स्वर्णतिलान्विपद्यपि गुडं शाकं त्रिजन्मस्वथो
दद्यात्प्रत्यरितारकासु लवणं सर्वो विपत्प्रत्यरिः ।
मृत्युश्चादिमपर्यये न शुभदोऽथैषां द्वितीयेंऽशका
नादिप्रांत्यतृतीयका अथ शुभाः सर्वे तृतीये स्मृताः १३

मृत्यौ स्वर्णतिलानिति ॥ मृत्यौ सप्तम्यां वधतारायां स्वर्णतिलान् यथाशक्ति सुवर्णयुक्तांस्तिलान् ब्राह्मणाय दद्यात् । विपद्यपि विपत्संज्ञायां तृतीयतारायां गुडमिक्षुविकारं दद्यात् । त्रिजन्मसु त्रिसृषु जन्मतारासु शाकं प्रसिद्धं वृंताकादि दद्यात् । अथो प्रत्यरितारकासु पंचम्यां तारायां लवणं दद्यात् । तदाह नारदः—'जन्मत्रिपंचमसप्ताख्या तारानिष्टफलप्रदा । अनिष्टपरिहाराय दद्याद्दानं द्विजन्मने । शाकं गुडं च लवणं सतिलं कांचनं क्रमात् ॥' इति । अत्र सतिलमिति विशेषणं कांचनपदस्य न लवणपदस्य, तेन वधतारायां सतिलं कांचनं देयम् । उक्तं च दीपिकायाम्—'प्रत्यरे लवणं दद्याच्छाकं दद्यात्रिजन्मसु । विपत्तारे गुडं दद्यान्निधने तिलकांचनम् ॥' इति । अथ द्वितीयः परिहार उच्यते । तत्रादिमपर्यये प्रथमावृत्तौ विपत्प्रत्यरिमृत्युश्च तृतीयपंचमीसप्तम्यस्ताराः सर्वा अपि सामान्यतः षष्टिघटिकात्मिका अपि न शुभदाः स्युः । अथ द्वितीये पर्यये द्वितीयावृत्तौ विपत्प्रत्यरिमृत्यूनामादिप्रांत्यतृतीयका अंशा न शुभदाः । विपत्तारायां प्रथमविंशतिर्घटिकास्त्याज्याः । इतराश्चत्वारिंशच्छुभाः । प्रत्यरितारायां मध्यमा विंशतिघटिकास्त्याज्या, तदुभयतो विंशतिर्विंशतिर्घटिकाः शुभाः । वधतारायामंतिमा विंशतिर्घटिकास्त्याज्याः, आद्याश्चत्वारिंशच्छुभा इति नवीना व्याकुर्वते । जीर्णास्त्वंशशब्देन नक्षत्रचतुर्थांशमाहुः । तथा सति आदिप्रांत्यतृतीयकाश्चरणाः क्रमेण निषिद्धा इतरे शुभाः । अथ तृतीये पर्यये तृतीयावृत्तौ विपत्प्रत्यरिमृत्यवश्चैते सर्वे षष्टिघटिकात्मका अपि शुभाः शोभनफलदाः स्मृताः । तथा च जगन्मोहने—गुरुरित्युक्त्वा पठितम्—'पर्याये प्रथमे वर्ज्या विपत्प्रत्यरिनैधनाः । द्वितीये त्वंशका वर्ज्यास्तृतीये त्वखिलाः शुभाः ॥' द्वितीये पर्यये अंशकानाह स एव—'आद्यांशो विपदि त्याज्यः प्रत्यरे चरमोऽशुभः । वधे त्याज्यस्तृतीयोंऽशः शेषा अंशास्तु शोभनाः ॥' इति । अत्रांशो नक्षत्रचतुर्थांश उच्यते । किमत्र प्रमाणमिति चेत् । 'जन्मर्क्षाद्दशमं कर्म संघातर्क्षं तु षोडशम् । अष्टादशं सामुदायं त्रयोविंशं विनाशभम् ॥ मानसं पंचविंशर्क्षं नाचरेच्छुभमेषु तु ॥' इति नारदोक्तेर्वैनाशिकाख्यत्रयोविंशभस्य दुष्टत्वम् ।

तदपवादमाह च्यवनः—'वैनाशिकाख्ये नक्षत्रे अष्टाशीत्यंशकं विना । शेषांशाः शुभदा ज्ञेया जन्मर्क्षीदुगतांशकात् ॥' इति । अत्र वैनाशिकं प्रत्यरिसंज्ञं तस्य चरमांशस्यानिष्टता प्राप्ता, साऽष्टाशीत्यंशकं विनेत्यनेन बाध्यते इत्यतः 'एकत्र दृष्टः शास्त्रार्थोऽपरत्रापि विनियुज्यते' इति न्यायादत्रापि सैव व्याख्येति न नवीनमतं ज्यायोऽप्रमाणकत्वात् ॥ १३ ॥

अथ चंद्रावस्था वक्ष्यंस्तद्गणनोपायमनुष्टुभाह—

**षष्टि ६० घ्नं गतभं भुक्तघटीयुक्तं युगा ४ हतम् ।**
**शराब्धि ४५ हृल्लब्धतोऽर्कशेषेऽवस्थाः क्रियादिषोः ॥१४॥**

षष्टिघ्नमिति ॥ अत्र चंद्रस्य राशौ राशौ द्वादश अवस्थाः संति । यदाह नारदः—'चंद्रस्य द्वादशावस्था राशौ राशौ यथाक्रमात् । यात्रोद्वाहादिके कार्ये संज्ञातुल्यफलप्रदाः ॥' तत्राश्विनीमारभ्य गतभानि षष्ट्या ६० गुण्यानि वर्तमाननक्षत्रभुक्तघटीयुक्तानि कार्याणि, तानि पुनर्युगैश्चतुर्भिराहतानि शराब्धिहृत् पंचचत्वारिंशता भाज्यानि, यल्लब्धमागतं गतावस्थाम्नाः शेषं वर्तमानावस्थाः, तत्र लब्धांकस्यापि द्वादशाधिक्ये द्वादशभिर्भागे प्रवासाद्यवस्थाः चंद्रस्य गताः स्युः । ता अवस्था मेषराशिस्थे चंद्रे प्रवासादिसंज्ञाः, वृषराशिस्थे चंद्रे नष्टादिसंज्ञाः स्युः । एवं मिथुनादिदशराशिषु मृतादिसंज्ञा ह्यवस्थाः क्रमेण भवंतीत्यर्थः । यदाह नारदः—'षष्टिघ्नं चंद्रनक्षत्रं तत्कालघटिकान्वितम् । वेदघ्नमिषुवेदाप्तमवस्था भानुभाजिताः ॥' इति । अत्रोपपत्तिः—एकैकस्मिन् राशौ द्वादशावस्थाः संति । सामान्यतो नक्षत्रभोगः षष्टिघटिकात्मक इत्येवं सति राशिभोगघटिकाः पंचत्रिंशदधिकशतं भवंति । तत्र त्रैराशिकं यद्येताभि- १३५ र्घटीभिर्द्वादशावस्था लभ्यंते तदेष्टघटीभिः किमिति तत्रैकया घट्या गुणतायां विकारानापत्तेर्द्वादशानामयमंको १३५ भाजको जातः? यथा $\frac{१२}{१३५}$ अत्रानयोर्गुणकभाजकयोस्त्रिभिरपवर्तने गुणकाश्चत्वारः ४ भाजकाः पंचचत्वारिंशत् ४५ तत्कालघटीयोगस्तु न्यायप्राप्त एव । तथा द्वादशभागोऽपि, तदाधिक्यस्य निष्प्रयोजनत्वात् । अत्रेदमवधार्यम्—यद्यपि नक्षत्राणां घटीन्यूनाधिकभावः संभवति तथापि षष्टिघटिकात्मकेन व्यवहारः कार्यः । विद्यमाननक्षत्रं भुक्तं तु स्वभोगं ज्ञात्वा षष्टिघटिकात्मकं कृत्वा तत्र योज्यम् । यथा यदि स्वभोगेन षष्टिघटिका लभ्यंते तदेष्टघटीभिः किमिति त्रैराशिकेनेष्टघटीनां षष्टिर्गुणको नक्षत्रभोगो भाजक इति ॥ १४ ॥

अथ द्वादशावस्थानामानि सफलान्युपजात्याह—

**प्रवासनाशौ मरणं जयश्च हास्यारतिक्रीडितसुप्तभुक्ताः ।**
**ज्वराख्यकंपस्थिरता अवस्था मेषात्क्रमान्नामसदृक्फलाः स्युः १५**

प्रवासनाशाविति ॥ स्पष्टार्थमिदं पद्यम् । उक्तं च कश्यपेन—'प्रवा-

१ सपादनक्षत्रद्वयं राशिसंज्ञम् ।

अष्टमेटी च मृता जया हास्या रतिर्मुदा । मुसा भुक्ता ज्वरा कंपा सुस्थितिर्नाम-
नामिमाः ॥' इति । मुदा 'षिद्भिदादिभ्योऽङ्' ततष्टाप् ॥ १५ ॥

अथ ग्रहाणां वैकृतपरिहारार्थं सौषधजलस्नानं दक्षिणाश्च शार्दूलविक्री-
डितेनाह—

लाजाकुष्ठबलाप्रियंगुघनसिद्धार्थैर्निशादारुभिः
पुंखालोध्रयुतैर्जलैर्निगदितं स्नानं ग्रहोन्थाघहृत् ।
धेनुः कंब्वरुणो वृषश्च कनकं पीतांबरं घोटकः
श्वेतो गौरसितामहासिरज इत्येता रवेर्दक्षिणाः ॥ १६ ॥

लाजाकुष्ठमिति ॥ लाजा भृष्टशालय इति केचित् । वस्तुतस्तु ओषधी-
साहचर्याल्लाजाशब्देन लज्जावती गृह्यते । कुष्ठं प्रसिद्धं, बला 'वरियारा' इति
कान्यकुब्जभाषयाऽऽहुः । प्रियंगुः=फलिनी, घनः=मुस्ता, सिद्धार्थाः=सर्षपाः,
'शिरसिव' इति महाराष्ट्राः, 'सरिषः' इति कान्यकुब्जाः । निशे=हरिद्राद्वयं,
दारुः=देवदारुः, पुंखा=शरपुंखा, लोध्रं प्रसिद्धं, एतैरौषधैर्युतानि गंगादि-
जलानि तैः कृत्वा स्नानं दुष्टग्रहसूचितारिष्टनाशकं स्यात् । उक्तं च दीपिका-
याम्—'सिद्धार्थलोध्ररजनीद्वयमुस्तधान्यं लामज्जकं सफलिनी सवचा च
मांसी । स्नानं कुरु ग्रहगणप्रशमाय नित्यं सर्वे रविप्रभृतयः सुमुखीभवंति ॥'
दैवज्ञमनोहरेऽपि—'सप्रियंगुरजनीद्वयमांसीकुष्ठलाजसितसर्षपखंडैः । वारिभिः
सहवचैः सहलोध्रैः स्नानमस्ति निखिलग्रहपीडाम् ॥' इति । वारिभिः=तीर्थो-
दकैः । रत्नमालायां तु प्रत्येकं ग्रहाणामौषधस्नानमुक्तम् । यथा—'मनः-
शिलैलासुरदारुकुंकुमैरुशीरयष्टीमधुपद्मकान्वितैः । सताम्रपुष्पैर्विषमे स्थिते रवौ
शुभावहं स्नानमुदाहृतं बुधैः ॥'-सूर्यस्येदम् । पंचगव्यगजदानविमिश्रैः शंख-
शुक्तिकुमुदस्फटिकैश्च । शीतरश्मिकृतवैकृतहंतृ स्नानमेतदुदितं नृपतीनाम् ॥'
-चंद्रस्येदम् । 'बिल्वचंपकबलारुणपुष्पैर्हिंगुकल्कफलिनीबकुलैश्च । स्नानमत्रि-
मिह मांसियुताभिर्भौमदोःस्थ्यविनिवारणमाहुः ॥'-भौमस्येदम् । 'गोमयाक्षत-
फलैः सरोचनैः क्षौद्रशुक्तिभवमूलहेमभिः । स्नानमुक्तमिदमत्र भूभृतां
बोधनाशुभविनाशनं बुधैः ॥' बुधस्येदम् । 'मालतीकुसुमयुक्तसर्षपैः पल्लवैश्च
मदयंतिकोद्भवैः । क्षिप्रमंबुमधुकेन च स्फुटं वैकृतं गुरुकृतं विनिहंति ॥'-गुरो-
रिदम् । 'एलया च शिलया समन्वितैर्वारिभिः सकलमूलकुंकुमैः । स्नानतो
भृगुसुतोपपादितं दुःखमेति विलयं न संशयः ॥'—शुक्रस्येदम् । 'असिततिलां-
जनलोध्रबलाभिः शतकुसुमाघनलाजयुताभिः । रवितनये कथितं विषमस्थे
दुरितहदाप्लवनं मुनिमुख्यैः ॥'—शनेरिदम् । 'लोध्रगर्भतिलपत्रकमुस्ता-
हस्तिदानमृगनाभिपयोभिः । स्नानमार्तिमिह कृंतति राहोः साजमूत्रमिदमेव
च केतोः ॥' राहुकथितद्रव्यमजमूत्रसहितं केत्वर्थं स्यात् ॥-राहुकेत्वोरिदम् ।
अत एवोक्तं दीपिकायाम्—'प्रयोज्यमौषधस्नानं ग्रहविप्रसुरार्चनम् । ग्रहानु-

१ नाष्टः=नाशः । नष्टी इति क्तिन्नंतस्य द्विवचनमिदम् । २ बोधनः=बुधः ।

रिष्य होमो वा ग्रहाणां प्रीतिमिच्छता ॥' तत्र ग्रहपूजाहोमौ वसिष्ठसंहितायां महता प्रबंधेनोक्तौ तत एवावगंतव्यौ इत्यलमतिविस्तरेण । अथ रवेरिति । रविमारभ्य दक्षिणा उच्यंते—तत्र सूर्यप्रीत्यर्थं धेनुर्गौः, चंद्रप्रीत्यर्थं 'कंबु शंखः । कंबु इति नपुंसकलिंगं पृथक्पदम् । शंखः स्यात्कंबुरस्त्रियाम्' इत्यमरोक्तेः; मंगलप्रीत्यर्थमरुण आरक्तो वृषः, बुधप्रीत्यर्थं कनकं सुवर्णं । गुरुप्रीत्यर्थं पीतांबरं, तच्च यथाविभवं कार्पासं कोशजं च; शुक्रप्रीत्यर्थं श्वेतो घोटकः, शनिप्रीत्यर्थमसिता श्यामवर्णा गौः, राहुप्रीत्यर्थं महाऽसिर्बहुमूल्यखड्गः, केतुप्रीत्यर्थमजः छागो दक्षिणेत्यर्थः । यदाह वसिष्ठः—'धेनुं शंखं रक्तवृषं हेम पीतांबरद्वयम् । श्वेताश्वं कृष्णधेनुं च कृष्णलोहमजं क्रमात् ॥ स्वर्णेन वा समीकृत्य दातव्या दक्षिणा ततः । आचार्यायं जापकेभ्यो ब्राह्मणेभ्योऽथ शक्तितः ॥' इति । अत्र प्रत्येकं दानमंत्रास्तत्रैवोक्ताः ग्रंथभूयस्त्वभयान्नात्र लिख्यंते । 'एवं यः कुरुते सम्यग्ग्रहयज्ञं नृपोत्तमः । सर्वान्कामानवाप्नोति शुभस्थानफलं लभेत् ॥' नृपोत्तम इत्युपलक्षणम् । तेन यः कश्चिद्गृहस्थोऽपि कुर्यात् । तत्र स्वविभवानुरूपाणि ग्रहदानानि प्रोक्तानि कैश्चित्, यथा–'कौसुंभवस्त्रं गुडहेमताम्रं माणिक्यगोधूमसुवर्णवस्त्रम् । सवत्सगोदानमिति प्रणीतं दुष्टाय सूर्याय मसूरिकाश्च ॥'-सूर्यायेदम् । 'घृतकलशं सितवस्त्रं दधिशंखौ चैव मौक्तिकसुवर्णे । रजतं च संप्रदद्याच्चंद्रारिष्टोपशमनाय ॥'-चंद्रायेदम् । 'प्रवालगोधूममसूरिकाश्च वृषश्च ताम्रः करवीरपुष्पम् । आरक्तवस्त्रं गुडहेमताम्रं दुष्टाय भौमाय सचंदनं हि ॥'-भौमायेदम् । 'नीलं वस्त्रं मुद्गदानं बुधाय रत्नं पाची दासिका हेम सर्पिः । कांस्यं दंतः कुंजरश्चाय मेषो रौप्यं सर्वं पुष्पजात्यादिकं च ॥' बुधायेदम् । 'अश्वः सुवर्णं शुभपीतवस्त्रं सुपीतधान्यं लवणं सपुष्पम् । सशर्करं तद्रजनीप्रयुक्तं दुष्टाय शांत्यै गुरवे प्रदेयम् ॥' गुरव इदम् । रजनी=हरिद्रा । 'चित्रवस्त्रमपि दानवार्चिते दुष्टगे मुनिवरैः परिगीतम् । तंदुलं घृतसुवर्णरूप्यकं वज्रकं परिमलो धवलोऽश्वः ॥'-शुक्रायेदम् । 'नीलकं महिषं कृष्णं वस्त्रं लोहं सदक्षिणम् ॥ दद्याच्च दक्षिणायुक्तं शनिदोषप्रशांतये ॥'-सूर्यजायेदम् । 'राहोर्दानं बुधैर्मेषो गोमेदं लोहकंबलौ । सुवर्णं नागरूप्यं च सतिलं ताम्रभाजनम् ॥'-राहव इदम् । 'केतौ वैडूर्यममलं तैलं मृगमदस्तथा ॥ ऊर्णा तिलाश्च संयुक्ता दद्यात्क्लेशापनुत्तये ॥-केतव इदम् । अन्यच्च संहिताप्रदीपे—'भानुर्मांसफलदानादपहरति नृणां वैकृतं वासरोत्थं सोमः श्रीखंडदानादवनिवरसुतो भोजनात्पुष्पदानात् ॥ सौम्यः शक्रस्य मंत्री हरिहरनमनाद्भार्गवः शुभ्रवस्त्रैर्मल्लस्नानात्प्रभाते दिनकरतनयो ब्रह्मनत्या परौ च ॥' इति । ब्रह्म=ब्राह्मणः । परौ=राहुकेतू ॥ १६ ॥

अथ सूर्यादयो ग्रहा गंतव्यराशेः प्राक् कियद्भिर्दिनैः फलं दद्युरित्येतदुपजात्याह—

**सूर्यारसौम्यास्फुजितोक्षनागसप्ताद्रिघस्रान्विधुरग्निनाडीः ।**
**तमोयमेज्याश्त्रिरसाब्धिमासान्गंतव्यराशेः फलदाः पुरस्तात् १७**

सूर्यारसौम्येति ॥ सूर्यादयो ग्रहा गंतव्यराशेर्जिगमिषितराशेः पुरस्तात्पूर्वमेवैतत्संख्याकदिवसघटीमासान् । अत्र 'कालाध्वनोरत्यंतसंयोगे' इति द्वितीया । ततो नैरंतर्येण तावंतं कालं फलदाः स्युः । तद्यथा–सूर्यो गंतव्यराशेः प्राक् अक्षयत्वान्पंचदिवसान् फलदः, एवमारो भौमोऽष्टदिवसान्पूर्वं फलदः, बुधः सप्तदिवसान्, शुक्रोऽपि सप्तदिवसान्, विधुश्चंद्रः अग्निनाडीर्घटिकात्रयमेव प्राक्फलदः, राहुर्गंतव्यराशेः प्राक्त्रिमासं फलदः, एवं शनिः षण्मासान्गुरुर्द्विमासान्पूर्वं फलद इत्यर्थः । उक्तं च–'सूर्यः पंचदिनं शशी त्रिघटिकं भौमोऽष्ट वै वासरान्सप्ताहानि भृगुः ससोमतनयो मासद्वयं वै गुरुः । षण्मासान्पुरतोऽपि सूर्यतनयो राहुश्च मासत्रयं केतुश्चैव ददाति भावि सकलं गंतव्यराशेः फलम् ॥' इति । जगन्मोहने ऽप्येवमुक्तम्–'आदित्यादिग्रहा दद्युर्लग्ने वा गोचरेऽपि वा । सप्तविंशति २७ भागोर्ध्वं परराशिफलं खलु ॥' इति ॥ १७ ॥

अथ प्रसंगादावश्यकमंगलयात्रादिकृत्येषु कर्तव्येषु सत्सु तिथ्यादिविषयकदुष्टयोगसद्भावे तद्दोषनिवारणार्थं दानं शालिन्याह—

**दुष्टे योगे हेम चंद्रे च शंखं धान्यं तिथ्यर्धे तिथौ तंडुलांश्च ।**
**वारे रत्नं भे च गां हेम नाड्यां दद्यात्सिंधूत्थं च तारासु राजा १८**

दुष्ट इति ॥ दुष्टे व्यतीपातादिरूपे योगे सति हेम सुवर्णं यथाशक्ति राजा दद्यात् । च पुनश्चंद्रे दुष्टे विहितान्यस्थानस्थिते शंखं दद्यात् । तिथ्यर्धे करणे भद्राख्ये दुष्टे धान्यं दद्यात् । तिथौ दुष्टे चतुर्थ्यादिरूपे तंडुलान्, वारे दुष्टेऽनुपचयरूपे रत्नं प्रवालमुक्तादि दद्यात् । भे राशौ दुष्टे क्रूरग्रहाधिष्ठितत्वादिदोषसहिते सति गां दद्यात् । नाड्यां घटिकायां दुर्मुहूर्तादिना दुष्टायां सत्यां हेम सुवर्णं दद्यात् । च पुनस्तारासु दुष्टासु विपत्प्रत्यरिवधरूपासु सिंधूत्थं सैंधवं लवणं दद्यात् । पूर्वं दुष्टतारासु प्रत्येकं विशिष्य दानमुक्तमिदानीं सर्वत्रैकं लवणमेव देयमिति पुनरुक्तिपरिहारः । उक्तं च दीपिकायाम्—'योगस्य हेम करणस्य च धान्यमिंदोः शंखं च तंदुलमणी तिथिवारयोश्च । ताराबलाय लवणान्यथ गां च राशेर्दद्याद्विजाय कनकं शुचि नाडिकायाम् ॥' इति ॥ १८ ॥

अथात्र गोचरप्रसंगात्सूर्यादयो ग्रहा राश्यंतरगाः संतः कदा शुभाशुभफलदातारो भवंति तथा चांद्रमासाधिकरणकरविवासरादौ स्वजन्मनक्षत्रप्रवेशे सति फलविशेषं च वसंततिलकावृत्तेनाह—

**राश्यादिगौ रविकुजौ फलदौ सितेज्यौ**
**मध्ये सदा शशिसुतश्चरमेऽब्जमंदौ ।**
**अध्वाश्ववह्निभयसन्मतिवस्त्रसौख्य-**
**दुःखानि मासि जनिभे रविवासरादौ ॥ १९ ॥**

राश्यादिगाविति ॥ रविकुजौ सूर्यमंगलौ राश्यादिगौ राशिप्रथमदशांशमध्यस्थितौ संतौ फलदौ निखिलफलदातारौ अवशिष्टांशेष्वीषदीषत्फलदौ ।

एवं सितेज्यौ शुक्रबृहस्पती मध्ये मध्यगतांशदशके निखिलफलदातारावन्य- त्रैवत् । शशिसुतो बुधः सदा त्रिंशदंशेषु निखिलफलदाता । अर्कमंदौ चंद्र- शनैश्चरौ चरमे राश्यंतिमांशदशके निखिलफलदातारावन्यत्रैवत् । उक्तं च वसिष्ठेन—'भवनादिगतौ फलदौ रविभौमौ मध्यगौ च गुरुशुक्रौ ॥ अंत्यगतौ शशिरविजौ सदैव फलदः शशांकसुतः ॥' वराहेणापि—'दिनकररुधिरौ प्रवेशकाले गुरुभृगुजौ भवनस्य मध्ययातौ । रविसुतशशिनौ विनिर्गमस्थौ शशितनयः फलदस्तु सर्वकालम् ॥' इति । रुधिरः=भौमः । अध्वेति । यस्मि- न्मासे स्वीयजन्मनक्षत्रप्रवेशे सूर्यादिवाराश्चेत्स्युस्तदा तस्मिन्मासेऽध्वादीनि फलानि वाच्यानि । तद्यथा—रविवारे जन्मनक्षत्रप्रवेशे सति तस्मिन्मासे अध्वा मार्गोऽटनमिति यावत्, फलं तस्य पुंसो भवेत् । एवं चंद्रवारे जन्म- नक्षत्रप्रवेशे भक्ष्यं भक्ष्यं तत्प्राप्तिः स्यादित्यर्थः । एवं भौमवारे वह्निभयं भवेत् । बुधवारे सन्मतिः सती समीचीना धर्मयुक्ता बुद्धिर्भवेत् । गुरुवारे वस्त्रप्राप्ति- र्भवेत् । भृगुवारे सौख्यं भवेत् । शनिवारे दुःखप्राप्तिः स्यादित्यर्थः । उक्तं च ज्योतिषरत्नसंग्रहे वामनेन—'अध्वा भोजनमग्निभीः सुमतिता वस्त्रं सुखं चासुखं मासे मासि फलं भवेज्जननभे सूर्यादिवारे स्थिते' इति । अत्र 'मासास्तथा च तिथयस्तुहिनांशुमानात्' इति भास्कराचार्यवाक्याच्चांद्रः शुक्लप्रतिपदादिदर्शांतो मासो गृह्यत इति शिवम् ॥ १९ ॥

अथ गोचरप्रकरणं गद्येनोपसंहरति—

इति श्रीदैवज्ञानंतसुतदैवज्ञरामज्योतिर्विद्विरचिते मुहूर्त- चिंतामणौ गोचरप्रकरणं समाप्तम् ॥ ४ ॥

ज्योतिर्विद्वरनीलकंठविदुषः श्रीचंद्रिकायास्तथा पुत्रेणाहिगवीप्रसारितधिया मौहूर्तचिंतामणेः । गोविंदेन विनिर्मिते नयनिधौ पीयूषधाराभिधे व्याख्याने ग्रहगोचरप्रकरणं संपूर्णतामभ्यगात् ॥ १ ॥

इति श्रीमद्दैवज्ञमुकुटालंकारनीलकंठज्योतिर्वित्पुत्रगोविंदज्योतिर्विद्विर- चितायां मुहूर्तचिंतामणिटीकायां पीयूषधारायां ग्रहगोचर- प्रकरणं समाप्तम् ॥ ४ ॥

## अथ संस्कारप्रकरणम् ५ ।

शर्वाणीतनयमघाब्धिदावमीशं नत्वा श्रीगुरुपदभक्तिलब्धविद्यः ।
गोविंदो विबुधजनप्रहर्षिणीं तां संस्कारप्रकरणटिप्पणीं तनोति ॥

अथ संस्कारप्रकरणं व्याख्यायते । तत्र संस्क्रियतेऽनेन श्रौतेन कर्मणा स्मार्तेन च पुरुष इति संस्कारः । स्वीयस्वीयजातौ सामान्यविशेषविहितवैदिक- स्मार्तकर्मानुष्ठानद्वाराऽदृष्टविशेषाधायक इति यावत् । लक्षणया तदर्थोक्त- दिनशुद्ध्यादिकं संस्कारशब्देनोच्यते । तस्य प्रकरणमुपक्रमः । ते च संस्काराः अष्टचत्वारिंशत् । यदाह गौतमः—'गर्भाधानं पुंसवनं सीमंतोन्नयनं जात-

कर्मनामकरणान्नप्राशनचौलोपनयनं चत्वारि वेदव्रतानि स्नानं सहधर्मचारिणी-संयोगः पंचानां यज्ञानामनुष्ठानमष्टका पार्वणश्राद्धं श्रावण्याग्रहायणीचैत्री आश्वयुजीति सप्त पाकसंस्थाः अग्न्याधानमग्निहोत्रं दर्शपौर्णमासौ चातुर्मास्यान्याग्रयणेष्टिर्निरूढपशुबंधः सौत्रामणीति सप्त हविर्यज्ञसंस्थाः अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त सोमयज्ञसंस्था इत्येते चत्वारिंशत्संस्काराः । अष्टावात्मगुणाः दया सर्वभूतेषु क्षांतिरनसूया शौचमनायासो मांगल्यमकार्पण्यमस्पृहेति । यस्यैते चत्वारिंशत् संस्काराः अष्टावात्मगुणाश्च स ब्रह्मणा सायुज्यमाप्नोति ।' इति । तत्रैते पुंसः संस्काराः समीचीनदिवसेष्वनुष्ठिताः संतोऽभिहितफलदातारो भवंति । तत्र प्रथमं गर्भाधानाख्यसंस्कारोऽभिहितः । स च रजस्वलाद्यधीनः । उक्तं च भरद्वाजसंहितायाम्—'रजस्वला यदा नारी योग्या स्याद्गर्भधारणे । ततः कुर्वीत तत्संगं गर्भार्थं बुद्धिमान्नरः ॥' तत्रापि पुत्रोत्पत्त्यर्थमवश्यं संगः कार्यः । अन्यथा परलोकाभावः । उक्तं च श्रुतौ—'नापुत्रस्य लोकोऽस्ति तत्सर्वे पशवो विदुः' इति । पशवः=देवाः । अत एव पुन्नाम्नो नरकात्त्रायत इति पुत्र इत्यन्वर्थतापि प्रतीयते । तदुक्तं महाभारते आदिपर्वणि शाकुंतले—'यदागमवतः पुंसो यदपत्यं प्रजायते । तत्तारयति संतत्या पूर्वप्रेतान्पितामहान् ॥ पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः । तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवा ॥' इति । अनेनामुष्मिकं फलमुक्तं संततेः । ऐहिकमपि फलमुक्तं भारते—'इष्टं दत्तमधीतं च यज्ञाश्च बहुदक्षिणाः । सर्वमेतदपत्यस्य कलां नार्हति षोडशीम् ॥ व्रतोपवासैर्बहुभिः कृतं भवति भीष्म यत् । सर्वं तदनपत्यस्य मोघं भवति निश्चितम् ॥' अतो गर्भाधानमवश्यं कर्तव्यं । तच्च रजोदर्शनतः प्राङ् न विधेयम् । तदुक्तं भविष्यत्पुराणे—'रजोदर्शनतः पूर्वं न स्त्रीसंसर्गमाचरेत् । संसर्गं यदि कुर्वीत नरके परिपच्यते ॥' युक्तं चैतत्—रजो हि पुष्परूपं, तद्विना फलरूपसंतानानुत्पत्तेः । ननु कश्चिद्रजोदर्शनं विनापि गर्भसंभवो दृश्यते, क्वचित्तु सत्यपि रजसि गर्भानुपलंभ इति । नैष दोषः । गर्भधारणं हि रजो विना न भवतीत्येषा व्याप्तिः । तच्च क्वचित्प्रकटं क्वचिदप्रकटमंतरेव तिष्ठति, तत्राप्रकटेऽपि रजस्यंतर्गतरजःसत्त्वाद्गर्भधारणसंभवोऽतः प्रागुक्तदोषाभावः । उक्तं च कश्यपसंहितायाम्—'वर्षद्वादशकादूर्ध्वं यदि पुष्पं बहिर्नहि । अंतःपुष्पं भवत्येव पनसोदुंबरादिवत् । अतस्तु तत्र कुर्वीत तत्संगं बुद्धिमान्नरः ॥' इति । यत्र तु सत्यपि रजसि गर्भधारणं न दृश्यते तत्र पुष्पबीजक्षेत्रादिदोषा द्रष्टव्याः ॥ तस्मात्स्थितमेतद्रजोदर्शनानंतरं स्त्रीसंगः कार्य इति । तत्र—'प्रथमरजोदर्शनतः शुभाशुभं भवति सर्ववनितानाम् ॥' इति वसिष्ठोक्तेः । तत्र शुभफलसूचकं प्रथमरजोदर्शने मासाद्यनुष्टुभाह—

आद्यं रजः शुभं माघमार्गराधेषफाल्गुने ।
ज्येष्ठश्रावणयोः शुक्ले सद्वारे सत्तनौ दिवा ॥ १ ॥

आद्यमिति ॥ राधः=वैशाखः, इषः=आश्विनः, शेषं स्पष्टम् । आद्यं प्रथमो-

द्यं रजः स्त्रीधर्मो माघमार्गशीर्षवैशाखाश्विनफाल्गुनमासेषु तथा ज्येष्ठश्राव-णमासयोः तदा शुभं भविष्यच्छुभसूचकम्। अर्थाच्चैत्राषाढभाद्रपदकार्तिक-पौषमासा अशुभाः ॥ उक्तं स्मृतिचंद्रिकायाम्—'चैत्रे स्यात्प्रथमर्तौ तु नारी वैधव्यभागिनी। वैशाखे धनपुत्राढ्या ज्येष्ठे रोगान्विता तथा। शुचौ मृतप्रजा प्रोक्ता श्रावणे धनधान्यदा ॥ नभस्ये दुर्भगा क्लिष्टा आश्विने च तपस्विनी। ऊर्जेऽल्पायुष्मती नारी मार्गशीर्षे बहुप्रजा ॥ पौषे तु पुंश्चली नारी माघे पुत्रसुखान्विता। फाल्गुने श्रीमती साध्वी क्रमान्मासफलं स्मृतम् ॥' इति। तथा शुक्ले शुक्लपक्षे सत् अर्थात्कृष्णपक्षे रजोदर्शनं दुष्टम्। तदुक्तं स्मृतिचंद्रिकायाम्—'शुक्लपक्षे सुशीला स्यात्कृष्णे सा कुलटा भवेत्। कृष्णस्य दशमी यावन्मध्यमं फलमादिशेत् ॥' अतः कृष्णपक्षदशम्युत्तरं कुल-टात्वं स्यादित्यर्थः। अथ सद्वारे सतां चंद्रबुधगुरुशुक्राणां वारे आद्यं रजः शुभम्, अर्थादन्यवारेषु दुष्टफलम्। यदाह कश्यपः—'रोगिणी रविवारे तु सोमवारे पतिव्रता। दुःखिता भौमवारे तु बुधे सौभाग्यसंयुता ॥ श्रीसंयुता गुरोर्वारे पतिभक्ता भृगोर्दिने। मलिना मन्दवारे तु रात्रावपि तथैव च ॥' वसिष्ठोऽपि—'सदा गदार्ता सुपतिव्रता सा वंध्या प्रजावत्यतुलार्थयुक्ता। आनन्दकर्त्री स्वसती च पुण्यवती क्रमाद्भास्करवासरेषु ॥' भास्करवासरेष्वि-त्यत्र 'अर्धर्चाः पुंसि च' इत्यादिवत् बहुवचनादाद्यर्थोऽवगम्यते। तेन भास्कर-वासरादिष्वित्यर्थः फलितः। अथ सत्तनौ समीचीनलग्ने शुभस्वामिकराशा-वित्यर्थ इति केचित्। तत्र शुभफलमाद्यं रजः। यदाह नारदः—'कुलीर-वृषचापांत्यनृयुक्कन्यातुलाधराः। राशयः शुभदा ज्ञेया नारीणां प्रथमार्तवे ॥' केचित्तु सत्तनौ सद्भिर्दृष्टे युक्ते वा तनौ इति व्याकुर्वते। तदुक्तं दैवज्ञमनो-हरे—'मेषे सव्यभिचारा स्याद्वृषभे परभोगिनी। मिथुने धनभोगाढ्या कर्कटे व्यभिचारिणी ॥ पुत्राढ्या सिंहराशौ तु कन्यायां श्रीमती भवेत् ॥ विच-क्षणा तुलायां च वृश्चिके तु पतिव्रता ॥ दुश्चारिणी धनुःपूर्वे अपरे च पति-व्रता। मकरे मानहीना च कुंभे निर्धनवंध्यता ॥ मीने विलक्षणा लग्ने ग्रहसंस्था विवाहवत्।' अत्राऽशुभफलापवादमाह वसिष्ठः—'अशुभमपि समस्तं चार्तवं संप्रभूतं सुरगुरुसितयुक्ते वीक्षिते वाथ लग्ने। तिमिरमिव कठोरज्योति-रुत्पत्तिकाले क्षयमथ समुपैति प्राप्नुयादीप्सितानि ॥' कठोरज्योतिः=सूर्यः। अथ दिवा दिवसे आद्यं रजः शुभम्। 'मलिना मंदवारे तु रात्रावपि तथैव च' इति नारदोक्तेः दिवा रजोदर्शनं शुभमित्यर्थः। स्मृत्यंतरेऽपि विशेष उक्तः—'प्रातःकाले तु सधना सायाह्ने सर्वभोगिनी। मध्याह्ने च भवेद्वेश्या निशीथे विधवा भवेत् ॥' इति ॥ १ ॥

---

१ अत्र कैश्चित् 'रोगान्विता' इति पाठो ग्रन्थान्तरेऽपि चादृतो दृश्यते, स तु मूलविगुण इति ज्ञेयः।

अथ प्रथमे रजोदर्शने शुभमध्याशुभनक्षत्राण्यनुष्टुभाह—

**श्रुतित्रयमृदुक्षिप्रध्रुवस्वातौ सितांबरे ।**
**मध्यं च मूलादितिभपितृमिश्रेऽपरेष्वसत् ॥ २ ॥**

श्रुतित्रयेति ॥ श्रुतित्रयं=श्रवणधनिष्ठाशतभिषाः, मृदुक्षिप्रध्रुवाणि=चित्रानुराधामृगरेवत्यश्विनीपुष्यहस्तरोहिण्युत्तरात्रयस्वाती च; एतेषु भेषु आद्यं रजः शुभमिति पूर्वेण संबंधः । अत्र समाहारद्वंद्वः । आगमशासनस्यानित्यत्वाशुभभावः । मूलेति । मूलपुनर्वसुमघाविशाखाकृत्तिकासु मध्यं मध्यफलम् । अपरेषु भरणीज्येष्ठार्द्राश्लेषापूर्वात्रयेषु असदनिष्टफलम् । उक्तं च गर्गेण— 'सुभगा चैव दुःशीला वंध्या पुत्रसमन्विता । धर्मयुक्ता व्रतघ्नी च परसंतानमोदिनी ॥ सुपुत्रा चैव दुष्पुत्रा पितृवेश्मरता सदा । दीना प्रज्ञावती चैव पुत्राढ्या चित्रकारिणी ॥ साध्वी पतिव्रता नित्यं सुपुत्रा कष्टचारिणी । स्वकर्मनिरता हिंस्रा पुत्रपौत्रादिसंयुता ॥ नित्यं धनकथासक्ता पुत्रधान्यसमन्विता । मूर्खार्थाढ्या गुणवती दास्रभाद्दिः क्रमात्फलम् ॥' इति । व्यवहारनिबंधे श्रीपतिनापि—'करादिपंचोत्तरमूलपूर्वविष्णुत्रयाश्वीज्यविधीदुभेषु । आद्यं रजः सौख्यसुतायुरर्थसौभाग्यवृद्धिं कुरुतेऽङ्गनानाम् ॥ मघेशयोः शोकमथादितेर्भे सा बंधकींद्रेऽप्यनले दरिद्रा । पूर्वात्रये याम्यभुजंगधिष्ण्ये वैधव्यमस्या भवतीति नूनम् ॥' अत्र यद्यपि लिखितयोर्द्वयोरपि संमतिवाक्ययोरैकार्थ्यं तथापि ग्रंथकृता विशाखामूलयोर्मध्यत्वाभिधानं वसिष्ठवाक्यस्यानुरोधात्कृतम् । उक्तं च वसिष्ठेन—'द्विदैवभे पुष्पवती प्रमत्ता कृत्यैव मोघाभयवैरिसंघा । मूले प्रकामाधिकहीनसत्त्वा स्यात्सर्वभक्षोद्धतदोषचित्ता ॥' इति । अथ सितांबरे श्वेतवस्त्रे आद्यं रजः शुभमिति पूर्वेण संबंधः । उपलक्षणं चैतत्क्षौमनूतनवस्त्रयोः । अर्थादन्यादृशेषु वस्त्रेषु रजोदर्शनं निंद्यमित्यर्थः । तदाह वसिष्ठः—'सुभगा श्वेतवस्त्रा स्याद्दृढवस्त्रा पतिव्रता । क्षौमवस्त्रा क्षितीशा स्यान्नववस्त्रा सुखान्विता ॥ दुर्भगा जीर्णवस्त्रा स्याद्रोगिणी रक्तवाससा । नीलांबरधरा नारी विधवा पुष्पिता यदि । मलिनांबरतो नारी दरिद्रा स्याद्रजस्वला ॥' क्षौमवस्त्रं=पट्टवस्त्रम् । कश्चिद्रक्तबिंदुभिः फलमुक्तम्— 'वस्त्रे स्युर्विषमा रक्तबिंदवः पुत्रमाप्नुयात् । समाश्चेत्कन्यका चेति फलं स्यात्प्रथमार्तवे ॥' इति वसिष्ठोक्तेः । अन्यच्च—'संमार्जनं काष्ठतृणाग्निशूर्पान्हस्ते दधाना कुलटा तदा स्यात् । तल्पोपभोगे तपसि स्थिता चेद्दृष्टं रजो भाग्यवती तदा स्यात् ॥' ॥ २ ॥

अथ निंद्यरजोदर्शनं शालिन्याह—

**भद्रानिद्रासंक्रमे दर्शरिक्तासंध्याषष्ठीद्वादशीवैधृतेषु ।**
**रोगेऽष्टम्यां चन्द्रसूर्योपरागे पाते चाद्यं नो रजोदर्शनं सत् ॥३॥**

भद्रेति ॥ भद्रा प्रसिद्धैव, निद्रा स्वापः, संक्रमः संक्रांतिः, दर्शोऽमावास्या,

---

१ स्यात्सर्वभुक्षोद्धतदोषचित्ता इति पाठः ।

रिक्ताः प्रसिद्धाः, संध्या प्रातःसंध्या मध्याह्नसंध्या सायंसंध्या च, षष्ठीद्वादश्यौ प्रसिद्धे, वैधृताख्यः सप्तविंशतितमो योगः महापातश्च,रोगो ज्वरादिः प्रदरादिश्च, अष्टमी,चन्द्रसूर्योपरागो ग्रहणं, पातः व्यतीपातः सप्तदशयोगो महापातश्च; एषु दुष्टयोगेष्वाद्यं रजोदर्शनं नो सत् । अनिष्टफलदमित्यर्थः । यदाह कश्यपः- 'अष्टमी पञ्चमा रिक्ता द्वादशी संक्रमेऽपि वा । वैधृतौ च व्यतीपाते ग्रहणे चंद्रसूर्ययोः ॥ विष्टयां संध्यासु निद्रायां दुर्भगा प्रथमार्तवे ।' नारदेन तु प्रतिपत्तिथिः परिघपूर्वार्धं च निषिद्धम्-'अमारिक्ताष्टमीषष्ठीद्वादशीप्रतिपत्स्वपि । परिघस्य तु पूर्वार्धे व्यतीपाते च वैधृतौ ॥ संध्यासूपप्लवे पञ्चामशुभं प्रथमार्तवम् ॥' रोगे संमतिर्नास्ति । वसिष्ठेन तु स्थलभेदेन फलविशेषोऽभिहितः-'ग्रामाद्बहिः परग्रामे वा चेत्स्याद्यभिचारिणी । पतिव्रता पतिस्थाने सुशीला गृहमध्यमे ॥ ग्राममध्ये च वृद्धिश्च विधवा च दिगंबरा । उपरागे च दुःशीला आयुष्यं जलसन्निधौ ॥ धनमध्ये तु कन्याया धनधान्यसमृद्धिदा ॥' प्रथमार्तवं स्यादिति पूर्वेण संबंधः । अत्र रजस्वलायाः कन्याया मात्रादिकृतप्रश्नलग्नाच्छुभाशुभविशेषो भूयान्वसिष्ठेनोक्तः सोऽस्माभिर्ग्रंथबाहुल्यभयान्नालेखि स तत एवावधार्यः ॥ ३ ॥

अथ प्रथमरजस्वलायाः स्नानमुहूर्तं वसंततिलकयाह—

हस्तानिलाश्विमृगमैत्रवसुध्रुवाख्यैः
शक्रान्वितैः शुभतिथौ शुभवासरे च ।
स्नायादथार्तववती मृगपौष्णवायु-
हस्ताश्विधातृभिररं लभते च गर्भम् ॥ ४ ॥

हस्तेति ॥ हस्तस्वात्यश्विनीमृगानुराधाधनिष्ठारोहिण्युत्तरात्रयज्येष्ठाभिः शुभतिथौ 'भद्रा निद्रासंक्रमे' (श्लो० ३) इत्याद्यनिष्टदिनव्यतिरिक्तदिवसे शुभवारे शुभानां चंद्रबुधगुरुशुक्राणां वासरे च आर्तववती ऋतुरेवार्तवम्, प्रज्ञादित्वात्स्वार्थेऽण् । तद्विद्यते यस्याः सा तथोक्ता सा रजोवती स्नायात् । उक्तं च दैवज्ञवल्लभे—'ब्राह्मानुराधाश्विनसोमभेषु हस्तानिलाखंडलवासवेषु । विश्वार्यमर्क्षोत्तरभाद्रभेषु वराङ्गनास्नानविधिः प्रदिष्टः ॥' आखंडलः=ज्येष्ठा, वासवं=धनिष्ठेत्यपुनरुक्तिः । वारफलमपि तत्रैव 'सरक्पतिव्रता दीना पुत्रिणी भोगभागिनी । पतिव्रता क्लेशयुक्ता ऋतुस्नानेऽर्कवारतः ॥' इति । केचित्त्वन्यथा वारफलं वदंति-'काकीव वंध्या भवतीह शुक्रे नष्टप्रजा स्नानविधौ बुधे च । सौरे च मृत्युः पयसोऽल्पनंदी भौमार्कजीवे बहुपुत्रलाभः ॥' इति । एतत्प्रसूतास्नानविषयम् । तदुक्तं दैवज्ञवल्लभे—'स्नाता प्रसूताप्यसुता बुधेन स्नाता च वंध्या भृगुनंदनेन । सौरे मृतिः क्षीरहतिस्तु सोमे पुत्रार्थलाभो रविजीवभौमे ॥' इति । विशेषमाह—मृगेति ॥ मृगरेवतीस्वातीहस्ताश्विनीरोहिणीभिर्नक्षत्रैः स्नातार्तववती अरं शीघ्रं गर्भं लभते । तदुक्तं दैवज्ञमनोहरे—'वायुः पूषा च सौम्यश्च करो ब्रह्मा तथाश्विनी । एभिः स्नाते तु

नारीणां गर्भः संपद्यते पुनः ॥' इति । अत्रैकादश नक्षत्राणि स्नानविधायुक्तानि । तत्रापि षट्सु भेषु शीघ्रं गर्भोत्पत्तिर्भवेत्, अन्येषु किंचिद्विलंबेनेत्यर्थः । सर्वथा विहितभिन्नेषु स्नानं न कार्यमिति निष्कृष्टोऽर्थः । उक्तं च-'कृत्तिका भरणी मूलमार्द्रा पुष्यः पुनर्वसुः । मघा चित्रा विशाखा च श्रवणो दशमस्तथा ॥ एताः प्राणहरास्तारास्तासु स्नानं न कारयेत । यदि स्नानं प्रकुर्वीत पुनःसूतिर्न विद्यते ॥' इति । अर्थाच्छततताराश्लेषापूर्वात्रयेषु मध्यममिति । इयं च देशाचारतो व्यवस्थानुसंधेया, शिष्टाचारस्यापि स्मृतिवत्प्रामाण्यात् । दाक्षिणात्यास्तु-चतुर्थे एव दिवसे स्नानमाहुः-'चतुर्थेऽहनि शुध्यति' इति, 'भर्तुः स्पृश्या चतुर्थेऽह्नि स्नानेन स्त्री रजस्वला' इति स्मृतिवचनात् ॥४॥

अथ गर्भाधानमुहूर्तं शार्दूलविक्रीडितशालिनीभ्यामाह—

गंडांतं त्रिविधं त्यजेन्निधनजन्मर्क्षे च मूलांतकं
दास्रं पौष्णमघोपरागदिवसान् पातं तथा वैधृतिम् ।
पित्रोः श्राद्धदिनं दिवा च परिघाद्यार्धं स्वपत्नीगमे
भान्युत्पातहतानि मृत्युभवनं जन्मर्क्षतः पापभम् ॥ ५ ॥
भद्राषष्ठीपर्वरिक्ताश्च संध्या भौमार्कार्की नाद्यरात्रीश्चतस्रः ।
गर्भाधानं त्र्युत्तरेंद्वर्कमैत्रब्राह्मस्वातीविष्णुवस्वंबुपे सत् ॥ ६ ॥

गंडांतमिति ॥ अत्र यदि दुष्टफलतिथ्यादिषु रजोदर्शनमुक्तं तत्र चतुर्थदिनानंतरं शांतिकं विधेयम् । यदाह वसिष्ठः—'प्रभूतदोषं यदि दृश्यते तत्पुष्पं ततः शांतिककर्म कार्यम् । विवर्जयेदेव तदेकशय्यां यावद्रजोदर्शनमन्यघस्रे ॥ ईशानतो गोमयमंडलेन परिस्तृतेऽग्नौ जुहुयाच्च दूर्वाम् । युग्मां घृताक्तां च समित्प्रमाणां गायत्रिकां साष्टसहस्रसंख्याम् ॥ शतप्रमाणामथवाऽथहर्त्री ग्रहैर्यथेष्टैर्व्याहृतिभिस्तिलैश्च । ततः सुरान्भूमिसुरान्पितृंश्च संतर्पयेद्वसुवर्णवस्त्रैः ॥' इति । शांतिकप्रकारस्तु शांतिपद्धत्यादौ द्रष्टव्यः । एवं शांतिकं विधाय गर्भाधानं विधेयम् । तत्र स्वपत्नीगमे स्वपत्नीगमने एतान्दोषान् त्यजेदिति सर्वत्र संबंधः । एतान्कान्? त्रिविधं गंडांतम् । गंडांतलक्षणं रत्नमालायाम्—'नक्षत्रतिथिलग्नानां गंडांतं त्रिविधं स्मृतम् । नवपंचचतुर्थानां ह्येकार्धघटिकामितम् ॥' इति । निधनभं जन्मर्क्षात् सप्तमीं वधतारां, जन्मनक्षत्रं जन्मसंज्ञकनक्षत्रत्रयं, मूलं, अंतकं भरणीं, दास्रमश्विनीं, पौष्णं रेवतीं मघां, उपरागदिवसं ग्रहणदिनं, पातं व्यतीपातं महापातं च, वैधृतिं योगं महापातं च, पित्रोर्मातापित्रोः श्राद्धदिनं, दिवा सूर्यावच्छिन्नकालं परिघयोगस्य, पूर्वार्धं; तथोत्पातैर्दिव्यांतरिक्षभौमैस्त्रिविधैरुत्पातैर्हतं दूषितं जन्मर्क्षतः जन्मलग्नाजन्मराशेर्वा मृत्युभवनमष्टमं लग्नं पापभं पापग्रहयुक्तभं नक्षत्रं लग्नं वा इति । भद्रेति । भद्रा प्रसिद्धा, षष्ठीतिथिश्च, पर्वाणि=चतुर्दश्यष्टम्यमावास्यापूर्णिमासंक्रमणानि । उक्तं च विष्णुपुराणे—'चतुर्दश्यष्टमी चैव अमावास्या च

पूर्णिमा। पर्वाण्येतानि राजेंद्र रविसंक्रांतिरेव च ॥' इति। रिक्ताः=चतुर्थीनवमी-चतुर्दश्यः। संध्यां प्रातःसंध्यां सायंसंध्यां च, भौमं मंगलवारं, अर्कमादित्य-वारं, आर्कि शनैश्चरवारं, चतस्रः आद्यरात्रीः रजोदर्शनदिनमारभ्य दिनचतुष्टयं त्यजेदित्यर्थः। तदनंतरमपि पुत्रार्थी रजोदर्शनतो विषमदिवसं त्यजेत्। उक्तं चाधानाध्याये वसिष्ठेन निषेधजातम्-'पौष्णद्वये पित्र्यभयाम्यसार्पविष्णुद्वये नैधनजन्मभेषु। उत्पातपापग्रहदूषितेषु न कार्यमाधानमनिष्टलग्ने ॥ उपप्लवे वैधृतिपातयोश्च विष्ट्यां दिवा पारिघपूर्वभागे। संध्यासु पर्वस्वपि मातृपित्रो-र्मृतेऽह्नि पत्नीगमनं विवर्ज्यम् ॥ दिनेषु युग्मेषु च वक्ष्यमाणयोगैः सुतार्थी स्वसतीमुपेयात्। दिनेष्वयुग्मेषु च कन्यकार्थी हित्वा च गंडांत्तिखिलग्नभा-नाम् ॥' इति। वक्ष्यमाणयोगैः पुंयोगैः स्त्रीयोगैश्च। अत्र ग्रंथकृता श्रवण-धनिष्ठयोर्न निषेधः कृतः। बार्हस्पत्यसंहितायां तयोर्विशेषतो विहितत्वात्। तद्वचनमग्रेऽधुनैव वक्ष्यते। ननु षोडशिग्रहणाऽग्रहणवद्विहितप्रतिषिद्धत्वाद्विकल्पः कस्मान्न भवति? सत्यम्। बहूनामनुरोधो न्याय्य इति विधिरेवोचितः। अत एवोक्तं नारदेन—'शुचिर्भूत्वा युग्मतिथावनग्नां कामयेत्प्रियाम्। पुत्रार्थी पुरुषस्त्यक्त्वा पौष्णमूलाहिपित्र्यभम् ॥' इति। 'त्यक्त्वा पर्वतिथिं मूलमा-श्लेषां पैत्रभं त्विति ॥' इति कश्यपोक्तेश्च। तिथ्यादयः कश्यपेन काल-विधाने उक्ताः-'षष्ठ्यष्टमीं पंचदशीं चतुर्थीं चतुर्दशीमप्युभयत्र हित्वा। शेषाः शुभाः स्युस्तिथयो निषेके वाराः शशांकार्यसितेंदुजानाम् ॥' इति। अत्र वाक्ये चंद्रबुधगुरुशुक्रवारा निषेककार्ये शुभा उक्ताः। अर्थादन्ये सूर्यभौम-शनिवारा निषिद्धाः। उक्तं च कालनिर्णये—'रिक्ता पर्वाष्टमी षष्ठी दिवा जन्मत्रयं तथा। पापग्रहाणां वाराश्च त्याज्याश्चैवानृतौ गतिः ॥' इति। अत एव बृहस्पतिसंहितायाम्—'शेषाण्यृक्षाणि दुष्टानि स्युर्निषेकाख्यकर्मणि' इत्युक्तम्। 'सोमज्ञगुरुशुक्राणां वारवर्गोदयाः शुभाः। तेषां च दृष्टयश्चैव नेतरेषां कदाचन ॥' इति। अत्र केचिन्निषेके पुंवारा उत्तमाः, स्त्रीवारौ मध्यमौ, नपुंसकवारौ निषिद्धौ। उक्तं च व्यासेन—'पुरुषग्रहवाराः स्युः शुभाः सीमंतकर्मणि। मध्यौ स्त्रीग्रहवारौ तु वर्जयेत्तु नपुंसकौ ॥' इति। अत्र सीमंतग्रहणमुपलक्षणं गर्भाधानस्येत्याहुः। युक्तं चैतत्-'पुंस्त्रीवारेषु स्त्री-गमने पुरुषाः स्त्रियो वोत्पद्यंते' इति तावदिष्टम्। नपुंसकवारगमने तु नपुं-सकस्योत्पत्तिः स्यात्, नहि सा कस्यचिदिष्टा भवेदिति नपुंसकबुधवारनिषेध एवोचितः, शनिनिषेधस्तूभयवादिसिद्ध एव। दाक्षिणात्यशिष्टसमाचाराच्चातो बुधशन्योरेव निषेधोऽन्येषां ग्रहणमिति प्रतीमः। प्राच्यास्तु नैतत्सहंते, तन्मते तु सूर्यभौमशनीनामेव निषेधः। नारदः—'रजोदर्शनतोऽस्पृश्या नार्यो दिनचतुष्टयम्। ततः शुद्धाः क्रियास्वेताः सर्ववर्णेष्वयं विधिः ॥' अत्रा-र्थवादमाह भारद्वाजः—'प्रथमेऽहनि चांडाली द्वितीये ब्रह्मघातिनी। तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुध्यति ॥' धर्मशास्त्रेऽपि—'भर्तुः स्पृश्या चतु-र्थेऽह्नि स्नानेन स्त्री रजस्वला। पंचमेऽहनि योग्या स्याद्दैवे पित्र्ये च कर्मणि ॥

तस्मादेतावतो दोषांस्त्यक्त्वा स्त्री गमने हिता ॥' इति । ऋतुकालावधिमाह याज्ञवल्क्यः—'षोडशर्तुर्निशाः स्त्रीणां तस्मिन्युग्मासु संविशेत् । युग्मासु पुत्रा जायंते स्त्रियोऽयुग्मासु रात्रिषु ॥' अतः षोडशदिनमध्ये गर्भाधानं विधेयं, तत्रैव गर्भसंभवात् । तत्र वाराः समीचीनाः प्रागुक्ता एव । अधुना नक्षत्राण्याह-गर्भाधानमिति । उत्तरात्रयमृगहस्तानुराधारोहिणीस्वातीश्रवणधनिष्ठाशततारकासु गर्भाधानं मत् शुभदम् । उक्तं च बार्हस्पत्यसंहितायाम्—'हरिहस्तानुराधाश्च स्वातीवारुणवासवम् । उत्तरात्रितयं सौम्यं रोहिणी च शुभाः स्मृताः ॥ आधाने मूलमापोत्यमशुभं सममन्यभम् ॥' इति । एवं विहितनक्षत्रे सति चंद्रबले गर्भाधानार्थं सकृदेव पत्नीगमनं कार्यमित्याह याज्ञवल्क्यः—'एवं गच्छन् स्त्रियं क्षामां मघां मूलं च वर्जयेत् । सुस्थिर इंदौ सकृत्पुत्रं लक्षण्यं जनयेत्पुमान् ॥' चकाराद्रेवतीम् । भीमपराक्रमोऽपि—'पित्र्यं पौष्णं नैर्ऋतं चापि धिष्ण्यं त्यक्त्वा नारीं सुप्रसन्नः प्रसन्नाम् । पुष्टः क्षामां पुत्रकामोऽभिगच्छन् सल्लक्षण्यं पुत्रमाप्नोति पुण्यम् ॥' इति । तत्र गमनं मंत्रपूर्वकम् । तदुक्तं विष्णुपुराणे—'ऋतावुपगमः शस्तः स्वपत्न्यां मंत्रतो द्विज' इत्युक्तेरिदं त्रैवर्णिकविषयं प्रतीयते । मंत्रास्तु—'विष्णुर्योनिं कल्पयतु' इत्येवमादयः । एतैर्मंत्रैर्दक्षिणेन पाणिनोपस्थमभिमृशेदिति गोभिलोक्तिः ॥ ५ ॥ ६ ॥

अथ गर्भाधाने लग्नबलमिंद्रवज्रयाह—

**केंद्रत्रिकोणेषु शुभैश्च पापैस्त्र्यायारिगैः पुंग्रहदृष्टलग्ने ।**
**ओजांशगेंदावपि युग्मरात्रौ चित्रादितीज्याश्विषु मध्यमं तत् ॥७॥**

केंद्रेति ॥ अथ सामान्यतः शुभलग्नानि वसिष्ठोक्तानि—'वृषभमिथुनकर्कसिंहकन्यातुलाधरचापभषाः शुभा भवंति । यदि शुभफलशालिनोऽनुकूला निधनविशुद्धियुता निषेककाले ॥' इति । तत्र केंद्रत्रिकोणेषु लग्नचतुर्थसप्तमदशमपंचमनवमस्थानेषु स्थितैः शुभग्रहैस्तथा त्र्यायारिगैस्तृतीयैकादशषष्ठस्थानस्थितैः पापग्रहैरुपलक्षिते पुंग्रहैः सूर्यभौमगुरुभिर्दृष्टे लग्ने तथा ओजांशगेंदौ ओजो विषमराशिर्मेषमिथुनादिः । अंशोऽप्योज एव, तत्र स्थिते चंद्रे सति युग्मरात्रौ समरात्रौ गर्भाधानं कार्यम् । यदाह जगन्मोहने वसिष्ठः—'केंद्रत्रिकोणेषु शुभस्थितेषु लग्ने शशांके च शुभैः समेते । पापैस्त्रिलाभारिगतैश्च यायात्पुंजन्मयोगेषु च संप्रयोगम् ॥' इति । नारदः—'ओजराश्यंशगे चंद्रे लग्ने पुंग्रहवीक्षिते । शुचिर्भूत्वा युग्मतिथौ सनग्रां कामयेत्स्त्रियम् ॥' इति । पुंग्रहानाह नारदः—'पुंग्रहाः सूर्यजीवाराः स्त्रीग्रहौ शशिभार्गवौ । नपुंसकौ सौम्यसौरी शिरोमात्रं विधुंतुदः ॥' इति । अत्र पुंस्त्रीनपुंसकयोगा वसिष्ठेनोक्ताः—'आधानलग्ने विषमांशराशौ जीवेंदुजाभ्यां युतवीक्षिते वा । नान्यैः सुपुत्रस्त्वथ पापखेटैः पापी च मिश्रैर्बलिभिश्च मिश्रः ॥ ओजक्षांशे लग्नगे वीर्ययुक्ते जीवेंद्वर्कैरोजराश्यंशसंस्थैः । पुंजन्म स्यात्तत्त्रये कन्यका

१ अत्र 'आधाने मूलपित्र्यांतकम्' इति पाठश्चेत्साधीयान् । मूलानुगुणो ग्रंथांतरसंवादी च भवेत् ।

स्वान्मिश्रैः षंढो ऽंगगैर्द्विद्विजन्म ॥' षंढः=नपुंसकः। 'ओजांशकक्षाद्विषमर्क्ष-संस्थः पुंजन्मकारी रविसूनुरेव। विचार्य वीर्यं पुरुषग्रहाणां वाच्योऽथ पुत्र-स्त्वथ पुत्रिका वा ॥ युग्मांशलग्ने बलयुक्शुक्रनिशाकराभ्यां युतवीक्षिते वा ॥ नान्यैः सुकन्या त्वथ पापरूपा पापैश्च शेषं सुविचिंत्य वाच्यम् ॥' इति। एवम-न्येऽपि पुंजन्मादियोगा जातके द्रष्टव्याः। एषु यस्मिन्कस्मिन्पुंजन्मयोगे पुत्रार्थी युग्मरात्रौ पत्नीं गच्छेत्। कन्याजन्मयोगे तु कन्यार्थी विषमरात्रौ पत्नीं गच्छेत् इति फलितोऽर्थः। अथ गर्भाधाने विहितनक्षत्राप्राप्तौ मध्यमनक्षत्राण्याह-चित्रेति। चित्रापुनर्वसुपुष्याश्विनीषु तद्गर्भाधानं मध्यमं मध्यमफलदमि-त्यर्थः। यदाह बृहस्पतिः—'चित्रादित्ये तथा तिष्यतुरगौ चेति मध्यमाः। शेषाण्यृक्षाणि दुष्टानि स्युर्निषेकाख्यकर्मणि ॥' इति। अत्र कश्चिद्दैवान्मानु-षाद्वा प्रतिबंधाद्भर्तुरसन्निधानेऽनेकेषु ऋतुषु व्यतीतेषु गर्भाधानाख्यः संस्कारो नाभूत्तदानीं दैवान्मध्ये भर्ता समागतश्चेत्तदा दक्षिणायनशुक्रगुर्वस्तन्यूनाधि-मासादिमहादोषसद्भावस्तदा गर्भाधानं नैव भवतीत्याहुः–अतीतकालत्वाद्यथा कालातीतेषु जातकर्मनामकर्मान्नप्राशनचौलादिसंस्काराः पूर्वोक्तदोषसद्भावे नैव भवंति। उक्तं च वसिष्ठेन—'अतीतकालान्यखिलानि यानि कार्याणि सौम्यायनगे दिनेशे। गुरौ भृगौ वाप्यथ दृश्यमाने तदुक्तपंचांगदिनेऽप्यखंडे ॥' इति। सत्यम्। सत्यपि ऋतूनामतिक्रमे 'निमित्तानंतरमेव नैमित्तिकम्' इति न्यायेन 'षोडशर्तुर्निशाः स्त्रीणां तस्मिन्युग्मासु संविशेत्' इति याज्ञवल्क्य-वचसा षोडशदिनमध्ये एव चेत् भर्तुः सान्निध्यमभूत्तदा तत्रैव यथाकथं-चित्कालशुद्धिं विचार्य गर्भाधानं कर्तव्यं। षोडशदिनातिक्रमे तु ऋत्वंतरम-पेक्ष्य प्रागुक्तदिशा कालशुद्धिं विचार्य कार्यमेव, तदा बहुकालव्यापिनी काल-शुद्धिरुपेक्ष्यैव। यतो विज्ञानेश्वरेण—'तस्मिन्युग्मासु संविशेत्' इत्यस्य व्याख्यानावसरे किमयं विधिर्नियमः परिसंख्या वेति त्रयः पक्षा उपन्य-स्तास्तत्र स्त्रीगमने रागत एव प्रवृत्तेर्नियम एवायमिति सिद्धांतितम्। 'ऋतौ गच्छेदेव' इति यमस्मरणात् 'ऋतावुपेयात्सर्वत्र वा प्रतिषेधवर्ज्यम्' इति गौतमस्मरणाच्च। ऋत्वगमने प्रत्यवायोऽपि स्मर्यते। 'ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति। घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः ॥' इति शातातपोक्तेः। अत एवैतद्दूषणभयादेवाधिकारिणा पित्रादिना कन्या गुणवते वरायावश्यं देयेत्याह याज्ञवल्क्यः—'पिता पितामहो भ्राता कुल्यो वा जननी तथा। कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ॥ अप्रयच्छन्समाप्नोति भ्रूणहत्या-मृतावृतौ ॥' इति वीप्सोक्तिः कैमुतिकन्यायसूचनार्थम्। यत्र पित्रादेरदातु-श्चेदयं दोषस्तदा भर्तुरयं दोषो भवत्येवेति किं वाच्यमित्यर्थः। भ्रूणः=गर्भः। अथ गर्भाधानं विधाय पुंसा निद्रासमये किं कार्यमित्याह विष्णुः—'निद्रासमय-मासाद्य तांबूलं वदनात्त्यजेत्। पर्यंकात्प्रमदां भालात् पुंड्रं पुष्पाणि मस्तकात् ॥' इति। अथानया गर्भो धृतो न वेति प्रश्ने गर्भधारणयोगा जातके द्रष्टव्याः। प्रस्तुतेऽप्रसंगाच्च लिख्यंतेऽस्माभिः ॥ इति गर्भाधानं समाप्तम् ॥ ७ ॥

अथ प्रसिद्धे गर्भे सीमंतोन्नयनाख्यसंस्कारमुहूर्तं शार्दूलविक्रीडितेनाह—

जीवार्कारदिने मृगेज्यनिर्ऋतिश्रोत्रादितिब्रध्नभे
रिक्तामार्करसाष्टवर्ज्यतिथिभिर्मासाधिपे पीवरे ।
सीमंतोऽष्टमषष्ठमासि शुभदैः केंद्रत्रिकोणे खलै-
र्लाभारित्रिषु वा ध्रुवांत्यमदहे लग्ने च पुंभांशके ॥ ८ ॥

जीवार्केति ॥ जीवः=बृहस्पतिः, अर्कः=सूर्यः, आरः=मंगलः, एषां वारे; तथा ब्रध्नः=सूर्यः, 'भास्कराहस्करब्रध्न' इत्यभिधानात् । तस्य भं हस्तः, अन्यत्स्पष्टं नामत एव । एवं मृगपुष्यमूलश्रवणपुनर्वसुहस्तनक्षत्रैः सीमंतो लक्षणया सीमंतोन्नयनाख्यः संस्कारः कार्यः । सीमंत उन्नीयते यस्मिन्कर्मणि तत्सीमंतोन्नयनमिति शब्दव्युत्पत्तिः, सीमंतः=केशमध्यभागः । उक्तं च सीमंताध्याये कश्यपेन—'शुक्लपक्षादिदिवसं रिक्तां पर्वस्य मध्यमाम् । तिथिं त्यक्त्वार्कभूसूनुसुरेज्यानां च वासरे ॥' इति ॥ रत्नमालायाम्—'श्रवणः सकरः पुनर्वसुर्निर्ऋतेर्भं च सपुष्यको मृगः । रविभूसुतजीववासराः कथिताः पुंसवनादिकर्मसु ॥' आदिशब्देन सीमंतोन्नयनादि । व्यासः—'पुरुषग्रहवाराः स्युः शुभाः सीमंतकर्मणि । मध्यौ स्त्रीग्रहवारौ तु वर्जयेत्तु नपुंसकौ ॥' इति । तत्र तिथयो निषिद्धा उच्यंते—रिक्तेति । रिक्ताः प्रसिद्धाः, अमा=अमावास्या, अर्काः=द्वादशी, रसाः=षष्ठी, अष्ट=अष्टमी; एताभिस्तिथिभिर्वर्ज्या न्यूना अवशिष्टा यास्तिथयस्ताभिरुपलक्षिते दिने । यदाह गुरुः—'पक्षच्छिद्रां च रिक्तां च विना पंचदशीं शुभाः । चतुर्दशी चतुर्थी च कदाचित्तु शुभप्रदे ॥ शुभसंस्थे निशानाथे चतुर्थी च चतुर्दशी । पौर्णमासीं प्रशंसंति केचित्सीमंतकर्मणि ॥' इति । किंच मासाधिपे 'मासेश्वरा' इत्यग्रिमश्लोकेन ज्ञाते गर्भमासस्वामिनि पीवरे पुष्टे उदिते सतीत्यर्थः । यदाह नारदः—'चतुर्थे मासि षष्ठे वाप्यष्टमे वा तदीश्वरे । बलोपपन्ने दंपत्योश्चंद्रताराबलान्विते ॥' कश्यपोऽपि—'मासेश्वरे बलोपेते नास्तगे न पराजिते' इति । यदि मासाधिपो निर्बलस्तदा दोष इत्याह गर्गः—'यस्य मासाधिपो रिक्तो नीचो वास्तंगतोऽपि वा । तस्मिन्मासे क्षयं याति प्रसवो वा भविष्यति ॥' स च सीमंतो गर्भधारणसमयादष्टमषष्ठमासि अष्टममासि षष्ठमासि वा कार्यः । अयं चेच्छया विकल्पः । 'षष्ठेऽष्टमे वा सीमंतो मासि' इति याज्ञवल्क्योक्तेः । नारदेन चतुर्थोऽपि मासोऽभ्यधायि, तद्वाक्यं प्रदर्शितं । शौनकेनापि—'चतुर्थे गर्भमासे स्यात्सीमंतोन्नयनक्रिया । षष्ठेऽष्टमे वा कुर्वीत सूत्रांतरविधानतः ॥' सूत्रांतरं स्वस्वगृह्यसूत्रम् । एवं स्वेच्छयोक्तमासे एव विधेयम् । तत्र शुद्धपक्षे पूर्वाह्ण एव नापराह्णे । यदाह नारदः—'शुक्ले पक्षे च पूर्वाह्णे सीमंताख्यो विधिः स्मृतः' इति । बृहस्पतिरपि—'पूर्वपक्षः शुभः प्रोक्तः कृष्णश्चांत्यत्रिकं विना । पूर्वाह्ण एव तत्रापि नापराह्णे कथंचन ॥' इति । अथ लग्नमुच्यते—केंद्रेति । केंद्र १।४।७।१० त्रिकोण ९।५ स्थानेषु शुभदैः सौम्यग्रहैस्तथा लाभारित्रिषु ११।६।३ खलैः पापग्रहैरुपलक्षिते लग्ने तत्रापि च पुनः पुंभांशके पुरुषराशि

लग्ने पुरुषनवांशके च कार्यः । यदाह वसिष्ठः—'केंद्रत्रिकोणोपगतैश्च सौम्यैर्दुश्चिक्यलाभारिगतैश्च पापैः । षडष्टलग्नांत्यविवर्जितेंदौ सीमंतकार्यं शुभदं तथैव ॥' इति ॥ रत्नमालायाम्—'षष्ठे मास्यथवाष्टमे तदधिपे वीर्योपपन्ने विधौ चेष्टैरष्टतनौ नृनामभवने पुंलग्नभागेषु च । वीधर्मास्यचतुष्टयेऽपि च गुरौ पापैश्च तद्वाह्यगैर्मृत्युद्वादशवर्जितैश्च मुनिभिः सीमंतकर्म स्मृतम् ॥' अत्र विशेषमाह कश्यपः—'चंद्रोऽपि शुभदो ज्ञेयस्त्यक्त्वा षष्ठाष्टमव्ययान् । सीमंतलग्नादेकोऽपि क्रूरः पंचाष्टरिःफगः । हंति सीमंतिनीं सोऽपि तद्गर्भं वा न संशयः ॥' अत्रापि जन्मराशिजन्मलग्नाभ्यामष्टमभवनमिष्टलग्नादष्टमलग्नं च शुद्धं ग्राह्यम् । यदाह सीमंताध्याये कश्यपः—'न नैधने तयोर्लग्ने नैधने शुद्धिसंयुते । पंचभिश्च चतुर्भिर्वा सूर्येंदुगुरुपूर्वकैः । ग्रहैरिष्टैः शुभे लग्ने राशावपि न नैधने ॥' इति । सीमंतोन्नयनमित्यनुषंगः । तयोः=स्त्रीपुंसयोः । अस्यापवादः प्रयोगपारिजाते नृसिंहोक्तः—'लग्नादष्टमराशीशः केंद्रगः शुभवीक्षितः । यद्यप्यष्टमभस्योक्तं दोषमाशु व्यपोहति ॥' अपिशब्दो भिन्नक्रमोऽष्टमभस्येत्यस्यानंतरं द्रष्टव्यः । स च कैमुतिकन्यायेनान्यदोषनिवारणार्थोऽपि संपन्नः । कश्चिन्सत्यपि ग्रहबले सिंहवृश्चिकलग्ने निंदिते अभिहिते इत्ययमप्यत्र विशेषो ध्येयः । यदाह गुरुः—'मूलर्क्षं केचिदिच्छंति सीमंतं शुभदं बुधाः । सिंहालि वर्जयेल्लग्नं ग्रहैरष्टमवर्जितम् ॥' ग्रहैः=क्रूरग्रहैः । कश्चिद्राशित्रयं निषिद्धम् । यदाह गर्गः—'सीमंतोन्नयनं कार्यं शुभांशे शुभलग्नगे । कुलीरमृगकन्याश्च वर्ज्याः शेषाश्च शोभनाः ॥' इति । अथ मतांतरेण नक्षत्राणि वारांश्चाह–ध्रुवेति । ध्रुवाणि रोहिण्युत्तरात्रयं, अंत्यं रेवती, तथा सदहे सतां शुभग्रहाणां चंद्रबुधगुरुशुक्राणामह्नि वासरे, ध्रुवांत्यनक्षत्रेषु प्रागुक्तनक्षत्रेषु वा कार्यम् । एवं शुभग्रहवारे वा कार्यमित्यर्थः । यदाह गुरुः—'रोहिण्यैंदवमादित्यं पुन्यहस्तोत्तरात्रयम् । पौष्णं वैष्णवभं चैव सीमंतादिषु संमतम् ॥' इति । श्रीधरः—'सौम्यानां वारवर्गाः स्युः सीमंतादिषु शोभनाः ॥' इति । अत्र जन्मनक्षत्रं यदि विहितमपि संभवेत्तदा तदपि वर्ज्यमित्याह वसिष्ठः—'बालान्नभुक्तौ व्रतबंधने च राजाभिषेके खलु जन्मधिष्ण्यम् । शुभं त्वनिष्टं सततं विवाहसीमंतयात्रादिषु मंगलेषु ॥' एवं निर्णीते सीमंतोन्नयनमुहूर्ते शुक्रास्तादिदोषविचारो नास्ति, नियतमासविहितत्वात् । तदाह गुरुः—'मासप्रयुक्तकार्येषु मूढत्वं गुरुशुक्रयोः । न दोषकृन्मलो मासो गुर्वादित्यादिकं तथा ॥' इति । अयमत्र तात्पर्यार्थः—यत्र नियतकाल एव कालो विहितः । यथा तृतीये मासि पुंसवनं तत्र शुक्रास्तादिदोषाभाव एव । यत्र तु सीमंतादौ चतुर्थषष्ठाष्टममासरूपं कालत्रयविधानं तत्र शुक्रास्तादिदोषरहितेतरकालो ग्राह्यः संभवात् । कश्चित्कुलाचारवशात्सीमंतादौ नियत एव कालो विवक्षितो भवेत्तदा न दोषः, कुलाचारवशादेव तदतिरिक्तो नियत एव कालः स्यात्तदापि न दोषः । यत्र बहुकालविधानेऽपि बहुदिनव्यापकसिंहस्थगुर्वादिदोषसद्भावे सत्यनन्यगतिकत्वाचैव

दोषः। एवं नामकर्मान्नप्राशनादिष्वपि द्रष्टव्यम्। उक्तं च—'सीमंतजातकादीनि प्राशनांतानि यानि वै। न दोषो मलमासस्य मौढ्यस्य गुरुशुक्रयोः॥' इति। मौढ्यस्येत्यादि दोषोपलक्षणम्। एवं च कालप्रतीक्षायोग्येषु चूडाकरणादिषु मलमासादिदोषो विचारणीय एवेति। अथैते गर्भाधानादयः संस्काराः किं गर्भसंस्कारकत्वात्प्रतिगर्भमावर्तंते उत सकृदेव कार्या इति। तत्रेदृशं भृगुवाक्यम्—'मासे तृतीयमासे स्फुरदिंदुकलापपक्षे च। पुंसवनं पुत्रेप्सुर्गर्भे गर्भे प्रकुर्वीत' इति। पुंसवनमुपलक्षणं सर्वगर्भसंस्काराणाम्। गर्भे गर्भे इति वीप्साग्रहणात्प्रतिगर्भमावृत्तिरिति केचिदाहुः। अपरे च सकृदेव कार्या इत्याहुः। यदाह हारीतः—'सकृच्च कृतसंस्काराः सीमंतेन द्विजस्त्रियः। यं यं गर्भं प्रसूयंते स सर्वः संस्कृतो भवेत्॥' इति। एतेन क्षेत्रसंस्कारकत्वमुक्तं भवति। यथा भूरेकवारं दाहाद्यनेकसंस्कारवती सर्वकाले कर्षणयोग्या भवति तद्वदत्रापीत्यर्थः। क्वचित्तु कोंकणदेशादौ प्रतिवर्षं दाहादिसंस्कारं विधाय कर्षणं क्रियते। इत्येवं पक्षद्वयसंभवे देशाचारतो व्यवस्था ध्येया। ननु तृतीयमासविहितत्वादादौ पुंसवनमुहूर्तो विचारणीयस्ततश्चतुर्थषष्ठाष्टममासविहितः सीमंतमुहूर्तो विचार्यः, वैपरीत्योक्तौ किं बीजमिति चेत्। उच्यते,—सीमंते विहितस्य तिथिनक्षत्रवारलग्नादिसमुदायस्य पुंसवनेऽप्युपयोगात्सर्वदेशप्रसिद्धसीमंतानुष्ठानाचारदर्शनाच्चादौ सीमंतस्योक्तिः। पुंसवनं स्वतंत्रकर्तव्यत्वेनोक्तमपि शिष्टाः सीमंतेन सहैव कुर्वंति। यदाह जातूकर्ण्यः—'सीमन्तेन सहाथवा' इति। नृसिंहोऽपि-'सीमंतोन्नयनस्योक्ततिथिवासरराशिषु। पुंसवं कारयेद्विद्वान्सहैवैकदिनेऽथवा॥' इति। अत एवानवलोभनाख्यं कर्मास्मिन्नेव दिने क्रियत इति शिष्टाचारोऽप्यत्रार्थे प्रमाणम्॥ इति सीमंतविचारः॥ ८॥

अथ प्रसंगेन मासेश्वरान् स्त्रीणां चंद्रबलं च वसंततिलकयाह—

मासेश्वराः सितकुजेज्यरवींदुसौर-
चंद्रात्मजास्तनुपचंद्रदिवाकराः स्युः।
स्त्रीणां विधोर्बलमुशंति विवाहगर्भ-
संस्कारयोरितरकर्मसु भर्तुरेव॥ ९॥

मासेश्वरा इति॥ गर्भप्रथममासादारभ्य दशमप्रसूतिमासपर्यंतं सितादयो मासेश्वरा ज्ञेयाः। यथा-प्रथममासेश्वरः शुक्रः, द्वितीये मंगलः, तृतीये गुरुः, चतुर्थे रविः, पंचमे चंद्रः, षष्ठे शनिः, सप्तमे बुधः, अष्टमे आधानलग्नाधिपतिः, नवमे चंद्रः, दशमे सूर्यः। अत्र प्रथममासमारभ्य दशममासं यावद्गर्भस्य कललादिरूपावस्था भवतीत्यपि विशेषो ध्येयः। यदाह वराहः—'कललघनांकुरास्थिचर्मांगजचेतनताः सितकुजजीवसूर्यचंद्रार्किबुधाः परतः। उदयपतिचंद्रसूर्यनाथाः क्रमशो गदिता भवंति शुभाशुभं च मासाधिपतेः सदृशम्॥' इति। शुक्रशोणितसन्निपातः=कललम्। अंगजानि=रोमाणि।

वसिष्ठोऽपि–'सितावनेयामरपूज्यसूर्यचंद्रार्किसौम्योद्भवपैतृसूर्याः । मासाधिपाः स्युः क्रमशो ह्यैते निपीडितो नाशयति स्वमासि' ॥ स्त्रीणामिति ॥ गोचरप्रकरणे यद्यप्युभयोः स्त्रीपुंसयोः सामान्यतो ग्रहबलमुक्तं तथाप्यत्र स्त्रीणां चंद्रबले विशेषोऽभिधीयते। विवाहे गर्भसंस्कारे गर्भाधानपुंसवनसीमंतादिरूपे स्त्रीणामपि बलं ग्राह्यम्, इतरकर्मसु वस्त्रपरिधानालंकारधारणादिषु कृत्येषु भर्तुर्भवस्यैव चंद्रबलं ग्राह्यं नतु स्त्रीणाम् । यदा तु भर्ता मृतस्तदा स्त्रीणामेव चंद्रबलं ग्राह्यमित्यर्थसिद्धम् । उक्तं च–'पाणिपीडनविधेरनंतरं भर्तुरेव बलमैंदवादिकम् । चिंतनीयमिह योषितां क्वचिद्वाह्यमंगलमृते मनीषिभिः ॥' इति । राजमार्तंडः–'विवाहकार्ये कुसुमप्रतिष्ठा गर्भप्रतिष्ठा वनिताविशुद्धौ । अन्यानि कार्याणि धवस्य शुद्धौ पत्यौ विहीने प्रमदात्मशुद्धा ॥' कुसुमप्रतिष्ठा=गर्भाधानम् । गर्भप्रतिष्ठा=सीमंतादिः ॥ ९ ॥

अथ येषामाचारः पृथगेव पुंसवनं विधेयमिति तदर्थं पुंसवनमुहूर्तं विष्णुपूजामुहूर्तं चेंद्रवज्रयाह—

**पूर्वोदितैः पुंसवनं विधेयं मासे तृतीये त्वथ विष्णुपूजा ।**
**मासेऽष्टमे विष्णुविधातृजीवैर्लग्ने शुभे मृत्युगृहे च शुद्धे ॥ १० ॥**

पूर्वोदितैरिति ॥ पूर्वं सीमंतोन्नयने उदितैः प्रोक्तैस्तिथिवारनक्षत्रलग्नैरुपलक्षिते तृतीये मासि पुंसवनं विधेयमिति तदर्थं पुंसवनाख्यं कर्म विधेयम् । पुमान् सूयतेऽनेन कर्मणेति व्युत्पत्त्या पुंसवनकर्मणः पुंस्त्वहेतुता । यदाह शौनकः—'व्यक्ते गर्भे तृतीये तु मासे पुंसवनं भवेत् । गर्भोऽव्यक्तस्तृतीये चेच्चतुर्थे मासि वा भवेत् ॥' नृसिंहः—'सीमंतोन्नयनस्योक्तनिथिवासरराशिषु । पुंसवं कारयेद्विद्वान्सहैवैकदिनेऽथवा ॥' इति। विशेषमाह वसिष्ठः–'कुर्यात्पुंसवनं प्रसिद्धविषये गर्भे तृतीयेऽथवा मासि स्फीततनौ तुषारकिरणे पुष्येऽथवा वैष्णवे । हित्वा कर्कटकं नृयुग्ममबलामन्येष्वरिक्ते तिथौ शुद्धे नैधनधाम्नि शुक्रशशभृद्विन्मंत्रिणां वासरे ॥' इति । नैधनधाम्नि=अष्टमस्थाने सर्वग्रहरहिते । यदाह वसिष्ठः—'अष्टमस्था ग्रहाः सर्वे नेष्टाः स्युस्तेऽशुभावहाः । एवं सम्यक्परीक्ष्यैव कुर्यात्पुंसवनक्रियाम् ॥' इति । वारास्त्वत्र सौम्यग्रहाणामुक्ताः । बृहस्पतिरप्यत्र विशेषमाह-'गुरुशुक्रबुधेंदूनां द्रेष्काणदिवसांशकाः । तेषामुदयहोराश्च पुंसवेऽनिशुभावहाः ॥' इति । अन्यैस्तु श्रीपत्यादिभिः पुंवारा एव प्रशस्ता अभिहिताः । तत्फलान्याह गर्गः–'सौम्ये मृतप्रजा मंदे मृत्युर्वंध्या च भार्गवे । सोमे दुग्धविहीना स्यात्प्रश्नेषाः सर्वार्थसिद्धिदाः ॥' इति । अत्र वचनद्वयप्रामाण्याद्विकल्पः । केचित्तु यदा तृतीये मासि पुंसवनं चिकीर्षितं तदा सौम्यवारा एव ग्राह्याः । यदा तु चतुर्थे मासि गर्भस्य व्यक्तत्वात्पुंसवनं चिकीर्षितं तदा पुंवारा एव ग्राह्या इत्याहुः । नक्षत्राणि ह्यत्र पुंनामानि ग्राह्याणि, तानि 'श्रवणः सकर' इति श्रीपतिनोक्तानि। वसिष्ठेन तु पुंनामान्यभिहितानि । यथा–'पुंनाम श्रवणं तिष्यः स्वाती हस्तः

पुनर्वसुः । मूलं प्रोष्ठपदं चानुराधा मृगशिरोऽश्विनी ॥' विशेषमाह ऋक्षो-च्चयः—'हस्तार्द्रातिष्यमूलानि सौम्यं विष्णुः पुनर्वसुः । प्रोष्ठपदाद्वयं प्रोक्त-माषाढद्वयमेव च ॥ श्रेष्ठानि कथितान्येव धिष्ण्यान्येकादशैव तु । स्वातौ तथा मघायां च रेवत्यां फल्गुनीद्वये ॥ अश्विन्यां चैव नक्षत्रे यदा पुंसवनं भवेत् । नरः संपद्यते दैवाद्यदा स्याद्गुरुतल्पगः । लुब्धो ह्रस्वतनुः क्रूरो नारी चेत्कुलटा भवेत् ॥ शेषाणि दश धिष्ण्यानि निंदितानि विशेषतः ॥' तदेत-योर्हि एकार्थयोर्वाक्ययोर्देशाचारतो व्यवस्था । तत्र वसिष्ठवाक्येन दाक्षि-णात्या व्यवहरंति । प्राच्यास्तु ऋक्षोच्चयवाक्येन ॥ अथ लग्नशुद्धि-माह ऋक्षोच्चयः—'मीनवृश्चिककुंभेषु चापगोसिंहकन्यकाः । उक्ताः पुंस-वनाद्येषु सुतपुत्रादिवांछया ॥ केंद्रत्रिकोणभवनेषु शुभस्थितेषु पापेषु षट्-त्रिदशलाभगृहस्थितेषु ॥ जीवेंदुभानुभृगुभूमिजमंदिरेषु लग्नेषु लग्नपरिशुद्ध-शुभांशकेषु ॥' अत्रापि स्त्रीपुंसयोश्चंद्रबलमावश्यकमित्याह नृसिंहः—'अपि पुंसवनं कार्यं दंपत्योरनुकूलभे । जन्मादिं वर्जयेद्राशिं चांशकं विपदादिषु ॥' इति । अथ गर्भरक्षार्थं विष्णुपूजामुहूर्तं उच्यते-अष्टेति । सीमंतानंतरमष्टमे मासि विष्णुविधानृजीवैः श्रवणरोहिणीपुष्यैरुपलक्षिते दिवसे तथा लग्ने शुभे शुभस्वामिके शुभयुक्ते वा सति तथा मृत्युगृहेऽष्टमस्थाने शुद्धे सर्वग्रहरहिते च सति विष्णुपूजा कार्या । यदाह प्रयोगपारिजाते वसिष्ठः—'मास्यष्टमे च गर्भस्य कुर्याद्विष्णुबलिक्रियाम् । श्रवणे चैव रोहिण्यां पुष्ये चैव प्रश-स्यते ॥ द्वितीया सप्तमी चैव द्वादशी च शुभा तिथिः । शुभग्रहोदयाः शस्तास्तेषां च दिवसा अपि ॥ पापाख्यायारिगाः श्रेष्ठा नेष्टाः सर्वेऽष्टमे स्थिताः ॥' इति । अष्टमग्रहदोषापवादमाह गुरुः—'रंध्रेशः स्वांशगः स्वोच्च-स्वक्षेत्रोपचयर्क्षगः । अष्टमस्थस्य दोषोऽयं विनश्यति न संशयः ॥' इति । नारदोऽपि—'लग्नाष्टमेशयोर्मैत्रे लग्नेशे बलसंयुते । अस्तगे निधनेशे च निधने-ऽपि शुभग्रहे ॥' इति । वसिष्ठसंहितायां तु संक्षिप्योक्तम्–'रोहिण्यां वा वैष्णवे पूर्वपक्षे द्वादश्यां वा सप्तमे वा तिथौ वा । मध्ये चाह्नः पूर्वभागेऽनु-कूले विष्णोः पूजां कारयेद्गर्भपुष्ट्यै ॥' तत्र पूजाप्रकारस्तेनैवोक्तः–'पीतांबरं कृष्णवर्णं शंखचक्रगदांबुजम् । वैकुंठवासिनं विष्णुं मृत्कुंभे स्थापयेत्ततः ॥ विष्णोः स्वरूपं कनकेन कृत्वा तल्लिंगमंत्रैरथ गंधपुष्पैः । वस्त्राक्षतैर्गुग्गुलुधूप-दीपैर्नैवेद्यतांबूलफलैश्च सम्यक् ॥ विष्णुं च देवतापूजां गर्भाणां रक्षणाय च । ब्राह्मणाय प्रदातव्या प्रतिमा वस्त्रसंयुता ॥' इति गर्भरक्षार्थं विष्णुपूजा ॥१०॥

अथ जातकर्म-नामकरणयोर्मुहूर्तमुपजात्याह—

**तज्जातकर्मादि शिशोर्विधेयं पर्वाख्यरिक्तोनतिथौ शुभेऽह्नि ।**
**एकादशे द्वादशकेऽपि घस्रे मृदुध्रुवक्षिप्रचरोडुषु स्यात् ॥ ११ ॥**

तज्जातकर्मेति ॥ नन्विदमयुक्तं यज्जातकर्म शुभदिने कार्यमिति । कुतः? जातस्योत्पन्नस्य कर्म वैदिकः संस्कारविशेषः स जातकर्मशब्देनोच्यते । तच्च

नालच्छेदप्रवृत्त्योत्पत्तिक्षण एव विधेयम् । यदाह वसिष्ठः—'यस्मिन्मुहूर्ते जनितः कुमारस्तस्मिन्विधेयं खलु जातकर्म । संतर्प्य देवान्सपितॄन्द्विजांश्च सुवर्णगोभूतिलकांस्यवस्त्रैः ॥' इति । विष्णुरपि—'जातकर्म ततः कुर्यात्पुत्रे जाते यथोदितम्' इति । यथोदितं स्वस्वगृह्यानुसारेणेत्यर्थः । तत्र श्रवणानंतरं सचैलं स्नानं विधाय कार्यम् । उक्तं च ज्योतिःसागरे वसिष्ठेन—'श्रुत्वा जातं पिता पुत्रं सचैलं स्नानमाचरेत् । उत्तराभिमुखो भूत्वा नद्यां वा देवखातके ॥' इति, तदपि नालच्छेदनात्प्रागेव कार्यम् । उक्तं च मनुना—'प्राङ्नाभिवर्धनात्पुंसो जातकर्म विधीयते' इति । वर्धनं=छेदनम् । 'वृधु छेदने' इति धात्वर्थानुसारात् । अत्र हेतुमाह जैमिनिः—'यावन्न छिद्यते नालं तावन्नाप्नोति सूतकम् । छिन्ने नाले ततः पश्चात्सूतकं तु विधीयते ॥' इति । तस्माज्जातकर्ममुहूर्तोऽनुपपन्नः । उच्यते,—संक्रांत्यादिदुष्टकालेषु शुभकर्माचरणं नास्ति । यदाह गर्गः-'व्यतीपाते च संक्रान्तौ ग्रहणे वैधृतावपि । श्राद्धं विना शुभं कर्म प्राप्ते कालेऽपि नाचरेत् ॥' अन्यच्च-'अमासंक्रांतिविष्ट्यादौ प्राप्ते कालेऽपि नाचरेत्' । किंच मूलज्येष्ठागंडांतादिषु जन्मसंभवे शांतिविधानात् । अथवा पिता देशांतरगतो राजगृहादौ निरुद्धो वा जातकर्मादि कर्तुमशक्तः सन्पश्चात्प्रतिबंधापवाहनेन गृहमागतोऽपि तत्रैव करोति; तदैव जन्माभावात्सूतकप्रवृत्तेश्च । तदाह बैजवापः-'जन्मतोऽनंतरं कार्यं जातकर्म यथाविधि । दैवादतीतः कालश्चेदतीते सूतके भवेत् ॥' इति । अत एव कालविकल्पोऽभिहितो नारदसंहितायाम्-'तस्मिञ्जन्ममुहूर्ते तु सूतकांते तथा शिशोः । जातकर्म च कर्तव्यं पितृपूजनपूर्वकम् ॥' इति । इदं च तुल्यन्यायत्वान्नामकर्मण्यपि ध्येयम् । तस्मादतिक्रांतकाले अवश्यं जातकर्मादिमुहूर्तो विचार्य इत्यलमतिप्रसंगेन । तज्जातकर्मादीनि । पर्वाण्युक्तानि मया । रिक्ताः=चतुर्थीनवमीचतुर्दश्यः, ताभिरूने वर्जिते तिथौ । जात्यभिप्रायेणैकवचनम् । शुभेऽह्नि व्यतीपातादिदोषरहिते दिवसे शुभग्रहवासरे च तथैकादशे द्वादशे वा घस्रे दिने, तथा मृदुध्रुवक्षिप्रचरभानि प्रसिद्धानि, तेषु च शिशोर्बालस्य तज्जन्मसमयातिक्रांतं जातकर्मादि । आदिशब्देन नामकर्माप्युच्यते । तद्विधेयं कर्तव्यं स्यात् । उक्तं च वसिष्ठेन-'मृदुध्रुवक्षिप्रचरेषु भेषु चारिक्तपर्वाख्यदिनेषु कार्यम् । शुभग्रहाणां दिनलग्नवर्गे तज्जातकर्माथ नामधेयम् ॥' इति । रत्नमालायाम् 'मृदुध्रुवक्षिप्रचरेषु भेषु सूनोर्विधेयं खलु जातकर्म । गुरौ भृगौ वापि चतुष्टयस्थे संतः प्रशंसंति च नामधेयम् ॥' चतुष्टयं=केंद्रम् । जातकर्मप्रयोजनमाह गुरुः—'जातकर्मक्रियां कुर्यात्पुत्रायुःश्रीविवृद्धये । ग्रहदोषविनाशाय सूतिकाऽशुभविच्छिदे ॥ कुमारग्रहनाशाय पुंसां सत्त्वविवृद्धये ॥' इति । अथ नामकर्मणि विशेषविचारः । नारदः—'सूतकांते नामकर्म विधेयं स्वकुलोचितम्' इति । तत्र नक्षत्रादिनियमाभावो नियतकालविहितत्वात् । तदुक्तं सारसंग्रहे—'एकादशेऽह्नि विप्राणां क्षत्रियाणां त्रयोदशे । वैश्यानां षोडशे नाम मासांते शूद्रजन्मनः ॥' इति । मनुस्तु—'नामधेयं दशम्यां तु द्वादश्यां

चास्य कारयेत् । पुण्ये तिथौ मुहूर्ते वा नक्षत्रे वा गुणान्विते ॥' दशम्यामतीतायामेकादशे दिवसे इत्यर्थः । एतच्च ब्राह्मणविषयं, पूर्वोदीरितवाक्यस्वरसात् । अत्र नामकर्मणोऽपि विहितकालातिक्रमे शुक्रास्तादिदोषरहिते शुभकाले तत्कार्यम् । यदाह कश्यपः—'उक्तकाले प्रकर्तव्या द्विजानामखिलाः क्रियाः । अतीतेषु च कालेषु कर्तव्याश्चोत्तरायणे ॥ सुरेज्येऽप्यसुरेज्ये वा नास्तगे न च वार्धके । शुभलग्ने शुभांशे च शुभेऽह्नि शुभवासरे ॥ चंद्रताराबलोपेते नैधनोदयवर्जिते । पूर्वाह्णे क्षिप्रनक्षत्रे चरस्थिरमृदुध्रुवे ॥ नाम मंगलघोषैश्च रहस्यं दक्षिणश्रुतौ ॥' बृहस्पतिः—'पूर्वाह्णः श्रेष्ठ इत्युक्तो मध्याह्नो मध्यमः स्मृतः । अपराह्णं च रात्रिं च वर्जयेन्नामकर्मणि ॥' तथा जगन्मोहने गुरुः—'पक्षच्छिद्रां च नवमीं हित्वा पंचदशीं तथा । शेषाः स्युस्तिथयः सर्वा नामकर्मणि पूजिताः ॥ भास्करार्कजभौमानां वर्जयेदंशकोदयौ । धनकर्मसुतभ्रातृनवमस्थः शुभः शशी ॥ शुद्धव्ययेऽष्टमे लग्ने पापाश्च्यरिलाभगाः । शुभेषु शेषसंस्थेषु नामकर्म शुभावहम् ॥' इति । प्रयोजनं च स्मर्यते—'नामाखिलस्य व्यवहारहेतुः शुभावहं कर्मसु भाग्यहेतुः । नाम्नैव कीर्तिं लभते मनुष्यस्ततः प्रशस्तं खलु नामकर्म ॥' तच्च नाम जन्मनक्षत्रचरणलक्षितस्वरोदयाभिहितशतपदचक्रांतर्गताक्षरादिकमेव कार्यम् । उक्तं च गृह्यपरिशिष्टे—'तदक्षरादिकं नाम यस्मिन्धिष्ण्ये यदक्षरम्' । शतपदचक्रसारोद्धारो ज्योतिषार्केऽभिहितो यथा—'चूचेचोला पदेऽश्वा[1]भे लीलूलेलो यमस्य भे । आइंउए इमं भे ओवावीवू च धातृभे ॥ वेवोकाकी मृगे ख्याताः कुघङच्छास्तु रौद्रभे । केकोहाही त्वदितिभे हूहेहोडा च पुष्यभे ॥ डीडूडेडो इमे सार्पं मामीमूमे मघाभिधे । मोटाटीटू तथा भाग्ये टेटोपाप्यर्यमर्क्षके ॥ पूषाणाठा तथा हस्ते पेपोरारीति चित्रभे । रूरेरोता तथा स्वात्यां तीतूतेतो द्विदैवभे ॥ नानीनूने क्रमान्मैत्रे नोयायीयू इतींद्रभे । येयोभाभीति मूलाख्ये भूधाफाढा जलस्य भे ॥ भेभोजाजीति विश्वर्क्षे जूजेजोखाभिजिद्भवेत् । खीखूखेखो श्रुतौ ज्ञेया गागीगूगे च वासवे ॥ गोसासीसू जलेशर्क्षे सेसोदादी त्वजांघ्रिभे । दूथझञा तथोपांत्ये देदोचाचीति पौष्णभे ॥ इति प्रोक्ता इमे पद्ये वर्णानामादिजाः स्फुटाः । ज्ञेया मेषादिराशीनां नवभिर्नवभिः पदैः ॥' एतैरादिमाक्षरैश्चूडामणिरित्यादिनामानि स्थाप्यानि । तदुक्तं शंखेन—'कुलदेवतानक्षत्रादिमाससंबद्धं नाम पिता वा कुर्यादन्योऽपि वा कुलवृद्धः' इति । अत्र केचित्—'जन्मनाम तु गोपयेत्' इति स्मरणाज्जन्मनक्षत्रसंबंधि नाम गुप्तं संस्थाप्य व्यवहारार्थमन्यन्नाम कुर्यादित्याहुः । तच्च नाम कीदृशं कार्यमित्याह वसिष्ठः—'तद्द्व्यक्षरं वा चतुरक्षरं वा यथेप्सितं चांतलकाररेफम् । विवर्ज्य नामादिकमेव कार्यं स्फुटं वदेद्दक्षिणकर्णरंध्रे ॥' इति । याज्ञिका अपि पठंति—'घोषवदाद्यंतरंतस्थं त्रिपुरुषानू[2]कमनरिप्रतिष्ठितं द्व्यक्षरं वा कृतं कुर्यान्न तद्धितम्' इति । कृतं कृदंतं तद्धितं तद्धितांतं घोषवदादीनां वर्णानां कृदंततद्धितानां च ज्ञानं व्याकरणशास्त्राज्ज्ञेयम् । विश्वप्रकाशपद्धतौ तु विशेषः—

---

१ अश्वाभे अश्विनीनक्षत्र इत्यर्थः । तस्य अश्वमुखसदृशत्वात् । २ त्रिपुरुषाननु कायति अभिधत्ते इति त्रिपुरुषानूकम् । अन्येषामपीति पूर्वपददीर्घः ।

'कुमार्या अप्ययुजाक्षरेण नाम देयाताम्' इति । मासनामानि वसिष्ठेनोक्तानि—'चैत्रादिमासनामानि वैकुंठोऽथ जनार्दनः । उपेंद्रो यज्ञपुरुषो वासुदेवस्त्रिविक्रमः । योगीशः पुंडरीकाक्षः कृष्णोऽनंतोऽच्युतस्तथा । चक्रधारीति चैतानि क्रमादाहुर्मनीषिणः ॥' इति । कुलदेवतास्तु वंशपरंपरया प्रसिद्धाः । अत्रान्यो नामप्रयुक्तो विशेषः स्मृतिभ्योऽनुसंधेयः ॥ इति नामकर्म ॥ ११ ॥

अथ बालजन्मानंतरं प्राच्यशिष्टाचारप्राप्तं प्रसूतास्नानमुहूर्तं वसंततिलकयाह—

पौष्णध्रुवेंदुकरवातहयेषु सूती-
स्नानं समित्रभरवीज्यकुजेषु शस्तम् ।
नाद्रात्रयश्रुतिमघांतकमिश्रमूल-
त्वाष्ट्रे ज्ञसौरिवसुषड्रविरिक्ततिथ्याम् ॥ १२ ॥

पौष्णेति ॥ पौष्णं रेवती, ध्रुवाणि प्रसिद्धानि, इंदुर्मृगः, करो हस्तः, वातः स्वाती, हयोऽश्विनी; एषु समित्रभरवीज्यकुजेषु अनुराधानक्षत्रसूर्यगुरुभौमवारसहितेषु सूत्याः प्रसूतायाः स्नानं प्रशस्तमुत्तमफलदम् । तदुक्तं दैवज्ञवल्लभे—'उत्तरात्रयरोहिण्यः सौम्यः पवनरेवती । प्रसूता वनिता स्नायाद्धस्तमैत्राश्विनीषु च ॥ स्नाता प्रसूताप्यसुता बुधेन स्नाता च वंध्या भृगुनंदनेन । सौरे मृतिः क्षीरहतिश्च सोमे पुत्रार्थलाभो रविजीवभौमे ॥' अन्ये तु पूर्वाफल्गुनीज्येष्ठाधनिष्ठास्वपि सूतीस्नानं वदंति । 'करेंद्रभाग्यानिलवासवांत्यमैत्रेन्दवाश्विध्रुवमेऽह्नि पुंसाम् । तिथावरिक्ते शुभमामनंति प्रसूतिकास्नानविधिं मुनींद्राः ॥' इति । अथ निषिद्धनक्षत्राण्युच्यन्ते । आर्द्रात्रयमार्द्रापुनर्वसुपुष्याः, श्रुतिमघांतकमिश्रमूलत्वाष्ट्राणि प्रसिद्धानि । द्वंद्वैकवद्भावः । एषु दशनक्षत्रेषु सूतीस्नानं न शस्तं, पुनःसूतेरभावादिति तात्पर्यार्थः । तथा ज्ञो बुधः, सौरिः शनिः, तथा वसुः अष्टमी, षट् षष्ठी, रविर्द्वादशी, रिक्ताः ४।९।१४, बुधशनिवारयोरेतासु तिथिषु च न शस्तम् । तदप्युक्तं दैवज्ञमनोहरे—'भरणी कृत्तिका मूलमार्द्रा पुष्यः पुनर्वसुः । मघा चित्रा विशाखा च श्रवणो दशमस्तथा ॥ एषु मंदे बुधे वारे सूतीस्नानं न कारयेत् । यदि स्नानं प्रकुर्वीत पुनःसूतिर्न विद्यते ॥' इति । एतच्च दाक्षिणात्या नानुमन्यंते यत्सूतिकास्नानं वदन् प्राच्य इति प्रष्टव्यः—किं सूतकमध्ये सूतिकास्नानं सूतकाद्बहिर्वा ? नाद्यः कल्पः । यदि सूतकमध्ये, षष्ठिकापूजार्थं क्रियमाणमपि स्नानं चांडालहस्तगतपुष्पवन्निष्फलमेव शुद्ध्यभावात् । नापि द्वितीयः । सूतकानंतरमेव शुद्ध्यापादकस्नानस्य विहितत्वात् । यदपि दैवज्ञवल्लभवाक्यं तदाचारमूलकं, न स्मृतिमूलकमिति मत्वा संतोष्टव्यम् । अथ प्राच्यमतेनैव जन्मानंतरं बालस्य स्तनपानमुहूर्तं उच्यतेऽस्माभिः—'रिक्तां भौमं परित्यज्य विष्टिं पातं सवैधृतिम् । मृदुध्रुवक्षिप्रभेषु स्तन्यपानं हितं शिशोः ॥' इति दैवज्ञवल्लभोक्तेः ॥ इति सूतीस्नानम् ॥ १२ ॥

---

१ 'मातापितरौ' इत्यत्र कर्ता बोध्यः ।

अथ प्रसंगतः संस्कारानंतर्गतमपि प्रथमादिमासोत्पन्नदंतफलं प्रसंगतः शार्दूलविक्रीडितेनाह—

मासे चेत्प्रथमे भवेत्सदशनो बालो विनश्येत्स्वयं
हन्यात्स क्रमतोऽनुजातभगिनीमात्रग्रजान्द्यादिके ।
षष्ठादौ लभते हि भोगमतुलं तातात्सुखं पुष्टतां
लक्ष्मीं सौख्यमथो जनौ सदशनो वोर्ध्वे स्वपित्रादिहा ॥ १३ ॥

मासे चेदिति ॥ बालकश्चेज्जन्मानंतरं प्रथमे मासे सदशनो दंतयुक्तो भवेत्स्यात्तदा स्वयं विनश्येत् । ततो द्व्यादिके द्वितीयादिके मासे स बालको दंतयुक्तो भवेत्तदाऽनुजातभगिनीमात्रग्रजान्हंति । यथा—द्वितीयमासेऽनुजातं कनिष्ठभ्रातरं हंति । तृतीयमासे भगिनीं हंति । चतुर्थमासे मातरं हंति । पंचमे मासि अग्रजं ज्येष्ठभ्रातरं हंति । षष्ठादिमासेषु दंतजन्म समीचीनफलम् । यथा–षष्ठे अतुलं बहुलं भोगं लभते । सप्तमे तातात्पितृतः सुखं लभते । अष्टमे पुष्टताम्, नवमे लक्ष्मीम्, दशमे सौख्यम्; एतच्चोपलक्षणं एकादशेऽपि मासे सौख्यमेव, द्वादशे मासे सुखबाहुल्यं लभते इत्यर्थः । यदाह चंडेश्वरः—'प्रथमे दंतजननात्स्वयमेव विनश्यति । द्वितीये भ्रातरं हंति तृतीये भगिनीं तथा ॥ चतुर्थे मातरं हंति पंचमे चात्मनोऽग्रजम् । षष्ठे च मंत्रजीवी स्यात्सप्तमे पितृसौख्यदः ॥ अष्टमे पुष्टिजनको नवमे लभते धनम् । लभते दशमे मासि सौख्यमेकादशेऽपि वा ॥ द्वादशे धनसंपत्तिर्दन्तानां जनने फलम् ॥' इति । अथो इति । अथो जनौ जन्मकाल एव सदशनो दंतयुक्तः स्यात्तदा स्वपित्रादिहा स्वमात्मानं पितरं च आदिशब्देन मातरं च हंति नाशयतीति स्वपित्रादिहा । केचिदादिशब्देन भ्रात्रादीनामपि नाशं व्याचक्षते । वोर्ध्वमिति । वा अथवा ऊर्ध्वे ऊर्ध्वपंक्तौ स्वजन्मानंतरं निषिद्धे विहितेऽपि वा काले सदशनश्चेत्स्यात्तदापि स्वपित्रादिहा । आत्मपितृनाशक इत्यर्थः । उक्तं च पद्मपुराणे विष्णुधर्मोत्तरखंडे परशुरामं प्रत्याह पुष्करः—'दंतजन्मनि बालानां लक्षणं तन्निबोध मे । उपरि प्रथमं यस्य जायंते च शिशोर्द्विजाः ॥' उपरि=उपरिपंक्तौ । द्विजाः=दंताः । 'दंतविप्रांडजा द्विजाः' इत्यभिधानात् । 'दंतैर्वा सह यस्य स्याज्जन्म भार्गवसत्तम । मातरं पितरं चाथ खादेदात्मानमेव च ॥' इति । एवंविधे दंतजनने शांतिरप्युक्ता तत्रैव । 'तत्र शांतिं प्रवक्ष्यामि तन्मे निगदतः शृणु । गजपृष्ठगतं बालं नौस्थं वा स्नापयेद्विज ॥ तदभावे तु धर्मज्ञ कांचने तु वरासने ।' तदभावे=गजाद्यभावे । 'सर्वौषधैः सर्वगंधैर्बीजैः पुष्पैः फलैस्तथा ॥ पंचगव्येन रत्नैश्च मृत्तिकाभिश्च भार्गव । स्थालीपाकेन धातारं पूजयेत्तदनंतरम् ॥ सप्ताहं चात्र कर्तव्यं तथा ब्राह्मणभोजनम् । अष्टमेऽहनि विप्राणां तथा देया च दक्षिणा । कांचनं रजतं गाश्च भूमिं वा धनमेव च । दंतजन्मनि मासान्यसंभवे सप्तमादपि ॥ अष्टमेऽहनि विप्राणां शृणु स्नानमतः परम् ॥ भद्रासने निवेश्यैनं कृत्रिमूलफले-

स्तथा । सर्वौषधैः सर्वबीजैः सर्वगंधैस्तथैव च ॥ आपयेत्पूजयेचात्र वह्निं सोमं समीरणम्' । समीरणं=वायुं । 'पर्वतांश्च तथा ख्यातान् देवदेवं च केशवम् ॥ एतेषामेव जुहुयाद्घृतमग्नौ यथाविधि । ब्राह्मणानां तु दातव्या यथाशक्त्या च दक्षिणा ॥ ततः स्वलंकृतं बालमासने तूपवेशयेत् । आसीनं छत्रमूर्धानं बीजैः सुखादयेत्ततः । सुखीभिर्बालकानां च तैः सुकार्यं च पूजनम् । पूज्याश्चाविधवा नार्यो ब्राह्मणाः सुहृदस्तथा ॥' इति । एवं पद्मपुराणोक्ता सदंतजननशांतिर्विधेया, ततोऽशुभफलनाशपूर्वकशुभफलावाप्तिर्भवतीति ॥ इति प्रथमादिमासे दंतजननफलम् ॥ १३ ॥

अथ दोलारोहणमुहूर्तं विवक्षुस्तत्संबंधिशुभाशुभफलदातृदोलाचक्रमनुष्टुभाह—

दोलारोहेऽर्कभात्पंचशरपंचेषुसप्तभैः ।
नैरुज्यं मरणं कार्श्यं व्याधिः सौख्यं क्रमाच्छिशोः ॥ १४ ॥

दोलारोह इति ॥ काष्ठलोहाद्याधारोपनिबद्धः पुरुषाघातवशादंतरिक्षे गतागतं कुर्वन्नल्पो बालकयोग्यः पर्यंकविशेषो दोलाशब्देनोच्यते । तत्र शिशोर्बालस्य दोलारोहे दोलास्थापने चिकीर्षिते सति अर्कभात्सूर्यनक्षत्रात्पंचनक्षत्रैर्नैरुज्यं नीरोगता स्यात् ,तदग्रिमपंचनक्षत्रैर्मरणं स्यात् , तदग्रिमपंचनक्षत्रैः कार्श्यं देहे कृशत्वं स्यात् , तदग्रिमैरिषुभिः पंचनक्षत्रैर्व्याधिः स्यात् , तदग्रिमसप्तनक्षत्रैः सौख्यं स्यादिति यथासंख्यं योजना । फलं चेदं शिशोरेव संस्कार्यत्वात् । उक्तं च—'सूर्यभाच्चंद्रभं यावत्पंचपंच चतुर्दिशम् । मध्ये तु सप्त देयानि दोलिकाचक्र उत्तमे ॥ पूर्वभागे निरोगत्वं दक्षिणे मरणं ध्रुवम् । पश्चिमे तु कृशो बाल उत्तरे व्याधिसंभवः ॥ शेषेषु सप्तधिष्ण्येषु बालकस्य सुखं भवेत्' इति ॥ १४ ॥

अथावसरप्राप्तं दोलामुहूर्तं वसंततिलकायाः पूर्वार्धेनोत्तरार्धेन निष्क्रमणमुहूर्तं चाह—

दंतार्कभूपधृतिदिङ्मितवासरे स्या-
द्वारे शुभे मृदुलघुध्रुवभैः शिशूनाम् ।
दोलाधिरूढिरथ निष्क्रमणं चतुर्थ-
मासे गमोक्तसमयेऽर्कमितेऽह्नि वा स्यात् ॥ १५ ॥

दंतार्केति ॥ दंताः द्वात्रिंशत् , अर्काः द्वादश, भूपाः षोडश, धृतयोऽष्टादश, दिशो दश; एतन्मितदिवसेषु तथा शुभे वारे सोमबुधगुरुशुक्राणां वारे तथा मृदुगणलघुगणध्रुवगणनक्षत्रैरुपलक्षिते शिशूनां बालानां दोलाधिरूढिः दोलायामधिरूढिरारोहः स्यात् । यदाह प्रयोगपारिजाते गुरुः—'दोलारोहस्तु कर्तव्यो दशमे द्वादशेऽपि वा । षोडशे दिवसे वापि द्वात्रिंशद्दिवसेऽपि वा ॥' इति । भविष्यपुराणे—'अभीष्टे पुण्यदिवसे चंद्रताराबलान्विते ।

मृगुध्रुवक्षिप्रभेषु माता वा कुलयोषितः। योगशायिहरिं स्मृत्वा प्राक्शीर्ष विन्यसेच्छिशुम् ॥' इति ॥ अथ प्रसंगतोऽन्येषामपि दोलारोहणमुहूर्तः प्रोच्यते । तत्र दीपिका—'उग्रेंद्रमूलाहिशिवाग्निवर्ज्यं शक्रेंदुताराततिथिलग्नयोगे । विष्टिक्षमापुत्रयमाहवर्ज्यमांदोलकारोहणमत्र शस्तम् ॥' इति । यमः=शनिः । अथ निष्क्रमणमुहूर्तः । तत्र चतुर्थमासे गमोक्तसमवे यात्राभिहितसमीचीनतिथिवारनक्षत्रादिसहिते काले शिशूनां निष्क्रमणं निष्क्रमाख्यसंस्कारं पूर्वं गृहाद्बहिर्गमनं कुर्यात्। वा अथवार्केऽमितेऽह्नि द्वादशे दिवसे निष्क्रमणं कुर्यात्। यदाह मनुः—'चतुर्थे मासि कर्तव्यं शिशोर्निष्क्रमणं गृहात्'। गुरुरपि—'गृहान्निष्क्रमणं सूनोश्चतुर्थे मासि कारयेत्। यात्रोक्ते समये मासि तृतीये द्वादशेऽहनि ॥' अत्र तृतीयमासोऽप्युक्तः। राजमार्तंडेनापि—'मासे तृतीये शशिवृद्धिपक्षे क्षपाकरे शोभनगोचरस्थे । उत्पातपापग्रहवर्जिते भे निष्कासनं सौख्यकरं शिशूनाम् ॥' तदेतयोः पक्षयोर्यथागृह्यं व्यवस्था। मुहूर्तसंग्रहे तु विशिष्य तिथ्याद्युक्तं निष्क्रमणे—'पूर्वपक्षः शुभः प्रोक्तः कृष्णश्चांत्यत्रिकं विना । रिक्तापष्ठ्यष्टमीदर्शद्वादशीश्च विवर्जयेत् ॥ चरवार्यर्यमतस्त्रीणि वैश्वाद्गीणि च भुग्यभात्। बुध्न्यभादुत्तराभाद्रपदातस्त्रीणि भानि च । मैत्रमादित्यपुष्यौ च रोहिणी च शुभावहाः ॥ अपालिमेषा वर्ज्याः स्युस्तथैवाधोमुखानि च । सतां नु वारवर्गाश्च शुभदास्तूदयास्तथा ॥ केंद्रत्रिकोणगाः सौम्याः पापाः षष्ठत्रिलाभगाः। उपनिष्क्रमणे शस्ता मातुलो वाहयेच्छिशुम् ॥' इति। अधोमुखानि 'मूलाहिमिश्रोग्रमधोमुखं भवेत्' (२।१) इत्युक्तानि। उदयाः=लग्नानि। एवंविधे सुलग्ने क्रियमाणस्य शिशुनिष्क्रमणकर्मणः फलमाह बृहस्पतिः—'अथ निष्क्रमणं नाम गृहात्प्रथमनिर्गमः। अकृतायां क्रियायां स्यादायुःश्रीनाशनं शिशोः ॥ कृते संपद्विवृद्धिः स्यादायुर्वर्धनमेव च ॥' अत्र विशेषमाह यमः—'तृतीये मासि कर्तव्यं शिशोः सूर्यस्य दर्शनम्। चतुर्थे मासि कर्तव्यमग्नेश्चंद्रस्य दर्शनम् ॥' इति। इति निष्क्रमणमुहूर्तः ॥ १५ ॥

अथ सूतिकाया जलपूजामुहूर्तं भुजंगप्रयातेनाह—

**कवीज्यास्तचैत्राधिमासे न पौषे जलं पूजयेत्सूतिका मासपूर्तौ ।**
**बुधेंद्विज्यवारे विरिक्ते तिथौ हि श्रुतीज्यादितींद्वर्कनैर्ऋत्यमैत्रैः ॥**

कवीज्येति ॥ कविः शुक्रः, इज्यो गुरुः, अनयोरस्ते; चैत्रमासे, तथाधिकमासे, तथा पौषमासे सूतिका जनयित्री मासपूर्तौ सत्यां जलं नद्यादेरंबु न पूजयेत्। तथा बुधेंद्विज्यवारे बुधगुरुचंद्रवारे, तथा विरिक्ते रिक्तारहिते तिथौ हि निश्चितं तथा श्रुतिः श्रवणः, इज्यः पुष्यः, अदितिः पुनर्वसुः, इंदुर्मृगः, अर्को हस्तः, नैर्ऋत्यं मूलं, मैत्रमनुराधा; एतैर्नक्षत्रैः सहिते दिने सूतिका जनयित्री मासपूर्तौ सत्यां नद्यादेर्जलं पूजयेत्। अत्र मूलानुपलंभः। नन्वयं मुहूर्तो निष्क्रमणात्प्राक् नामकरणानंतरं वक्तव्यः, प्राप्तकालत्वाद्युत्क्रमे कारणं न

पश्याम इति चेच्छृणु,—क्रमस्त्वत्र शास्त्रीयो विवक्षितो जलपूजा आचारप्राप्ता लौकिकीति क्रमानपेक्षा। अतः कालांतरेऽपि केचिज्जलपूजामाहुः। अथ मासानंतरं विहितो गवादिदुग्धपानविधिस्तन्मुहूर्तः प्राच्यमतेन मयोच्यते। श्रीधरीये-'एकत्रिंशे वासरे वा द्वितीये जन्मर्क्षे वा शुक्लपक्षेऽनुकूले। शंखे क्षीरं संनिदध्याच्छिशूनां वक्त्रे धात्री पूज्यपूजां विधाय॥' नृसिंहोऽपि—'एकत्रिंशद्दिने चैव पयः शंखेन पाययेत्। अन्नप्राशननक्षत्रदिवसोदयराशिषु॥' वक्ष्यमाणान्नप्राशनोक्तशुभदिवसे एकत्रिंशत्तमे धात्र्युपमाता गवादिक्षीरं शंखे निधाय मान्यपूजां च विधाय शिशुमुखे क्षीरं निदध्यादित्यर्थः॥ १६॥

अथान्नप्राशनमुहूर्तं स्रग्धरावसंततिलकाभ्यामाह—

रिक्तानंदाष्टदर्शं हरिदिवसमथो सौरिभौमार्कवारॉ-
ल्लग्नं जन्मर्क्षलग्नाष्टमगृहलवगं मीनमेषालिकं च।
हित्वा षष्ठात्समे मास्यथ हि मृगदृशां पंचमादोजमासे
नक्षत्रैः स्यात्स्थिराख्यैः समृदुलघुचरैर्बालकान्नाशनं सत् १७
केंद्रत्रिकोणसहजेषु शुभैः खशुद्धे
लग्ने त्रिलाभरिपुगैश्च वदंति पापैः।
लग्नाष्टषष्ठरहितं शशिनं प्रशस्तं
मैत्राम्बुपानिलजनुर्भमसच्च केचित्॥ १८॥

रिक्तेति॥ केंद्रेति॥ अथोशब्दो मध्ये पठितोऽपि पश्चाद्गेयः। अथो अनंतरं निष्क्रमणानंतरमेवंविधे काले बालानामन्नाशनं प्रथमभोजनं सत् शुभफलदायि स्यादित्यन्वयः। तत्रान्ने वर्ज्यपदार्थाः—रिक्ताः ४।९।१४, नंदा १।६।११, अष्ट ८, दर्श ३०, हरिदिवसं, द्वादशी १२, एतास्तिथीर्हित्वा उपलक्षणत्वात्तिथिक्षयं च तथा सौरिभौमार्कवारांश्च हित्वेत्यर्थः। यदाह नारदः-'रिक्तां तिथिक्षयं नंदां द्वादशीमष्टमीमपि। त्यक्त्वान्यतिथयः श्रेष्ठाः प्राशने शुभवासराः॥' इति। कश्यपोऽपि—'द्वादशीमष्टमीं रिक्तां नंदां चैव दिनक्षयम्। सूर्यार्किभौमवारांश्च त्यक्त्वान्यशुभवासरे॥' नवान्नप्राशनमित्यनुवर्तते। अत एवोक्तं जीर्णैः—'द्वितीया च तृतीया च पंचमी सप्तमी तथा। त्रयोदशी च दशमी प्राशने तिथयः शुभाः॥' इति। कश्चित्सूर्यबुधगुरुवाराः प्रशस्ता उक्ताः, अन्ये निषिद्धाः। उक्तं च—'शशिशुक्रे च मंदाग्निः शनौ भौमे बलक्षयः। बुधार्कगुरुवारेषु प्राशनं हि शुभावहम्॥' इति। तदेतन्निर्मूलत्वादुपेक्ष्यम्। दोषांतरमप्युक्तं नारदेन—'न वैधृतौ व्यतीपाते विष्ट्यां गंडातिगंडयोः। शूले वज्रे न परिघे बालान्नप्राशनं हितम्'॥ अत्रैषां दोषाणां सामान्यतो निषेधे सिद्धे पुनर्वचनम् 'विष्टिरंगारकश्चैव', 'वज्रविष्कंभयोर्विषाः'

इत्यनयोरप्यपवादार्थम् । तेन स्त्रीयभोगपर्यंतं निषेधः । लग्नमिति । जन्मर्क्ष-लग्ने जन्मराशिजन्मलग्ने ताभ्यामष्टमगृहमष्टमलग्नोऽष्टमनवांशश्च तौ गच्छति प्राप्नोत्येवंविधं लग्नं हित्वा । जन्मराशिजन्मलग्नाभ्यामष्टमलग्नमष्टमनवांशं च त्यजेदित्यर्थः । उक्तं च कश्यपेन—'जन्मराशिविलग्नाभ्यां नैधनेंऽशे च वर्जयेत् ।' इति । तथा मीनमेषालिकं च मीनमेषवृश्चिकलग्नानि हित्वा । यदाह जगन्मोहने कश्यपः—'गोऽश्वकुंभतुलाकन्यासिंहकर्कनृयुग्मृगाः । शुभदा राशयश्चैते न मेषझषवृश्चिकाः ॥' इति । अश्वः=धनुः । नृयुक्=मिथुनम् । मृगः=मकरः, षष्ठादिति ल्यब्लोपे पंचमी । षष्ठमासमारभ्य सप्तमासे षष्ठाष्टमदशमद्वादशमासेषु बालानामन्नप्राशनम् । पुंबालविषयमेतत् । अथानंतरं हि निश्चयेन मृगदृशां कन्यकानां पंचमादोजमासे विषममासे पंचमसप्तमनवमैकादशमासेषु अन्नप्राशनं सत् । उक्तं च वसिष्ठेन—'युग्मेषु मासेषु च षष्ठमासात्संवत्सरे वा नियतं शिशूनाम् । अयुग्ममासेषु च कन्यकानां नवान्नसंप्राशनमिष्टमेतत् ॥' अत्रायुग्ममासत्वं पंचममासादिति ज्ञेयम् । यदाह नारदः—'षष्ठे मास्यष्टमे वाथ पुंसां स्त्रीणां च पंचमे । सप्तमे मासि वा कार्यं नवान्नप्राशनं शुभम् ॥' मनुस्तु—'षष्ठेऽन्नप्राशनं मासि' इत्याह । एवमनेककालाभिधाने कस्मिन्काले अन्नप्राशनं विधेयमिति संदेहः । किं समबलत्वात्सर्वेऽपि मुख्या एव काला उत कश्चिन्मुख्यगौणभाव इति । अत्र ब्रूमः—स्वस्वगृह्ये विशिष्यकालोऽन्नप्राशने उक्तः स मुख्यः । तत्र गुरुशुक्रास्तादिविचारं विनैव विधेयम् । इतरेषु गौणकालेषु विहितकालाननुष्ठाने सति निर्दोषे काले हि विधेयम् । यत्र स्वगृह्ये कश्चिद्विशिष्यकालो नाभिहितस्तत्र सर्वेषां सांहितिककालानां तुल्यबलत्वाद्विकल्पो भवति । तत्रापि सदोषं कालं विहाय निर्दोषे कालेऽन्नप्राशनं विधेयमिति फलितोऽर्थः । तत्रापि शुक्लपक्षे पूर्वाह्णे विधेयम् । 'शुक्लपक्षे च पूर्वाह्णे' इति नारदोक्तेः । नक्षत्रैरिति मृदुगणलघुगणचरणगणयुतैः स्थिराख्यैर्नक्षत्रैर्बालकान्नप्राशनं स्यात् । 'चरस्थिरमृदुक्षिप्रनक्षत्रेषु शुभे दिने' इति कश्यपोक्तेः । जगन्मोहने वसिष्ठोऽपि—'विष्णुरुष्णकिरणो हिमरश्मिर्वायुमित्रवरुणादितिचित्राः । अश्विनिष्यवसुपौष्णभरोहिण्युत्तराश्च शिशुभोजनताराः ॥' इति । अत्र विहितनक्षत्रेषु जन्मनक्षत्रं प्रशस्तमुक्तं नारदेन—'पट्टबंधनचौलान्नप्राशने चोपनायने । शुभदं जन्मनक्षत्रमशुभं त्वन्यकर्मणि ॥' इति । 'बालान्नभुक्तौ व्रतबंधनेऽपि राजाभिषेके खलु जन्मधिष्ण्यम् । शुभं त्वनिष्टं सततं विवाहसीमंतयात्रादिषु मंगलेषु ॥' इति वसिष्ठोक्तेश्च । यत्तु गुरुवचनम्—'जन्मर्क्षकर्मनक्षत्रे आधानर्क्षे च वर्जयेत् । कर्णवेधं तथा यानं क्षुरकर्मान्नभोजनम् ॥' इति । एषां हि लक्षणमुक्तं मुहूर्तसंग्रहे—'जन्मभं जन्मनक्षत्रं दशमं कर्मसंज्ञितम् । एकोनविंशमाधानं त्रयोविंशं विनाशभम् ॥' इति त्रयोविंशव्यतिरिक्तानां सर्वेषां जन्मनक्षत्रत्वमस्तीति, तद्वार्षिकनवान्नभोजनविषयकम् । अत एव लोकेऽन्नभोजनान्नप्राशनशब्दयोः साधारणाऽसाधारणत्वेन व्यवहारोपलंभात् । 'जन्मनक्षत्रगश्चंद्रः प्रशस्तः सर्वकर्मसु । क्षौर-

जैवजवादाच्चकर्तनेषु च वर्जयेत् ॥' इति दीपिकायां निषेधानुपलंभाच्च । तस्मा-त्प्रथमदशमैकोनविंशेषु जन्मनक्षत्रेषु बालान्नप्राशनं प्रशस्ततरमिति वयं ब्रूमः । यदपि लल्लवाक्यम्—'हित्वैकं जन्मर्क्षं द्वे तारे जन्मसंज्ञिते शुभदे । उद्वाहे चोपनये यात्रायामन्नभोजने क्षौरे ॥' इति । यन्नक्षत्रे जन्म तज्जन्मनक्षत्रं दशमै-कोनविंशं च जन्मतारेत्युच्यते लोकैः । एतदपि प्रागुक्तविषयमेवेत्यलमतिप्रसं-गेन । तत्रापि विद्धनक्षत्रं सर्वथा निषिद्धमेव । तदुक्तं दीपिकायाम्-'कर्णवेधे विवाहे च व्रते पुंसवने तथा । प्राशने चाद्यचूडायां विद्धमृक्षं परित्यजेत् ॥' इति । वेधप्रकारो हि विवाहप्रकरणे वक्ष्यते । लग्नबलमाह—केंद्रेति । यद्यपि केंद्रश-ब्देन दशममपि स्थानमुच्यते तथापि न गृह्यते'सशुद्धे लग्ने'इति वक्ष्यमाणत्वात्। एवंसति केंद्राणि १।४।७, त्रिकोणं ९।५, सहजं ३; एषु स्थानेषु स्थितैः शुभग्रहै-स्तथा त्रि ३ लाभ ११ रिपुगैः ६ पापग्रहैश्चोपलक्षिते लग्ने सशुद्धे दशमशुद्धि-सहिते सर्वग्रहरहिते इति यावत् । एवंविधे लग्ने । लग्नाष्टषष्ठस्थानरहितमर्थाद-न्यस्थानस्थितं शशिनं प्रशस्तं वदंति मुनय इति शेषः । यदाह कश्यपः—'त्रिकोणकेंद्रग्यायेषु शुभैस्त्र्यायारिगैः परैः । अलग्ननिधनांत्यारिस्थानस्थेन हिमां-शुना ॥' अन्नप्राशनं कुर्यादित्यनुवर्तते । अत्र लग्नस्थचंद्रनिषेधः क्षीणचंद्रविषयः । नारदोऽपि—'दशमे शुद्धिसंयुक्ते शुभलग्ने शुभांशके । शुक्लपक्षे च पूर्वाह्ने सौम्ययुक्ते निरीक्षिते ॥ त्रिषष्ठलाभगैः पापैः केंद्रधीधर्मगैः शुभैः । व्यंत्यारिनिधन-स्थेन चंद्रेण प्राशनं शुभम् ॥' इति । अत्र दशमशुद्धिः सर्वग्रहराहित्यं, दशम-स्थानरहितकेंद्रं च केंद्रशब्देन विवक्षितम् । यदाह प्रयोगपारिजाते ऽर्णवः–'दशमस्थानगान्सर्वान्वर्जयेन्मतिमान्नरः । अन्नप्राशनकृत्येषु मृत्युक्लेशभयाव-हान् ॥' अत्र लग्नस्थचंद्रः प्रशस्तः, पूर्णचंद्रविषयत्वात् । एतच्चाग्रिमपद्ये वक्ष्य-ते । विशेषमाह अत्र गुरुः—'शुक्रारज्ञाः क्रमाद्यानाः सप्तमाष्टमधर्मभे । भोज्यभोक्तृनवत्वे तु सर्वथा मरणप्रदाः ॥' इति । शुक्रः सप्तमः भौमोऽष्टमः बुधो नवमश्च । भोज्यमन्नं गोधूमादि तस्य नवत्वे नवान्नत्वेन भक्षणीये सति भोक्तुरन्नप्राशनकर्तुर्बालकस्य नवत्वे सति वा एते ग्रहा मरणप्रदा इत्यर्थः । मैत्रेति । मैत्रांबुपानिला अनुराधाशततारकास्वात्यो ऽमत्यो निषिद्धा इति केचि-दाहुरिति परमतेनोपन्यासः । यथोक्तं श्रीपतिना–'रेवतीश्रुतिपुनर्वसुहस्त-त्र्याद्यतः पृथगपि द्वितये च । स्युत्तरे च गदितं पृथुकानां प्राशनं हि नवान्न-विधानम् ॥' अस्यार्थः–रेवत्यादिभ्यः पंचभ्यो द्वितयेऽपि नक्षत्रे । कोऽर्थः? रेव-त्यश्विनी च श्रवणं धनिष्ठा च पुनर्वसुः पुष्यश्च हस्तश्चित्रा च रोहिणी मृगश्च उत्तरात्रयमेव । एवं त्रयोदशर्क्षेषु पृथुकानां बालानामन्नप्राशनं वार्षिकं नवा-न्नविधानं च गदितमिति । नारदादिभिस्तु चरस्थिरक्षिप्रमृदुनक्षत्रेषु इति षोडशनक्षत्राणामभिधानात् तत्र त्रयाणामनुराधाशततारकास्वातीनामाधि-क्यमतः श्रीपतिमतमाश्रित्यैषां भानां निषिद्धत्वमुक्तं ग्रंथकृता । च पुनर्जनुर्भं जन्मनक्षत्रं चासत् । यदाह गुरुः—'जन्मर्क्षे कर्मनक्षत्रे आधानर्क्षे च वर्जयेत् । कर्णवेधं तथा यानं क्षुरकर्मान्नभोजनम् ॥' इति । विशेषाचचा-

रणमजानतां मतमेतत्। वस्तुतस्तु अन्नस्य भोजनं अन्नभोजनमिति व्युत्पत्त्या सार्वकालिकान्नभोजनविषयकमेवैतदित्युक्तमस्माभिः पूर्वपद्ये ॥ १७ ॥ १८ ॥

अथ ग्रहाणां स्थानवशात्फलान्यनुष्टुपछंदोभ्यामाह—

क्षीणेंदुपूर्णचंद्रेज्यज्ञभौमार्कार्किभार्गवैः।
त्रिकोणव्ययकेंद्राष्टस्थितैरुक्तं फलं ग्रहैः ॥ १९ ॥
भिक्षाशी यज्ञकृद्दीर्घजीवी ज्ञानी च पित्तरुक्।
कुष्ठी चान्नक्लेशवातव्याधिमान्भोगभागिति ॥ २० ॥

क्षीणेंद्विति ॥ भिक्षाशीति ॥ त्रिकोणं ९। ५, व्ययः १२, केंद्राणि दशमरहितानि १।४।७, अष्टौ ८; एषु स्थानेषु स्थितैः क्षीणेंद्वादिभिरष्टभिर्ग्रहैर्भिक्षाशीत्यादिकं फलं यथासंख्येनोक्तम्। मुनिभिरिति शेषः। यथा एषु स्थानेषु स्थितः क्षीणचंद्रश्चेत्तदाऽन्नप्राशनकृद्बालो भिक्षाशी दरिद्रः स्यात्। तथा पूर्णचंद्र एतत्स्थानस्थितश्चेत्तदा ज्योतिष्टोमयज्ञकृत्। एवमिज्यो गुरुश्चेद्दीर्घजीवी। ज्ञो बुधश्चेज्ज्ञानी स्यात्। भौमश्चेत्पित्तरुक् पित्तकृता रुक् यस्यासौ पित्तरुक्। अर्कश्चेत्कुष्ठी स्यात्। आर्किः शनिश्चेत्तदाऽन्नाभावसंबंधी क्लेशोऽन्नक्लेशः, वातप्रधानो व्याधिर्वातव्याधिः, एतौ विद्येते यस्यासौ अन्नक्लेशवातव्याधिमान्स्यात्। उपलक्षणत्वाद्राहुकेत्वोरप्येतत्फलं द्रष्टव्यम्। भार्गवः शुक्रश्चेत्तर्हि भोगभाक् स्यादित्यर्थः। उक्तं च रत्नमालायाम्—'रवौ लग्ने कुष्ठी धरणितनये पित्तगदभाक् शनौ वातव्याधिः कृशशशिनि भिक्षाशनरतः। बुधे ज्ञानी भोगी ह्युशनसि चिरायुः सुरगुरौ विधौ पूर्णे यज्वा भवति च नरः सत्रद इह ॥ कंटकोत्यनिधनत्रिकोणगास्तत्फलं ददति यवतो ग्रहाः। षष्ठ इन्दुरशुभस्तथाऽष्टमः केंद्रकोणगत एनिरसहत् ॥' इनः सूर्यस्तस्यापत्यमेनिः=शनि। अत्र लग्नस्थितानामेव ग्रहाणां फलाभिधानादन्यकेंद्रादिषु तदतिदेशात्फलेऽपि महत्त्वाल्पत्वकृतो विशेषो ध्येय इति निष्कृष्टोऽर्थः। अन्यथा सर्वकेंद्राद्यनुवादेन कुष्ठ्यादिफलमेव ब्रूयात् ॥ अत एव वसिष्ठेन लग्नस्थितानामेव फलमुक्तम् 'कुष्ठी लग्नगते सूर्ये क्षीणचंद्रे च भिक्षुकः। सत्रदः पूर्णचंद्रे स्यात्कुजे पित्तरुजार्दितः ॥ बुधे ज्ञानी गुरौ भोगी दीर्घायुर्भाग्यवान्सिते। वातरोगी शनौ राहौ केतौ चान्नविवर्जितः ॥' इति। नारदादिभिरप्येवमुक्तम्। लग्नं विहायान्यकेंद्रस्थितानां ग्रहाणां तु सामान्यत एव फलं शुभाशुभमुक्तं तद्वाक्यं प्रागभिहितमस्माभिः। ग्रंथकर्त्रा तु लाघवात् रत्नमालापद्यार्थमनुसृत्यैवमुक्तमित्यदोषः। पूर्णचंद्रक्षीणचंद्रयोर्लक्षणमन्नप्राशनप्रकरणे उक्तं वसिष्ठेन—'संपूर्णेंदूभयाष्टम्योर्मध्येंदुः पूर्णसंज्ञकः। विनष्टेंदूभयाष्टम्योर्मध्येऽसौ क्षीणसंज्ञकः ॥' इति। संपूर्णेंदुः=पूर्णिमा। मध्येंदुरित्यत्र छांदसः समासः। कुतः? 'समर्थः पदविधिः' इति, 'सापेक्षमसमर्थं भवति' इति च स्मरणात्। अथवा मध्ये इंदुरिति पदच्छेदः। तत्रायादेशे यलोपे च 'पूर्वत्रा-

सिद्धम्' इत्यसिद्धत्वमाहुणे कर्तव्ये न भवति 'न मु ने' इत्यत्र नेति योग-विभागात्तस्य चेष्टसिद्धिविषयत्वात् । विनष्टेंदुः=अमावास्या, असाविति कृतपद-च्छेदमध्येंदुशब्दस्य इंदुः ॥ इति अन्नप्राशनम् ॥ १९ ॥ २० ॥

अथ भूम्युपवेशनमुहूर्तं वसंततिलकयाह—

पृथ्वीवराहमभिपूज्य कुजे विशुद्धे-
ऽरिक्ते तिथौ व्रजति पंचममासि बालम् ।
बद्ध्वा शुभेऽह्नि कटिसूत्रमथ ध्रुवेंदु-
ज्येष्ठर्क्षमैत्रलघुभैरुपवेशयेत्कौ ॥ २१ ॥

पृथ्वीति ॥ पृथ्वी च वराहश्चानयोः समाहारद्वंद्वः । पृथ्वीं वराहं चाभि-पूज्य । कुजे विशुद्धे । भौमबले सतीत्यर्थः । अरिक्ते रिक्तारहिततिथौ सति तथा पंचममासि व्रजति लगति सति तथा शुभेऽह्नि शुभग्रहवारेषु तथा ध्रुवेंदुज्येष्ठ-र्क्षमैत्रलघुभैः रोहिण्युत्तरात्रयमृगज्येष्ठानुराधाश्विनीपुष्यहस्तैर्दशनक्षत्रैः उप-लक्षिते काले बालं कटिसूत्रं पट्टसूत्रादिनिर्मितं कटिस्थले बद्ध्वा कौ पृथि-व्यामुपवेशयेन्मंत्रपाठपूर्वकमुपवेशनाख्यं संस्कारं कुर्यात् । उक्तं च पद्म-पुराणे—'पंचमे च तथा मासि भूमौ तमुपवेशयेत् । तत्र सर्वे ग्रहाः शस्ता भौमो राम विशेषतः ॥ तिथिं च वर्जयेद्रिक्तां शस्तानि शृणु भानि मे । उत्तरात्रितयं सौम्यं पुष्यर्क्षं शक्रदैवतम् ॥ प्राजापत्यं च हस्तं च शस्तमाश्विन-मित्रभम् । वराहं पूजयेद्देवं पृथिवीं च तथा द्विजान् ॥' मंत्रा अपि तत्रैवो-क्तास्ते लिख्यंतेऽस्माभिः—'रक्षैनं वसुधे देवि सदा सर्वगतं शुभे । आयुः-प्रमाणं निखिलं निक्षिपस्व हरिप्रिये ॥ अचिरादायुषस्त्वस्य ये केचित्परि-पंथिनः । जीवितारोग्यवित्तेषु निर्दहस्वाचिरेण तान् ॥ धारिण्यशेषभूतानां मातस्त्वमधिका ह्यसि । कुमारं पाहि मातस्त्वं ब्रह्मा तदनुमन्यताम् ॥ तस्यो-पवेशनं कृत्वा भूमौ ब्राह्मणभोजनम् । पूर्वं कृत्वा ततः कार्यमुत्सवं पूर्वव-द्द्विजः ॥' इति । उत्सवः=नीराजनादिः । यद्यपि ग्रंथकर्त्रा पंचममासि कर्तव्यं भूम्युपवेशनमन्नप्राशनतः प्राक् वक्तव्यं तथापि ज्योतिःशास्त्रकर्तृवसिष्ठाद्य-नुक्तत्वात् क्रमबाधमंगीकृत्योक्तम् । सांप्रतं शिष्टानां त्वन्नप्राशनसमय एव भूम्युपवेशनानुष्ठानदर्शनाच्च ॥ २१ ॥

अथ परमतेनैव भूम्युपवेशनकाले एव जीविकापरीक्षां शालिन्याह—

तस्मिन्काले स्थापयेत्तत्पुरस्ताद्वस्त्रं शस्त्रं पुस्तकं लेखनीं च ।
स्वर्णं राप्यं यच्च गृह्णाति बालस्तैराजीवैस्तस्य वृत्तिः प्रदिष्टा ॥ २२ ॥

तस्मिन्काल इति ॥ स्पष्टार्थं पद्यम् । आजीवैर्जीविकाभिः । 'आजीवो जीविका वार्ता' इत्यभिधानात् । यदाह मार्कंडेयः—'अग्रतोऽथ प्रवि-न्यस्य रत्नभांडानि सर्वशः । शस्त्राणि चैव वस्त्राणि ततः पश्येत्तु लक्षणम् ॥

प्रथमं यत्स्पृशेद्बालो रिंगमाणः स्वयं तदा। जीविका तस्य बालस्य तेनैव तु भविष्यति॥' इति। बहुधा तु जीविकापरीक्षामन्नप्राशनसमय एव कुर्वंतीति शिष्टाचारः। इदं पद्यं ग्रंथकर्तुः मुहूर्तविचारार्थं प्रवृत्तस्य हि वक्तुमनुचितं मुहूर्तविचारस्यात्राऽप्रतिपादनात्। किंतु धर्मशास्त्रकर्तृणामुचितोऽयं विचारो यतस्ते संस्कारार्थं प्रवृत्ता इति॥ २२॥

अथ शिशोस्तांबूलभक्षणमुहूर्तं स्रग्धरयाह—

वारे भौमार्किहीने ध्रुवमृदुलघुभैर्विष्णुमूलादितींद्र-
स्वातीवस्वग्न्युपेतैर्मिथुनमृगसुताकुंभगोमीनलग्ने।
सौम्यैः केंद्रत्रिकोणैरशुभगगनगैः शत्रुलाभत्रिसंस्थै-
स्तांबूलं सार्धमासद्वयमितसमये प्रोक्तमन्नाशने वा॥२३॥

वार इति॥ भौमार्किभ्यां मंगलशनिभ्यां हीने रहिते वासरे सति श्रवणमूलपुनर्वसुज्येष्ठास्वातीधनिष्ठायुक्तैः ध्रुवमृदुलघुनक्षत्रैः उपलक्षिते काले तथा मिथुनं, मृगः मकरः, सुता कन्या, कुंभः, गौर्वृषः, मीनः; एषामन्यतमे लग्ने सौम्यैः सौम्यग्रहैः केंद्रत्रिकोणगतैः अशुभगगनगैः पापग्रहैः शत्रुलाभत्रिसंस्थैः षष्ठैकादशतृतीयस्थानस्थितैः सहिते सति बालकस्य तांबूलं लक्षणया तांबूलभक्षणं प्रोक्तमित्यर्थः। यदाह दीपिकाकारः—'मूलादितींद्रविणतिष्यकरोत्तरासु पौष्णाश्विविष्णुरजनीकरशक्रभेषु। वारेषु सूर्यशशिजीवसितेंदुजानां तांबूलभक्षणविधिः कथितः शिशूनाम्॥ दुश्चिक्यलाभभवनारिगताश्च पापाः सौम्यग्रहा नवमपंचमकंटकस्थाः। आरोग्यशांतिशुभभाग्यसुखोपभुक्त्यै तांबूलभक्षणविधौ मुनिभिः प्रदिष्टाः॥' इति। द्रविणं=धनिष्ठा। चित्रानुराधयोर्ग्रहणं राजमार्तंडवचनात्—'दिनकरचंद्रसमीरणमैत्रं पुष्यपुनर्वसुरेवतिचित्रम्। भटमृगमन्मथ[1]कन्यकलग्नं पूगफलाशनमेभिरिहेष्टम्॥' पूगफलग्रहणं तांबूलोपलक्षणम्। रोहिणीस्वात्योर्ग्रहणे मूलं नास्ति। मीनवृषयोर्मूलं नास्ति। एतच्च कस्मिन्काले कार्यमित्यत आह—सार्धेति। जन्मकालात्सार्धमासद्वयमितसमये तांबूलदानं प्रोक्तम्। यदाह चंडेश्वरः—'सार्धमासद्वये पूगं तांबूलं वा शिशोर्हितम्। एवमभी रत्नभुजो मासैर्भोगभागी भवेन्नरः॥' वा अथवा। अन्नाशने अन्नप्राशनसमये वा प्रोक्तम्। एतच्च शिष्टाचारदर्शनादुक्तम्। तदा मुहूर्तविचाराऽनुन्मेषः। यदा सार्धे मासद्वये तांबूलभक्षणं विहितं तदा मुहूर्तविचारो युक्त एव। अथ प्रसंगतोऽन्येषामपि तांबूलभक्षणमुहूर्तः प्रोच्यतेऽस्माभिः। तदुक्तं दीपिकायाम्—'मूलाश्विमैत्रकरतिष्यहरींदुभेषु पौष्णे तथा मृगशिरोदितिवासवेषु। अर्केंदुजीवभृगुबोधनवासरेषु तांबूलनूतनदलाद्यशनं शुभाय॥' दलानि=पर्णानि। विशेषः स्मृतिभ्योऽनुसंधेयः। यथा—'तांबूलं सुष्ठु यो दद्याद्ब्राह्मणेभ्योऽतिभक्तितः। मेधावी सुभगः प्राज्ञो दर्शनीयश्च जायते॥ फलेन तृप्यते ब्रह्मा पत्रेण भगवान् हरिः।

1 मन्मथः=मिथुनम्।

चूर्णमीश्वरतुष्ट्यै स्यात्तांबूलाशनदानतः ॥ एकद्वित्रिचतुष्पंचषड्भिः पूगैः फलानि च । लाभालाभौ सुखं दुःखमायुर्मरणमेव च ॥ पर्णमूले भवेद्व्याधिः पर्णाग्रे धनसंक्षयः । चूर्णपर्णं हरत्यायुः शिरा बुद्धिविनाशनी । पर्णाग्रं पर्णपृष्ठं वा चूर्णपर्णं द्विपर्णकम् । रात्रौ खदिरतांबूलं शक्रस्यापि श्रियं हरेत् ॥ अशास्त्रविधिना पर्णं पूगं खादति यो नरः । सप्तजन्मदरिद्रः स्यादंते विष्णुं न संस्मरेत् ॥' इति ॥ २३ ॥

अथ कर्णवेधमुहूर्तं स्रग्धरयाह—

हित्वैतांश्चैत्रपौषावमहरिशयनं जन्ममासं च रिक्तां
युग्माब्दं जन्मतारामृतुमुनिवसुभिः संमिते मास्यथो वा ।
जन्माहात्सूर्यभूपैः परिमितदिवसे ज्ञेज्यशुक्रेंदुवारे-
ऽथौजाब्दे विष्णुयुग्मादितिमृदुलघुभैः कर्णवेधः प्रशस्तः ॥

हित्वेति ॥ अथैतान्पदार्थान्हित्वा कर्णवेधः प्रशस्त इत्यन्वयः । एतान्कान् ? तत्र चैत्रं पौषं च मासम् । अवमं दिनक्षयम् । हरिशयनमाषाढशुक्लैकादशीमारभ्य कार्तिकशुक्लैकादशीपर्यंतम् । जन्ममासम् 'आरभ्य जन्मदिवसं यावत्त्रिंशद्दिनं भवेत् । जन्ममासः स विज्ञेयो गर्हितः सर्वकर्मसु ॥' इति लक्षणलक्षितम् । रिक्तां तिथिं ४ । ९ । १४, युग्माब्दं समवर्षं द्वितीयचतुर्थादिकं, जन्मतारां प्रथमदशमैकोनविंशात्मिकां हित्वा । उक्तं च व्यवहारोच्चये— 'न जन्ममासे नच चैत्रपौषे न जन्मतारासु हरौ प्रसुप्ते । तिथावरिक्ते नच विष्टिदुष्टे कर्णस्य वेधो न समेऽपि वर्षे ॥' इति ॥ अत्र चैत्रस्य निषेधो मीनार्कविषयः । पौषनिषेधो धनुरर्कविषयः । अन्यथा—'कार्तिके पौषमासे वा चैत्रे वा फाल्गुनेऽपि वा । कर्णवेधं प्रशंसंति शुक्ले पक्षे शुभेऽहनि ॥' इति व्यासवचनमसंगतं स्यात् । अत्र कार्तिकशुक्लपक्षैकादशीतः कार्तिकः प्रशस्तः, पूर्वस्य देवशयनमध्यत्वान्निषेधः । अत्र जन्ममासे वर्ज्यांतराण्यप्याह प्रयोगपारिजाते व्यासः—'यो जन्ममासे क्षुरकर्म यात्रां कर्णस्य वेधं कुरुते हि मोहात् । मूढः स रोगी धनपुत्रनाशं प्राप्नोति गूढं निधनं तदाशु ॥' इति । विहितकालमाह—ऋत्विति । ऋतवः षट्, मुनयः सप्त, वसवोऽष्टौ; एतैः संमिते गणिते मासि षष्ठे मासे सप्तमे मासेऽष्टमे मासे वा, अथो वा जन्माहाज्जन्मदिवसात् सूर्यभूपैर्द्वादशभिः षोडशभिर्वा परिमिते गणिते दिवसे सौरसावने कर्णवेधः प्रशस्त उक्तः । यदाह जगन्मोहने वसिष्ठः—'मासे षष्ठे सप्तमे वाऽष्टमे वा वेध्यौ कर्णौ द्वादशे षोडशेऽह्नि । मध्ये चाह्नः पूर्वभागे न रात्रौ' इति । यदा तु षण्मासादौ कर्णवेधक्रिकीर्षितः तदा तिथीमाह जगन्मोहने वसिष्ठः—'द्वितीया दशमी षष्ठी सप्तमी च त्रयोदशी । द्वादशी पंचमी शस्ता तृतीया कर्णवेधने ॥' इति । ज्ञेज्यशुक्रेंदुवार इति । बुधबृहस्पतिशुक्रचंद्रवारेषु प्रशस्तः कर्णवेधः । यदाह जगन्मोहने वसिष्ठः—'भूमिजार्कात्मजार्काणां दारान्संवर्जयेत्सुधीः । जीवेंदुज्ञेंदुशुक्राणां दिवसाः परिपूजिताः ॥

इति। अथेति। ओजाब्दे विषमवर्षे वा कर्णवेधः प्रशस्तः। सूर्यबले सतीत्यपि ध्येयम्। यदाह राजमार्तंडः—'अर्केऽनुकूले शशिनि प्रशस्ते तारावले चंद्रविवृद्धिपक्षे। अयुग्मवर्षे शुभदं शिशूनां कर्णस्य वेधं मुनयो वदंति॥' इति। अत्र कर्णस्येत्येकवचनं ग्रहैकत्वाधिकरणन्यायेन विवक्षितं, तेन द्वयोरपि कर्णयोर्वेधः। विष्ण्विति। श्रवणधनिष्ठापुनर्वसुचित्रानुराधामृगरेवत्यश्विनीपुष्यहस्तनक्षत्रैर्दशभिरुपलक्षिते काले कर्णवेधः प्रशस्तः। उक्तं हि श्रीपतिना—'पौष्णवैष्णवकराश्विनचित्रापुष्यवासवपुनर्वसुमैत्रैः। सैंदवैः श्रवणवेधविधानं निर्दिशंति मुनयो हि शिशूनाम्॥' नारदेनापि—'चित्रादित्याश्विविष्ण्वंत्यरविमित्रवसूडुषु। सचृगेज्येषु बालानां कर्णवेधक्रिया हिता॥' इति। गर्गेणोत्तरात्रयमप्युक्तम्-'पुष्ये धनिष्ठास्वदितौ हरींदुस्वाष्ट्रे करेऽन्त्ये तिसृषूत्तरासु। वृषे समैत्रेऽप्यथ कर्णवेधो नेष्टाश्च सर्वेऽष्टमराशिसंस्थाः॥' इति। अत्रैच्छिको विकल्पः। अत्र जन्मनक्षत्रनिषेधः सर्ववादिसिद्धः। तदुक्तं दीपिकायाम्—'जन्मनक्षत्रगश्चंद्रः प्रशस्तः सर्वकर्मसु। क्षौरभेषजवादाध्वकर्तनेषु विवर्जयेत्॥' 'कृती छेदने' इति धात्वर्थानुसारात्कर्तनशब्देन कर्णवेधो विवक्षितः। तथा च स्मर्यते-'जन्मनि मासि विवाहः शुभदो जन्मर्क्षजन्मराश्योश्च। अशुभं वदंति गर्गाः श्रुतिवेधक्षौरयात्रासु॥' इति॥ २४॥

अथ कर्णवेधे लग्नशुद्धिं प्रदर्शयन्नाह—

संशुद्धे मृतिभवने त्रिकोणकेंद्र-
त्र्यायस्थैः शुभखचरैः कवीज्यलग्ने।
पापाख्यैररिसहजायगेहसंस्थै-
र्लग्नस्थे त्रिदशगुरौ शुभावहः स्यात्॥ २५॥

संशुद्ध इति॥ मृतिभवनेऽष्टमस्थाने संशुद्धे सर्वग्रहवर्जिते सति। यदाह जगन्मोहने वसिष्ठः-'न कश्चिदिष्टोऽष्टमराशिसंस्थस्तिथिद्वयं चावमसंज्ञकं च' इति। अत्र विहितलग्नानि प्रयोगपारिजाते नारदेनोक्तानि—'वृषभे मिथुने मीने कुलीरे कन्यकासु च। तुला चापे तु कुर्वीत कर्णवेधं शुभप्रदे॥ मेषश्च मकरश्चैव मध्यमौ गुरुणोदितौ। सिंहवृश्चिककुंभाश्च अधमस्त्वाद्विवर्जिताः॥' इति। अत एवोक्तं वराहसंहितायाम्—'लाभे तृतीये च शुभैः समेते क्रूरैर्विहीने शुभराशिलग्ने। वेध्यौ तु कर्णौ त्रिदशेज्यलग्ने' इति। शुभाश्चंद्रबुधगुरुशुक्राः तेषां राशयः कर्कमिथुनकन्यावृषतुलाधनुर्मीनास्तेषामन्यतमे लग्ने क्रूरैर्विहीने सतीत्यर्थः। ग्रंथकृद्दीपिकाकारमतमाश्रित्याह—कवीति। कवीज्ययोर्लग्ने वृषतुलाधनुर्मीनानामन्यतमे लग्ने सति त्रिकोण-९।५ केंद्र १।४।७।१० त्र्याय ३।११ स्थितैः शुभग्रहैस्तथा पापाख्यैर्ग्रहैररिसहजायगेहसंस्थैः षष्ठतृतीयैकादशस्थानस्थितैरुपलक्षिते तथा लग्नसंस्थे त्रिदशगुरौ सति कर्णवेधः शुभावहः शुभकारकः स्यात्। उक्तं च दीपिकायाम्—

'सौम्यैर्व्यायत्रिकोणकंटकगतैः पापैस्त्रिलाभारिगैरोजाब्दे श्रुतिवेध इज्यसित-योर्लग्नेऽनुकूले शुभे' इति । गुरुः—'कर्णवेधादिकार्येषु नेष्टाः सर्वेऽष्टमस्थिताः । कर्णवेधो विनिर्देश्यो लग्नसंस्थे बृहस्पतौ ॥ तदभावेऽन्यकेंद्रस्थे तदभावे त्रिकोणगे ॥' इति । अत्र कर्णवेधप्रकारो रत्नमालायाम्—'शिशोरजातदंतस्य मातुरुत्संगसर्पिणः । सुलौह्या वेधयेत्कर्णौ सूच्या द्विगुणसूत्रया ॥' कर्णरंध्रे विशेषमाह देवलः—'कर्णरंध्रे रवेश्छाया न विशेदग्रजन्मनः । तं दृष्ट्वा विलयं यांति पुण्यौघाश्च पुरातनाः ॥' शालंकायनः—'अविद्धकर्णैर्यद्भुक्तं लंबकर्णै-स्तथैव च । दग्धकर्णैश्च यद्भुक्तं तद्वै रक्षांसि गच्छति ॥' इति । ब्राह्मणादि-वर्णविशेषे तत्सूच्यभिधानं तत्संबंधी विशेषश्च स्मृतिभ्योऽनुसंधेयः । अथ ग्रंथकारानुक्तोऽप्यवसरप्राप्तोऽब्दपूर्तिमुहूर्तः प्रोच्यतेऽस्माभिः । तत्र सौराब्दांते यद्दिने जन्मनक्षत्रं तद्दिनेऽब्दपूर्तिः कार्या । उक्तं च विधिरत्ने—'अब्देन सौरेण शिशोः समांते बालं सुसंस्नाप्य च जन्मधिष्ण्ये । कृत्वायुषो वृद्धिकरं च कर्म तं धारयेद्वस्त्रसुवर्णसूत्रम् ॥' नृसिंहोऽपि—'सौरेणाब्दांतजन्मर्क्षे शिशुं संस्नाप्य शास्त्रतः । आबध्य हेमसूत्रं च राश्यादावनुकूलके ॥ नवक्षौमांबरा-दीनि यथार्हं धारयेत्तदा ॥' इति । अत्र खंडनक्षत्रादौ निर्णयमाह वृद्धगार्ग्यः—'उदयव्यापि जन्मर्क्षं तस्माद्ग्राह्यं तु जन्मतः । संगवव्यापिखंडर्क्षे तत्र जन्म-करं शुभम् ॥' इति । न केवलं प्रथमवर्षे एव अब्दपूर्तिः किंतु प्रत्यब्दांतेऽपि कार्या । यदाह गर्गः—'यस्मिन्दिने सवितरि तन्नक्षत्रदिनं भवेत् । प्रत्य-ब्दांते च नक्षत्रे विधिं वक्ष्ये नृणां परम् ॥' इति । दाक्षिणात्यशिष्टाचारस्तु जन्ममासीयजन्मतिथावब्दपूर्तिर्भवतीति दृश्यते ॥ इत्यब्दपूर्तिः ॥ २५ ॥

अथ 'चूडा वर्षात्' इत्यादिना चौलमुहूर्तं विवक्षुस्तन्निषेधकं प्रसंगतो-ऽन्यकर्मनिषेधकं च कालं स्रग्धरयाह—

गीर्वाणांबुप्रतिष्ठापरिणयदहनाधानचौलोपवीत-
क्षोणीपालाभिषेकोदवसितविशनं नैव याम्यायने स्यात् ।
नो वा बाल्यास्तवार्द्धे सुरगुरुसितयोर्नैव केतूदये स्या-
त्पक्षं वार्धं च केचिज्जहति तमपरे यावदीक्षां तदुग्रे ॥ २६ ॥

गीर्वाणेति ॥ गीर्वाणा देवाः, अंबु जलं लक्षणया जलाशयः, तयोः प्रतिष्ठा गीर्वाणप्रतिष्ठा जलाशयप्रतिष्ठा चेत्यर्थः । परिणयो विवाहः, दहनाधान-मग्न्याधानं, चौलं प्रसिद्धं, उपवीतं व्रतबंधः, क्षोणीपालाभिषेकः राजाभिषेकः, उदवसितविशनं गृहप्रवेशः 'गृहं गेहोदवसितम्' इत्यभिधानात् । अत्र समा-हारद्वंद्वः । एतानि कर्माणि उपलक्षणत्वादन्यान्यप्यनियतकालानि शुभकर्माणि याम्यायने दक्षिणायने नैव स्युः । स्यादित्येकवचनं मूले समाहारद्वंद्वैकत्वा-भिप्रायम् । यदाह महेश्वरः—'चूडाकर्मनृपाभिषेकनिलयाग्न्याधानपाणिग्र-हान्देवस्थापनमौंजिबंधनविधीन्कुर्यान्न याम्यायने' इति । किंतूत्तरायणे कुर्यात् ।

तदुक्तं रत्नमालायाम्—'गृहप्रवेशत्रिदशप्रतिष्ठाविवाहचौलव्रतबंधपूर्वम् । सौम्यायने कर्म शुभं विधेयं यद्गर्हितं तत्खलु दक्षिणे स्यात् ॥' विशनमिति ल्युट्प्रत्ययस्य कित्वाद्यभावात् 'पुगंतलघूपधस्य च' इति गुणः प्राप्तः, 'संज्ञापूर्वको विधिरनित्यः' इति अनित्यत्वान्न भवतीति ज्ञापकं चात्र 'ओर्गुणः' इति सूत्रम् । यथा 'ओरोत्' इति वक्तव्ये गुणग्रहणं संज्ञापूर्वको विधिरनित्यो यथा स्यात्तेन स्वायंभुवमिति सिद्धम् । तथा च महेश्वरेणाप्युक्तम्—'भूपानां मृदुभैर्ध्रुवैः प्रविशनं यात्रानिवृत्तौ शुभम्' इति । अथवा व्यक्तमेवं पठितव्यम्—'गीर्वाणांबुप्रतिष्ठापरिणयदहनाधानगेहप्रवेशाश्चौलं राजाभिषेको व्रतमपि च शुभं नैव याम्यायने स्यात्' इति । अथ सुरगुरुसितयोर्बृहस्पतिशुक्रयोर्बाल्यास्तवार्द्धे बालत्वेऽस्ते वार्द्धे च, एतानि कर्माणि नो वा कुर्यात् । इदं प्रागुक्तमपि पुनर्लिखितं तत्स्मरणाविच्छेदार्थम् । मूलवाक्यान्यपि प्रागेवोक्तान्यस्माभिः । वृद्धशब्दस्य गुणवाचित्वात् 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इति ष्यञ् । वार्धकमिति नु 'द्वंद्वमनोज्ञादिभ्यश्च' इति मनोज्ञादेराकृतिगणाद्वुञ् । अथ केतूदये धूमकेतूदये शुभकर्माणि नैव भवंति । तदुक्तं चंडेश्वरेण—'केतोरस्तदिनादूर्ध्वं सप्ताहं मंगलं त्यजेत् । यावत्केतूदयस्तावदशुद्धः समयो हि सः ॥' इति । अत्र केचित्केतूदये जाते सति पक्षं पंचदशदिनानि जहति वर्जयंति । उक्तं च वराहेण—'दृष्टः षोडशवासरान्न शुभदः कैश्चित्प्रदिष्टः शिखी' इति । शिखी=केतुः । दृष्ट इति वचनाद्यावद्व दृष्टस्तावद्दोष इत्यर्थः । अत्र ग्रंथकृता एकदिनत्यागोऽक्षरबाहुल्यभीतेः कृतः । केचित्तु वा पक्षांतरे । अर्धं पक्षार्धं सप्तदिनानि केतूदयानंतरं जहति । तदप्युक्तं वराहेण—'केतूदये सप्तदिनानि चोर्ध्वं विवाहयात्रादिषु गर्हितानि । दिनानि शेषाणि वदंति नूनं शुभानि रैभ्यप्रमुखा मुनींद्राः ॥' इति । ननु कैश्चित्केतूदयदर्शनं यावन्मंगलकृत्यानि निषिद्धानि, अन्यैस्तु केतूदयानंतरं षोडशाद्यै वा दिनानि निषिद्धानि, तत्कथमनयोर्वाक्ययोरेकवाक्यतेत्यत आह—तामिति । अपरे आचार्याः तं केतुं यावदीक्षां यावद्दर्शनं यज्जहति तदुग्रे केतौ त्रिशिखादौ तामसकीलकादावतिदुष्टफले द्रष्टव्यम् । तेन भिन्नविषयत्वाद्दोषाभावः । तेषां केतूनां स्वरूपं फलानि च गर्गोक्तानि—'त्रिशिखाश्च त्रिताराश्च रक्ता लोहितरश्मयः । प्रायशस्तूत्तरामाशां सेवंते नित्यमेव ते ॥ लोहितांगात्मजा ज्ञेया ग्रहाः षष्टिः समासतः । नामतः कौंकुमा ज्ञेया राज्ञां संग्रामकारकाः ॥ कृष्णाभाः कृष्णपर्यंताः संकुलाः कृष्णरश्मयः । राहुपुत्रास्त्रयस्त्रिंशत्कीलकाश्चातिदारुणाः ॥' इत्यादि । वयं तु ब्रूमः—यत् यावद्दर्शनं केतूदयो निषिद्ध इत्युक्तं तदुग्रे ब्रह्मपुत्राख्ये केतौ महादुष्टफले ज्ञेयम् । उक्तं च लोमशसंहितायाम्—'चातुर्मास्येऽथ पौषे मधुभवति रवौ ब्रह्मपुत्रोद्गमे वा दंपत्योरेव नाशः प्रचुरमुनिगणैः कीर्तितो वै विवाहे' इति । मधुभं=मीनः । ब्रह्मपुत्रः=केतुः । विवाहस्योपलक्षणत्वादन्यान्यपि शुभकर्माणि निषिद्धानि । 'केतोरस्तदिनादूर्ध्वं सप्तरात्राणि वर्जयेत । ब्रह्मपुत्रोद्गमे वर्ज्यं व्रतं यात्रा च मंगलम् ॥' इति

ज्योतिर्निबंधकृदुक्तेश्च । ब्रह्मपुत्रलक्षणं सकलं वसिष्ठेनोक्तम्—'त्रिशिख-स्त्रिवर्णयुक्तो ब्रह्मसुतो ब्रह्मदंडनिभः । अनियतदिक्प्रभवोऽसौ कांतकरो ब्रह्म-दंडाख्यः ॥' को ब्रह्मा तस्याप्यंतं करोति तत्राप्येषां का कथेत्यर्थः । अत एवोक्तं वराहेण—'ब्रह्मसुत एक एव त्रिशिखो वर्णैस्त्रिभिर्युगांतकरः । अनियतदिक्-संप्रभवो विज्ञेयो ब्रह्मदंडाख्यः ॥' इति ॥ २६ ॥

अथ गुरुशुक्रयोर्बाल्ये वार्धक्ये च शुभं कर्म त्याज्यमित्युक्तं, तत्रावसरप्राप्तां तदीयदिनसंख्यामनुष्टुभाह—

पुरः पश्चाद्भृगोर्बाल्यं त्रिदशाहं च वार्धकम् ।
पक्षं पंचदिनं ते द्वे गुरोः पक्षमुदाहृते ॥ २७ ॥

पुरः पश्चादिति ॥ भृगोः शुक्रस्य पुरः पूर्वस्यां दिश्युदितस्य पश्चाद्वा तत्र यथासंख्यं बाल्यं स्यात् । पूर्वस्यां त्रिदिनं पश्चाद्दशाहं बालत्वं शुक्रस्येत्यर्थः । च पुनः भृगोर्वार्धकं वृद्धत्वं पूर्वस्यां पक्षं पंचदशदिनानि पश्चात्पंचदिनानि । गुरोस्ते द्वे बाल्यवार्धके पक्षमुदाहृते कथिते । यदाह नारदः—'पश्चात्प्रागुदितः शुक्रो दशत्रिदिवसं शिशुः । वृद्धः पंचदिनं पक्षं गुरुः पक्षं च सर्वतः ॥' इति॥२७॥

अथ परमते बाल्यं वार्धक्यं चानुष्टुभाह—

ते दशाहं द्वयोः प्रोक्ते केश्चित्सप्तदिनं परैः ।
त्र्यहं त्वात्ययिकेऽप्यन्यैरर्धाहं च त्र्यहं विधोः ॥ २८ ॥

ते दशाहमिति ॥ दिङ्नियमं त्यक्त्वा द्वयोर्गुरुशुक्रयोस्ते बाल्यवार्धक्ये दशाहं दशदिनं प्रोक्ते कैश्चित् । परैस्तु सप्तदिनं बाल्यवार्धक्ये गुरुशुक्रयोः प्रोक्ते । तदाह महेश्वरः—'बालः शुक्रो दिवसदशकं पंचकं चैव वृद्धः पश्चात्प्राक्त्रितयमुदितः पक्षमीड्यः क्रमेण । जीवो वृद्धः शिशुरपि सदा पक्षमन्यैः शिशू तौ वृद्धौ प्रोक्तौ दिवसदशकं चापरैः सप्तरात्रम् ॥' इति । केशवार्कोऽपि—'क्षिपति सप्तदिनान्युदयास्तयोः सुरगुरुर्भृगुजश्च गतेऽप्ययोः' इति । अन्यैरपि पुनस्त्र्यहं त्रिदिवसं बाल्यवार्धके प्रोक्ते । उक्तं च गर्गेण—'ह्णवे तु देशे त्रिदिनं वदंति' इति । अथैषां वाक्यानां गतिमाह—आत्ययिक इति । अत्ययः कार्या-वश्यंभावः, स प्रयोजनं यस्येति 'प्रयोजनम्' इति ठञ् । लग्नांतराभावे समवयु-स्कभावे वा अनीतकालस्य बटोः अवश्यदेयायाः कन्याया गुणवद्वरोपलब्धौ वा यथासंभवं दशसप्तत्रिदिनानां त्याग उचितो नान्यथेत्यर्थः । वयं तु देशभेदेनैषां वाक्यानां व्यवस्थां ब्रूमः । तदाह गर्गः—'शुक्रो गुरुः प्राक्परतश्च बालो विंध्ये दशार्वनिषु सप्तरात्रम् । वंगेषु हूणेषु च षट् च पंच ह्णवे तु देशे त्रिदिनं वदंति ॥' इति । चंद्रस्य विशेषमाह—अर्धाहमिति । विधोस्तु बाल्यवार्धके क्रमेणार्धाहं त्र्यहं च भवतः,बाल्यमर्धं दिनं वार्धके त्रिदिनं चंद्रस्येत्यर्थः । उक्तं च वसिष्ठेन—

'वृद्धस्त्वमिंदोस्त्रिदिनं दिनार्धं बालत्वमत्रत्वमहर्द्वयं च । अस्ते त्रियो मृत्युमुपैति कन्या बालेऽप्यसक्ता विधवा च वृद्धे ॥' ननु त्रिविक्रमेण 'चंद्रस्यैकदिनं बाल्यं प्रोक्तम्' इति तस्य वाक्यस्य का गतिः ? न काचित्, किंतु निर्मूलत्वादुपेक्ष्यमेव तद्वाक्यम् । साक्षाद्वसिष्ठेनापीदमदूषि—'येनोक्तमेकं दिवसं शिशुत्वमित्येतदिंदोरुदयुक्तमत्र । महत्त्वशीघ्रत्वसुधामयत्वाद्दिनार्धमष्टौ दिननिश्चितत्वात् ॥' इति । कश्यपेन तु बालोऽपींदुः शुभ एवोक्तः—'वृद्धचंद्रः स्त्रियं हंति पतिं हंत्यस्तमागतः । यतस्त्वमृतरश्मित्वाद्बालोऽपि शुभदः शशी ॥' इति । अत एव संपूर्णायामपि शुक्लप्रतिपदि द्वितीयादिने द्वितीयायां प्रातर्यज्ञोपवीतादीनि शुभकृत्यानि शिष्टाः समाचरंति ॥ २८ ॥

अथैवं निषिद्धकालमुक्त्वेदानीं चौलमुहूर्तं स्रग्धरारथोद्धतावृत्ताभ्यामाह—

चूडा वर्षात्तृतीयात्प्रभवति विषमेऽष्टार्करिक्ताद्यषष्ठी-
पर्वोनाहे विचैत्रोदगयनसमये ज्ञेंदुशुक्रेज्यकानाम् ।
वारे लग्नांशयोश्चास्वभनिधनतनौ नैधने शुद्धियुक्ते
शाक्रोपेतैर्विमैत्रैर्मृदुचरलघुभैरायषट्त्रिस्थपापैः ॥ २९ ॥
क्षीणचंद्रकुजसौरिभास्करैर्मृत्युशस्त्रमृतिपंगुताज्वराः ।
स्युः क्रमेण बुधजीवभार्गवैः केंद्रगैश्च शुभमिष्टतारया ॥ ३० ॥

चूडा वर्षादिति ॥ तृतीयाद्वर्षादिति ल्यब्लोपे पंचमी । तेन गर्भाधानकालाज्जन्मकालाद्वा तृतीये विषमे वर्षे पंचमे वा सप्तमे वा चूडाकरणं प्रभवति कृतं सच्छुभोदर्कं भवतीत्यर्थः । यदाह वसिष्ठः—'तृतीये पंचमेऽब्दे वा स्वकुलाचारतो हितम् । चौलं शिशूनां यत्नेन स्वगृह्योक्तविधानतः । आधानतो जन्मतो वा सप्तमाब्देऽपि कारयेत् ॥' स्वकुलाचारत इत्यनेन येषां कुले पार्थक्येन चूडाकरणं तत्र मुहूर्तविचारः । येषां तूपनीत्या सहेष्यते इति पक्षस्तेषामुपनयनमुहूर्तेन सिद्धत्वात् पृथक्मुहूर्तविचारानुन्मेषः । अत एवोक्तं याज्ञवल्क्येन—'चूडा कार्या यथाकुलम्' इति । मनुना प्रथमवर्षेऽपि उक्तम्—'चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः । प्रथमेऽब्दे तृतीये वा कर्तव्यं श्रुतिचोदनात् ॥' एवं बहुकालोक्तौ यथागृह्यं व्यवस्था द्रष्टव्या । स्वगृह्ये विशेषकालानुक्तौ तु समबलत्वात्सर्वेषां विकल्पः । विशेषमाह गुरुः—'तृतीयेऽब्दे शिशोर्गर्भाज्जन्मतो वा विशेषतः । पंचमे सप्तमे वापि स्त्रियाः पुंसोऽथवा समम् ॥' इति । अष्टेति । अष्टाष्टमी, अर्काः द्वादशी, रिक्ताः प्रसिद्धाः, आद्या प्रतिपत्, षष्ठी प्रसिद्धा, पर्वाणि अष्टमीचतुर्दशीपूर्णिमामावास्यासंक्रांतयः; एतैरूने रहितेऽहनि । अत्र तत्पुरुषसमासे 'राजाहःसखिभ्यष्टच्' इति टच् । 'नस्तद्धिते' इति टिलोपः । अष्टम्यादितिथीस्त्यक्त्वा शेषासु तिथिषु चूडा स्यादित्यर्थः । यदाह गुरुः—'द्वादशीं चाष्टमीं रिक्तां षष्ठीं प्रतिपदं तथा । हित्वा शेषासु तिथिषु

क्षौरकर्म शुभावहम् ॥' कश्यपः—'पंचपर्वतिथीन् रिक्तास्त्यक्त्वान्यदिवसे शुभम्' इति । अत एवाह वसिष्ठः—'पंचमी सप्तमी चैव दशम्येकादशी तथा। त्रयोदशी तृतीया च क्षुरकर्मशुभावहा ॥' इति । चकाराद्द्वितीयापि । ननु सप्तमीत्रयोदश्योर्गलग्रहत्वात्कथं तयोर्ग्रहणम्? यदाह गुरुः—'विद्यारंभो व्रतोद्देशः क्षौरं चैव विशेषतः । गलग्रहे न कर्तव्यं यदीच्छेत्पुत्रजीवितम् ॥' इति चेत् । उच्यते,–वैदिकं मुंडनं चौलमित्युच्यते तद्विषयको विधिः । अवैदिकमुंडनं सुखार्थं यत् क्षौरमुच्यते । क्षुरस्य कर्म क्षौरमिति सामान्यव्युत्पत्तेरतस्तद्विषयको निषेध इति वयं ब्रूमः । अन्ये देशाचारतो व्यवस्थामाहुस्तदयुक्तं, विरोधाभावात् । विचैत्रेति । चैत्ररहिते उत्तरायणे चूडा स्यात् । शुभाशुभप्रकरणाभिहितो जन्ममासनिषेधोऽत्रापि ध्येयः । तदाह राजमार्तंडः—'उत्तरवर्त्मनि सवितरि चूडाकरणं जगुर्बुधा यवनाः । चैत्रं हित्वा पापग्रहदिवसं जन्ममासं च ॥' इति । तथा ज्ञेंदुशुक्रेज्यकानां वारे लग्नांशयोश्चेति सौम्यग्रहवारे सौम्यग्रहाणां लग्ने कर्कमिथुनवृषकन्यातुलाधनुर्मीनानामन्यतमे लग्ने तेषामेव च नवांशे चूडा स्यात् । 'चंद्रज्ञगुरुशुक्राणां वारलग्नांशकेषु च' इति कश्यपोक्तेः । विशेषमाह पराशरः—'सितेज्यसौम्यवारेषु क्षौरं पक्षद्वये हितम् । इंदुवारः सिते पक्षे वाराः शेषा न शोभनाः ॥' प्रयोगपारिजाते पापवाराणामप्यपवादः पठितः–'पापग्रहाणां वारेऽपि विप्राणां तु शुभो रविः । क्षत्रियाणां तु भूसूनुर्विट्शूद्राणां शनिः शुभः ॥' इति । तथा अस्वभनिधनतनौ भं लग्नं राशिश्च, स्वस्य भे स्वभे, स्वभाभ्यां निधनमष्टमलग्नं तत्र विद्यते यस्मिंस्तनौ स्वजन्मलग्नजन्मराशिभ्यामष्टमलग्नरहिते लग्ने चूडा स्यादित्यर्थः । तथा नैधनेऽष्टमस्थाने शुद्धिसंयुक्ते शुद्धिः शुक्रव्यतिरिक्तसर्वग्रहराहित्यं तद्युक्ते सति चूडा स्यात् । उक्तं च कश्यपेन—'नैधने शुद्धिसंयुक्ते लग्नराशौ न नैधने' इति । पराशरः–'अष्टमस्था ग्रहाः सर्वे नेष्टाः शुक्रविवर्जिताः । शुक्रश्च निधने क्षौरे सर्वसंपत्करः शिशोः ॥' इति । शाक्रेति । शाक्रोपेतैर्ज्येष्ठायुक्तैर्विमैत्रैरनुराधारहितैर्मृदुचरलघुभिर्द्वादशनक्षत्रैरुपलक्षिते काले चूडा स्यात् । यदाह वसिष्ठः—'अदितिद्वितये पौष्णद्वितये श्रवणत्रये । हस्तात्त्रितये शाक्रे सैंदवे चौलमीरितम् ॥' कश्यपोऽपि—'दास्रेंद्वदितिपुष्येंद्रभेषु हस्तत्रयेऽपि च । विष्णुत्रये च पौष्णर्क्षे चौलकर्म शुभप्रदम् ॥' इति । अत्र विहितनक्षत्रेषु जन्मनक्षत्रं प्रशस्तमित्याह कश्यपः–'नवान्नप्राशने चौले व्रतबंधेऽभिषेचने । शुभदं जन्मनक्षत्रमशुभं त्वन्यकर्मणि ॥' इति । नारदादिवाक्यान्यन्नप्राशनेऽभिहितानि । अत्र केचिज्जन्मनक्षत्रपदं तारापरं ज्ञेयमित्याहुः । तथा चोक्तं लल्लेन—'हित्वैकं जन्मर्क्षं द्वे तारे जन्मसंज्ञिते शुभदे । उद्वाहे चोपनये यात्रायां भोजने क्षुरे कार्ये ॥' इति । तच्च, अवैदिकक्षुरविषयत्वात्तस्य । 'जन्मर्क्षे कर्मनक्षत्रे' इति गुरुवचनमपि तद्विषयमेव वैदिकक्षुरपरं चैतत्कश्यपादिवाक्यमिति समंजसम् । अथ लग्नबलमाह—आयेति । एकादशषष्ठतृतीयस्थानस्थितैः पाप-

ग्रहैश्चोपलक्षिते काले चूडा स्यात् । 'अपच्छांत्यादिगे चंद्रे पापैर्व्यायारिसंस्थितैः । इति कश्यपोक्तेः । क्षीणेति । तथा क्षीणचंद्रः, कुजो मंगलः, सौरिः शनिः, भास्करः सूर्यः; एतैः केंद्रस्थैः क्रमेण यथासंख्यं मृत्युः मरणं, शस्त्रमृतिः शस्त्रमृतिः, पंगुता खंजता, ज्वरः प्रसिद्धः, एतानि फलानि स्युर्भवेयुः । बुधजीवभार्गवैस्तु केंद्रस्थैः शुभं कल्याणकारि फलं चूडाकर्तुः स्यात् । तदुक्तं रत्नमालायाम्—'क्षौरर्क्षेषु स्वकुलविधिना चौलमाहुर्मुनींद्राः केंद्रं यातैर्गुरुभृगुबुधैर्लग्न सूर्ये ज्वरः स्यात् । शस्त्राघातो धरणितनये पंगुता चार्कपुत्रे शीतज्योतिष्यपचिततनौ निश्चितं नाशमेति ॥' केंद्रव्यतिरिक्तस्थानफलमपि तत्रैव 'धनव्ययत्रिकोणगैरसद्ग्रहैर्मृतावपि । क्षुरक्रिया न शोभना शुभैस्तु पुष्टिकारिणी' इति । मृतौ तु शुक्र एव शस्तो नान्ये शुभग्रहाः प्रागुक्तपराशरवाक्यस्वरसात् । क्षुरक्रिया=चौलम् । इष्टतारयेति । च पुनरिष्टतारया गोचरप्रकरणोक्तया शुभफलदतारया चूडा स्यात् । उक्तं च राजमार्तंडेन—'रविशुद्धौ गृहकरणं रविगुरुशुद्धौ व्रतोद्वाहौ । क्षौरं ताराशुद्धौ शेषं चंद्राश्रितं कर्म ॥' ज्योतिर्निबंधे—'विवाहे सविता शस्तो व्रतबंधे बृहस्पतिः । क्षौरे ताराविशुद्धिश्च शेषे चंद्रबलं बलम् ॥' इति । चौलप्रयोजनमाह वसिष्ठः—'सर्वेषामेव वर्णानां चूडाकर्मविधिः स्मृतः । केशमूलं पिता ज्ञेयः केशाग्रं जननी तथा ॥ चौलेनैवायुषो वृद्धिरचौलेनायुषः क्षयः । तस्माच्चौलं प्रयत्नेन कारयेद्बुद्धिमान्नरः ॥' इति । व्यवहारनिबंधे चौलारंभे विशेषमाह श्रीपतिः—'केशवमाननेपुरं पाटलिपुत्रं पुर्गामहिच्छत्राम् । दितिमदितिं च स्मरतां क्षौरविधौ भवति कल्याणम् ॥' इति । यत्तु केश्चिदुक्तम्—'चंद्रशुद्धिर्यदा नास्ति तारायाश्च विशेषतः । अक्षौरभेऽपि कर्तव्यं वारेण बुधसोमयोः ॥' इति तत्सामान्यक्षौरविषयम् ॥ २९ ॥ ३० ॥

अथ सगर्भायां स्वमातरि सत्यां शिशोश्चौलार्थं कालमनुष्टुभाह—

पंचमासाधिके मातुर्गर्भे चौलं शिशोर्न सत् ।
पंचवर्षाधिकस्येष्टं गर्भिण्यामपि मातरि ॥ ३१ ॥

पंचेति ॥ चौलाधिकारिणः शिशोर्मातुर्गर्भे पंचमासेभ्योऽधिके सति चौलं न सत् शुभफलदातृ नैव स्यात् । अतः पंचमासेभ्यः पूर्वं चौलं कृतं सच्छुभफलमित्यर्थः । तदुक्तं गृह्यपरिशिष्टे—'चूडाकर्म न कर्तव्यं यस्य मातास्ति गर्भिणी । करोति यदि मंदात्मा तदा गर्भस्य नाशनम् ॥ पित्रोर्मृतिं वदंत्येके चतुरब्दांतरे स्फुटम् ॥' इति । वसिष्ठः—'पुत्रचूडाकृतौ माता गर्भिणी यदि वा भवेत् । विपद्यते गुरुश्चैव दंपती शिशुरब्दतः ॥ गर्भे मातुः कुमारस्य न कुर्याच्चौलकर्म च । पंचमासादधः कुर्यादत ऊर्ध्वं न कारयेत् ॥' इति । अस्याप्यपवादमाह-पंचेति । पंचवर्षाधिकस्योल्लंघितपंचमवर्षस्य शिशोर्मातरि गर्भिण्यामपि सत्यां पंचमासादध ऊर्ध्वं वा विहितकाले चौलमिष्टं कल्याणकारि भवेत् । अतो बालो यावत्पंचवर्षो न भवति तावत्पर्यंतं निषेध इत्यर्थः । तदाह नारदः—'सूनोर्मातरि गर्भिण्यां चूडाकर्म न कारयेत् । पंचमाब्दात्प्रागथोर्ध्वं

गर्भिण्यामपि कारयेत् ॥' यदा तूपनयनेन सह चौलं चिकीर्षितं तदा विशेषमाह ज्योतिर्नारदः—'सहोपनीत्या कुर्याच्चेत्तदा दोषो न विद्यते' इति । अत्र तु पंचवर्षाणां न्यूनाधिकभावो नापेक्षितः, सर्वापवादकत्वादस्य । एवं पार्थक्येन मौञ्ज्यपि सगर्भायां संस्कार्यमातरि सत्यां न भवति । तदुक्तम्—'सूनोर्मातरि गर्भिण्यां मौंजीचूडे न कारयेत् । गते तु पंचमे मासे गर्भादीनां कृतिर्भवेत् ॥' इति ॥ ३१ ॥

अथ चौले ताराबलमावश्यकमित्युक्तं, तत्र दुष्टायां तारायां सत्यामपवादं शालिन्याह—

**तारादौष्ट्येऽब्जे त्रिकोणोच्चगे वा क्षौरं सत्स्यात्सौम्यमित्रस्ववर्गे ।**
**सौम्ये भेऽब्जे शोभने दुष्टतारा शस्ता ज्ञेया क्षौरयात्रादिकृत्ये ३२**

तारादौष्ट्य इति ॥ ताराणां दुष्टत्वं गोचरप्रकरणेऽभिहितं तत्तत एवावधार्यम् । तस्मात्तारादौष्ट्ये सत्यपि क्षौरं चौलं सत् शोभनं स्यात् । कस्मिन्सति ? अब्जे चंद्रे त्रिकोणगे नवपंचमस्थानस्थिते अथवोच्चगे वृषराशिस्थे अथवा सौम्यानां बुधगुरुशुक्राणां वर्गे षड्वर्गे अथवा स्वस्यैव षड्वर्गे सति । उक्तं च ज्योतिस्तंत्रे—'सौम्यसुहृन्निजवर्गे चंद्रे तुंगत्रिकोणगे वापि । क्षौरादिकोपकरणे तारादोषो न दोषाय ॥' इति । आदिशब्देन यात्रा । 'विपत्तारा गुडं दद्यात्' इत्यादयोऽपि तारादौष्ट्यापवादाः प्रागुक्तास्तेऽप्यत्रोह्याः । अथाऽशुभतारायां गुणमाह—सौम्ये इति । सौम्ये भे शुभग्रहराशौ अब्जे चंद्रे शोभने गोचरोक्तेऽष्टस्थानस्थे सति दुष्टताराऽसमीचीनतारापि चेत्स्यात्तदा क्षौरयात्रादिमंगलकृत्येषु शस्तातिप्रशस्ता निखिलदोषापवादिका स्यादित्यर्थः । तदप्युक्तं ज्योतिस्तंत्रे —'ऋक्षं दग्धं तिथीं रिक्ता चंद्रश्चाष्टमगस्तथा । तत्सर्वं नाशयेत्तारा षट् चतुर्नवमी तथा । जन्माख्या चाष्टमी तारा न शुभा नापि निंदिता ॥' इति । इति चौलप्रकरणम् ॥ ३२ ॥

अथ चौलादिकृत्ये कालविशेषनिषेधमनुष्टुभाह—

**ऋतुमत्याः सूतिकायाः सूनोश्चौलादि नाचरेत् ।**
**ज्येष्ठापत्यस्य न ज्येष्ठे केश्चिन्मार्गेऽपि नेष्यते ॥ ३३ ॥**

ऋतुमत्या इति ॥ ऋतुः स्त्रीधर्मः स यस्या अस्तीति ऋतुमती तस्यास्तथा सूतिकाया जातापत्यायाः सूनोः पुत्रस्योपलक्षणत्वात्कन्याया वा चौलोपनयनविवाहाद्युक्तवक्ष्यमाणकृत्यं नाचरेत् न कारयेत् । उक्तं च प्रचेतसा—'यस्य मांगलिकं कृत्यं तस्य माता रजस्वला । वैधव्यं जायते तत्र नूनायां पाणिपीडने ॥' पाणिपीडने वैधव्यमन्यत्र मृत्युरित्यर्थः । सूतिकाया अपि कर्मानर्हकाल उक्तो विष्णुस्मृतौ—'सूतिकां पुत्रवतीं विंशतिरात्रेण कर्माणि कारयेत् मासेन स्त्रीजननीम्' इति । अस्यार्थं केचिदाहुः—सर्ववर्णस्त्रीणां पुंप्रसू-

१ मूले ग्रन्थकृद्भिः शोभनचन्द्रस्य तारादौष्ट्यापवादकत्वं प्रतिपादितं, टीकाकृद्भिस्तु तत्प्रमाणं सर्वाखिलदोषापहारकत्वं प्रामुख्येन तारया एव प्रतिपादितं, तदत्र तारामहत्त्वप्रदर्शकस्यास्य मूलविसंवादिप्रमाणस्य मूलेन युक्तियुक्तत्वमभियुक्तैरेव परिशीलनीयम् ।

तानां बालकजन्मदिनाद्विंशतिदिनं यावदशुचिता ततः शुद्धिः; एवं कन्याप्रसूतां स्त्रीणां कन्याजन्मदिनात्त्रिंशद्दिनं यावदशुचिता ततः शुद्धिरित्यर्थः । एतदन्ये नानुमन्यंते । यतः–'शुध्येद्विप्रो दशाहेन द्वादशाहेन भूमिपः । वैश्यः पंचदशाहेन शूद्रो मासेन शुध्यति ॥' इति दक्षेण वर्णपुरस्कारेण शुचितान्यमुक्तानि । एवं पुंजनयित्र्या ब्राह्मण्याः सूतकनिर्गमदिनाद्दशैवाशुचितादिनान्यवशिष्यंते, कन्याजनयित्र्यास्तु तस्यास्तस्मादेव विंशतिदिनानि । क्षत्रियायास्तु पुंकन्याजनयित्र्याः क्रमादष्टाष्टादशदिनानि तस्मात्कालादवशिष्यंते । वैश्यायास्तु पुंकन्याजनयित्र्याः पंचपंचदशदिनान्यवशिष्यंते । शूद्रायाः पुंजनयित्र्याः दशदिनानि सूतककाले न्यूनानि जायंते, कन्याजनयित्र्यास्तु दिनसाम्यमेवेति सर्ववर्णानामननुगतमनिप्रसक्तमव्यापकं च लक्षणमापततीति । अस्त्वेवमिति चेन्न । यद्येषोऽर्थोऽभिप्रेतः स्यात्तदा महता वाक्येनेममर्थं स्पष्टं निर्दिशेत् । अतोऽनुगतमर्थांतरमाहुरन्ये । यथा–स्वस्ववर्णपुरस्कारेण य आशौचकालोऽभिहितः, स सर्वेषां तत्कुलजानां तुल्य एव तदग्रे सर्वेऽपि शुचयः । पुंजनयित्र्यास्तु सूतिकायास्तदग्रे विंशतिदिनान्यशुचिता; कन्याजनयित्र्याः तदग्रे त्रिंशद्दिनान्यशुचितेत्यर्थः । अत एव सूतिकाया उक्तकालपर्यंतं कर्मानर्हत्वात्तदपत्यस्यापि मंगलकृत्ये निषेधः ॥ ज्येष्ठेति । ज्येष्ठापत्यस्याद्यगर्भस्य पुत्रस्य कन्याया वा व्रतबंधविवाहादिशुभकृत्यं ज्येष्ठमासे न भवति । उक्तं च रत्नमालायाम्–'आद्यगर्भदुहितुः सुतस्य वा ज्येष्ठमासि न च जातु मंगलम्' इति । केचिदिति । मार्गेऽपि मार्गशीर्षमासेऽपि कैश्चिदाचार्यैराद्यगर्भसुतकन्ययोर्मंगलकृत्यं नेष्यते । तदाह वात्स्यः–'मार्गे मासि तथा ज्येष्ठे विवाहं चौलमेव च । ज्येष्ठपुत्रदुहित्रोश्च न कुर्वीत व्रतं तथा ॥' भरद्वाजोऽपि–'मार्गशीर्षे तथा ज्येष्ठे क्षौरं परिणयं व्रतम् । आद्यपुत्रदुहित्रोश्च यत्नतः परिवर्जयेत ॥' अस्मादेव ज्ञापकाद् द्वितीयादिगर्भपुत्रदुहित्रोर्ज्येष्ठे मार्गशीर्षे च न मंगलकृत्यानां निषेधः किंतु विधिरिति प्रतिभाति । अत्र कश्चिद्विशेषो वक्तव्योऽस्ति, स व्रतबंधप्रकरणे वक्ष्यते ॥ ३३ ॥

अथ प्रसंगतः सामान्यक्षौरादिमुहूर्तं तन्निषिद्धकालं च शार्दूलविक्रीडितेनाह–

दंतक्षौरनखक्रियात्र विहिता चौलोदिते वारभे
पातंग्यारवीन्विहाय नवमं घस्रं च संध्यां तथा ।
रिक्तां पर्व निशां निरासनरणग्रामप्रयाणोद्यत-
स्नाताभ्यक्तकृताशनैर्न हि पुनः कार्या हितप्रेप्सुभिः ॥३४॥

दंतेति ॥ चौलोदितेषु चौलप्रोक्तेषु वारेषु नक्षत्रेषु उपलक्षणत्वात्तदुक्ते लग्नेऽपि च दंतक्षौरनखक्रियात्र विहितोक्ता । उक्तं च–'येषु येषु प्रशंसंति क्षुरकर्म महर्षयः । तेषु तेषु प्रशंसंति नखदंतविलेखनम् ॥' इति । येषु येषु वारनक्षत्रलग्ना-

दित्यर्थः। अथ क्षौरे निषिद्धकाल उच्यते। पातंगीति। 'पतंगः पक्षिसूर्ययोः' इत्यभिधानात् पतंगः सूर्यस्तस्यापत्यं पातंगिः शनिः, आररवी प्रसिद्धौ, तेषां वारान् विहाय त्यक्त्वा उपलक्षणत्वादेषां लग्नानि मकरकुंभमेषवृश्चिकसिंहाख्यानि अंशकांश्च विहायेत्यर्थः। उक्तं च वसिष्ठेन—'हस्तत्रये पुष्यपुनर्वसौ च शशांकविष्णुत्रितयाश्विनीषु। पौष्णेन्द्रधिष्ण्ये क्षुरकर्म शस्तं व्यर्कारमन्दांशकवारलग्ने॥' इति। अतः शुभग्रहाणां वारलग्नांशेषु क्षौरं कार्यमिति फलितोऽर्थः। वारफलानि गर्गोक्तानि—'भानुरायुः क्षपयति मासं सप्त शनैश्चरः। भौमो मासाष्टकं हंति ज्ञो यच्छेत्पंचमासकम्॥ सप्तमासान्ददातींदुः सुरेज्यो दशमासकम्। एकादश कविर्दद्यात्कृते तु क्षौरकर्मणि॥' इति तुल्यन्यायत्वाल्लग्नानामंशानां चैतानि फलान्यूह्यानि। न केवलमायुर्हानिः किंतु शस्त्रघातोऽपि पापवारेषु। तदुक्तं वसिष्ठेन—'आदित्यभौमार्किदिनेषु धीमान्न दंतकाष्ठक्षुरकर्म कार्यम्। कुर्वन्नवाप्नोति फलं समग्रं शस्त्रेण सम्यक्स्वशरीरघातम्॥' तथा नवमं घस्रं च विहाय यद्दिने क्षौरं कृतं ततो नवमदिने पुनः क्षौरं न कार्यम्। 'उत्कटे भूषिते चैव यानी नो नवमे दिने' इति नारदोक्तेः। यत्तु नवमे नवम्यामिति व्याकुर्वंति तदयुक्तं, दिनपदानुपादानप्रसंगात्। दिनपदं तिथिपरमिति चेन्न। रिक्ताया वक्ष्यमाणस्वतंत्रनिषेधानुपपत्तेः। ननु पृथगुपादानान्नवम्यां सर्वथा क्षौरं निंद्यमेव, चतुर्थीचतुर्दश्योस्तु तथा नेति चेन्न। 'चतुर्थीं चैव षष्ठीं च अष्टमीं च चतुर्दशीम्। तथा पंचदशीं चैव ब्रह्मचारी भवेत्सदा॥ श्मश्रुकर्म शिरोभ्यंगदंतधावनमैथुनम्। जंतुश्चैतानि यः कुर्याल्लक्ष्मीस्तत्र न तिष्ठति॥' इति क्षौरे व्यासवचनेन चतुर्थीचतुर्दश्योः सर्वथा निषेधाभिधानात्। अत एवामुमर्थं स्फुटमाह पराशरः—'क्षौराहान्नवमे त्वह्नि नेष्टमात्ययिकेष्वपि' इति॥ तथा संध्यां प्रातःसंध्यां सायंसंध्यां च विहाय एवं रिक्तां ४। ९। १४ विहाय पर्वाण्यपि निशां रात्रिमपि विहायेत्यर्थः। अथाधिकारिणो निरूप्यन्ते। हितप्रेप्सुभिः स्वशुभोदर्कमिच्छद्भिरेतादृशैः क्षौरक्रिया हि निश्चयेन न कार्या। कीदृशैः? निरासनैः आसनं कंबलादि तद्रहितैः; रणः संग्रामः, ग्रामो जनपदविशेषः, प्रयाणमर्थयात्रा, एतदर्थमुद्यतैः कृतोद्योगैः, स्नातैरनुष्ठितनित्यनैमित्तिककाम्यस्नानैः। यत्तु क्षौरार्थमेव स्नानं विधीयते, प्रायश्चित्तादौ च तत्र नायं निषेधस्तथैव तस्य विधानात्। अभ्यक्तैः कृततैलाभ्यंगैः कृताशनैः कृतभोजनैः। सुवर्णाद्यलंकारभूषितैरित्यपि ध्येयम्। यदाह वराहः—'न स्नातमात्रगमनोत्कटभूषितानामभ्यक्तभुक्तरणकालनिरासनानाम्। संध्यानिशाशनिकुजार्कदिने च रिक्ते क्षौरं हितं न नवमेऽह्नि न चापि विष्ट्याम्॥' इति। उत्कटानां=कुक्कुटासनवदवस्थितानाम्। संध्यालक्षणमपि वराहेणोक्तम्—'अर्धास्तमितादुदितात्सूर्यादस्पष्टभं नभो यावत्'। वृद्धगर्गः—'शन्याररविवारेषु रात्रौ पाते व्रतेऽहनि। श्राद्धाहे प्रतिपद्रिक्ता भद्रा क्षौरं विवर्जयेत्॥ षष्ठ्यमा पूर्णिमा पातश्चतुर्दश्यष्टमी तथा। आसु सन्निहितं पापं तैले मांसे क्षुरे भगे॥' इति॥ १४॥

अथ केषांचिन्निमित्तविशेषे क्षौरस्य विधिनिषेधौ मंजुभाषिणीछंदसाह—

**क्रतुपाणिपीडमृतिबंधमोक्षणे क्षुरकर्म च द्विजनृपाज्ञया चरेत् ।**
**शववाहतीर्थगमसिंधुमज्जनक्षुरमाचरेन्न खलु गर्भिणीपतिः॥३५॥**

क्रतुपाणीति ॥ अत्र पूर्वार्धे सत्यपि निषिद्धवारादौ एषु कर्मसु क्षुरकर्म क्षौरं सद्यः कार्यमिति वाक्यार्थः । क्व ? क्रतौ यज्ञे । विप्राज्ञया क्षौरं । तथा पाणिपीडो विवाहः, लक्षणया ततः प्राग्भाविनि गोदानकर्मणि । केचित्तु विवाहे श्मश्रुकर्मप्राशस्त्यपरं क्षौरमित्याहुः । अपरे शाखाविशेषेण विवाहे क्षौरमुक्तमित्यूचुः । तथा च श्रुतिः—'मुंडयितारः श्राविष्ठायना वधूमूढाम्' इत्यादि । मृतौ मातापित्रोर्मरणे बंधमोक्षणे कारागृहे बद्धस्य यदा मोचनं भवेत्तदा द्विजाज्ञया ब्राह्मणाज्ञया नृपो राजा तस्याज्ञया च चरेत् क्षौरं कार्यमेव । यदाह नारदः—'नृपविप्राज्ञया यज्ञे मरणे बंधमोक्षणे । उद्वाहेऽखिलवारर्क्षतिथिषु क्षौरमिष्टदम् ॥' इति । धर्मशास्त्रे—'गंगायां भास्करक्षेत्रे मातापित्रोर्मृतेऽहनि । आधाने सोमपाने च षट्सु क्षौरं विधीयते ॥' इति । अन्यच्च तत्रैव— 'राजकार्यनियुक्तानां नटानां रूपजीविनाम् । श्मश्रुलोमनखच्छेदे नास्ति कालविशोधनम् ।' इति । शवेति । अथ गर्भिणी गर्भवती तस्याः पतिर्भर्ता शववाहं मृतकवहनं, तीर्थगमं तीर्थयात्राम्, उपलक्षणत्वाद्विदेशगमनमपि; सिंधुमज्जनं समुद्रस्नानं, क्षुरं क्षुरकर्म; एतानि कर्माणि न आचरेन्न कुर्यात् । यदाह वसिष्ठः—'गृहनिर्माणमुद्धिस्नानं चौलं सुतस्य नु । तीर्थयात्रां नखश्मश्रु न कुर्याद्गर्भिणीपतिः ॥ गालवः—'दहनं वपनं चैव चौलं च गिरिरोहणम् । नावामारोहणं चैव न कुर्याद्गर्भिणीपतिः' इति । धर्मशास्त्रे तु विशेषः—'सिंधुस्नानं द्रुमच्छेदं वपनं प्रेतवाहनम् । विदेशगमनं चैव न कुर्याद्गर्भिणीपतिः ॥ राजा योगी पुरंध्री च मातापित्रोस्तु जीवतोः । मुंडनं सर्वतीर्थेषु न कुर्याद्गर्भिणीपतिः ॥' अयं च क्षौरादिनिषेधो गुर्विणीपतेः सप्तममासादूर्ध्वं न प्राक् । यदुक्तं नारदीये 'वपनं मैथुनं तीर्थं वर्जयेद्गर्भिणीपतिः । श्राद्धं च सप्तमान्मासादूर्ध्वं नान्यत्र वेदवित् ॥' श्राद्धं=श्राद्धभोजनम् । इदमुत्तरार्धं गर्भाधानप्रकरणे वक्तव्यमपि प्रसंगादत्रैवोक्तं ग्रंथकृतेति ॥ ३५ ॥

अथ क्षौरे राज्ञां विशेषं सर्वथा वर्ज्यनक्षत्राणि च भुजंगप्रयातेनाह—

**नृपाणां हितं क्षौरभे श्मश्रुकर्म**
**दिने पंचमे पंचमेऽस्योदये वा ।**
**षडग्निस्त्रिमैत्रोऽष्टकः पंचपित्र्यो-**
**ऽब्दतोऽब्ध्यर्यमाक्षौरकृन्मृत्युमेति ॥ ३६ ॥**

नृपाणां हितमिति ॥ क्षौरभे विहिते क्षौरनक्षत्रे सति पंचमे पंचमे एव दिने श्मश्रुकर्म मुखशोभाकारि क्षुरकर्म नृपाणां राज्ञां हितं प्रशस्तम् । यदाह वसिष्ठः—'महीभृतां पंचमपंचमेऽह्नि क्षौरं च कार्यं हितमुक्तमेषु' । ननु 'पंचमे

पंचमे' इति श्रीपत्युक्त्या नियमप्रतीतेर्विहितनक्षत्राभावे च सति श्मश्रुकर्माकरणमेव स्यादित्यत आह—अस्योदये वेति । वा अथवा अस्य क्षौरभस्योदये श्मश्रुकर्म कार्यमिति । उक्तं च वसिष्ठेन—'न लभ्यते चेद्यदि तदुक्तधिष्ण्यं तन्नोदये वा निखिलं विधेयम्' इति । उदयशब्देन मुहूर्त इति ऋजवो व्याकुर्वते । तदाह गर्गः—'क्षौरकर्म महीशानां पंचमे पंचमेऽहनि । कर्तव्यं क्षौरनक्षत्रेऽप्यथ वा तन्मुहूर्तके ॥' तेषां क्षौरनक्षत्राणां ये स्वामिनस्तेषां मुहूर्ते इत्यर्थः । तांश्च मुहूर्तान् विवाहप्रकरणे वक्ष्यति । अत्र क्षौरपदं श्मश्रुकर्मपरम् । 'राजा योगी पुरंध्री च मातापित्रोस्तु जीवतोः । मुंडनं सर्वतीर्थेषु न कुर्याद्गर्भिणीपतिः ॥' इति राज्ञो मुंडननिषेधात् । अत एवोक्तं श्रीपतिना—'श्मश्रुकर्म पंचमे पंचमेऽह्नि भूभृतां क्षौरभेऽस्य वोदये निंद्यतारका न चेत्' इति । निंद्यतारकाः=जन्मत्रिपंचसप्ततारा: । अन्ये त्वेवं व्याचक्षते—अस्योदये वेति । अस्य क्षौरभस्योदये लग्ने । यथा—मेषलग्नं त्रिंशद्भागात्मकं तत्राद्यास्त्रयोदश भागाः सविंशतिलिप्ता १३–२० यावता कालेन मेषलग्ने उदयं यांति तावदश्विनीनक्षत्रमुदयं यातीत्यर्थः । तदनंतरं तावंत एवांशा यावता कालेनोदयं यांति तावद्भरण्युदय इत्यनेन न्यायेन सर्वेषां नक्षत्राणामुदया ज्ञेयाः । इयं च व्याख्या वराहवचनव्याख्यावसरे भट्टोत्पलेनाभ्यधायि । पितृचरणास्त्वेवं व्याकुर्वते—यस्मिन्काले अश्विन्या उदयक्षितिजसंबंधः संपद्यते तं समयमारभ्य यावद्भरण्या उदयक्षितिजसंबंधस्तदंतराले यावान्कालः सोऽश्विन्या उदय उच्यते । एवं सत्युदयकालद्वयांतरालाद्गणितमार्गेण यावानिष्टकाल आगच्छेत्स एव तन्नक्षत्रोदय इति निष्कृष्टोऽर्थः । नक्षत्रस्योपलक्षणत्वाच्छुभवारासंभवेऽपि तद्धोरायां कार्यम् । उक्तं च नारदेन—'यस्य खेटस्य यत्कर्म वारे प्रोक्तं विधीयते । ग्रहस्य क्षणवारेऽपि तस्य तत्कर्म सर्वदा ॥' इति । क्षणवारः=कालहोरा । एवं सति निषिद्धनक्षत्रवारेष्वपि श्मश्रुकर्म कार्यमिति युक्तमुत्पश्यामः । षड्भिरिति । षड्भिः कृत्तिका, क्षौराकृत्या षड्वारं कृत्तिका यस्य, एवं त्रीणि मैत्राण्यनुराधा यस्य, अष्टौ का रोहिण्यो यस्य, पंच पिव्याणि मघा यस्य, अर्यम्णश्चत्वारोऽर्यमा उत्तराफल्गुन्यो यस्य; स एवंभूतः क्षौरकृदब्दतो वर्षानंतरं मृत्युं मरणमेति प्राप्नोति । यदाह वसिष्ठः—'अष्टाब्जजर्क्षैः पितृपंचकैश्च षड् वह्निधिष्ण्यैश्चतुरर्यमर्क्षैः । त्रिमैत्रभैः पद्मजसंनिभोऽपि क्षौरी नरोऽब्दान्निधनं गतः सः ॥' इति । पद्मजो ब्रह्मा तत्संनिभस्तादृशस्तदुपादानं कैमुतिकन्यायसूचनार्थम् । ननु रत्नमालापद्ये—'षट्कृत्तिकाः पंचमघास्त्रिमैत्रो ब्राह्माष्टको यश्चतुरुत्तरश्च । क्षौरी स वर्षं चतुराननोऽपि न प्राणितीति प्रकटः प्रवादः ॥' इत्यत्र सामान्यतः तिसृणामप्युत्तराणां ग्रहणाद्विरोध इति चेत् । मैवं वोचः । अत्राप्युत्तरापदेन प्रथमोपस्थितिकत्वाद्वसिष्ठवाक्येन सहैकवाक्यतानुरोधाच्चोत्तराफल्गुन्येव गृह्यते नाषाढाभाद्रपदे । यत्र तु वचनांतरविरोधो नास्ति 'पौष्णमारुतमघोत्तराश्विभैः' इत्यादौ तत्र सामान्यतः सर्वासामुत्तराणां ग्रहणं भवति ॥ इति सामान्यक्षौरप्रकरणं समाप्तम् ॥ २१ ॥

---

१ अजभः=सरव्यव्ध्रार्थकारिण: ।

अथ प्राप्तकालत्वादक्षरारंभमुहूर्तं पंचचामरेणाह—

गणेशविष्णुवाग्रमाः प्रपूज्य पंचमाब्दके
तिथौ शिवार्कदिग्द्विषट्शरत्रिके रवावुदक् ॥
लघुश्रवोऽनिलांत्यभादितीशतक्षमित्रभे
चरोनसत्तनौ शिशोर्लिपिग्रहः सतां दिने ॥ ३७ ॥

गणेशेति ॥ गणेशविष्णू प्रसिद्धौ, वाक् सरस्वती, रमा लक्ष्मीः; एता देवताः प्रपूज्य पंचमवर्षे सति शिव एकादशी, अर्को द्वादशी, दिक् दशमी, द्वौ द्वितीया, षट् षष्ठी, शराः पंचमी, त्रयस्तृतीया; एतासामन्यतमतिथौ च सति रवावुदगुत्तरायणस्थिते सति तथा लघुनक्षत्राणि हस्ताश्विपुष्याः, श्रवः श्रवणः, अनिलांत्यभादितयः प्रसिद्धाः, ईश आर्द्रा, तक्षा चित्रा, मित्रमनुराधा, अत्र समाहारद्वंद्वः; एतेषामन्यतमनक्षत्रे सति तथा सतां सोमबुधगुरुशुक्राणां दिने दिवसे तथा चरराशयः मेषकर्कतुलामकरास्तद्रहिते शुभस्वामिके वृषमिथुनकन्याधनुर्मीनानामन्यतमे लग्ने सति शिशोर्लिपिग्रहो नूतनाक्षरलेखनप्रारंभः कार्यः । उक्तं च वसिष्ठेन—'उदग्गते भास्वति पंचमेऽब्दे प्राप्तेऽक्षरस्वीकरणं शिशूनाम् । सरस्वतीं विघ्नविनायकं च गुडौदनाद्यैरभिपूज्य कुर्यात् ॥' मार्कंडेयः—'पूजयित्वा हरिं लक्ष्मीं देवीं चैव सरस्वतीम् । स्वविद्यासूत्रकारांश्च स्वां विद्यां च विशेषतः ॥ प्राप्ते तु पंचमे वर्षे अप्रसुप्ते जनार्दने । षष्ठीं प्रतिपदं चैव वर्जयित्वा तथाष्टमीम् ॥ रिक्तां पंचदशीं चैव सौरिभौमदिनं तथा । एवं सुनिश्चिते काले विद्यारंभं तु कारयेत् ॥' अत्र षष्ठी निषिद्धा ग्रंथे स्वीकृतेति तच्चिंत्यम् । प्रयोगपारिजाते श्रीधरः—'हस्तादित्यसमीरमित्रपुरजित्पौष्णाश्विचित्राच्युतेष्वाराार्कयशदिनोदयादिरहिते लग्ने स्थिरे चोभये । पक्षे पूर्णनिशाकरे प्रतिपदं रिक्तां विहायाष्टमीं षष्ठीमष्टमशुद्धिभाजि भवने प्रोक्ताक्षरस्वीकृतिः ॥' पुरजित्=आर्द्रा, उभये=द्विस्वभावराशौ । अत्र वचने पुष्यानुपादानं ग्रंथे लघुपदेन कृतमिति तच्चिंत्यम् ॥ ३७ ॥

अथैवमक्षरग्रहणे दृढे संजाते सति विद्यारंभमुहूर्तं पंचचामरेणाह—

मृगात्कराच्छ्रुतेस्त्रयेऽश्विमूलपूर्विकात्रये
गुरुद्वयेऽर्कजीवविित्सितेऽह्नि षट्शरत्रिके ।
शिवार्कदिग्द्विके तिथौ ध्रुवांत्यमित्रभे परैः
शुभैरधीतिरुत्तमा त्रिकोणकेंद्रगैः स्मृता ॥ ३८ ॥

मृगादिति ॥ मृगात्त्रये मृगार्द्रापुनर्वसुषु करात्त्रये हस्तचित्रास्वातीषु श्रुतेः श्रवणत्रये श्रवणधनिष्ठाशतभिषासु अश्विन्यां मूले पूर्विकात्रये पूर्वाफल्गुनीपूर्वाषाढापूर्वाभाद्रपदासु गुरुद्वये पुष्याश्लेषयोस्तथा सूर्यगुरुशुक्रवाराणां[1]

---

१ अत्र 'सूर्यगुरुबुधशुक्रवाराणां' इति पाठो युक्तः । मूले प्रमाणोक्तौ च विच्छन्ददर्शनात् ।

दिने च सति अधीतिर्विद्यानामध्ययनमुत्तमा स्मृता। यदाह श्रीपतिः—'मृगादिपंचस्वपि भेषु मूलहस्तादिके च त्रितयेऽश्विनीषु। पूर्वात्रये च श्रवणे च तद्वद्विद्यासमारंभमुशंति सिद्ध्यै॥' इति। तद्वदिति श्रवणत्रये इत्यर्थः। तदेतत्स्पष्टमुक्तं महेश्वरेण—'हस्तादित्रितये तथा निर्ऋतिभे पूर्वांत्यभेष्वश्विनीमित्रर्क्षे च मृगादिपंचसु शुभः प्रारंभ आद्यैः स्मृतः। विद्यानां हरिभाद्वये च दिवसे सूरेर्भृगोर्वा विदोऽनध्यायाख्यतदाद्यवर्जिततिथौ केंद्रस्थितैः सद्ग्रहैः॥' इति। अयमेव च ग्रंथकृदाशयः। अत एवाह विश्वप्रकाशपद्धतौ गुरुः—'मृगादिपंचके हस्तत्रिके विष्णुत्रिकाश्विभे। मैत्रांत्यमूलपूर्वासु विद्यारंभः शुभे दिने॥' इति। वयं तु तद्वदिति पदं विद्यासमारंभपदेन संबद्धमस्तीति व्याकुर्मः। अत एवाह वसिष्ठः—'पूर्वात्रये मूलमृगादिपंचके तथाश्विनीषु त्रितये च हस्तात्। सविष्णुधिष्ण्येष्वथ सर्वविद्याप्रारंभ इष्टः शुभवासरेषु॥' इति। यद्येषोऽभिप्रायो न स्यात्तदा 'पूर्वात्रये च श्रवणत्रये च' इति ब्रूयाच्छ्रीपतिः। अनयोर्वाक्ययोर्यथासंप्रदायं व्यवस्था। शुभवासरेष्वित्यत्र चंद्रव्यतिरिक्ताः शुभवासरा गृह्यंते। यदुक्तं रत्नमालायाम्—'विद्यारंभः सुरगुरुसितज्ञेष्वभीष्टार्थदायी कर्तुश्चायुश्चिरमपि करोत्यंशुमान्मध्यमो वा। नीहारांशौ भवति जडता पंचता भूमिपुत्रे छायासूनावपि च मुनयः कीर्तयंत्येवमाद्याः॥' नीहारः=हिमम्। पंचता=मरणं। यत्तु भोजेनोक्तम्—'विद्यारंभे गुरुः शस्तो मध्यमौ भृगुभास्करौ। मरणं शनिभौमाभ्यामविद्या बुधसोमयोः॥' इति। अत्राविद्याऽनवधारणमन्यथाज्ञानं वा तदेतद्धनुर्विद्याविषयम्। तद्वाक्यमधुनैव मया वक्ष्यते। षडिति। षष्ठीपंचमीतृतीयैकादशीद्वितीयानामन्यतमतिथावधीतिः कार्या। 'अनध्यायाख्यतदाद्यवर्जिततिथौ' इति महेश्वरोक्तेः। अनध्यायांस्तु व्रतबंधे वक्ष्यति। ध्रुवेति। अत्राऽपिशब्दाध्याहारेण ग्रंथो योज्यस्तथा सत्यन्यैराचार्यैर्ध्रुवांत्यमित्रभे रोहिण्युत्तरात्रयरेवत्यनुराधास्वप्यधीतिरुत्तमा। एतदपि धनुर्विद्याविषयम्। तदुक्तं दीपिकायाम्—'अदितिगुरुयमार्कस्वातिचित्राग्निपित्र्यध्रुवहरिवसुमूलाश्वींदुभाग्यांत्यभेषु। विधानिशशिबुधाह्ने विष्णुबोधेऽपि पौषे सुसमयतिथियोगे चापविद्याप्रदानम्॥' इति। ग्रंथेऽनुराधोक्तिस्तु महेश्वरवाक्यालोचनेन। अथ लग्नबलं। शुभैर्ग्रहैस्त्रिकोणकेंद्रगैः सद्भिरधीतिरुत्तमा स्मृता 'केंद्रस्थितैः सद्ग्रहैः' इत्युक्तेः। केंद्रग्रहणं त्रिकोणोपलक्षणम्। विशेषमाह नृसिंहः—'शुभाः पापाश्च रंध्रस्थाः सर्वे नेष्टाः सदा ग्रहाः। भ्रातृषष्ठायकर्मस्थाः पापाः सर्वे शुभावहाः॥ शुभाः केंद्रत्रिकोणस्था धनभ्रातृगताः शुभाः। सर्वे लाभे प्रशस्ताः स्युरक्षरग्रहणे शिशोः॥' इति। अक्षरग्रहणं विद्योपलक्षणम्। इति विद्यारंभः॥ अथ समस्तशुभकर्मभ्यः प्राग्विहितोऽङ्कुरार्पणमुहूर्तो ग्रंथकृदनुक्तोऽप्यस्माभिरुच्यते। तत्र मंगलात् प्राक् तृतीयपंचमसप्तमनवमदिवसे सौम्यवारेषु बीजवापोक्तनक्षत्रेष्वंकुरारोपणं कार्यम्। यदाह नारदः—'कर्तव्यं मंगलस्यादौ मंगलायांकुरार्पणम्। नवमे सप्तमे वापि पंचमे दिवसेऽपि वा। तृतीये बीजनक्षत्रे शुभवारे शुभोदये। सम्यग्गृहानलंकृत्य वितानध्वज-

१ अत्र 'दशमी'युक्तः पाठो युचितः, मूले शिवार्कदिगित्यत्र दिक्शब्दोपादानात्।

तोरणैः ॥ आशिषो वाचनं कार्यं द्विजैः पुण्यांगनादिभिः। सहवादित्रनृत्याद्यै-र्गत्वा प्रागुत्तरां दिशम् ॥' प्रागुत्तराम्=ऐशानीम्। 'तत्र मृत्तिकतं श्लक्ष्णं गृहीत्वा पुनरागतः। मृन्मयेष्वथवा सम्यग्वेणुपात्रेषु पूरयेत्। अनेकबीजसंयुक्तं तोयपुष्पोपशोभितम् ॥' शौनकः—'आधानं गर्भसंस्कारं जातकर्म च नाम च ॥ हित्वान्यत्र विधातव्यं मंगलांकुरवापनम् ॥ प्रदोषकाले कुर्वीत पूर्वाह्णे वा न रात्रिषु। वास्तुकर्मणि काले च स्याद्दिवैवांकुरार्पणम् ॥' गुरुः—'आत्यंतिकेषु कार्येषु कार्यं सद्योऽङ्कुरार्पणम्'। काश्यपेन कालविधाने तु विशेषोऽभिहितः—'हस्तस्वातीविरिञ्चासुरपितृमुरजिन्मित्रपौष्णार्यसार्पपाथोनाथोत्तरासु क्रिययुवनिधनुर्वृश्चिके कामरिके। हित्वा पर्वासुरेज्यामरगुरुशशिविद्वारलग्नांशके स्यात्सर्वे बीजवापः शशिनि शुभयुते चाष्टमे शुद्धियुक्ते ॥' इति। असुरः=मूलम् ॥ पाथोनाथः=शततारका ॥ इति मुहूर्तचिंतामणिटीकायां अंकुरार्पणमुहूर्तः ॥ ३८ ॥

अथ व्रतबंध इति। विंशतिपद्यैः प्रोच्यत इति शेषः। तत्र व्रतबंधप्रयोजनमाह—'अथातः संप्रवक्ष्यामि चोपनायनमुत्तमम्। द्विजत्वकरणं श्रौतस्मार्तकर्मप्रसाधनम्। आद्यं सर्वाश्रमाणां च देहसंस्कारकारणम्। अनेन कर्मणा सर्वे संस्कृताः सर्वदेहिनः ॥ तत्संस्कारं लघ्वशास्त्रात्प्रवक्ष्मि तत् ॥' इति। तस्य कालस्त्रिविधः—नित्यः काम्यः गौणश्च। तत्र क्रमेण त्रिविधमपि कालं शार्दूलविक्रीडितेनाह—

विप्राणां व्रतबंधनं निगदितं गर्भाज्जनेर्वाष्टमे
वर्षे वाप्यथ पंचमे क्षितिभुजां षष्ठे तथैकादशे।
वैश्यानां पुनरष्टमेऽप्यथ पुनः स्याद्द्वादशे वत्सरे
कालेऽथ द्विगुणे गते निगदिते गौणं तदाहुर्बुधाः ॥३९॥

विप्राणामिति ॥ अत्र नित्यं काम्यं च तावदुच्यते। विप्राणां ब्राह्मणानां गर्भाष्टमे गर्भदिनमारभ्याष्टमे सौरवर्षेऽथवा जनेरुत्पत्तिदिनात्सौरवर्षेऽष्टमे सति व्रतबंधनं निगदितम्। इदं नित्यम्। अथ काम्यं विप्राणामेव पंचमे गर्भाज्जनेर्वा वर्षे कार्यम्। एवं क्षितिभुजां क्षत्रियाणां गर्भाज्जनेर्वा षष्ठे वर्षे काम्यमुपनयनम्। तथा गर्भाज्जनेर्वा एकादशे सौरवर्षे नित्यमुपनयनम्। वैश्यानां पुनस्तथैवाष्टमे वर्षे काम्यमथ तथैव द्वादशे वर्षे नित्यमुपनयनम्। यदाह नारदः—'आधानादष्टमे वर्षे जन्मतो वाग्रजन्मनाम्। राज्ञामेकादशे मौञ्जीबंधनं द्वादशे विशाम् ॥' इति। अत्रावेष्ट्यधिकरणन्यायेन राजपदं क्षत्रियपरं। अत्र फलाश्रवणान्नित्यमित्यवसीयते। तथा च काम्यकालमाह मनुः—'ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पंचमे। राज्ञो बलार्थिनः षष्ठे वैश्यस्यार्थार्थिनोऽष्टमे ॥' इति। अत्र फलश्रवणात्काम्यता। पैठीनसिना गर्भपंचमेऽपि व्रतबंधनमुक्तम्—'गर्भपंचमेऽब्दे ब्राह्मणमुपनयेत्' इति तुल्यन्यायत्वात्क्षत्रियविशोरपि गर्भषष्ठे

गर्भाष्टमे वेति द्रष्टव्यम् । यत्तु–'गर्भाष्टमेषु ब्राह्मणमुपनयेद्गर्भैकादशेषु राजन्यं गर्भद्वादशेषु वैश्यम्' इत्यापस्तंबगृह्यसूत्रे गर्भाष्टमेष्वित्युक्तं तत्र गर्भाष्टमेषु इति बहुत्वान्यथाऽनुपपत्त्या गर्भषष्ठगर्भसप्तमगर्भाष्टमेषु सौरवर्षेष्विति वृत्तिकृद्व्याख्यानात्त्रयाणामपि नित्यकालता । एवं गर्भैकादशेष्वित्यादावपि व्याख्यानं ध्येयं । तत्तु तच्छाखाध्यायिविषयम् । केचित्तु पंचमवर्षारंभात्षोडशवर्षपर्यंतं काम्यकाल इत्याहुः । यथाह विश्वप्रकाशपद्धतावापस्तंबः–'पंचमे विद्यापुत्रकामः षष्ठे तु धनकामः सप्तमे ब्रह्मवर्चसकामोऽष्टमे त्वायुष्कामो नवमे तेजस्कामो दशमेऽन्नाद्यकाम एकादश इंद्रियकामो द्वादशे पशुकामस्त्रयोदशे जयकामश्चतुर्दशे पौरुषकामः पंचदशे पूर्णकामः षोडशे राजकामः' इति । तदप्यापस्तंबशाखाध्यायिविषयं द्रष्टव्यम् । अथ गौणकाल उच्यते–'निगदिते प्रोक्ते 'गर्भाज्जनेर्वाष्टमे' इत्यादिके काले तस्मिन् द्विगुणिते गते गंतुं प्रवृत्ते । आदिकर्मणि क्तः । तथा सति तद्व्रतबंधनं गौणकालमाहुः । यथा स्वस्वोक्तनित्यकालाद्ब्राह्मणस्य षोडशवर्षपर्यंतं क्षत्रियस्य द्वाविंशतिवर्षपर्यंतं वैश्यस्य चतुर्विंशतिवर्षपर्यंतं गौणमित्यर्थः । यदाह मनुः–'आषोडशाद्ब्राह्मणस्य सावित्री नातिवर्तते । आद्वाविंशाद्ब्रह्मबंधोराचतुर्विंशतेर्विशः ॥' ब्रह्मबंधोः=क्षत्रियस्य । 'अत ऊर्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः । सावित्रीपतिता व्रात्या भवंत्यार्यविगर्हिताः ॥' इति । गौणकालातिक्रमेऽपि याज्ञवल्क्येन विशेषोऽभिहितः–'अत ऊर्ध्वं पतंत्येते सर्वधर्मबहिष्कृताः । सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः ॥' इति । अत एव 'न ब्राह्मणः पतनमृच्छति' इति गौतमस्मरणमपि संगच्छते । अत्र ब्राह्मणग्रहणं त्रैवर्णिकोपलक्षणमन्यथा सावित्रीपतिता व्रात्या इति बहुवचनमनर्थकमापद्येत ॥ ३९ ॥

अथ व्रतबंधे नक्षत्रादिकं वसंततिलकयाह–

> क्षिप्रध्रुवाहिचरमूलमृदुत्रिपूर्वा
> रौद्रेऽर्कविद्गुरुसितेंदुदिने व्रतं सत् ।
> द्वित्रीषुरुद्ररविदिक्प्रमिते तिथौ च
> कृष्णादिमत्रिलवकेऽपि न चापराह्णे ॥ ४० ॥

क्षिप्रेति ॥ नन्विदमयुक्तं प्रतिभाति । त्रैवर्णिकस्य त्रिविधमपि कालमभिधायेदानीमेतेषु मासेषु व्रतबंधः कार्य इति वक्तुमुचितं तद्विहायैव नक्षत्राद्युक्तमिति चेत् । उच्यते–अहो देवानांप्रियस्य महदज्ञानविकसितं, यत् 'गीर्वाणांबुप्रतिष्ठा' इत्यादिपद्यं न श्रुतं च आवर्तितरामिति । यतो द्विविधः कालः–उत्तरायणरूपो दक्षिणायनरूपश्चेति । तत्र दक्षिणायने व्रतबंधनिषेधादुत्तरायणं मासषट्कात्मकं प्रशस्तमित्यर्थात्प्रत्यस्त एव । यथा 'अभक्ष्यो ग्राम्यसूकरः' इत्युक्ते आरण्यः सूकरो भक्ष्य इति गम्यते । शुक्रास्ते न कर्तव्यमित्युक्ते शुक्रोदये कर्तव्यमिति भवद्वदनादेवावसीयते । अत एव व्रतबंधे नारदेनोक्तम्–'दृश्यमाने

गुरौ शुक्रे त्रायेशे चोत्तरायणे' इति। एवं सत्यपि किंचिद्विशेषावगत्यर्थं मासा उच्यंतेऽस्माभिः। तत्र वसंते ब्राह्मणस्य ग्रीष्मे राजन्यस्य शरदि वैश्यस्य मुख्य-कालमुपनयनं माघादिपंचमासेषु तु त्रैवर्णिकस्य साधारणकालमिति। यदाह वसिष्ठः—'विप्राणामुपनयनं वसंतसमये धराधिनाथानाम्। ग्रीष्मर्तौ शरदि विशां मासाः साधारणाश्च माघाद्याः॥' इति। कश्यपोऽपि—'ऋतौ वसंते विप्राणां ग्रीष्मे राज्ञां शरद्यथ। विशां मुख्यं च सर्वेषां द्विजानां चोपनाय-नम्॥ साधारणं च मासेषु माघादिषु च पंचसु।' एषां मासानां फलान्याह नारदः—'स्वकुलाचारधर्मज्ञो माघमासे तु फाल्गुने। विधिज्ञश्चार्यवांश्चैत्रे वेदवेदांगपारगः। वैशाखे धनवान्वेदशास्त्रविद्याविशारदः। उपनीतः कुलाढ्यः स्याज्ज्येष्ठे विधिविदां वरः॥' इति। अत्र केश्चिद्ग्रंथेश्वराद्यैर्माघादिषण्मासानां फलान्यभिहितानि—'माघे द्रविणशीलाढ्यः फाल्गुने च दृढव्रतः। चैत्रे भवति मेधावी वैशाखे कोविदो भवेत्॥ ज्येष्ठे तु गृहनीतिज्ञ आषाढे क्रतुभाग्भवेत्। मार्गशीर्षे भवेज्जडः शेषे दुःखमवाप्नुयात्॥' इति। अत्राषाढो हरिशयना-त्प्रागेवांगीकार्यो न परस्तात्। तत्रापि मिथुनस्थिते सूर्ये न कर्कस्थे दक्षिणा-यनांतःपातित्वात्तस्येति। तदेतदुपेक्ष्यं, प्रागुक्ताऽऽर्षवाक्यस्वरसात्। किं च मिथुनस्थितेऽपि सूर्ये ततः माघपददिवसानंतरं व्रतबंधादिनिषेधात् 'आर्द्रादिके स्वातिविरामकाले नक्षत्रवृंदे दशके रविश्चेत्। विवाहचौलव्रतबंधनाद्यं सुर-प्रतिष्ठादि न कार्यमेव॥' इति वसिष्ठादिवचनात्। उत्तरायण इति नारद-वाक्यं तु दक्षिणायननिषेधपरमित्यास्तां प्रसक्तानुप्रसक्तम्। क्षिप्रेति। क्षिप्राणि अश्विनीपुष्यहस्ताः, ध्रुवाणि प्रसिद्धानि, अहिराश्लेषा, चराणि श्रवणधनिष्ठाशत-भपुनर्वसुस्वात्यः, मृदूनि प्रसिद्धानि, तिस्रः पूर्वाः, रौद्रमार्द्रा; एषु द्वाविंश-तिभेषु व्रतबंधनं सत् शुभफलदातृ भवेत्। उक्तं च—'प्राजापत्यादिषट्के भगद्वादिषु पंचसु। मूलादिदशके चैव समैत्रे व्रतबंधनम्॥' इति। अर्था-द्भरणीकृत्तिकामघाविशाखाज्येष्ठासु न कार्यमित्यर्थः। एतानि सर्वशाखा-नक्षत्रमेलकाभिप्रायेणोक्तानि। मुख्यानि त्वाह वसिष्ठः—'हस्तत्रये च श्रवण-त्रये च धातृद्वये ह्युत्तरमैत्रभेषु। पौष्णद्वये चादितिभद्वये च शस्तं द्विजानां खलु मौंजिकर्म॥' इति। द्विजानां=ब्राह्मणक्षत्रियवैश्यानाम्। कश्यपोऽपि— 'मैत्रे विष्णुत्रये हस्तत्रयर्क्षे चोत्तरात्रये। धातृद्वयादितीज्यांत्यद्स्रर्क्षेपूपनाय-नम्॥' इति। अर्थादार्द्राश्लेषाभरणीकृत्तिकाज्येष्ठाविशाखामघापूर्वात्रय-मूलानि निंद्यानि ऋषिमते। तदाह गुरुः—'कृत्तिकाभरणीमूलज्येष्ठार्द्रासु विशा-खयोः। पूर्वात्रये च सार्पर्क्षे न कुर्यादुपनायनम्॥' चकारान्मघायाम्। ब्राह्म-णस्य पुनर्वसौ निषेधमाह राजमार्तंडः—'चंद्रतारानुकूलेषु ग्रहाब्देषु शुभे-ष्वपि। पुनर्वसौ कृतो विप्रः पुनः संस्कारमर्हति॥' इति। अन्यत्रापि स्मर्यते— 'त्र्यहःस्पृशि मले मासि शूद्रत्वमधिगच्छति' इति। तत्र विप्रः, कृतः, इति पद-द्वयोपादानादितरयोः क्षत्रियविशोः पुनर्वसौ व्रतबंधो ब्राह्मणस्य मेखलामोक्षश्च प्रसक्त इत्यर्थः। केचित्तु केनचिन्निमित्तेन कर्मबालानदीतरणाद्यनेककुदृकृत्येन पुनःसंस्कारप्रसक्तौ सत्यां विप्रः पुनर्वसौ पुनःसंस्कारमर्हतीति न व्रतबंध-

निषेध इत्येवं व्याचक्षते, तच्चिंत्यम्। यतः–'जीवार्केन्दूडुशुद्धौ हरिशयनबहि-र्भास्करे चोत्तरस्थे स्वाध्याये वेदवर्णाधिप इह शुभदे क्षौरभे नाऽदितौ च। शुक्रार्केज्यक्षेलग्ने रविमदनतिथिं प्रोह्य षष्ठाष्टमेंदुं नो जीवास्तातिचारेऽर्कसि-तगुरुदिने कालशुद्धौ व्रतं स्यात्॥' इति दीपिकायां पुनर्वसुनक्षत्रविषयक-व्रतबंधस्यैव सामान्यतो निषेधोक्तेः विशेषवचनात् ब्राह्मणे एव निषेधः पर्य-वसन्न एकवाक्यताबलात्, पुनर्वसुनिषेधः श्लोकद्वयेऽपि पूर्वार्धस्यानन्वयाच्च। अयं चाचारः प्राच्यानाम्। दाक्षिणात्यास्त्वेतन्नांगीकुर्वते देशाचाराभावात्। उक्तं च वराहेण—'देशाचारस्तावदादौ विचिंत्यो देशे देशे या स्थितिः सैव कार्या। लोके दुष्टं पंडिता वर्जयंति दैवज्ञोऽतो लोकमार्गेण यायात्॥' अत्र विहितनक्षत्रेषु वेधादिदोषास्त्याज्याः। तदुक्तं दीपिकायाम्—'कर्ण-वेधे विवाहे च व्रते पुंसवने तथा। प्राशने चाद्यचूडायां विद्धमृक्षं परित्य-जेत्॥' इति। अत्र वेधः सप्तशलाकाचक्रस्थो द्रष्टव्यः। तदाह वसिष्ठः—'पंचशलाकाचक्रे पाणिग्रहणे भवेद्धि विधिरुक्तः। शस्तः शुभमित्रकृतः सप्तशलाकाज इतरत्र॥' इति। इतरत्र यज्ञोपवीतचौलान्नप्राशनसीमंतादि-ष्वित्यर्थः। चक्रन्यासः स्वरोदये—'तिर्यगूर्ध्वगता रेखाः सप्तसंख्या लिखे-द्बुधः। कृत्तिकादीनि भान्यत्र साभिजिंति क्रमेण च॥' इति। भुक्तं भोग्यं तथाक्रांतं विद्धं पापग्रहेण च। शुभाशुभेषु कार्येषु वर्जनीयं प्रयत्नतः॥ यस्याभिधाननक्षत्रं विद्धं क्रूरग्रहेण तु। देशो ग्रामः पुरं सैन्यं नरो नारी विन-श्यति॥' इति। अशुभेषु=युद्धादिषु। दीपिकायाम्—'कृत्तिकादिचतुः-सप्तरेखा राशौ परिभ्रमन्। ग्रहश्चैकरेखास्थो वेधः सप्तशलाकजः॥' इति। ग्रंथकृता तु विवाहप्रकरणे सप्तशलाकाचक्रोक्तिं विनैव परस्परवेधकनक्षत्रवृंदं सिद्धवत्कृत्याभिहितम्। नन्वत्रावसरप्रसंगात्कुतो नोक्तमिति चेत्। सत्यम्,– 'यस्याः शशी सप्तशलाकभिन्नः पापैरपापैरथवा विवाहे। रक्तांशुकेनैव च रोदमाना श्मशानभूमिं प्रमदा प्रयाति॥' इति दीपिकाकारवचनात्। एवं सति विवाहनक्षत्राणामेव वेधज्ञानार्थं पंचशलाकाचक्रं विचार्यम्। सप्त-शलाकाचक्रं पुनर्विवाहादौ सकलकर्मविहितनक्षत्रवेधज्ञानार्थं ज्ञेयमित्यर्थ निष्कृष्टोऽर्थः। अयमेव च विवाहप्रकरणे चक्रोक्तौ ग्रंथकर्तुराशय इत्यलं प्रस-क्तानुप्रसक्तेन। वेध उपलक्षणम्, तेन युतिलत्तापातादयो विवाहोक्ता दोषा अपि त्याज्याः। तदुक्तं वसिष्ठेन—'निहितं त्रिविधोत्पातैः क्रूराक्रांतं च विद्धमं त्वखिलम्। त्याज्यं तच्छुभकर्मणि न पादतः पातधिष्ण्यं च॥' इति। नारदोऽपि—'वीक्षिते वाथैकविंशतिमहादोषवर्जिते' इति व्रतबंधप्रकरणे उक्तवान्। वीक्षित इति पूर्वेण संबंधः। ते च दोषा विवाहप्रकरणे वक्ष्यंते ग्रंथकृता। अर्केति। सूर्यबुधगुरुशुक्रचंद्रदिवसेषु व्रतं सत्स्यात्। अर्थाद्भौम-शनी निषिद्धौ। तदाह नारदः—'आचार्यकाव्यसौम्यानां वाराः शस्ताः शशीनयोः। वारौ तौ मध्यफलदौ निंदिताविनरौ व्रते॥' इति। आचार्यः= गुरुः। काव्यः=शुक्रः। जगन्मोहने गुरुस्तु–'पापग्रहाणां वाराः स्युर्न शुभा-श्चंद्रवासरः। सिते पक्षे प्रशस्तः स्यात्कृष्णे वारो विभोर्नहि॥ शुभो शुभो

नास्तमितः पापग्रहयुतोऽपि वा' इति रविवारं निषेधति स्म । अत्र सूर्यस्य प्राबल्यदौर्बल्ययोर्व्रतबंधस्य विधिनिषेधाविति विषयविवेकः । भौमस्तु निषिद्धोऽपि सामवेदिनामतिप्रशस्तः । यदाह नारदः—'शाखाधिपतिवारश्च शाखाधिपबलं शिशोः । शाखाधिपतिलग्नं च त्रितयं दुर्लभं व्रते ॥' इति । ग्रंथकृदप्यग्रे वक्ष्यति । द्वीति । द्वितीयातृतीयापंचम्येकादशीद्वादशीदशमीसंज्ञितासु तिथिषु च व्रतं सत्स्यात् । यदाह नारदः—'शुक्लपक्षे द्वितीया च तृतीया पंचमी तथा । त्रयोदशी च दशमी सप्तमी व्रतबंधने ॥ श्रेष्ठास्त्वेकादशीषष्ठीद्वादश्येतास्तु मध्यमाः । एकां चतुर्थीं संत्यज्य कृष्णपक्षेऽपि मध्यमाः ॥' इति । तिथिफलान्याह बादरायणः—'प्रतिपदि मदिरासक्तः श्रुतिधरमेधाधिको द्वितीयायाम् । नीतिज्ञो मेधावी जितसकलारिस्तृतीयायाम् ॥ मंदधिया हृतवित्तोऽधीतेश्चपलश्चतुर्थ्यां स्यात् । पंचम्यां बहुवित्तः पूर्णायुर्धनपतिर्मतिमान् ॥ षष्ठ्यामशुचिः सततं सप्तम्यां व्याधिसंतप्तः । अल्पायुरथाष्टम्यां नवमे धनवर्जितः सदा पुरुषः ॥ दशम्यामर्थसंपत्तिरेकादश्यां गुणान्वितः । द्वादश्यां नीतिशास्त्रज्ञो निधनाय त्रयोदशी । चतुर्दश्यां भवेन्नाशः पंचदश्यां क्षयो भवेत् ॥' इति । अत्र वाक्ये मध्यमापि षष्ठी निषिद्धैव । अत एव ग्रंथकृता नोक्ता । मध्यमे एकादशीद्वादश्यावतिप्रशस्ते । ननु 'सप्तमीत्रयोदश्योरनेन वाक्येनानिष्टफलोक्तेर्नारदवाक्ये कथं ग्रहणम् ? किंच—'कृष्णपक्षे चतुर्थीतिसप्तम्यादिदिनत्रयम् । चतुर्दशीचतुष्कं च अष्टावेते गलग्रहाः ॥' इति वसिष्ठेन गलग्रहत्वोक्तेश्च । उच्यते,—वसंतविषयत्वात्तयोस्तिथ्योः । तदप्युक्तं नारदेनैव 'विनर्तुना वसंतेन कृष्णपक्षे गलग्रहे । अपराह्णे चोपनीतः पुनःसंस्कारमर्हति ॥' इति । अथवा माघशुक्लसप्तमी मन्वादित्वात्या अपि ग्रहणं यथा स्यात् । अत एव मन्वाद्याद्यपवादमाह वसिष्ठः—'या चैत्रवैशाखसिता तृतीया माघे च सप्तम्यथ फाल्गुनस्य । कृष्णे द्वितीयोपनये प्रशस्ता प्रोक्ता भरद्वाजमुनींद्रमुख्यैः ॥' इति । अत्र चैत्रशुक्लतृतीया युगादिः वैशाखशुक्लतृतीया युगादिः माघशुक्लसप्तमी मन्वादिः फाल्गुनपूर्णिमोत्तरं द्वितीया चातुर्मास्यद्वितीया, आसामनध्यायत्वेऽपि व्रतबंधे प्राशस्त्यमत्रोक्तं इत्यर्थः । अनध्यायत्वं च सप्रयोजनं 'शुचिशुक्र-'(११५.४) इत्यादिपद्यव्याख्यानावसरेऽस्माभिर्वक्ष्यते । कृष्णादिमेति । विहितमासानां कृष्णपक्षस्यादिने त्रिलवके पंचमीपर्यंतं सत्स्यात् । नारदवाक्ये शुक्लपक्षस्योक्तेः 'आपंचम्यास्तिथेः कृष्णः शुक्लवत्परिकीर्तितः' इति वचनेनापवादनोक्तेः । 'एकां चतुर्थीं संत्यज्य कृष्णपक्षेऽपि मध्यमाः । आपंचम्यास्तु तिथयः पराः स्युरतिनिंदिताः ॥' इति नारदस्याप्युक्तेश्च । वसिष्ठोऽपि—'त्यक्त्वा चतुर्थीमपि कृष्णपक्षे स्वाद्यं त्रिभागं शुभदं व्रते च' इति । न चेति । त्रिधाविभक्तस्य दिवसस्य त्रयो भागाः क्रमेण पूर्वाह्णमध्याह्नापराह्णसंज्ञका भवन्ति । उक्तं च स्कंदपुराणे—'ऊर्ध्वं सूर्योदयात्प्रोक्तं मुहूर्तानां तु पंचकम् । पूर्वाह्णः प्रथमः प्रोक्तो मध्याह्नस्तु ततः परम् । अपराह्णस्ततः प्रोक्तो मुहूर्तानां तु पंचकम् ॥'

---

१ अधीत उपनीत इत्यर्थः ।

इति। तत्रापराह्णभागे च व्रतं न सत्, 'अपराह्णे चोपनीतः पुनःसंस्कार-मर्हति' इत्युक्तेः। युक्तं चैतत्। तस्मिन्समये हि श्राद्धं कर्तुमुचितं वटु इतरत्कुल-कृत्यम्। यदाह नारदः—'त्रिधा विभज्य दिवसं तत्रादौ कर्म दैविकम्। द्वितीये मानुषं कार्यं तृतीयेंऽशे तु पैतृकम्॥' इति। एतस्य फलमुक्तं मनुना—'सर्वदेशेषु पूर्वाह्णे मुख्यं स्यादुपनायनम्। मध्याह्ने मध्यमं प्रोक्तम-पराह्णे च गर्हितम्॥' इति। एवं सति पूर्वाह्णे कदाचिल्लग्नासंभवे मध्याह्नसम-येऽपि सति लग्नसंभवे कार्यमपराह्णे तु सर्वथा न कार्यमिति निष्कृष्टोऽर्थः ४०

अथ व्रतबंधे सामान्यतो लग्नभंगं प्रमाणिकयाह—

कवीज्यचंद्रलग्नपा रिपौ मृतौ व्रतेऽधमाः।
व्ययेऽब्जभार्गवौ तथा तनौ मृतौ सुते खलाः॥ ४१॥

कवीज्येति॥ अत्र लग्नार्थं राशयः सापवादा वसिष्ठेनोक्ताः—'लग्नाय सौम्यग्रहराशयो ये ग्राह्या न पापग्रहराशयो ये। ग्राह्याश्च तेऽपि प्रबलैश्च सौम्यैरधिष्ठिताश्चापि निरीक्षिता वा॥' अत एवाह नारदः—'राशयः सकलाः श्रेष्ठाः शुभग्रहयुतेक्षिताः॥' इति। एवं सति जगन्मोहने वसिष्ठेन प्रत्येकं लग्नफलान्युक्तानि—'मेषे भवति वाक्कुठो वित्तविद्यायुतो वृषे। युग्मे वेदांतदर्शी स्यात्कुलीरे च षडंगवित्॥ शिल्पकर्मकरः सिंहे षष्ठे भवति पंडितः। तुलायां वणिजप्राप्तिः कांडपृष्ठश्च वृश्चिके॥ कांडपृष्ठः=शस्त्रजीवी। सर्वत्र पूजितश्चापे क्षुद्रवृत्तिर्मृगे तथा। राजश्रेष्ठो भवेत्कुंभे मीने वेदांतपारगः॥' इति। तानि लग्नानां शुभाशुभग्रहाणामुत्तमनिंद्याधिष्ठाननिरीक्षणाद्यभावे द्रष्टव्यानि। यदा तु संभवस्तदा 'यथा हि योगादमृतायते विषं विषायते मध्वपि सर्पिषा समम्' इति वचनाद्योगजमेव फलं भवति। तत्र रिपौ षष्ठस्थाने मृतावष्टमस्थाने चेच्छुक्रबृहस्पतिचंद्रलग्नस्वामिनो भवंति तदाऽधमा मरणकारकाः स्युः। अथाब्जभार्गवौ चंद्रशुक्रौ व्यये चेद्भवतस्तदा मरण-करावित्यर्थः। खलाः पापग्रहा लग्नाष्टमपंचमस्थानेषु स्थिताश्चेत्तदा तथा मरणकरा इत्यर्थः॥ ४१॥

अथ सामान्यतो लग्नशुद्धिमनुष्टुभाह—

व्रतबंधेऽष्टषड्रिःफवर्जिताः शोभनाः शुभाः।
त्रिषडाये खलाः पूर्णो गोकर्कस्थो विधुस्तनौ॥ ४२॥

व्रतेति॥ शुभाः शुभग्रहा अष्टमषष्ठद्वादशस्थानस्थिताश्चेन्न स्युस्तदा व्रत-बंधे शोभनाः शुभफलदायकाः। खलास्तृतीयषष्ठैकादशस्थानस्थिताः शोभ-नाः। यदाह नारदः—'त्रिषडायगतैः पापैः षडष्टांत्यविवर्जितैः। शुभैः षष्ठाष्टलग्नांत्यवर्जितेन हिमांशुना॥' दैवज्ञमनोहरे गुरुः—'लग्नस्थितेषु रंध्रे च पापेषु मरणं वटोः। सौख्यं स्यात्त्रिषडायेषु अष्टत्वमितरेषु च॥ चंद्र-

क्रूरास्तनौ नेष्टाः सर्वे रंध्रे व्यये कविः। सितेंदुलग्नपाः षष्ठे मौंजीविवाहादिकर्मसु॥ मौंजीबंधे विशेषेण प्राग्लग्नात्पंचमं तथा। क्रूरग्रहैर्विमुक्तं च भृगुराह तथाष्टमं॥' दाक्षिणात्यास्त्वेवमाहुः—'चंद्रक्रूरास्तनौ नेष्टाः सर्वे रंध्रे व्यये कविः। सितेंदुलग्नपाः षष्ठे बटोः प्राणापहारकाः॥' अत्र शुक्रस्य मरणरूपफलमुक्तं, तदेतत्प्राच्या न सहंते—'व्ययस्थानगताः सर्वे कुर्वन्ति व्ययशीलिनम्। खलं नीचं पापरतं बंधुहीनं विदेशगम्॥' इति वसिष्ठादिमुनिविरोधात्। नन्वेतादृशादुष्टफलश्रवणाद्द्वादशशुक्रो निषिद्ध एवेति चेन्न। एवं सति द्वादशस्थानानां सर्वेषामपि वर्जनीयत्वमापतेत्। तच्च तवापि संमतं नास्ति। 'सर्वत्र शुभकृच्छुक्रः षष्ठमस्ताष्टमं विना' इति कश्यपोक्तेश्च। विशेषो वसिष्ठेनोक्तः—'द्वादशस्थं रविं भौमः पश्यत्याचार्यनेत्रहा। बलिनं बलवान्नूनमचिराच्चात्र संशयः॥ सर्वे ग्रहाश्चाष्टमगा निधनाधनशोकदाः। विना स्वतुंगस्वर्क्षाधिमित्रगान् शुभवर्गगान्॥ आचार्यमशुभा घ्नंति शिष्यं घ्नंत्यशुभेतराः॥' अस्यापवादस्त्वेनैवोक्तः—'चंद्रात्स्मरारिरंध्रेषु यद्येकस्मिन्शुभग्रहः॥ स्थितोऽपि योगसंज्ञः स्याच्छुभयोगो द्विजन्मनाम्॥ केंद्रत्रिकोणगे जीवे भानुः शुक्रोऽथवा व्यये। त्रितीये शुभो योगो द्विजानामुपनायने॥' इति। गुरुः—'मेषगोकर्कटान् याता भौमशुक्रेंदवः क्रमात्। यमोदये भवेद्योगो द्विजोपनयने शुभः॥' इति। यमोदये=मिथुनलग्नोदये। कर्केति। पूर्णः शुक्लपक्षीयो विधुः कर्कस्थो वृषस्थश्च सन् तनौ लग्नस्थितो यदि भवेत् तदैव शुभो नान्यथा। यदाह वसिष्ठः—'प्रालेयरश्मौ यदि लग्नसंस्थे बलक्षपक्षेऽपि भवेत्स रोगी' इति। गुरुश्च—'चंद्रोदयेऽभिशस्तः स्यात्क्षयरोगी मितेतरे। शुक्लपक्षे भवेद्यज्वा स्वभे तुंगे विशेषतः॥' इति। चंद्रे उदये इति पदच्छेदः। मध्येंदुरितिवत्समाधिः। युक्तं चैतत्। उपनयनं हि द्वितीयं जन्म। तत्र हि राशिविशेषेण लग्नस्थचंद्रस्य प्राशस्त्यमभिहितम्। तथा च लघुजातके वराहः—'कर्कवृषाजोपगते लग्ने चंद्रे धनी सुरूपश्च। विकलांगजडदरिद्रः शेषे तु विशेषतः कृष्णे॥' इति। कश्यपस्तूच्चस्थं लग्नस्थं चन्द्रं सदैव न्यषेधीत्। यथा—'वर्धमानोऽपि वा चंद्रः पूर्णो वा यदि तुंगगः। निःस्वं करोति व्रतिनं लग्नगः क्षयरोगिणम्॥' इति। नारदोऽपि—'स्वोच्चस्थितोऽपि शीतांशुर्व्रतिनो यदि लग्नगः॥ तं करोति बटुं निःस्वं सततं क्षयरोगिणम्॥' इति। तदेतयोरुच्चस्थितचंद्रसंबंधिनोः पक्षयोर्देशाचारतो व्यवस्था। स्वगृहे चंद्रस्तूत्तम एव द्वयोर्मते॥ ४२॥

अथ वर्णेशशाखेशयोः प्रयोजनस्य वक्ष्यमाणत्वाद्वर्णाधीशं शाखाधीशं च शालिन्याह—

विप्राधीशौ भार्गवेज्यौ कुजार्कौ
राजन्यानामोषधीशो विशां च।
शूद्राणां ज्ञश्चांत्यजानां शनिः स्या-
च्छाखेशाः स्युर्जीवशुक्रारसौम्याः॥ ४३॥

१ 'प्राग्लग्नं पंचमं तथा' इति पाठांतरम्। लग्नात्प्रथमस्थानात्प्राक् इति प्राग्लग्नं। प्राग्लग्नादिति वा अव्ययीभावः। लग्नपूर्वं स्थानं द्वादशमित्यर्थः।

विप्रेति ॥ विप्राधीशाविति समासांतर्गतमपि अधीशपदं अन्यत्राप्यनुवर्त्यते । तेन शुक्रबृहस्पती ब्राह्मणानां स्वामिनौ, भौमसूर्यौ क्षत्रियाणां स्वामिनौ, चंद्रो वैश्यानां स्वामी, बुधः शूद्राणां स्वामी, शनिरंत्यजानां चांडालादीनां प्रतिलोमजातीनां स्वामी । यदाह वराहः–'विप्रादितः शुक्रगुरू कुजार्कौ शशी बुधश्चेत्यसितोंऽत्यजानाम्' इति । स्वामिनाविति पूर्वशेषः । 'ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः' इति वेदक्रमात् जीवशुक्रारसौम्याः शाखेशाः स्युः । ऋग्वेदस्य गुरुः, यजुषः शुक्रः, साम्नो भौमः, अथर्वणो बुधः स्वामीत्यर्थः । यदाह नारदः–वेदानामधिपा जीवशुक्रभौमबुधाः क्रमात्' इति । 'ऋग्यजुःसामशाखेशा गुरुशुक्रधरात्मजाः । अथर्वणस्य वेदस्य शाखेशश्चंद्रनंदनः ॥' इति वसिष्ठोक्तेश्च ॥ ४३ ॥

अथानयोर्वर्णेशशाखेशयोः प्रयोजनं वसंततिलकयाह—

शाखेशवारतनुवीर्यमतीव शस्तं
शाखेशसूर्यशशिजीवबले व्रतं सत् ।
जीवे भृगौ रिपुगृहे विजिते च नीचे
स्याद्वेदशास्त्रविधिना रहितो व्रतेन ॥ ४४ ॥

शाखेशेति ॥ यः स्वशाखाधिपस्तस्यैव वारस्तनुर्लग्नं च वीर्यं च गोचरोक्तप्रकारेण स्वगृहाद्यवस्थितत्वेन वा बलवत्त्वं च तद्व्रतेऽतिशस्तम् । यथा गुरुः ऋग्वेदिनामीशोऽतो गुरुवारे गुरुलग्ने धनुर्मीनाख्ये गुरुबले च सत्युपनयनं शुभम् । एवं सर्वत्रापि ध्येयम् । तदुक्तं नारदेन–'शाखाधिपतिवारश्च शाखाधिपबलं शिशोः । शाखाधिपतिलग्नं च त्रितयं दुर्लभं व्रते ॥' शाखेशेति । शाखा वेदस्तस्येशः स्वामी तुल्यन्यायत्वाद्वर्णेशोऽपि ग्राह्यः । सूर्यशशिजीवाः प्रसिद्धाः । एषां बले सति व्रतं सत्स्यादन्यथा नेत्यर्थः । तदुक्तं च वसिष्ठेन–'शाखेशसूर्यवर्णेशगुरूणां बलपूर्वकम् । ततोऽन्येषां गुरुबलं मुख्यमाचार्यशिष्ययोः ॥' राजमार्तंडे विशेषः–'पितुः सूर्यबलं श्रेष्ठं शाखावर्णेशयोर्बटोः । सर्वेषां गुरुचंद्रार्कबलं श्रेष्ठं व्रतादिषु ॥' इति । रत्नमालायाम्–'वर्णाधिपे बलोपेते उपनीतक्रिया हिता । सर्वेषां च गुरौ चंद्रे सूर्ये च बलशालिनि ॥' इति । भीमपराक्रमः–'विप्राणां गुरुसितयो राज्ञां रविभौमयोर्बलं शस्तम् । इंदोर्विशां रवींदुत्रिदशेज्यबलेऽखिलानां तु ॥' नारदेन तु प्रत्येकं शाखेशादीनां उच्चादिस्थितत्वेन फलमुक्तम्–'स्वोच्चसंस्थे तदंशे वा स्वराशौ वा तदंशके । शाखेशे वा गुरौ शुक्रे वेदवेदांगपारगः ॥ परमोच्चगते जीवे शाखेशे वाथवा सिते । व्रती शिशुर्धनाढ्यः स्याद्वेदवेदांगपारगः ॥ मित्रराशिगते जीवे तदंशे वा स्वशाखपे । शुक्रे वाचार्यसंयुक्ते तदा तत्र व्रती शिशुः ॥ स्वाधिमित्रगृहस्थे वा तस्योच्चस्थे तदंशके । गुरौ भृगौ वा शाखेशे विद्याधनसमन्वितः ॥' इति । शाखेश इत्युपलक्षणम् । तेन वर्णाधिपेऽप्येतदेव फलम् । अत्र प्रमाणं

रत्नमालावाक्यं प्रागुक्तम्। शाखेशादीनां निर्बलत्वे फलमाह—जीवेति। जीवे वा भृगौ वा चकाराच्छाखेशे वर्णेशे वा विजिते युद्धे पराजिते वा नीचे स्वनीचराशिस्थिते सति व्रतेनानुष्ठितेन सता वेदशास्त्रविधिना वेदो वेदाध्ययनं शास्त्रं शास्त्राध्ययनं विधिर्नित्यनैमित्तिकश्रौतस्मार्तकर्मानुष्ठानाख्यस्तेषां समाहारद्वंद्वस्तेन रहितो व्रती स्यात्। तदुक्तं वसिष्ठेन—'नीचर्क्षनीचांशकसंस्थिते वा शाखेश्वरे वास्फुजिदींद्रपूज्ये। व्रती शिशुर्हीनकुलप्रसूतः शास्त्रोपजीवी स्वगृहं विसृज्य॥' नारदेनापि 'स्वनीचगे तदंशे वा स्वारिभे वा तदंशके। गुरौ भृगौ वा शाखेशे कुलशीलविवर्जितः॥ स्वाधिशत्रुगृहस्थे वा तदंशे वा तदा व्रती। शाखेशे वा गुरौ शुक्रे महापातककृद्भवेत्। शाखेश इत्युपलक्षणं वर्णाधिपस्यापि। तदुक्तं वसिष्ठेन—'शाखेशगुरुशुक्राणां मौढ्ये बाल्ये च वार्धके। नैवोपनयनं कार्यं वर्णेशे दुर्बले सति॥' इति। 'शाखेशगुरुशुक्राणामेकस्मिन्नपि शत्रुनिर्जिते। विद्यावित्तार्थिभिस्तत्र न कार्यं चोपनायनम्॥' अत्र नीचाद्यवस्थितत्वेऽपि शाखेशादेः परिहारमाह वसिष्ठ एव—'शत्रुनीचाधिशत्रुस्थे स्वांशे वा स्वोच्चभागगे। शाखेशे वा गुरौ शुक्रे न नीचफलमश्नुते॥' इति। उच्चादिसंज्ञामाह वराहः—'अजवृषभमृगांगनाकुलीरा झषवणिजौ च दिवाकरादितुंगाः। दश १० शिखि ३ मनुयुक् २८ तिथी १५ न्द्रियांश ५ स्त्रिनवक २७ विंशति २० भिश्च तेऽस्तनीचाः॥' स्वगृहादिकं ग्रंथकृद्विवाहप्रकरणे वक्ष्यति। ननु शुक्रे शत्रुगृहस्थे नीचगृहस्थे वा बटोरुपनयनं निषिद्धमित्युक्तं, तदयुक्तम्। शुक्रशत्रू रविचन्द्रौ तद्गृहे सिंहकर्कौ तन्नीचं च कन्या, ततः कर्कसिंहकन्याराशिस्थे शुक्रे बटोरुपनयनं न कार्यमिति तु वाक्यार्थः संपद्यते। यदा शुक्रस्य कर्कादिराशित्रयावस्थितिस्तदा सामान्यतः सूर्यस्यापि दक्षिणायनगतत्वादेवोपनयननिषेधे सिद्धे पुनर्निषेधो व्यर्थः। अत्रेयं समाधिसरणिः। यथा—यद्यपि सामान्यतः सूर्यस्य दक्षिणायनगतत्वं संभवति तथापि विशेषः कदाचिदसंभवोऽप्यापतति। स्पष्टीकृतिवशतो हि सूर्यात्प्राक् पश्चाद्वा एकराश्यंतरितो[1] राशिद्वयांतरितो वा शुक्रः संभवति तदा कर्कादिराशिस्थे सूर्ये शुक्रस्य स्पष्टीकृत्या कर्कसिंहराश्यवस्थितिः संभवतीति उपनयनकालदूषिका व्यर्थैव। दक्षिणायनसद्भावात्। यदा तु वृषमिथुनस्थिते सूर्ये स्पष्टीकृत्या कर्कसिंहराश्यवस्थितिः शुक्रस्य संभवति विहितकालदूषिकेति सार्थक एव निषेधः। ननु शत्रुक्षेत्रावस्थितशुक्रनिषेधोऽभिहितरीत्या युक्त एव, परं नीचराश्यवस्थितशुक्रनिषेधो व्यर्थ एव। यतः स्पष्टीकृत्या जातोऽपि कन्यास्थितः शुक्रः कदाचिदपि दक्षिणायनं न व्यभिचरति। सत्यम्। 'शरद्ग्रीष्मवसंतेषु व्युत्क्रमात्तु द्विजन्मनाम्। मुख्यं साधारणं तेषां व्रतं माघादिपंचसु॥' इति नारदादिवाक्येभ्यः शरत्काले वैश्यानामुपनयनं विहितमित्यवगम्यते। तत्र कदाचिच्छुक्रस्य नीचराशिकन्यावस्थित्योपनयननिषेधेन वचनसार्थक्यात्। यदा तु—'विप्रस्य क्षत्रियस्यापि मौंजी स्यादुत्तरायणे। दक्षिणे तु विशां कुर्यान्नानध्याये न संक्रमे॥' इति वृद्धवसिष्ठवाक्याद्दक्षिणायनेऽपि

१ 'कर्कादिराश्यवस्थितिः' इति पाठः।

वैश्यानां मौंजी प्रशस्ता, तदा तु सुतरां शुक्रस्य शत्रुगृहनीचगृहस्थितत्ववटो-र्वोक्तिः सार्थिकैवेति । ननु शत्रुगृहस्थे गुरावप्युपनयनं निषिद्धमित्युक्तम् । तत्र गुरोः शत्रू बुधशुक्रौ, तद्गृहाणि मिथुनकन्यावृषतुलाख्यानि, तत्स्थे गुरौ बटोरु-पनयननिषेधो नीचस्थितगुरुवच्छिष्टैः कुतो नांगीक्रियत इति । उच्यते,—तत्र शिष्टाशयो यथा—गुरोरस्ते सिंहस्थे मकरस्थे वा गुरौ समस्तशुभकर्मणां आरंभो निषिद्धो दोषप्रकरणे पाठात् । स्वनीचग इत्यादिवाक्यस्योपनयनप्रकरण एव पाठादनावश्यकता प्रतीयते । आवश्यकत्वे तु दोषप्रकरण एव निषेधो वक्तव्यः स्यात् । न च तत्रोक्तौ सकलशुभकर्मणां निषेधः स्यादिति वाच्यम् । स्वनीचग इत्यस्य वाक्यस्य शेषे 'कुलशीलविवर्जितः' इति चरणरूपे 'मौंजीबंधं न कारयेत्' इति पठितव्यमिति तस्यैव निषेधः सेत्स्यति । ननु मौंजीबंधनपद-मुपलक्षणत्वेन व्याख्यास्यते । यथा—'उपनयनं गोदानं चोद्वाहगृहप्रवेशगम-नानि । अस्तमितेषु न कुर्यात्सुरगुरुभृगुपुत्रचंद्रेषु ॥' इत्यादिषु उपनयनादि-पदानि । सत्यम् । सर्वत्रोपलक्षणत्वं वाक्यांतराणि विना व्याख्यातुं दुर्घटम् । अत्र हि—'वापीकूपतडागयागगमनम्' इत्यादिऋक्षोच्चयादिवाक्यैकवाक्यता-वशादुपनयनादिपदानि उपलक्षणत्वेन व्याक्रियंते न केवलानि । तत्तद्वाक्यां-तराभावात् । एवं सति दोषप्रकरण एव निषेधे वक्तव्ये यदुपनयनप्रकरणे दोषाभिधानं तद्वटोः कालांतरे संभवति वृषमिथुनकन्यातुलास्थे गुरावुप-नयनं न कार्यमित्येवंपरम् । तदसंभवे तु भवत्येव कालांतराभावात् । नीच-स्थितगुरौ तु सर्वथा न भवति दोषप्रकरणे पाठाद्दुर्बाधत्वात् । नीचराशि-गतत्वेन निषेधे सिद्धे तदंशकनिषेधो राश्यंतरगेऽपि गुरौ नीचांशकहान्यर्थ-मित्यलमतिप्रसंगेन ॥ ४४ ॥

अथ सामान्यतो निषिद्धस्य जन्ममासादेरत्र व्रतबंधेऽपवादमनुष्टुभाह—

जन्मर्क्षमासलग्नादौ व्रते विद्याधिको व्रती ।
आद्यगर्भेऽपि विप्राणां क्षत्रादीनामनादिमे ॥ ४५ ॥

जन्मर्क्षेति ॥ जन्मनक्षत्रे जन्ममासे जन्मलग्ने च आदिशब्देन जन्मतिथिः एतेषु सत्स्वपि दोषेषु विप्राणामाद्यगर्भे अपिशब्दाद्द्वितीयगर्भादावपि व्रती बालो व्रते यज्ञोपवीते विद्याधिकः स्यात् । क्षत्रादीनां क्षत्रियवैश्यानां पुनर-नादिमे द्वितीयगर्भादौ बालके सति जन्मर्क्षमासलग्नादौ विद्याधिको व्रती स्यात् । आद्यगर्भे तु तेषां सर्वथा प्रतिषेध एवेति । अत्राद्यमाह्वयः । श्रीपतिः—'जन्ममासि न च जन्मभे तथा नैव जन्मदिवसेऽपि कारयेत् । आद्यगर्भदुहितुः सुतस्य वा ज्येष्ठमासि न च जातु मंगलम् ॥' इति । अत्राद्यगर्भदुहितुः सुतस्य वेति देहलीदीपन्यायेनोभयत्रापि संबध्यते । तेन जन्ममासादावाद्यगर्भस्यैव निषेधः । तथा च 'संभवत्येकवाक्यत्वे वाक्यभेदो हि दूषणम्' इति वाक्यभेदापत्तेः । अत एव महेश्वरः—'न जन्ममासे न च जन्मधिष्ण्ये न जन्मकालीनदिने विदध्यात् । ज्येष्ठे न मासि प्रथमस्य

सूनोस्तथा सुताया अपि मंगलानि ॥' इति वाक्यांते प्रथमस्येत्यायुक्त्वाम् । अन्यच्च नारदोऽपि—'न जन्ममासे जन्मर्क्षे न जन्मदिवसेऽपि वा । आद्यगर्भसुतस्याथ दुहितुर्वा करग्रहः ॥' इति विशेषाच्च । अस्यापवादमाह शौनकः—'जन्मोदये जन्मसु तारकासु मासे तथा जन्मनि जन्मराशौ । व्रतेन विप्रो न बहुश्रुतोऽपि प्रज्ञाविशेषैः प्रथितः पृथिव्याम् ॥ गर्भाष्टमे गर्गपराशराद्यैः फलं यदुक्तं व्रतबंधने तु । ततोऽधिकं जन्मसु तारकासु मासे तथा जन्मनि वाडवानाम् ॥' वाडवानां=ब्राह्मणानाम् । 'द्विजात्यग्रजन्मभूदेवाडवाः' इत्यभिधानात् । प्रथमदशमैकोनविंशतिनक्षत्राणां ग्रहणार्थं जन्मतारकास्वित्युक्तम् । पट्टबंधने इत्यादि नारदवाक्यं प्रागुक्तमेव । गर्भाष्टमोपनयनफलमाह राजमार्तंडः—'यज्वा वसंतसमये बहुवित्तभोगी गर्भाष्टमे विविधशास्त्रविशारदस्तु । वेदार्थपालनपरः खलु जन्ममासे ऋक्षेऽपि जन्मनि बहुक्रतुभाजनं स्यात् ॥' ननु 'विवाहे चोपनयने जन्ममासं च वर्जयेत् । विशेषाज्जन्मपक्षं तु वसिष्ठाद्यैरुदाहृतम् ॥' इति जगन्मोहने गर्गवचनं कथं संगच्छेतेति चेत्,—सत्यम्, क्षत्रियाणां विशां चाद्यगर्भनिषेधार्थं भविष्यति । तथा सति द्वितीयगर्भादावुपनयनादिमंगलकृत्यं सुखोदर्कं स्यात् । विप्राणां तु वाडवानामिति विशेषोक्त्याद्यगर्भानाद्यगर्भसाधारणमुपनयनं जन्ममासादौ कृत इति चेच्छृणु । यो जन्ममासादौ निषेधः स आद्यगर्भस्यैव, सोऽप्युपनयनवाक्येनापोह्यते । द्वितीयगर्भादौ तु निषेध एव नास्ति, किं तदपवादेन ॥ ४५ ॥

अथ गुरुबलमनुष्टुभाह—

बटुकन्याजन्मराशेस्त्रिकोणायद्विसप्तगः ।
श्रेष्ठो गुरुः खषट्र्याद्ये पूजयान्यत्र निंदितः ॥ ४६ ॥

बटुकन्येति ॥ बटुरुपनयनाधिकारी । उपलक्षणत्वाद्वरोऽपि । तथा कन्या स्त्रीजात्यपत्यम् । तज्जन्मराशेः नवपंचमैकादशद्वितीयसप्तमस्थानस्थितो गुरुः श्रेष्ठ उत्तमः । यदाह श्रीपतिः—'स्वायधर्मतनयधुनस्थितो नाकनायकपुरोहितः शुभः' इति । खेति । दशमषट्तृतीयप्रथमस्थानस्थितो गुरुः पूजया धर्मशास्त्रोक्तपूजाविधानेन स्वनुष्ठितेन श्रेष्ठः । अन्यत्र चतुर्थद्वादशाष्टमास्वनिंद्यस्थानस्थितः सन् द्विगुणत्रिगुणादिपूजया स्वनुष्ठितयापि निंद्यो निषिद्ध इत्यर्थः । उक्तं च वराहेण—'दुश्चिक्यजन्मारिखमध्यमेषु जन्मर्क्षतो वांछति वज्रपाणेः । पूजां पुरोधा न स एव कांक्षत्यथाष्टमप्रांत्यरसातलस्थः ॥' इति । वसिष्ठेन तु विशेष उक्तः—'बंधौ तृतीये रिपुराशिसंस्थे वांछंति पूजां दशमे सुरेज्ये । नेच्छंति पूजां जनिगे व्ययस्थे पुरातना अष्टमगेऽपि सूरौ ॥' जनिगे=जन्मराशिस्थे । चतुर्थजन्मस्थगुरोः पूज्यत्वपूजानिरपेक्षत्वविषयिणी देशभेदेन व्यवस्था ज्ञेया । तत्र पूजानिरपेक्षेऽपि गुरौ गुणबहुत्वोपलब्धौ कन्यायाः कालाति-

कांताया विवाह उचितः । एतदप्युक्तं वराहेण—'पूजाभिलाषं प्रति निस्पृहेऽपि कुर्याद्गुरौ शुद्धिविवर्जितेऽपि । वराप्यलाभे शुभदं विवाहं वदंति गर्गच्यवनादिमुख्याः ॥' इति । अत्र चतुर्थद्वादशाष्टमस्थानस्थितत्वेन गुरोर्द्विगुणत्रिगुणादिकां पूजां विधाय विवाहः शुभ इति सांप्रदायिकोऽर्थः । विवाह इत्युपलक्षणं, तेन व्रतबंधोऽप्येवमेव ध्येयः । तदुक्तं नारदेन–'बालस्य बलहीनोऽपि शांत्या जीवो बलप्रदः । यथोक्तवत्सरे कार्यमनुक्ते नोपनायनम् ॥' इति । वसिष्ठेनापि–'उक्तेऽपि वर्षे न बली गुरुश्चेच्छांत्या प्रशस्तं व्रतबंधकर्म । अनुक्तवर्षे सुबलप्रदोऽपि नैवैतयोरब्दबलं बलीयः ॥' इति । अत्र वामवेधेन ये गुरुशुद्धिमाहुस्तान्दूषयति गर्गः—'मौंजीबंधे विवाहे च प्रतिष्ठायां विशेषतः । गोचरेणैव कर्तव्यं वेधादिकमकारणम् ॥' इति । प्राच्यास्तु–गोचरबलाभावे अष्टवर्गबलेनैव व्रतबंधादिकमाहुः । यदाह राजमार्तंडः–'अष्टवर्गविशुद्धेषु गुरुशीतांशुभानुषु । व्रतोद्वाहौ च कर्तव्यौ गोचरेण कदापि न ॥' इति । उपलक्षणमेतत् । यत्र कर्मणि यस्य यस्य ग्रहस्य शुद्धिरपेक्षिता तस्य तस्याष्टवर्गशुद्धिर्विचार्या । एतदप्याह स एव–अष्टवर्गेण ये शुद्धास्ते शुद्धाः सर्वकर्मसु । सूक्ष्माष्टवर्गसंशुद्धिः स्थूला शुद्धिस्तु गोचरे ॥ अभावतो गोचरशोभनानां शुद्धिं वदेद्वागुरिरष्टवर्गात् । वैधव्यकन्याक्षयहेतुयोगे जीवाष्टवर्गस्य वदेत्तु शुद्धिम् ॥' इति । तत्र गुरोरष्टवर्गो लिख्यते । बृहज्जातके वराहः–'दिक्स्वाद्यष्टमदायबंधुषु कुजात्स्वात्सत्रिकेष्वंगिराः सूर्यात्सत्रिनवेषुधीस्वनवदिग्लाभारिगे भार्गवात् । जायायार्थनवात्मजेषु हिमगोर्मंदत्रिषट्धीव्यये दिग्धीषट्स्वसुखाय पूर्वनवगोज्ञात्सस्मरेपूदयात् ॥' इति । एवं स्वात्मापेक्षायां सूर्यादीनामप्यष्टवर्गास्तत एव ध्येयाः । एवं जन्मकालीनग्रहवशादुक्तस्थाने रेखा दत्त्वा सांप्रतं विरुद्धफलदातृग्रहाधिष्ठितराशौ रेखाधिक्ये शुभमन्यथा नेति निष्कृष्टोऽर्थः । उक्तं च लघुजातके–'विफलं गोचरगमितं ह्यष्टकवर्गेण निर्दिशेत्पुंसाम् । रेखाधिक्ये शुभदं बिंदुधिकेनैव शोभनं प्रायः ॥' अत्र प्रत्येकं रेखाफलमुक्तं यवनाचार्यैः–'कष्टं स्यादेकरेखायां द्वाभ्यामर्थक्षयो भवेत् । त्रिभिः क्लेशं विजानीयाच्चतुर्भिः समता मता ॥ पंचभिः क्षेममारोग्यं षड्भिरर्थागमो भवेत् । सप्तभिः परमानंदस्त्वष्टाभिः सर्वसंपदः ॥' इत्यलमतिप्रसंगेन ॥ ४६ ॥

अथ ग्रंथकृत्स्वमतेन गुरुदौष्ट्यापवादमनुष्टुभाह—

**स्वोच्चे स्वभे स्वमैत्रे वा स्वांशे वर्गोत्तमे गुरुः ।**
**रिःफाष्टतुर्यगोऽपीष्टो नीचारिस्थः शुभोऽप्यसन् ॥ ४७ ॥**

स्वोच्च इति ॥ गुरुर्द्वादशाष्टमचतुर्थाख्यनिंद्यस्थानस्थितोऽपि यदि स्वोच्चस्थाने कर्के स्वभे धनुर्मीनाख्ये स्वमैत्रे स्वमित्रगृहे मेषवृश्चिकाख्ये स्वांशे यस्मिन् कस्मिंश्चिद्राशौ धनुर्मीननवांशे वर्गोत्तमे वर्गोत्तमनवांशे यथा वृषराशौ

वृषनवांशे गुरुः वर्गोत्तम इति । वर्गोत्तमलक्षणमुक्तं वराहेण–'वर्गोत्तमाश्चर-गृहादिषु पूर्वमध्यपर्यंतगाः शुभफला नवभागसंज्ञाः' इति । उपलक्षणत्वा-त्स्वोच्चादिनवांशेऽपि वा स्थितः स्यात्तदेष्टः शुभफलदाता । कैमुतिकन्यायेनाप्य-न्येषु स्थानेष्वेतादृशो गुरुः शुभ एव । यदाह भुजबलः–'वर्गोत्तमे स्वभवने भवनेऽथ मैत्रे मित्रांशके स्वभवनोच्चनवांशके वा । जन्माष्टरिःफरिपुस्वत्रिचतु-र्थगोऽपि जीवः सुखार्थसुतवृद्धिकरो विवाहे ॥' व्यासोऽपि–'मित्रराशिगते जीवे स्वगृहे स्वोच्चगेऽपि वा । उद्वाहिता यदा कन्या भवेत्पुत्रार्थसंयुता ॥' इति । तुल्यन्यायत्वाद्व्रतादावपि ज्ञेयम् । ननु गुरोः सूर्यचंद्रौ मित्रे । एवं सति सिंहकर्कावित्यपि कुतो न व्याख्यातमिति चेन्न । सिंहस्थस्य गुरोः स्वरू-पेणैव निषेध इत्युक्तं प्राक् । कर्कस्थो गुरुरुच्चस्थ एवेति पुनरुक्तिः । अतः साधीयः प्राग्व्याख्यातम् । नीचं मकरः, अरिस्थः मिथुनकन्यातुलावृषरा-शिस्थो गुरुः गोचरेण शुभोऽप्यसन् । अनिष्टफलदातेत्यर्थः । तदुक्तं ज्योति-र्निबंधे–'उच्चस्थः स्वगृहे सुहृद्भवनगो वाचस्पतिर्नित्यशः पूर्णायुर्विविधार्थ-सौख्यजनको जन्माष्टमस्थोऽपि चेत् । नीचस्थोऽरिगृहे दिवाकरकरच्छाया-नुगामी सदापीष्टोऽनिष्टफलं ददाति नियतं वैधव्यदुःखास्पदम् ॥' इति । अत्राष्टमस्थ इत्यनेन सर्वथानिष्टफले गुरौ 'न चाष्टमं लक्षगुणं प्रपूजये'दिति वचनात्पूजामनीहमानेऽप्युपनयनादि शुभं स्यात् । द्वादशचतुर्थस्थानस्थस्य तु द्विगुणपूजामिच्छतस्तथा तृतीयादिस्थानस्थस्य पूजामात्रापेक्षस्य गुरोः शुभ-फलदातृतास्तीति किं वक्तव्यमिति कैमुतिकन्यायसूचनार्थोऽपिशब्दः । 'न चाष्टमम्'इति वाक्यं शत्रुगृहस्थितगुर्वभिप्रायम् । अस्यापवादो रत्नकोशे-ऽभिहितः–'गोचराष्टकवर्गाभ्यां यदि शुद्धिर्न लभ्यते । तदोपनयनं कार्यं चैत्रे मीनगते रवौ ॥ हरौ सिंहांशके जीवे नीचर्क्षे नीचभागगे । मौंजीबंधः शुभः प्रोक्तश्चैत्रे मीनगते रवौ ॥' इति गुरुक्तेश्च ॥ ४७ ॥

अथ व्रतबंधे वर्ज्यपदार्थाननुष्टुभाह—

कृष्णे प्रदोषेऽनध्याये शनौ निश्यपराह्णके ।
प्राक्संध्यागर्जिते नेष्टो व्रतबंधो गलग्रहे ॥ ४८ ॥

कृष्णे इति ॥ एषु दुष्टपदार्थेषु सत्सु व्रतबंधो नेष्ट इति वाक्यार्थः । तत्र कृष्णे प्रथमत्रिभागरहिते कृष्णपक्षे 'आ पंचम्यास्तु तिथयः पराः स्युरति-निंदिताः' इति नारदोक्तेः । तथा प्रदोषे यस्मिन् दिने संध्याकाले प्रदोषो भवेत्तद्दिवसे व्रतबंधो नेष्टः । प्रदोषलक्षणं स्वयमेव वक्ष्यति । अनध्यायेऽपि नेष्टः, अनध्यायानग्रे वक्ष्यति । शनौ नेष्टः । अत्र संमतिरुक्ता । निशि रात्रौ नेष्टः, अपराह्णकेऽपि नेष्टः । अत्र संमतिवाक्यं प्रागलेखि । इयं पुनरुक्तिः स्मर-णाविच्छेदार्थम् । तथा प्राक्संध्या प्रातःसंध्या तस्यां गर्जिते मेघध्वनावन-ध्यायनिमित्ते सति नेष्टः । यदाह वसिष्ठः–'व्रतेऽह्नि पूर्वसंध्यायां वारिदो

यदि गर्जति । तद्दिनं स्यादनध्यायो व्रतं तत्र विवर्जयेत् ॥' इति । संध्यालक्षणं प्रागुक्तमस्माभिः । तथा गलग्रहे गलग्रहाख्ये दिवसे व्रतबंधो नेष्टः । गलग्रहानाह गुरुः—'त्रयोदश्यादिचत्वारि सप्तम्यादिदिनत्रयम् । चतुर्थी चैकतः प्रोक्ता अष्टावेते गलग्रहाः ॥' यत्तु वसिष्ठेन—'कृष्णपक्षे चतुर्थी च सप्तम्यादिदिनत्रयम् । त्रयोदशीचतुष्कं च अष्टावेते गलग्रहाः ॥' इत्यत्र कृष्णपक्षीयचतुर्थीग्रहणं कृतं तद्दोषाधिक्यप्रतिपत्त्यर्थम्, न तु शुक्लपक्षीयचतुर्थ्या अग्रहणार्थम् । कुतः ? गुरुवाक्यस्य वैयर्थ्यापत्तेः । अत्र दैवज्ञमनोहरे—'प्रदोषे निश्यनध्याये मंदे कृष्णे गलग्रहे । मधुं विनोपनीतस्तु पुनःसंस्कारमर्हति ॥' इति । मधुं=चैत्रम् । ज्योतिर्मनुः—'अनध्यायोपनीतस्तु पुनःसंस्कारमर्हति । गलग्रहे प्रदोषे च स्वल्पायुरुपजायते ॥' इति । नन्वत्र रात्रिनिषेधो व्यर्थः । यतो दिवसे पूर्वाह्णादयस्त्रयः काला उपनयने श्रेष्ठमध्याधमा उक्ताः । यदाह मनुः—'सर्वदेशेषु पूर्वाह्णे मुख्यं स्यादुपनायनं । मध्याह्ने मध्यमं प्रोक्तमपराह्णे च गर्हितम् ॥' तत्र 'अपराह्णोपनीतस्तु पुनःसंस्कारमर्हति' इत्यपराह्णकालस्यातिनिषिद्धत्वात् कैमुतिकन्यायेन रात्रिरपि निषिद्धेति वाचनिको रात्रिनिषेधो व्यर्थ इति चेत्,—सत्यम्; 'अंगवंगकलिंगेषु सौराष्ट्रमगधेषु च । तीर्थयात्रां विना गच्छन्पुनःसंस्कारमर्हति ॥' इति पुनःसंस्कारनिमित्तापत्तौ निमित्तांतरमेव नैमित्तिकमिति न्यायेन पुनरुपनयने प्राप्ते यदि रात्रिसद्भावस्तदोपनयनं मा भूदिति रात्रिपदोक्तिः । अनयैव रीत्या प्रदोषोक्तिरपि सार्थिका । यतः सायंकालीनसमयः प्रदोषशब्दवाच्यः, 'प्रदोषो रजनीमुखम्' इत्यमरोक्तेः । वयं तु—प्रदोषग्रहणाद्यद्दिने लक्षणविशिष्टः प्रदोषो भवेत्तद्दिनमुपनयने त्याज्यमिति ब्रूमः । यत्रापराह्णकालो निंदितस्तत्र प्रदोषस्तु सुतरां निंद्यः । इति प्रदोषग्रहणसामर्थ्यात् पुनरुपनयननिषेधार्थं प्रदोषग्रहणमिति चेन्न । रात्रिपदस्य सर्वथा वैयर्थ्ये सत्येवं गतिर्युक्ता । न च तदत्र पश्यामः । अत एव निबंधकर्तृभिरुपनयनप्रकरण एव प्रदोषलक्षणवाक्यानां लिखितत्वात् । यद्यपि तानि 'सर्वविद्याविघातकृत्' इति, 'ब्रह्म नाधीयते नरैः' इत्यादीनि सामान्यतो विद्यारंभवेदारंभविषयकाणि, तथापि प्रथमातिक्रमे कारणाभावादक्षरस्वीकारस्यैक एव तदुल्लंघनस्य युक्तत्वादतः शिष्टाः सायं यद्दिने प्रदोषस्तद्दिने गलग्रहरहितेऽप्युपनयनं कुर्वंति । उक्तं च शार्ङ्गधरीये—'स्वाध्याये पूर्वाह्णे प्रदोषरहिते तथा विरिक्ते च । हित्वा शनिकुजवारौ स्वाध्याये पूर्वपरदिवसे च ॥' नन्वनध्यायेषु गलग्रहेषु च व्रतबंधो निषिद्ध इत्युक्तं, तदयुक्तम् । विहिततिथ्यभावादेव भविष्यति । विहिताश्च तिथय इमाः द्वितीयातृतीयापंचमीषष्ठीदशम्येकादशीद्वादश्यो द्वित्रीष्विष्वित्यादिनोक्ताः । उच्यते—द्विविधा अनध्यायाः—नित्या नैमित्तिकाश्च । नित्या अष्टम्यादयः, नैमित्तिका मन्वाद्यास्तत्र मन्वादिराषाढशुक्लदशमी स्वाध्याय एव । सोपपदा अपि स्वाध्याया एव । संक्रांतिः कदाचित्स्वाध्यायेष्वपि स्यादित्येतासु तिथिषु व्रतबंधो मा भूदिति आसामनध्यायोक्तिः । चैत्रशुक्लवैशाखशुक्लतृतीययोर्मन्वादियुगाद्योस्तु 'या चैत्रवैशाखसिता तृतीया' इत्यादिवसिष्ठवाक्येन वाचनिकं

व्रतबंधविषयत्वम् । अन्यासां मन्वादिस्वाध्यायतिथीनां दक्षिणायनगतानामनध्यायत्वं प्रथमवेदारंभो मा भूदिति प्रयोजनम् । 'ब्रह्म नाधीयते नरैः' इति वाक्यांतेऽभिधानात् । वेदस्योपलक्षणात्सकलविद्यारंभोऽपि । एतच्च सामान्यतः सर्वासामप्यनध्यायतिथीनां प्रयोजनम् । मन्वादितिथिषु दानादिकमपि प्रयोजनं वर्ण्यते । मत्स्यपुराणे—'मन्वंतरादयश्चैते दत्तस्याक्षयकारकाः' इति । अथ चतुर्दश्यादयो यद्यनध्याया नोच्येरंस्तदा विहितप्रतिषिद्धत्वाभावान्मध्यमत्वावसायस्तिथीनां स्यात्तत्र यथा स्वशाखीयनक्षत्रालाभे अनिषिद्धान्यन्यान्यपि नक्षत्राणि गृह्यन्ते तथा कदाचिद्विहिततिथ्यलाभे मध्यमतिथिष्वप्युपनयनं स्यात्तन्मा भूदित्येतदर्थं चतुर्दश्यादीनामनध्यायत्वम् । एतदेव समाधानं तुल्यन्यायत्वाद्गलग्रहेष्वपि ध्येयम् । किंच—'विद्यारंभो व्रतोद्देशः क्षौरं चैव विशेषतः । गलग्रहे न कर्तव्यं यदीच्छेत्पुत्रजीवितम् ॥' इति गुरुणा क्षौरादिनिषेधोक्तेश्च । कश्चिद्बहून्यपि कर्माणि गलग्रहे निषिद्धानि । उक्तं च—'चूडाव्रतं तथोद्वाहं कर्णयोरपि वेधनम् । गलग्रहे न कर्तव्यं यदीच्छेत्पुत्रजीवितम् ॥' इत्यलमतिप्रसक्तानुप्रसक्तेन ॥ ४८ ॥

अथ व्रतबंधकाले रव्याद्यंशफलमनुष्टुभाह—

क्रूरो जडो भवेत्पापः पटुः षट्कर्मकृद्वटुः ।
यज्ञार्थभाक्तथा मूर्खो रव्याद्यंशे तनौ क्रमात् ॥ ४९ ॥

क्रूर इति ॥ षट्कर्माणि अध्ययनाध्यापनयजनयाजनदानप्रतिग्रहाः । उक्तं च व्यासेन—'यजनं याजनं चैव तथा दानप्रतिग्रहौ । अध्यापनं चाध्ययनं षट्कर्मा धर्मभाग्द्विजः ॥' इति । अन्यत्स्पष्टार्थम् । तदुक्तं रत्नमालायाम्—'अर्कांशे क्रुद्ध्यति मूर्खतार्कभागे क्रूरत्वं भवति च पापधीः कुजांशे । चंद्रांशे त्वतिजडता बुधे पटुत्वं यज्वत्वं गुरुभृगुभागयोर्गृणंति ॥' इति । भीमपराक्रमोऽपि—'भवेत्क्रूरो जडः पापः पटुर्यज्वा मखान्वितः । मूर्खश्चार्कादिकांशेषु क्रमेणोदयवर्तिषु ॥' इति । एवं सति बुधगुरुशुक्रस्वामिकराशीनां नवांशा ग्राह्याः । एतच्च स्पष्टमुक्तं नारदेन—'लग्नेऽथ राशयः श्रेष्ठाः शुभग्रहयुतेक्षिताः । शुभा नवांशा न तथा ग्राह्यास्ते शुभराशयः ॥ न कदाचित्कर्कटांशः शुभग्रहयुतोऽपि वा । तस्माद्गोमिथुनांत्याश्चतुलाकन्यांशकाः शुभाः ॥' इति । अश्वः=धनुः । तथा सति वृषमिथुनकन्यातुलाधनुर्मीनांशा ग्राह्या इति निष्कृष्टोऽर्थः ॥ ४९ ॥

अथ चंद्रनवांशफलं स्वनवांशे सापवादं मोटनकछंदसाह—

विद्यानिरतः शुभराशिलवे पापांशगते हि दरिद्रतरः ।
चंद्रे स्वलवे बहुदुःखयुतः कर्णादितिभे धनवान्स्वलवे ॥ ५० ॥

विद्यानिरत इति ॥ यस्मिन् कस्मिंश्चिद्राशौ चंद्रो यदि शुभग्रहराशिनवांशे स्यात्तदा व्रती विद्यानिरतो भवेत् । यदि पापग्रहराशिनवांशे चंद्र-

स्तदा दरिद्रतरो धनधान्यरहितः स्यात्। यदि स्वलवे कर्कांशे स्यात्तदा बहुदुःखयुतो भवेत्। उक्तं च कश्यपेन–'शुभग्रहांशगे चंद्रे विद्यावान् धनवान् व्रती। तस्मिन्पापांशसंस्थेऽतिनिर्धनोऽखिलदुःखभाक्॥ स्वांशसंस्थे निशानाथे दरिद्रः खलु दुर्जनः॥' इति। वसिष्ठेन प्रत्येकं फलमुक्तम्–'सूर्यांशकगते चंद्रे महापातककृद्व्रती। पण्योपसेवी स्वांशस्थे नीचे निःस्वः खलो भवेत्॥ कुजांशकगते चंद्रे शस्त्रजीवी खलो व्रती। बुधांशकगते चंद्रे वेदवेदी भवेत्पटुः॥ जीवांशकगते यज्वा सांगवेदविशारदः। शुक्रांशगे धनी दाता विद्यावित्तविशारदः॥ क्षिप्रोद्वाही यज्ञकृत्स्यात्सत्प्रदो भोगवान्भवेत्। सौरांशकगते चंद्रे सदा चांडालसेवकः॥' इति। अथ स्वांशस्थितस्य चंद्रस्यापवादमाह—कर्णेति। यदि कर्णे श्रवणनक्षत्रे अदितौ पुनर्वसुभे चोपनयने सति स्वांशः चंद्रस्य नवांशश्चेत्स्यात्तदा व्रती धनवान् स्यात्। तदुक्तं नारदेन—'श्रवणादितिनक्षत्रे कर्कांशस्थे निशाकरे। तदा व्रती वेदशास्त्रधनधान्यसमृद्धिमान्॥' इति॥ ५०॥

अथ केंद्रस्थानां सूर्यादीनां फलमनुष्टुभाह—

राजसेवी वैश्यवृत्तिः शस्त्रवृत्तिश्च पाठकः।
प्राज्ञोऽर्थवान्म्लेच्छसेवी केंद्रे सूर्यादिखेचरैः॥ ५१॥

राजसेवीति॥ केंद्रे सूर्यादिग्रहैः सद्भिः प्रत्येकं हि तत्क्रमादिदं फलं ज्ञेयमित्यर्थः। अन्यत्स्पष्टम्। यदाह श्रीपतिः—'स्वानुष्ठाने रतः स्यात्प्रचुरमतियुतः केंद्रसंस्थे सुरेज्ये विद्यासौख्यार्थयुक्तो भृगुतनसि शशिजेऽध्यापकश्च प्रदिष्टः। सूर्ये राजोपसेवी भवति धरणिजे शस्त्रवृत्तिर्द्विजन्मा शीतांशौ वैश्यवृत्तिर्दिनकरतनये सेवकश्चांत्यजानाम्॥' अंत्यजानां=चांडालानाम्। अत्र लग्नस्थं चंद्रं केंद्रस्थं च शनिं विना शुभाः पापाश्च शुभफला इत्यवगम्यते। मुनिभिस्तु केंद्रपापा निषिद्धा इत्युक्तम्। यदाह नारदः—'स्फूर्जितं केंद्रगे भानौ व्रतिनो वंशनाशनम्। कूजितं केंद्रगे भौमे शिष्याचार्यविनाशनम्॥ करोति रुदितं केंद्रसंस्थे मंदे महागदम्। लग्ने केंद्रगते राहौ रंध्रे मातृविनाशनम्। उग्रे केंद्रगते केतौ व्रतिवृत्तविनाशनम्॥' इति। तत्र सूर्यस्य सर्वशाखाधिपत्वात्केंद्रसंस्थत्वमावश्यकविषयं द्रष्टव्यम्। उक्तं च दैवज्ञमनोहरे—'सर्वशाखाधिपं भानुं केचिदूचुर्महर्षयः। तस्माल्लग्नांतराभावे लग्नस्थोऽर्कः प्रशस्यते॥' लग्नग्रहणं केंद्रोपलक्षणम्। तथा स्वगृहोच्चाद्यवस्थिताः पापग्रहाः केंद्रस्थाः शुभफलदातारोऽन्यथा नेत्यर्थः। इति विरुद्धार्थयोर्वचनयोर्विषयविवेकः॥ ५१॥

अथ चंद्रगुरुशुक्राणां ग्रहयुतौ फलमनुष्टुभाह—

शुक्रे जीवे तथा चंद्रे सूर्यभौमार्किसंयुते।
निर्गुणः क्रूरचेष्टः स्यान्निर्घृणः सद्युते पटुः॥ ५२॥

शुक्रे इति ॥ शुक्रे तथा जीवे गुरौ तथा चंद्रे च प्रत्येकं सूर्यसंयुते व्रती निर्गुणः स्यात्। एवं भौमसंयुते सति क्रूरचेष्टः क्रूरा हिंसनशीला चेष्टा हस्तादिचापलं यस्य स तादृशः स्यात्। तथार्किः शनिस्तेन संयुते निर्घृणः निर्लज्जो निर्दयो वा स्यात्। तथा तस्मिन्नेव शुक्रे जीवे चंद्रे वा प्रत्येकं सद्भिः चंद्रबुधगुरुशुक्रैः युते पटुः सर्वविद्यानिपुणः स्यात्। उक्तं च रत्नमालायाम्–'सार्के जीवे निर्गुणोऽर्थेन हीनः क्रूरः साऽऽरे वाक्पटुः सत्समेते। भानोः पुत्रेणालम्बो निर्घृणश्च स्याच्छुक्रेंदू जीववत्सम्प्रकल्प्यौ ॥' इति ॥ ५२ ॥

अथ चंद्रवशेन शुभाशुभयोगौ प्रमाणिकयाह—

**विधौ सितांशगे सिते त्रिकोणगे तनौ गुरौ।**
**समस्तवेदविद्व्रती यमांशगेऽतिनिर्घृणः ॥ ५३ ॥**

विधाविति ॥ विधौ चंद्रे शुक्रांशगे सति शुक्रे च नवमपंचमस्थानस्थिते गुरौ लग्नस्थे च सति व्रती वटुः समस्तांश्चतुरो वेदान्वेत्ति जानाति तादृशः स्यात्। एवं यमांशगे शनिनवांशस्थिते चंद्रे सति लग्ने गुरौ च सति सिते त्रिकोणगे सत्यप्यतिनिर्घृणः स्यात्। यदाह महेश्वरः—'जीवे लग्नमधिष्ठिते भृगुसुते धर्मात्मजस्थे विधौ। शुक्रांशेऽखिलवेदविद्रविसुतस्यांशे कृतघ्नोऽधमः ॥' इति। अपरे तु गुरुशुक्रयुक्तेऽपि शन्यंशस्थे चंद्रे सत्यतिनिर्घृण इति व्याचक्षते। तदुक्तं रत्नमालायाम्—'लग्ने जीवे भार्गवे च त्रिकोणे शुक्रांशस्थे स्याद्विधौ वेदवेदी। मांदांशस्थे सूरिलग्ने सशुक्रे विद्याशीलप्रोज्झितः स्यात्कृतघ्नः ॥' इति। सूरिलग्ने=सूरिर्बृहस्पतिस्तद्युक्ते लग्ने। इति व्रतबंधे लग्नविचारः ॥ ननु व्रतबंधे वटुराशितोऽष्टमभवनादिशुद्धिरुक्ता। यदाह वसिष्ठः—'न नैधनं नैधनशुद्धिलग्नं न नैधनर्क्षं न च तन्नवांशः। न नैधनेशो न तदंशको वा लग्ने प्रशस्तो न च रात्रिनाथः ॥' इति। सा ग्रंथकृता कुतो नोक्तेति। अत्र ग्रंथकृदाशयं वयं ब्रूमः—'वीक्षिते वार्थैकविंशन्महादोषविवर्जिते' इति नारदोक्तेस्तेषां दोषाणां च विवाहप्रकरणे वक्ष्यमाणत्वात्तत्रापि दंपत्योरष्टमं लग्नमित्यपि दोषः सलक्षणो वक्ष्यते। तत्र दंपत्योरिति संस्कार्योपलक्षणम्; तेन बटोरप्यष्टमभवने शुद्धिरुक्तैवेत्यत्र पुनर्नोक्ता। यत्र तु एकविंशतिदोषविचारो नास्ति सीमंतादौ किंतु कतिपयदोषविचारस्तत्र तु साक्षादष्टमभवनशुद्धिरुक्ता, अग्रेऽपि यात्रादौ वक्ष्यते चेति। एवं चेन्नैधननवांशशुद्ध्यादि कुतो नोक्तम्? सत्यम्। वक्तव्यमेवेति ब्रूमः। परंतु नारदाद्यनेकमुनिभिरप्रणीतत्वान्नोक्तमिति ग्रंथकृदाशयः। एवंविधे व्रतबंधलग्ने व्रतं कुर्यात्। तदाह नारदः—'शुभलग्ने शुभांशे वा नैधने शुद्धिसंयुते। लग्ने त्वन्यैः सौम्यखेटैः संयुते वा निरीक्षिते ॥ जीवार्कशुक्रचंद्राद्यैः पंचभिर्बलिभिर्ग्रहैः। स्थानादिबलसंपन्नैश्चतुर्भिर्वा बलान्वितैः ॥ वीक्षिते वार्थैकविंशन्महादोषविवर्जिते ॥' इति। अथ सर्वथा यदि निर्दूषणं लग्नं न लभ्यते तदा का गतिरिति। उच्यते,–वेधादिमहादोषराहित्ये सत्यल्पदोषसत्वे

गुणाधिक्ये च लग्नं साधीयो भवति । तदुक्तं नारदेन—'लग्नं सर्वगुणोपेतं लभ्यतेऽल्पैर्दिनैर्न तत् । दोषाल्पत्वं गुणाधिक्यं बहुसंमतमिष्यते ॥ दोषदुष्टो हि कालो यः सोऽपमाहुं न शक्यते ॥' इति । दोषदुष्टत्वं वसिष्ठेनोक्तम्—'दोषोऽप्येको गुणान्हंति तद्विरोधी गुणो न चेत् । पंचगव्यमयं पूर्णकुंभं मद्यलवो यथा ॥' इति । दोषः=पापग्रहवेधादिः । अन्येऽपि दोषा अत्र व्रतबंधे वसिष्ठादिभिरुक्ताः-'ग्रहे रवींद्वोरवनिप्रकंपे केतूद्गमोल्कापतनादिदोषे । व्रते दशाहानि वदंति तज्ज्ञास्त्रयोदशाहानि वदंति केचित् ॥' श्रीपतिनिबंधे—'पौषादिचतुरो मासान्प्राप्ता वृष्टिरकालजा । व्रतं यात्रां विवाहं च वर्जयेत्सप्तवासरान् ॥' यत्तु गर्गवाक्यम्-'बहुवर्षे त्रिरात्रं स्यादल्पवर्षे तु वासरम् । यदि वर्षेदनध्याये तेनैव सह गच्छति ॥' इति । तदृजं प्रकृत्याभिधानात् न केवलवृष्टौ दोषः अकालवृष्टौ तु दोष एवेति ॥ ५३ ॥

अथैवं व्रतबंधलग्नमभिधायेदानीं दोषवत्त्वप्रतिज्ञातानध्यायाश्चतुर्दश-स्तार्थमाह—

शुचिशुक्रपौषतपसां दिगश्विरुद्रार्कसंख्यसिततिथयः ।
भूतादित्रितयाष्टमि संक्रमणं च व्रतेष्वनध्यायाः ॥ ५४ ॥

शुचीति ॥ द्विविधा ह्यनध्यायाः-नित्या नैमित्तिकाश्च । तत्र आषाढशुक्लदशमी ज्येष्ठशुक्लद्वितीया पौषशुक्लैकादशी मन्वादिः माघशुक्लद्वादशी एता अनध्यायाख्याः सोपपदाख्याः । तदुक्तं स्मृतौ-'सिता ज्येष्ठे द्वितीया च आषाढे दशमी सिता । चतुर्थी द्वादशी माघे एताः सोपपदाः स्मृताः ॥' इति । भूतेति । भूतं चतुर्दशी, तदादित्रितयं चतुर्दशीपूर्णिमाप्रतिपदः । कृष्णपक्षे च अमावास्या च तन्मध्ये । तथाष्टमी भूतादित्रितयं चाष्टमी चानयोः समाहारद्वंद्वे नपुंसकत्वे ह्रस्वत्वं ज्ञेयम् । तथा संक्रमणं सूर्यस्य निरयनसंक्रांतिदिनं चकारात् 'मन्वाद्याश्चितिथी मधौ' (१।४७) इति पद्योक्ता मन्वादयो युगादयश्चानध्याया ज्ञेयाः । व्रतेष्विति पदमावश्यकत्वद्योतनार्थम् । यदाह गौतमः—'पक्षद्वये चतुर्दश्योरष्टमीद्वितये तथा । पक्षादावपि पक्षांते ब्रह्म नाधीयते नरैः ॥' ब्रह्म= वेदः । हारीतेन विशेष उक्तः-'प्रतिपत्सु चतुर्दश्यामष्टम्यां पर्वणोर्द्वयोः । श्वोऽनध्यायाद्यशर्वर्यां नाधीयीत कदाचन ॥' इति । श्वोऽनध्यायाद्यशर्वर्यामिति मन्वाद्यनध्यायविषयम् । चतुर्दश्यादिषु तु पूर्वदिने प्रदोषसद्भावादेवाध्ययनाभावः । फलं च ज्योतिःसारे—'अष्टमी हंत्युपाध्यायं शिष्यं हंति चतुर्दशी । अमावास्योभयं हंति प्रतिपत् पाठनाशिनी ॥' इति । वृद्धमनुः—'चातुर्मास्यद्वितीयासु मन्वादिषु युगादिषु । अष्टकासु च संक्रांतौ, शयने बोधने हरेः ॥ अनध्यायं प्रकुर्वीत तथा सोपपदासु च ॥' इति । चातुर्मास्यद्वितीया गर्गेणोक्ताः—'आषाढफाल्गुनोर्जेषु या द्वितीया विधुक्षये । चातुर्मास्यद्वितीयास्ताः प्रवदंति महर्षयः ॥' इति । विधुक्षये= कृष्णपक्षे । कृष्णादिमासगणनया चैत्रश्रावणमार्गशीर्षमासकृष्णपक्षसंबंधिन्यो

द्वितीया चातुर्मास्यद्वितीया इत्यर्थः । अत एवोक्तं ज्योतिःसारसागरे—'चातुर्मास्यसमाप्तौ तु या द्वितीया भवेत्तदा । सर्वास्वेतास्वनध्यायः पुराणैः परिकीर्तितः ॥' इति । चत्वारो मासाश्चातुर्मास्यमिति यौगिकशब्दः । ब्राह्मणादित्वात्स्वार्थे ष्यञ् । तथा च स्मृत्यर्थसारे—'आषाढी कार्तिकी फाल्गुनी पूर्णिमा प्रतिपद्द्वितीयासु च' इत्यनध्यायप्रकरणेऽभिहितम् । मन्वादयो युगादयश्चाग्रप्रकरणेऽभिहिताः । अष्टकास्तूक्ताः स्मृतौ—'पौषादित्रिषु मासेषु कृष्णे चैवाष्टकात्रयम् । एका श्रेयाश्विने मासि हायने चतुरष्टकाः ॥ अष्टका च समुद्दिष्टा सप्तम्यादिदिनत्रयम् । नाधीयीत च शाखाभि व्रतबंधं च वर्जयेत् ॥' इति । अनध्यायप्रयोजनमाह वसिष्ठः—'पापांशकगते चंद्रे स्वाधिनीचस्थितेऽपि वा । अनध्याये चोपनीतः पुनःसंस्कारमर्हति ॥' इति । अत्रानध्याये इत्येतद्विहितानध्यायव्यतिरिक्तानध्यायविषयम् । अन्यथा—'नैमित्तिकमनध्यायं कृष्णे च प्रतिपद्दिनम् । मेखलाबंधने शस्तं चौले वेदव्रतेष्वपि ॥' इति वसिष्ठवाक्यमनर्थकमापद्येत । नैमित्तिकानध्यायानां तर्हि किं प्रयोजनमिति चेत् । वेदाद्यध्ययननिवृत्तिरित्यवगच्छ । एवं सति 'नार्तः कालमपेक्षते' इति लौकिकन्यायादतीतकालस्य बटोः कालांतरप्रतीक्षामसहमानस्यावश्यकोपनयनविषयमिति निष्कृष्टोऽर्थः । अत एवोक्तं व्यासेन—'प्रशस्ता प्रतिपत् कृष्णे कदाचिच्छुभगे विधौ । चंद्रे बलयुते लग्ने वर्षाणामतिलंघने ॥' इति । प्रतिपद्ग्रहणं कैमुतिकन्यायसूचनार्थम् । नैमित्तिकानध्यायास्तु अस्माभिः 'मन्वाद्याः' (३।५७) इति पद्यविवरणावसरे निरूपिताः ॥ ५४ ॥

अथ दोषवत्त्वप्रतिज्ञानात्प्रदोषाननुष्टुभाह—

**अर्कतर्कत्रितिथिषु प्रदोषः स्यात्तदग्रिमैः ।**
**रात्र्यर्धसार्धप्रहरयाममध्यस्थितैः क्रमात् ॥ ५५ ॥**

अर्केति ॥ अर्कतर्कत्रितिथिषु तदग्रिमैरर्कादितिथिभ्योऽग्रिमैस्त्रयोदशीसप्तमीचतुर्थीतिथिभिः रात्र्यर्धसार्धप्रहरयाममध्ये स्थितैरर्कत्रितिथिषु प्रदोषः स्यात् । यथा द्वादश्यामर्धरात्रात्प्राक् त्रयोदशीप्रवृत्तौ प्रदोषः स्यात्; षष्ठ्यां सार्धप्रहरमध्ये सप्तमीप्रवृत्तिः तदा प्रदोषः स्यात्; तथा तृतीयायां प्रहरमध्ये चतुर्थीप्रवेशे प्रदोष इत्यर्थः । उक्तं च—'चतुर्थी प्रथमे यामे सार्धयामे च सप्तमी । यामद्वये त्रयोदश्यां प्रदोषः सर्वघातकः ॥' इति । इदं निर्मूलत्वादुपेक्ष्यम् । दीपिकाटीकायां तूपनयनपद्यव्याख्याने प्रदोषपरिज्ञानं चाह गर्ग इत्युक्त्वोक्तम्—'चतुर्थी याममेकं तु सार्धयामे च सप्तमी । अर्धरात्रं त्रयोदश्यां प्रदोषो रजनीमुखम् ॥ अत्र नाध्यापयेद्वेदं वेदांगानि च सर्वथा । अत्राध्ययनशीलस्य प्रदोषः सर्वघातकः ॥' इति । गोभिलेन चैवमुक्तम्-'षष्ठी च द्वादशी चैव अर्धरात्रोननाडिका । प्रदोषमिह कुर्वीत तृतीया नवनाडिका ॥' इति । स्मृत्यर्थसारेऽपि-'चतुर्थ्याः पूर्वरात्रे तु नव-

---

१ 'त्रयोदश्यर्धरात्रे च' इति पाठः ।

नाख्यां प्रदर्शने । नाध्येयं पूर्वरात्रे स्यात्सप्तमी च त्रयोदशी ॥ अर्धरात्रात्पुरा चेत्स्यान्नाध्येयं पूर्वरात्रके ॥' इति । तदेतयोः पक्षयोर्देशाचारतो व्यवस्थेति । ननु रात्र्यर्धमिति 'अर्धं समेंऽशके' इत्यभिधानात्समांशवाचिनोऽर्धशब्दस्य नपुंसकलिंगत्वात् 'अर्धं नपुंसकम्' इति समासे 'प्रथमानिर्दिष्टं समास उपसर्जनम्' इत्यर्धशब्दस्योपसर्जनसंज्ञत्वात् 'उपसर्जनं पूर्वम्' इति पूर्वनिपाते च 'अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः' इत्यच्प्रत्यये कृते 'यस्येति च' इनीकारलोपे च 'रात्राह्नाहाः पुंसि' इति पुंस्त्वे अर्धरात्र इति भवितव्यं, न पुना रात्र्यर्धमिति चेत् । उच्यते,—नात्र समांशवाच्यर्धशब्दः । यथा ग्रामार्धो नगरार्ध इत्यत्र । किं तर्हि ? 'भित्तं शकलखंडे वा पुंस्यर्धोऽर्धम्' इत्यभिधानात्केवलविभागवाची । कथं ? द्वितीयप्रहरस्य चरमघटिकातृतीयप्रहरस्य प्रथमघटिका त्वेवं घटिकाद्वययुक्तः कालो निशीथशब्दवाच्यः । एतच्च जन्माष्टमीनिर्णये— 'अर्धरात्रादधश्चोर्ध्वमेकार्धघटिकान्विता । रोहिणी चाष्टमी ग्राह्या उपवासव्रतादिषु ॥' इति योगीश्वरपद्यव्याख्याने व्याख्यातं माधवेन । ततश्च समांशवाचित्वाभावादर्धशब्दस्य नैकदेशिसमासः। किं तर्हि ? षष्ठीत्यनेन षष्ठीसमासे षष्ठ्यंतस्य पूर्वनिपातः । अत्रैव-'रात्रौ यामद्वयादर्वाग्यदि पश्येत्त्रयोदशीम् । प्रदोषः स तु विज्ञेयो गर्हितः सर्वकर्मसु' ॥ इति गोभिलवाक्यमप्यनुकूलम् । इदमेवाभिप्रेत्य 'रात्र्यर्धपूर्वापरगा जयंती कलयापि वा' इति वराहेणापि रात्र्यर्धपदं प्रयुक्तम् । यत्र तु समांशवाचित्वं विवक्षितं, 'सिद्धांतपक्षस्तु परं दिनार्धाद्विशा निशार्धात्परतो दिनश्री'रिति विवाहवृंदावनपद्यादौ, तत्र तादृशाः प्रयोगाश्चिंत्याः ॥ ५५ ॥

अथ व्रतबंधानंतरं सायंकाले बह्वृचानां ब्रह्मौदनाख्यः संस्कारोऽभिहितस्तत्र विशेषमार्ययाह—

प्राग्ब्रह्मौदनपाकाद्व्रतबंधानंतरं यदि चेत् ।
उत्पातानध्ययनोत्पत्तावपि शांतिपूर्वकं तत्स्यात् ॥५६॥

प्रागिति ॥ यदि व्रतबंधात्प्रागकालिकाद्यनध्याय उत्पातो वा भवेत्तदा न कार्य एव व्रतबंधः। दैवान्निर्दुष्टे काले व्रतबंधो निर्वृत्तस्तदुत्तरं सायंकालीनब्रह्मौदनविधेः पूर्वमुत्पातप्रयुक्ता कालाशुद्धिरथवाऽनध्यायो वा स्यात्तदानिष्टमुक्तम् । उक्तं च नृसिंहप्रसादे—'ब्रह्मौदनविधेः पूर्वं प्रदोषे गर्जितं भवेत् । तदा विघ्नकरं ज्ञेयं बटोरध्ययनस्य तत् ॥' अतस्तद्ब्रह्मौदनं शांतिपूर्वकमादौ शांतिं विधाय पश्चात्स्यात् । शांतिप्रकारस्तु नृसिंहप्रसादे— 'तस्य शांतिप्रकारं तु वक्ष्ये शास्त्रानुसारतः । स्वस्तिवाचनपूर्वं तु हवनं कारयेद्बुधः ॥ प्रधानं पायसं साज्यं द्रव्यं शांतियजौ भवेत् । सूक्तं बृहस्पतेर्विद्वान्पटेद्विद्यासमृद्धये ॥ गायत्रीं युंजते मंत्रः प्रायश्चित्तं तु सर्पिषा । धेनुं सवत्सकां दद्यादाचार्याय पयस्विनीम् ॥ शिलां होमविधेः पश्चात्स्थापयेत्तत्र

संसदि। ब्राह्मणान्भोजयेत्पश्चात्ततो ब्रह्मौदनं चरेत् ॥' इति। अत्रैतस्य विचारस्य मुहूर्तविचारेऽनुपयोगान्मूलपद्यनिबंधो यद्यपि स्वयमवक्तव्यस्तथापि सकलजनप्रसिद्ध्यर्थमभिहितः ॥ ५६ ॥

अथ पूर्वं द्वाविंशतिनक्षत्राण्यभिहितानि सामान्यतस्तेषां वेदपरत्वेन विशेषं वसंततिलकयाह—

वेदक्रमाच्छशिशिवाहिकरत्रिमूल-
पूर्वासु पौष्णकरमैत्रमृगादितीज्ये।
ध्रौवेषु, चाश्विवसुपुष्यकरोत्तरेश-
कर्णे मृगांत्यलघुमैत्रधनादितौ सत् ॥ ५७ ॥

वेदक्रमादिति ॥ मृगार्द्राश्लेषाहस्तचित्रास्वातीमूलपूर्वात्रयेषु ऋग्वेदाध्यायिनां, रेवतीहस्तानुराधामृगपुनर्वसुपुष्यरोहिण्युत्तरात्रयेषु यजुर्वेदाध्यायिनां, अश्विनीधनिष्ठापुष्यहस्तोत्तरात्रयार्द्राश्रवणेषु सामवेदाध्यायिनां, मृगरेवतीपुष्याश्विनीहस्तानुराधाधनिष्ठापुनर्वसुषु अथर्वणवेदाध्यायिनां पूर्वश्लोकानुवृत्तत्तत्पदपरामृष्टमुपनयनं सत् शुभमित्यर्थः। उक्तं च ज्योतिर्निबंधे—'मूले हस्तत्रये सार्पे शैवे पूर्वात्रये तथा। ऋग्वेदाध्यायिनां कार्यं मेखलाबंधनं बुधैः ॥ पुष्ये पुनर्वसौ पौष्णे हस्ते मैत्रे शशांकभे। ध्रुवेषु च प्रशस्तं स्याद्यजुषां मौंजिबंधनम्। पुष्यवासवहस्ताश्विशिवकर्णोत्तरात्रयम्। प्रशस्तं मेखलाबंधे बटूनां सामगायिनाम् ॥ मृगमैत्राश्विनीहस्तरेवत्यदितिवासवम्। अथर्वपाठिनां शस्तो भगणोऽयं व्रतार्पणे ॥' इति ॥ ५७ ॥

अथ धर्मशास्त्रीयं विशेषमनुष्टुभाह—

नांदीश्राद्धोत्तरं मातुः पुष्पे लग्नांतरेऽसति।
शांत्या चौलं व्रतं पाणिग्रहः कार्योऽन्यथा न सत् ॥५८॥

नांदीश्राद्धेति ॥ बहुघटीसाध्यानां शुभकर्मणां प्रारंभे सकलशुभाशुभकर्मसाधारणनांदीश्राद्धाख्यं कर्माभिहितं, तत्कृत्यानंतरं यदि संस्कार्यमातुः पुष्पे रजोदर्शने जाते सति लग्नांतरे विवक्षितलग्नादन्यस्मिन् लग्ने च असति तदावश्यकत्वाद्धर्मशास्त्रोक्तां शांतिं विधाय चौलं व्रतं यज्ञोपवीतं पाणिग्रहो विवाहश्च कार्यः। अन्यथा समीचीनद्वितीयलग्नत्वे सति चौलादिशुभकर्म न सत्, दुष्टफलदमित्यर्थः। उक्तं च मेधातिथिना—'चौले च व्रतबंधे च विवाहे यज्ञकर्मणि। भार्या रजस्वला यस्य प्रायस्तस्य न शोभनम् ॥ वधूवरान्यतरयोर्जननी चेद्रजस्वला। तस्याः शुद्धेः परं कार्यं मांगल्यं मनुरब्रवीत् ॥' वृद्धमनुरपि—'विवाहव्रतचूडासु यदि माता रजस्वला। तदा न तत्प्रकर्तव्यमायुःक्षयकरं यतः ॥' बृहस्पतिः—'वैधव्यं च विवाहे स्याज्जडत्वं

व्रतबंधने । चूडायां च शिशोर्मृत्युर्विघ्नं यात्राप्रवेशयोः ॥' रजोविषयमेत-ज्ज्ञेयम् । प्रचेताः—'प्राप्य चाभ्युदयश्राद्धं पुत्रसंस्कारकर्मणि । पत्नी रजस्वला जाता न कुर्यात्तत्पिता तदा ॥' इति । पितेति नांदीश्राद्धकर्तुरुपलक्षणम् । तथा च वृद्धगर्गेण—'पिता पितामहो भ्राता ज्ञातयो गोत्रजाग्रजाः । उपा-यनेऽधिकारी स्यात्पूर्वाभावे परः परः ॥' इत्यादयोऽधिकारिण उपनयनेऽभि-हिताः । तस्मात्संस्कार्यमातरि रजस्वलायां लग्नान्तरसद्भावे च न कार्यमेव चौलादि । लग्नांतराभावे तु शांतिप्रकारो वाक्यसारे—'अलाभे सुमुहूर्तस्य रजोदोषे ह्युपस्थिते । श्रियं संपूज्य विधिवत्ततो मंगलमाचरेत् । हैमीं माष-मितां पद्मां श्रीसूक्तविधिनार्चयेत् । प्रत्यृचं पायसं हुत्वाभिषिच्य हितमा-चरेत् ॥' इति । अस्याप्यपवादस्तत्रैव—'उपवासेन शुध्यंति नार्यः सद्यो रज-स्वलाः । एकाकिन्यो विवाहादौ देशभंगेषु चापदि ॥' इति । एतच्च सर्वं वक्तु-मनुचितं मुहूर्तविचारार्थं प्रवृत्तत्वात् ग्रंथकर्तुः, यतोऽत्र न कश्चिन्मुहूर्तविचारः प्रतिपाद्य इति । परंतु सकलजनप्रसिद्धः शास्त्रार्थो भवत्विन्युक्तम् ॥ इति सपरिकरो व्रतबंधः समाप्तः ॥ ५८ ॥

अथैवं त्रैवर्णिकानां व्रतबंधमुक्त्वेदानीं केशांतकर्मादि वक्ष्यति—

विचैत्रव्रतमासादौ विभौमास्ते विभूमिजे ।
छूरिकाबंधनं शस्तं नृपाणां प्राग्विवाहतः ॥ ५९ ॥

विचैत्रेति ॥ चैत्ररहितेषूपनयनमासेषु माघफाल्गुनवैशाखज्येष्ठेष्वित्यर्थः । आदिशब्देन व्रतबंधनोक्तपक्षतिथिनक्षत्रलग्नादीनां ग्रहणम् । तस्मिन्कीदृशे ? विभौमास्ते मंगलास्तरहिते । गुरुशुक्रयोरस्तवर्जनं सामान्यनिषेधेन सिद्ध-त्वान्न पृथगुक्तम् । तथा विभूमिजे मंगलवाररहिते सूर्यादिवारे एतादृशे काले सति नृपाणां क्षत्रियाणां विवाहतः पूर्वं छूरिकाया अल्पशस्त्रविशेषस्य कट्यां बंधनं कार्यमिति शेषः । तच्छस्तं हितकारि । उक्तं च नारदेन—'छूरिकाबंधनं वक्ष्ये नृपाणां प्राक्करग्रहात् । विवाहोक्तेषु मासेषु शुक्लपक्षे-ऽप्यनस्तगे ॥ जीवे शुक्रे च भूपुत्रे चंद्रताराबलान्विते । मौंजीबंधनऋक्षेषु भौमवर्जितवासरे ॥ व्रतलग्नोदये कर्तुरष्टमोदयवर्जिते । धनत्रिकोणगैः सौम्यैः पापैर्भवरिपुत्रिगैः ॥ छूरिकाबंधनं कार्यमर्चयित्वा सुरान् पितॄन् । अर्चये-च्छूरिकां सम्यक् देवतानां च सन्निधौ । ततः सुलग्ने बध्नीयात्कट्यां लक्षणसं-युताम् ॥' इति लक्षणानि नारदवराहाभ्यामुक्तानि, ग्रंथभूयस्त्वभयात्सं-प्रदायव्याख्यागम्यत्वाच्चास्माभिर्नोक्तानि । अत्र प्राग्विवाहत इत्युक्तेरवधि-निश्चयात् समावर्तनानंतरं छूरिकाबंधनं कार्यं विवाहभूषणत्वात्तस्य । यदि यज्ञोपवीतानंतरमेव चिकीर्षितं स्यात्तदोपनयनानंतरं कार्यमित्येव ब्रूयात् । ग्रंथकर्त्रा तु नारदोक्तक्रममंगीकृत्यैवमुक्तम् । तत्र पाठक्रमो बलीयान् इति समाधिः ॥ ५९ ॥

अथ केशांतसमावर्तनमुहूर्तमनुष्टुभाह—

केशांतं षोडशे वर्षे चौलोक्तदिवसे शुभम् ।
व्रतोक्तदिवसादौ हि समावर्तनमिष्यते ॥ ६० ॥

केशांतमिति ॥ षोडशे वर्षे चौलोक्तदिवसे 'चूडा वर्षात्तृतीयात्प्रभवति' (५।२९) इत्यादिना कथितशुभदिवसे गोदानापरपर्यायं केशांतसंज्ञं हि कर्म शुभं स्यात् । गावः केशा दीयंते खंड्यंते यस्मिन्निति व्युत्पत्तिः । यदाह—'केशांतं षोडशे वर्षे कुर्याच्चौलोक्तभादिके' इति । महेश्वरोऽपि—'कर्म केशांतसंज्ञं हि वर्षे स्मृतं षोडशे चौलकर्मोक्तधिष्ण्यादिके' इति । षोडश इत्येतद्ब्राह्मणविषयं द्रष्टव्यम् । क्षत्रियविशोस्तु द्वाविंशतिचतुर्विंशतितमवर्षयोः केशांतमित्यर्थः । तदुक्तं मनुना—'केशांतः षोडशे वर्षे ब्राह्मणस्य विधीयते । राजन्यबंधोर्द्वाविंशे वैश्यस्य व्यधिके ततः ॥' इति । अत्र गोदानस्य महानाम्न्यादिव्रतपूर्वकत्वात्तानि प्रागनुष्ठाय ततो गोदानं विधेयमिति । यदाहाश्वलायनः—'प्रथमं स्यान्महानाम्नी द्वितीयं च महाव्रतम् । तृतीयं स्यादुपनिषद्गोदानं च ततः परम् ॥' इति । अतो जन्मतस्त्रयोदशे वर्षे महानाम्नी, चतुर्दशे महाव्रतं, पंचदशे उपनिषद्व्रतं, षोडशे गोदानमिति । तदुक्तम्—एवं क्षत्रियविशोरप्युक्तं गोदानात्प्राक् वर्षचतुष्टयं क्रमेण महानाम्न्यादि भवति । अत्रापि मुहूर्तविचारश्चौलवदेव । तदुक्तं श्रीधरीये—'तिथिनक्षत्रवाराश्च वर्गोदयनिरीक्षणम् । चौलवत्सर्वमाख्यातं सगोदानव्रतेषु च ॥' इति । यदा पुनर्दैवादतीतकालानि महानाम्न्यादिव्रतानि स्युस्तदा समावर्तनेन सह कार्याणि । व्रतोक्तेति । हि निश्चयेन व्रतं यज्ञोपवीतं तत्र विहितदिवसे । आदिशब्देन वारनक्षत्रलग्नांशेषु सत्सु समावर्तनमिष्यते । यदाह—'गुरुशुद्धिं विना काले व्रतोक्ते व्रतमोक्षणम्' इति । महेश्वरोऽपि—'खेचरैर्व्रतानां विसर्गोदितं कर्म तद्व्रतोक्ते च धिष्ण्यादिके' इति । सुरेश्वरोऽपि—'विभौमभानुजे वारे नक्षत्रे च व्रतोदिते । चंद्रतारविशुद्धौ च स्यात्समावर्तनक्रिया ॥' इति । यत्तु 'क्षौरोदितर्क्षादिविलग्नयोगे मौंजीविमोक्षः शुभदो द्विजानाम् ॥' इति दीपिकाकारादिभिरुक्तं तत् स्वदेशविषयम् । विशेषो नारदोक्तः—'अथोत्तरायणे जीवशुक्रयोर्दृश्यमानयोः । द्विजातीनां गुरोर्गेहान्निवृत्तानां व्रतात्मनाम् ॥ चित्रोत्तरादितीज्येंदुहरिमित्रविधातृषु । भेष्वर्केंदुज्ञार्यशुक्रवारलग्नांशकेष्वपि ॥ अथवा व्रतनक्षत्रवारलग्नांशकेष्वपि । प्रतिपत्पर्वरिक्तामामष्टमीं च दिनक्षयम् । हित्वान्यदिवसे कार्यं समावर्तनमुंडनम् ॥' अत्र कश्यपेन चैत्रो वर्जितः—'चैत्रमासविवर्ज्येषु माघादिषु च पंचसु ॥' इति तदुक्तेः । एतच्च गोदानानंतरं विवाहात्प्राक् कार्यमित्याह वसिष्ठः—'अधीत्य वेदांश्च तदर्थशास्त्राण्यभ्यस्य लब्ध्वा स्वगुरोरनुज्ञाम् । कुर्यात्समावर्तनकर्म पश्चाद्गोदानतः पाणिनिपीडनात्प्राक् ॥' तत्रापि सत्यावश्यकत्वे द्वितीयवर्षे न कार्यमेव । तदुक्तं ग्रंथांतरे—'वधूप्रवेशं व्रतमोचनं च पुंसः पुन-

राष्ट्रभंगे च पित्रोर्वा प्राणसंशये । प्रौढायामपि कन्यायां प्रतिकूलं न दुष्यति ॥' इति । मेधातिथिः—'दीर्घरोगाभिभूतस्य दूरदेशस्थितस्य च । उदासवर्तिनश्चैव प्रतिकूलं न विद्यते ॥ संकटे समनुप्राप्ते याज्ञवल्क्येन योगिना । शांतिरुक्ता गणेशस्य कृत्वा तां शुभमाचरेत् । अकृत्वा शांतिकं यस्तु निषेधे सति दारुणे । यः करोति शुभं तावद्विघ्नं तस्य पदे पदे ॥' इति । अथावश्यकत्वेऽपवादमाह—अथवेति । स्वस्ववर्णपुरस्कारेणाशौचनिर्गमे मरणाशौचनिर्गमे सति शांत्या च स्वनुष्ठितया विवाहः कार्य इति परैराचार्यैरिष्यते । यदाह मेधातिथिः-'प्रेतकार्याण्यनिर्वर्त्य चरेन्नाभ्युदयक्रियाम्' इति । ज्योतिःप्रकाशेऽपि 'प्रतिकूलेऽपि कर्तव्यो विवाहो माससमंतरा । शांतिं विधाय गां दत्त्वा वाग्दानादि चरेद्बुधः ॥' इति । सत्यावश्यकत्वे स्वस्वाशौचादनंतरं मासमध्येऽपि शांतिं विधाय विवाहः कार्य इत्यर्थः । पूरुष इत्यत्र 'अन्येषामपि दृश्यते' इति दीर्घः । 'पुरुषाः पूरुषा नराः' इत्यमरश्च ॥ १७ ॥

अथ 'प्रवेशनिर्गमौ तद्वत्तथा मुंडनमंडने' इति प्रागुक्तमेधातिथिश्लोकोत्तरार्धपदार्थं सापवादमुपजातिकयाह—

**चूडा व्रतं चापि विवाहतो व्रताच्चूडा च नेष्टा पुरुषत्रयांतरे ।**
**वधूप्रवेशाच्च सुताविनिर्गमः षण्मासतो वाब्दविभेदतः शुभः १८**

चूडेति ॥ चूडा चौलं, व्रतमुपनयनं च; अपिशब्दान्महानाम्न्यादिसमावर्तनांतं च विवाहात्परतः पुरुषत्रयांतर एव नेष्टम् । तथा व्रतादुपनयनाच्चूडा पुरुषत्रयपर्यंतं नेष्टा । तथा वध्वाः स्नुषायाः प्रवेशादनंतरं कन्यायाः विनिर्गमोऽपि पुरुषत्रयपर्यंतं नेष्टः । एतन्मूलवाक्यं 'पुरुषत्रयपर्यन्तम्' इत्यादि (पृ० २४२) 'आदौ चौलं ततो मौंजी' इत्यादि च (पृ० २४१) प्राग्लिखितम् । तस्मान्मूलपुरुषस्य चतुर्थत्वादौ नायं दोषः, स चायं दोषः पुरुषत्रये षण्मासपर्यंतमेव । अतः षण्मासत इति मासषट्कानंतरमयं व्यत्यस्तोऽपि विवाहादिः सर्वो विधिः शुभः । एतन्मूलवाक्यमपि 'कुले ऋतुत्रयादर्वाक्' इत्यादि (पृ० २३८) प्रागुक्तम् । अत्रापवाद उच्यते—वेति । वा अथवाऽब्दभेदात् वर्षभेदात् षण्मासमध्येऽपि शुभः । यथा माघे मासि विवाहो वैशाखे चौलं यज्ञोपवीतं वा भवत्येवेत्यर्थः । तदुक्तं संहितासारावल्याम्—'फाल्गुने चैत्रमासे तु पुत्रोद्वाहोपनायने । भेदादब्दस्य कुर्वीत नर्तुत्रयविलंघनम् ॥' इति । अत्र फाल्गुनपदं प्रागब्दगतमासांतरस्याप्युपलक्षणम् । चैत्रपदं चोत्तरवर्षगतवैशाखाद्युपलक्षणम् । तत्र कैमुतिकन्यायेन यत्र स्वल्पं कालांतरं तत्रापि चेत् निषेधाभावस्ततोऽधिकव्यवधाने किं वाच्यमब्दभेदस्यैव प्रयोजकत्वात् ॥ १८ ॥

अथ प्रसंगान्मूलादिदुष्टनक्षत्रोत्पन्नयोर्वधूवरयोः श्वशुरादिपीडकत्वं वसंततिलकयाह—

**श्वश्रूविनाशमहिजौ सुतरां विधत्तः**
**कन्यासुतौ निर्ऋतिजौ श्वशुरं हतश्च ।**

ज्येष्ठाभजाततनया स्वधवाग्रजं च
शक्राग्निजा भवति देवरनाशकर्त्री ॥ १९ ॥

**श्वश्रूविनाशमिति** ॥ अहिजावाश्लेषोत्पन्नौ कन्यासुतौ श्वश्र्वाः साक्षाद्भर्तृमातुर्विनाशं विधत्तः कुरुतः । तथा निर्ऋतिजौ मूलोत्पन्नौ कन्यासुतौ श्वशुरं हतो मारयतः । उक्तं च **वसिष्ठेन**—'नैर्ऋत्यभोद्भूतसुतः सुता वा क्षिप्रादवश्यं श्वशुरं निहंति । तदंत्यपादे जनितो निहंति नैवोत्क्रमेणाहिभवः कलत्रम् ॥' इति । अहिभव इति पुंस्त्वमविवक्षितम् । सुतः सुता वेति पूर्वोक्तेः । 'मूलजा श्वशुरं हंति व्यालजा च तदंगनाम्' इति **नारदोक्तेश्च** । तस्य श्वशुरस्यांगनां पत्नीम् । वरस्य कन्याया वा साक्षान्मातरं नतु सापत्नमातरं हंतीत्यर्थः । तदेव स्पष्टमुक्तं **वसिष्ठेन**—'जनकं जननीं हंति भर्तुर्मूलाहिधिष्ण्यजा' इति । तुल्यन्यायत्वात्कन्याया अपि साक्षान्मातरम् । **ज्येष्ठेति** । ज्येष्ठानक्षत्रोत्पन्ना कन्या स्वधवाग्रजं भर्तुर्ज्येष्ठभ्रातरं हंति । शक्राग्निजा विशाखानक्षत्रोत्पन्ना कन्या देवरस्य भर्तुः कनिष्ठबंधोर्नाशकर्त्री भवति । यदाह **वसिष्ठः**—'सुरेशताराजनिता धवाग्रजं द्विदैवताराजनिता तु देवरम्' इति । हंतीत्यनुवर्तते । **नारदोऽपि**—'ऐंद्री पत्यग्रजं हंति देवरं तु द्विदैवजा' इति ॥ १९ ॥

अथ विशाखामूलाश्लेषोत्पन्नप्रोक्तदोषापवादमनुष्टुभाह—

द्वीशाद्यपादत्रयजा कन्या देवरसौख्यदा ।
मूलांत्यपादसार्पाद्यपादजौ तौ तयोः शुभौ ॥ २० ॥

**द्वीशेति** ॥ द्वीशं=विशाखा । अन्यत्पूर्वार्धे स्पष्टमेव । यदाह **च्यवनः**—'विशाखातुलया युक्ता देवरस्य शुभावहा । विशाखावृश्चिकोद्भूता देवरं हंत्यसंशयम् ॥' इति । **वृद्धनारदोऽपि**—'न हंति देवरं कन्या तुलामिश्रद्विदैवजा । चतुर्थपादजा त्याज्या दुष्टा वृश्चिकपुच्छवत् ॥' तस्माद्विशाखाचतुर्थपादे निषेधः फलित इत्यर्थः । **मूलेति** । तयोः=श्वशुरश्वश्र्वोः । मूलचतुर्थचरणोत्पन्नौ तौ कन्यासुतौ श्वशुरसौख्यदौ आश्लेषाद्यचरणोत्पन्नौ कन्यासुतौ श्वश्र्वोः सौख्यदौ । तदुक्तं **नारदेन**—'सुतः सुता वा नियतं श्वशुरं हंति मूलजः । तदंत्यपादजो नैव तथाश्लेषाद्यपादजः ॥' अत्र पुंस्त्वमविवक्षितम् । हेतुः स एव । इति वधूवरयोः सामान्यतो गुणदोषविचारः ॥ २० ॥

अथैवं वधूवरयोः सामान्यतो गुणदोषविचारं निरूप्य मेलकसंबंधी विचारः प्रस्तूयते । तत्र केचिद्दशकूटान्याहुः । तदाह **नारदः**—'दिनं गणं च माहेंद्रं स्त्रीदीर्घं योनिरेव च । राशिराश्यधिपौ रज्जुर्वश्यं वेधो दश स्मृताः ॥ पुनश्च वर्णकूटं च माहेन्द्रं च ततः परम् । एते द्वादशयोगाश्च प्रीतिभेदाः प्रकीर्तिताः ॥' इति । अन्येऽष्टादशकूटान्याहुः । यदाह **गर्गः**—'माहेंद्रं गणकूटं च दिनकूटं च योनिजम् । स्त्रीदीर्घं रज्जुकूटं च वश्यं वर्णाख्यकूटकम् ॥ राशिराश्यधिपाख्ये च वेधो नाड्याख्यकूटकम् । भूतलिंगाख्यकूटं च जात्याख्यं पक्षिकूट-

कम्। योगिनीगोत्रकूटं च कूटान्यष्टादशैव तु। दंपत्योर्वृद्धिकारीणि यत्नाचिंत्यानि शास्त्रतः॥' इति। तत्र दशकूटानां तत्तद्देशविशेषप्रसिद्धत्वात्तानि विहाय सर्वदेशप्रसिद्धान्यष्टकूटानि सलक्षणानि विवक्षुरादौ तान्यनुष्टुप्छंदसाह—

वर्णो वश्यं तथा तारा योनिश्च ग्रहमैत्रकम्।
गणमैत्रं भकूटं च नाडी चैते गुणाधिकाः॥ २१॥

वर्ण इति॥ एते राशिकूटभेदा वर्णादिमैत्र्यां सत्यां गुणाधिका एकादिगुणाधिकाः स्युः। यथा-वर्णमैत्र्यामेको गुणः, वश्ये द्वौ गुणौ, तारायां त्रयो गुणाः, योनिमैत्र्यां चत्वारः, ग्रहमैत्र्यां पंच, गणमैत्र्यां षट्, सद्भकूटे सप्त, नाडीभेदेऽष्टौ इत्यर्थः। तदुक्तम्-'वर्णो वश्यं तारा योनिग्रहगणभकूटनाड्यश्च। ज्ञेया यथोत्तरं ते बलिनः स्त्रीपुंसयोर्घटने॥' इति। स्त्रीपुंसयोरिति 'अचतुर-' इत्यादिना निपातितः। दैवज्ञमनोहरेऽपि—'नाडीभेदे गुणा अष्टौ सप्त सद्राशिकूटके। षट् गुणा गणमैत्र्यां च सौहार्दे पंच खेटयोः॥ योनिमैत्र्यां च चत्वारस्त्रयस्ताराबले गुणाः। वश्यत्वे द्वौ गुणौ प्रोक्तौ वर्ण एकः प्रकीर्तितः॥' इति॥ २१॥

अथ प्रतिज्ञाक्रमेण वर्णकूटं तावत्प्रमाणिकयाह—

द्विजा झपालिकर्कटास्ततो नृपा विशोऽङ्घ्रिजाः।
वरस्य वर्णतोऽधिका वधूर्न शस्यते बुधैः॥ २२॥

द्विजा इति॥ मीनवृश्चिककर्कराशयो द्विजाः ब्राह्मणाः। ततोऽनंतरमन्ये मेषसिंहधनूराशयो नृपाः क्षत्रियाः। वृषकन्यामकरा विशो वैश्याः। मिथुनतुलाकुंभा अंघ्रिजाः शूद्राः। ततश्च वधूवरराश्योर्वर्णौ ज्ञात्वा वरस्य वर्णतः ब्राह्मणादिकाद्वधूरधिका ज्येष्ठवर्णा बुधैर्न शस्यते। किंतु समा हीना वा शस्यत इत्यर्थः। यदाह नारदः—'झपालिकर्कटा विप्रास्तदूर्ध्वाः क्षत्रियादयः। पुंवर्णराशेः स्त्रीराशौ समे हीने तथा शुभम्॥ वर्णज्येष्ठा तु या नारी वर्णहीनस्तु यः पुमान्। विवाहं यदि कुर्वीत तस्या भर्ता विनश्यति॥' अत्रैको गुणो वर्णाधिके वरे वर्णसमे वा। वर्णहीने तु गुणाभावः। तदुक्तं दैवज्ञमनोहरे—'एको गुणः सदृग्वर्णे तथा वर्णोत्तमे वरे। हीनवर्णे वरे शून्यं केऽप्याहुः सदृशे दलम्॥' इति। दलम्=अर्धम्॥ २२॥

अथ वश्यकूटमिंद्रवज्रयाह—

हित्वा मृगेंद्रं नरराशिवश्याः सर्वे तथैषां जलजास्तु भक्ष्याः।
सर्वेऽपि सिंहस्य वशे विनालिं ज्ञेयं नराणां व्यवहारतोऽन्यत्॥ २३॥

हित्वेति॥ नरराशयो मिथुनकन्यातुलाः, एषां सर्वेऽपि मेषादयः सिंहं त्यक्त्वा वश्याः। ननु मनुष्याणां जलचराः कथं वश्याः? यत उभयोः

सहावस्थानाभाव इत्यत आह–तथेति। एषां नरराशीनां जलजाः कर्कमकरकुंभमीनास्तु भक्ष्याः, किं पुनर्वश्या इति सूचयितुं तुशब्दः। सिंहस्य वशेऽलिं वृश्चिकं विना सर्वे राशयो वश्याः। अन्यदनुक्तं चतुष्पदानां जलचराणां चतुष्पादजलचराणां वा परस्परं वश्यावश्यं नराणां मनुष्याणां व्यवहारतो ज्ञेयम्। यदाह वसिष्ठः—'वश्यास्त्यक्त्वा राशयोऽन्ये नृभानां सिंहं तस्याप्येकमन्ये विधेयाः। कीटं त्यक्त्वा लोकतोऽन्यत्प्रसिद्धं वश्यावश्यं नैव तोयालयाश्च॥' तोयाः तोयालया जलचराः अलिश्च ते परस्परं वश्या नैव स्युरित्यर्थः। अत्र गुणविभागो दैवज्ञमनोहरेऽभिहितः—'सख्यं वैरं च भक्ष्यं च वश्यमाहुस्त्रिधा बुधाः। वैरे भक्ष्ये गुणाभावो द्वयोः सख्ये गुणद्वयम्॥ वश्यवैरे गुणस्त्वेको वश्यभक्ष्ये गुणोऽधिकः।' इति। यद्यपीदं वधूवरयोः परस्परं तुल्यमेवोक्तं तथापि सत्यावश्यकत्वे वरं प्रति भक्ष्यत्वं वश्यत्वं वा स्त्रियोऽपेक्ष्यं, न तु विपरीतम्। 'वर्णज्येष्ठा तु या नारी' इत्यनेन समानन्यायत्वात्। अन्योन्यवश्यत्वे तूत्तममेव॥ २३॥

अथ ताराकूटमनुष्टुभाह—

कन्यर्क्षाद्वरभं यावत्कन्याभं वरभादपि।
गणयेन्नवहृच्छेषे त्रीष्वद्रिभमसत्स्मृतम्॥ २४॥

कन्यर्क्षादिति॥ कन्याजन्मनक्षत्राद्वरनक्षत्रं यावद्गणयेत्, तथा वरनक्षत्रादपि कन्यानक्षत्रं गणयेत्; ततोऽवशिष्टेऽङ्के नवभिर्भक्ते यदवशिष्टं तच्च त्रिपंचसप्तमितं भवेत्तदा असत् अशुभदं स्मृतम्। अन्यथा द्विचतुःषडष्टनवमितं चेत्स्यात्तदा शुभमित्यर्थादुक्तं भवति। यदाह नारदः—'स्त्रीभमारभ्य गणने नवपर्यायतः क्रमात्। जन्मत्रिपंचमसप्तस्थं पुंभं स्याद्वरनाशनम्॥ पुंभमारभ्य गणने स्त्रीभं जन्मादिके स्थले। स्त्रीविनाशो भवेत्तस्माद्दिनकूटं विवर्जयेत्॥' दिनकूटं=ताराकूटं। शार्ङ्गीयेऽपि—'नरर्क्षाद्गणयेद्यावत्कन्यर्क्षं कन्यभादपि। वरभं नवहृच्छेषास्ताराः संति परस्परम्। त्यक्त्वा त्रिपंचसप्ताख्याः शेषोद्वाहे मिथः शुभाः॥' इति। यत्तु कश्यपेन—'गणयेत्कन्यकाधिष्ण्यादावृत्या वरजन्मभम्। जन्मत्रिपंचसप्तर्क्षं हित्वान्यर्क्षं शुभप्रदम्॥' इति कन्यानक्षत्रादेव गणनोक्ता। अत एव–'स्त्रीभाद्चलपंचतृतीयाः शोकवैरविपदं वरताराः' इति केशवार्केणाप्युक्ता, माऽस्यावश्यकत्वद्योतनार्था। तथा हि–द्वयोरपि परस्परनक्षत्रगणने शुभं चेच्छुभमेवाशुभं चेदशुभमेव। तत्रैकस्मादन्यतरनक्षत्रगणनयाऽशुभत्वेऽपि स्त्रीनक्षत्राद्वरनक्षत्रं स्वशुभं नापेक्षितमेवेति भावः। अत्र गुणविभागो दैवज्ञमनोहरे-'एकतो लभ्यते तारा शुभा चैवाशुभान्यतः। तदा सार्धो गुणश्चैव ताराशुद्ध्या मिथस्त्रयः। उभयोर्न शुभा तारा तदा शून्यं समादिशेत्॥' इति। अत्र यद्यपि नारदादिभिर्जन्मताराऽपि निषिद्धेत्युक्तम्। तद्द्वैधकृता एकनक्षत्रे तावत् 'राश्यैक्ये चेद्भिन्नमृक्षं द्वयोः स्यान्नक्षत्रैक्ये

राशियुग्मं तथैव' इति (६।२६) वक्ष्यमाणत्वान्नोक्तम् । दशमैकोनविंशतारयोस्तु निषेधो दुष्टभकूटे ज्ञेयः । सद्भकूटे तु दोषाभाव इत्यर्थः ॥ २४ ॥

अथ योनिकूटं शार्दूलविक्रीडिताभ्यामाह—

अश्विन्यंबुपयोर्हयो निगदितः स्वात्यर्कयोः कासरः
सिंहो वस्वजपाद्भयोः समुदितो याम्यांत्ययोः कुंजरः ।
मेषो देवपुरोहितानलभयोः कर्णांबुनोर्वानरः
स्याद्विश्वाभिजितोस्तथैव नकुलश्चांद्राब्जयोन्योरहिः ॥ २५ ॥

ज्येष्ठामैत्रभयोः कुरंग उदितो मूलार्द्रयोः श्वा तथा
मार्जारोऽदितिसार्पयोरथ मघायोन्योस्तथैवोंदुरुः ।
व्याघ्रो द्वीशभचित्रयोरपि च गौरार्यम्णबुध्न्यर्क्षयो-
र्योनिः पादगयोः परस्परमहावैरं भयोन्योर्भवेत् ॥ २६ ॥

अश्विनीति ॥ ज्येष्ठेति च । अश्विनीशततारकयोर्हयः अश्वो योनिरुक्तः । स्वातीहस्तयोः कासरो महिषः, 'लुलायो महिषो वाहद्विषत्कासरसैरिभाः' इत्यमरः । वस्वजपाद्भयोर्धनिष्ठापूर्वाभाद्रपदयोः सिंहः, याम्यांत्ययोर्भरणीरेवत्योः कुंजरो हस्ती, पुष्यकृत्तिकयोः मेषोऽजः, कर्णांबुनोः श्रवणपूर्वाषाढयोर्वानरः स्यात् । उत्तराषाढाभिजितोर्नकुलः । चांद्रं मृगः, अब्जयोनिर्ब्रह्मा, तद्भं रोहिणी तयोरहिः सर्पो योनिः । ज्येष्ठानुराधयोः कुरंगो हरिण उदितः । मूलार्द्रयोः श्वा कुक्कुरः । तथा पुनर्वस्वाश्लेषयोर्मार्जारः । अथ मघापूर्वाफल्गुन्योरुंदुरुर्मूषकः । 'उंदुरुर्मूषकोऽप्याखु'रित्यमरः । द्वीशभं विशाखा चित्रा च,तयोर्व्याघ्रः। आर्यम्णमुत्तराफल्गुनी, बुध्न्यर्क्षमुत्तराभाद्रपदा, तयोर्गौर्योनिः । तथा तथैव अपि चेत्य।द्यः शब्दाः पादपूरणार्थाः । फलमाह—पादगयोरिति । एकस्मिन् पादे चरणे उक्तनक्षत्रयोन्योः परस्परं महावैरं भवेत् ,अन्यथा नेत्यर्थः । यथा—'अश्विन्यंबुपयोर्हयो निगदितः स्वात्यर्कयोः कासरः' इति पादस्थत्रोक्तयोर्भयोन्योरश्वमहिषयोर्महावैरं भवेत् । एवं सिंहहस्तिनोरित्यादिष्वपि द्रष्टव्यम् । यदाह वसिष्ठः—'अश्वेभमेषभुजगद्वयकुक्कुरौतुमेषौतुमूषकमथोंदुरुगोलुलायाः । शार्दूलमाहिषगवारिमृगद्वयं श्वा कीशोऽथ बभ्रुयुगकीशगवाश्वसिंहाः । गौः कुंजराविति यथाक्रममाश्विनादिभानां भवंति खलु कल्पितयोनिरूपाः ॥' लुलायः महिषः । गवारिर्व्याघ्रः । 'अवङ्स्फोटायनस्य' इत्यवङादेशः । कीशो वानरः, बभ्रुर्नकुलः, 'बभ्रूरगं श्वैणमिभेंद्रसिंहमोरत्वाखुसंज्ञं स्वजवानरौ च । गोव्याघ्रमश्वोत्तरमाहिषं च वैरं नृनार्योर्नृपभृत्ययोश्च ॥' इति । बभ्रूरगमित्यादौ च 'येषां च विरोधः शाश्वतिकः' इत्येकवद्भावः । एतत्फलं सापवादमाहात्रिः—'एकयोनिषु संपत्त्यै दंपत्योः संगमः सदा । भिन्न-

योनिषु मध्या स्यादरिभावो न चेत्तयोः । योनेरभावे नोद्वाहः स तु कार्यो वियोगदः । राशिर्वश्यं च यद्यस्ति कारयेत्स तु दोषभाक् ॥' दोषो वियोगरूपः । अत्र गुणविभागो दैवज्ञमनोहरे—'अष्टाविंशतितारायाणां योनयस्तु चतुर्दश । तत्र ज्ञेयं महावैरं वैरं चैव स्वभावितं ॥' स्वभावितं=वैरमैत्रशून्यम् । 'मैत्रं चैवातिमैत्रं च विवाहे नरयोषितोः ॥ महावैरे च वैरे च स्वभावे च यथाक्रमं । मैत्रे चैवातिमैत्रे च खेंदुद्वित्रिचतुर्गुणाः ॥' इति ॥ २५ ॥ २६ ॥

अथ क्रमप्राप्तां ग्रहमैत्रीं शार्दूलविक्रीडिताभ्यामाह—

मित्राणि द्युमणेः कुजेज्यशशिनः शुक्रार्कजौ वैरिणौ
सौम्यश्चास्य समो विधोर्बुधरवी मित्रे न चास्य द्विषन् ।
शेषाश्चास्य समाः कुजस्य सुहृदश्चंद्रेज्यसूर्या बुधः
शत्रुः शुक्रशनी समौ च शशभृत्सूनोः सिताहस्करौ ॥२७॥
मित्रे चास्य रिपुः शशी गुरुशनिक्ष्माजाः समा गीष्पते-
र्मित्राण्यर्ककुजेंदवो बुधसितौ शत्रू समः सूर्यजः ।
मित्रे सौम्यशनी कवेः शशिरवी शत्रू कुजेज्यौ समौ
मित्रे शुक्रबुधौ शनेः शशिरविक्ष्माजाः परेऽन्यः समः ॥ २८ ॥

मित्राणीति ॥ मित्रे इति च ॥ द्युमणेः सूर्यस्य भौमगुरुचंद्रा मित्राणि, शुक्रशनी वैरिणौ, अस्य सूर्यस्य सौम्यो बुधः समः, न शत्रुर्न मित्रम् । एवं सर्वत्र व्याख्येयम् । अथ विधोश्चंद्रस्य बुधरवी मित्रे, च पुनरस्य विधोर्द्विषन् शत्रुर्नास्ति । किंतु मंगलगुरुशुक्रशनयः शेषाः समा एव । अथ भौमस्य चंद्रगुरुसूर्याः सुहृदः, बुधस्तु शत्रुः, शुक्रशनैश्चरौ समौ । अथ शशभृत्सूनोर्बुधस्य सिताहस्करौ शुक्रसूर्यौ मित्रे । अथ बुधस्य शशी चंद्रः शत्रुः, गुरुशनिभौमाः समाः । अथ गीष्पतेर्गुरोः सूर्यभौमचंद्रा मित्राणि, बुधसितौ शत्रू, सूर्यजः शनिः समः । अथ कवेः शुक्रस्य बुधशनी मित्रे, चंद्रसूर्यौ शत्रू, कुजगुरू समौ । अथ शनेः शुक्रबुधौ मित्रे, रविचंद्रभौमाः परे, शत्रव इत्यर्थः । अन्योऽवशिष्टो बृहस्पतिः समः । यदाह कश्यपः—'रवेः समो ज्ञो मित्राणि चंद्रारेज्याः परावरी । इंदोर्न शत्रवो मित्रे रविज्ञावितरे समाः । समौ कुजस्य शुक्रार्की बुधोऽरिः सुहृदः परे । ज्ञस्य चंद्रो रिपुर्मित्रे शुक्रार्कावितरे समाः ॥ गुरोरारेंद्विना मित्राण्यार्किर्मध्यः परावरी । भृगोः समाविज्यकुजौ मित्रे ज्ञार्की परौ रिपू ॥ शनेर्गुरुः समो मित्रे शुक्रज्ञौ शत्रवः परे ॥' इति । एतत्फलं सापवादमाह जगन्मोहने वसिष्ठः—'अन्योन्यमित्रं शर्म स्यात्सममित्रं तु मध्यमम् । उदासीनं कनिष्ठं स्यान्मृतिदं शात्रवं स्मृतम् ॥ शत्रुमित्रं च विज्ञेयं दंपत्योः कलहप्रदम् । अन्योन्यसमशत्रुत्वं दंपत्योर्विरहप्रदम् ॥' विरहः=वियोगः । अस्यापवादस्तत्रैव—'राशिनाथे विरुद्धेऽपि सब-

क्रांवंशकाधिपौ । तन्मैत्रेऽपि च कर्तव्यं दंपत्योः शुभमिच्छता ॥' अत्र गुणविभागो दैवज्ञमनोहरे—'ग्रहमैत्रं सप्तविधं गुणाः पंच प्रकीर्तिताः । तत्रैकाधिपतित्वे च मित्रत्वे गुणपंचकम् ॥ चत्वारः सममित्रत्वे द्वयोः साम्ये त्रयो गुणाः । मित्रवैरे गुणश्चैकः समवैरे गुणार्धकम् ॥ परस्परं खेटवैरे गुणशून्यं विनिर्दिशेत् । असत्त्वे सममित्रादौ व्येका ग्राह्या यथोदिताः ॥' व्येका यथोदिताश्चत्वार इत्यर्थः । अत्र शुक्रार्कजौ बुधरवी इत्यादिषु 'अजाद्यदंतम्' इति 'द्वंद्वे घि' इत्यर्कजरविशब्दयोः पूर्वनिपातः पूर्वनिपातप्रकरणस्यानित्यत्वान्न भवति । एवमपि 'देवताद्वंद्वे च' इत्यानङ् प्राप्नोति । सत्यम् । एकहविर्भाक्त्वेन प्रसिद्धसाहचर्ययोरेव द्वंद्वे आनङ् विधीयते । अत्र तु तदभावान्नानङ् । परे इति । 'परं दूरान्यमुख्येषु परोऽरिपरमात्मनोः' इति यादवोक्तेः परशब्दो नानार्थः । अत्र परशब्दस्य 'पूर्वपरावर' इत्यादिना व्यवस्थार्थवाचित्वे जसि वैकल्पिकसर्वनामसंज्ञोक्तेः । व्यवस्था नाम स्वाभिधेयापेक्षाऽवधिनियमः । स्वाभिधेयं च दिग्देशकालाः । अत्र तु शत्रुवाचके परशब्दे व्यवस्थार्थाभावाद्वैकल्पिकी सर्वनामसंज्ञा न प्राप्नोति, ततश्च 'जसः शी' इति सर्वनामकार्याभावोऽतोऽनुपपन्नः परे इति प्रयोगः । यद्येवं 'विनेतुरिंगालमिवायशः परे' इति नैषधः । 'तथा परेषां युधि चेति पार्थिवः' इति कालिदासः । इत्यादिषु हि शत्रुवाचकपरशब्दस्य भवदुक्तिप्रकारेण सर्वनामसंज्ञाया अप्रवृत्तेः कथं सर्वनामकार्यप्रसंगः ? उच्यते—गणरत्नमहोदधिकारादयस्त्वस्य पूर्वैष प्रयोग इत्याहुः । अन्ये त्वेवमाहुः—परे इति शिष्टप्रयोगदर्शनात् परशब्दस्य नानार्थत्वादेवंविधे विषये व्यवस्थावाची परशब्दः । कथं स्वस्मात्परः परदेशावस्थित इति देशवाचित्वात् । तच्च परदेशावस्थितत्वं यद्यपि पुत्रमारभ्य शत्रुपर्यंतं साधारणं तथापि 'विनेतुरिंगालमिवायशः परे' इत्यादिषु युद्धप्रस्तावात् शत्रुपरः परशब्दः । एवमत्रापि पद्ये मित्रसमानां पार्थक्येनाभिधानात् परशब्दस्य शत्रुषु वृत्तिरिति ग्रंथकृदाशयः । अथवा व्यक्तमेवं पठितव्यम् । 'रविशशिक्ष्माजा द्विषोऽन्यः समः' इत्यलं विस्तरेण ॥ २७ ॥ २८ ॥

अथ गणकूटं वसंततिलकामालिनीभ्यामाह—

रक्षोनरामरगणाः क्रमतो मघाहि-
वास्विंद्रमूलवरुणानलतक्षराधाः ।
पूर्वोत्तरात्रयविधातृयमेशभानि
मैत्रादितींदुहरिपौष्णमरुल्लघूनि ॥ २९ ॥
निजनिजगणमध्ये प्रीतिरत्युत्तमा स्या-
दमरमनुजयोः सा मध्यमा संप्रदिष्टा ।

१ 'राशिनाथे विरुद्धेऽपि मित्रत्वे चांशनाथयोः ।
विवाहं कारयेद्धीमान् दंपत्योः सौख्यवर्धनम् ॥' इति पाठांतरम् ॥

असुरमनुजयोश्चेन्मृत्युरेव प्रदिष्टो
दनुजविबुधयोः स्याद्वैरमेकांततोऽत्र ॥ ३० ॥

रक्ष इति ॥ निजेति ॥ क्रमतः रक्षोनरामरगणाः वाक्यत्रयेणोच्यंते । मघा प्रसिद्धा, अहिराश्लेषा, वसुर्धनिष्ठा, इंद्रो ज्येष्ठा, मूलं प्रसिद्धं, वरुणः शततारका, अनलः कृत्तिका, तक्षा चित्रा, राधा विशाखा; एतानि भानि रक्षोगणः । पूर्वात्रयं उत्तरात्रयं चेत्येवं षड्भानि, विधाता रोहिणी, यमो भरणी, ईश आर्द्रा; एतानि भानि नरगणो मनुष्यगणः । मैत्रमनुराधा, अदितिः पुनर्वसुः, इंदुर्मृगः, हरिः श्रवणः, पौष्णं रेवती, मरुत्स्वाती, लघूनि अश्विनीहस्तपुष्याः; एतानि भान्यमरगणो देवगण इति । यदाह नारदः—'रक्षोगणः पितृन्वाष्ट्रद्विदैवत्येंद्रतारकाः । वसुवारीशमूलाहिकृत्तिकाभिर्युताम्नतः ॥ तिस्रः पूर्वोत्तराधातृयममाहेशतारकाः । इति मर्त्यगणा ज्ञेयाः स्यादमर्त्यगणाः परे ॥ हयादित्यार्कवाय्वंत्यमित्राश्वीज्येंदुतारकाः ।' इति । एतत्फलमाह—निजनिजगणमध्ये इति । स्वस्वगणविद्यमानस्त्रीपुरुषनक्षत्रयोः सतोरत्युत्कटोत्तमा प्रीतिः स्यात् । यथा राक्षसगणयोः स्त्रीपुंसयोस्तथा मनुष्यगणयोस्तथा देवगणयोर्वा परस्परमत्युत्कृष्टा प्रीतिः स्यादित्यर्थः । अमरा देवाः, मनुजा मनुष्याः, देवमनुष्यगणयोः स्त्रीपुंसयोः परस्परं प्रीतिर्मध्यमा नोत्कृष्टा नाधमा संप्रदिष्टा । असुरमनुजयोः राक्षसमनुष्यगणयोः स्त्रीपुंसयोः मृत्युरेव प्रदिष्ट उक्तः । द्वयोर्वान्यतरस्य वेत्याकांक्षायाम् । 'प्रबलेन दुर्बलं बाध्यते' इति न्यायेन मनुष्यगणस्यैव नाशः । दनुजविबुधयो राक्षसदेवगणयोः स्त्रीपुंसयोरेकांततो निश्चयेन परस्परं वैरं स्यात् । अत्र=गणकूटे । यदाह नारदः—'दंपत्योर्जन्मभे चैकगणे प्रीतिरनेकधा । मध्यमा देवमर्त्यानां राक्षसानां तयोर्मृतिः ॥ कश्यपस्त्वेवमाह—'स्वगणे चोत्तमा प्रीतिर्मध्यमामरमर्त्ययोः । मर्त्यराक्षसयोर्वैरममरासुरयोरपि ॥' इति । अयमर्थः—पुरुषो रक्षोगणः स्त्री मनुष्यगणा तदा वैरं । यदि वैपरीत्यं तदा मृत्युः । तथा पुरुषो रक्षोगणः स्त्री देवगणा तदा वैरं वैपरीत्यं मृत्युः । उक्तं च—'राक्षसी यदि वा नारी नरो भवति मानुषः । मृत्युस्तत्र न संदेहो विपरीतः शुभावहः ॥' शार्ङ्गीये—'रक्षोगणः पुमान् स्याच्चेत्कन्या भवति मानवी । केऽपीच्छंति तदोद्वाहं व्यस्तं कोऽपीह नेच्छति ॥' इति । एतत्तुल्यन्यायत्वाद्देवराक्षसयोरपि द्रष्टव्यम् । अत्र गुणविभागो दैवज्ञमनोहरे—'षट् गुणा गुणमाद्दश्ये पंच स्युः सुरमानुषे । नार्या देवो नरः पुंसश्चत्वारो वा गुणाश्रयः । देवराक्षसयोः शून्यं तथैव नरराक्षसोः । पुंसो रक्षोगणो यत्र नार्या देवोऽथवा नरः ॥ गुणो द्वौ क्रमतश्चैको गुणो ग्राह्योऽन्यथा नहि' इति । अस्यापवादमाह गर्गः—'ग्रहमैत्री च राशिश्च विद्यते नियतं यदि । न गणाभावजनितं दूषणं स्याद्विरोधदम् ॥' अत्रिरपि—'राशीशयोः सुहृद्भावे मित्रत्वे वांशनाथयोः । गणादिदोषेऽप्युद्वाहः पुत्रपौत्रप्रवर्धनः ॥' अमुं परिहारं ग्रंथकृदप्यग्रे वक्ष्यति । मनुरपि—'ग्रहमैत्री च

रज्जुश्च यदि नाडी पृथक् तयोः । विवाहः शुभदः कन्या राक्षसी वा नरो नरः ॥' इति । रज्जुकूटं तु ग्रंथकर्त्रा नोक्तम् ॥ २९ ॥ ३० ॥

अथ राशिकूटमनुष्टुभाह—

मृत्युः षट्काष्टके ज्ञेयोऽपत्यहानिर्नवात्मजे ।
द्विर्द्वादशे निर्धनत्वं द्वयोरन्यत्र सौख्यकृत् ॥ ३१ ॥

मृत्युः षट्काष्टके इति ॥ स्त्रीपुंसराश्योः परस्परं षष्ठाष्टमराशित्वे सति मृत्युर्ज्ञेयः । यथा मेषकन्ययोः । एवं नवात्मजे नवपंचमेऽपत्यानां बालानां हानिर्नाशः स्यात्, यथा सिंहधनुषोः । एवं द्विर्द्वादशे सति निर्धनत्वं दारिद्र्यं स्यात्, यथा मेषवृषयोः । अन्यत्र तृतीयैकादशे चतुर्थदशमे सप्तमसप्तमे वा सति सौख्यकृत्पाणिपीडनं स्यात् । यदाह नारदः—'षट्काष्टके मृतिः पंचनवमे त्वनपत्यता । नैःस्वं द्विर्द्वादशेऽन्येषु दंपत्योः प्रीतिरुत्तमा ॥' इति । अत्र विशेषो ज्योतिःप्रकाशे—'पुंसो गृहात्सुतगृहे सुतहा च कन्या धर्मे स्थिता सुतवती पतिवल्लभा च । द्विर्द्वादशे धनगृहे धनहा च कन्या रिःफे स्थिता धनवती पतिवल्लभा च ॥' इति । अन्यच्च—'मृगः कुलीरेण घटेन सिंहो वैरप्रदः स्यात्समसप्तकोऽयम् । तुलामृगेणाथ वृषेण सिंहो मेषेण कीटो मिथुनेन मीनः ॥ चापेन कन्या घटभेन चालिर्दौर्भाग्यदैन्ये दशतुर्यकेऽस्मिन्' इति ॥ ३१ ॥

अथास्य दुष्टभकूटस्य परिहारं शार्दूलविक्रीडितेनाह—

प्रोक्ते दुष्टभकूटके परिणयस्त्वेकाधिपत्ये शुभो-
ऽथो राशीश्वरसौहृदेऽपि गदितो नाड्यृक्षशुद्धिर्यदि ।
अन्यर्क्षांशपयोर्बलित्वसखिते नाड्यृक्षशुद्धौ तथा
ताराशुद्धिवशेन राशिवशताभावे निरुक्तो बुधैः ॥ ३२ ॥

प्रोक्ते इति ॥ प्रोक्ते दुष्टराशिकूटे सत्यपि चेद्वयोः स्त्रीपुरुषराश्योरैकाधिपत्ये एकस्वामित्वे परिणयो विवाहः शुभो गदितः । यथा षट्काष्टके मेषवृश्चिकयो-स्तुलावृषयोर्वा नवमपंचमे त्वेकाधिपत्याभावः, द्विर्द्वादशे मकरकुंभयोः; अथवा राशीश्वरयोः राशिस्वामिनोः सौहृदे मैत्रे परिणयः शुभो गदितः, तथा षड्काष्टके मीनसिंहयोरित्यादौ नवपंचमे मेषधनुषोरित्यादौ द्विर्द्वादशे मीनमेष-योरित्यादौ । यदाह वसिष्ठः—'द्विर्द्वादशे वा नवपंचमे वा षड्काष्टके राक्षस-योषितो वा । एकाधिपत्ये भवनेशमैत्रे शुभाय पाणिग्रहणं विधेयम् ॥' इति । राजमार्तंडः—'भवेत्त्रिकोणे बहुपुत्रवित्ताद्विर्द्वादशे चार्थमुपैति कन्या । षड्काष्टके सौख्यफलं विधत्ते स्त्रीणां विवाहो ग्रहमैत्रभावे ॥' इति । एकाधिप-त्येऽपीति शेषः । अत एव ग्रहमैत्रैकाधिपत्याभावे वैरषड्काष्टकमित्यादि वदंति । यदाह नारदः—'वैरषड्काष्टकं मेषकन्ययोर्घटमीनयोः । चापोक्षयोर्नृयुक्कीट-

भयोः कुंभकुलीरयोः ॥ पंचास्यमृगयोर्जन्मराशेः प्रोक्तोऽशुभप्रदः ॥' इति। उक्षाः=वृषः। चापोक्षयोरित्यकारांतनिर्देशश्छांदसः। एतद्विवं मित्रषड्डाष्टकमित्याहुः। तदुक्तं जगन्मोहने—'मित्रषड्डाष्टकं कीटमेषयोर्वृषजूकयोः। कर्किचापभयोर्मीनसिंहयोर्मृगयुग्मयोः ॥ कन्यकाकुंभयोरन्यत्प्रयत्नाद्धि विवर्जयेत् ॥' इति। एवं च ग्रहमैत्र्यभावे वैरं नवमपंचममित्याहुः। तथा च शार्ङ्गधरीये शुक्रः—'मीनालिभ्यां युते कीटे कुंभे मिथुनसंयुते। मकरे कन्यकायुक्ते न कुर्यान्नवपंचमे ॥' इति। कीटः=कर्कटः। एतादृशस्य नवपंचमस्य फलांतरमुक्तं कैश्चित्। तथा ज्योतिर्निबंधे शार्ङ्गधरः—'वरवध्वोर्मातृपित्रोर्जीवतोस्तद्विनाशकृत्। त्रिकोणे मीनकीटाद्यं न स्यादन्यत्र दोषदम् ॥' एतत्फलमनार्षत्वादुपेक्ष्यम्। इतोऽन्यत्तु मेषसिंहादिकं नवपंचमं ग्रहमैत्रीसत्त्वान्मित्रनवपंचममिति। ननु मीनकर्कादिकमपि त्रिकोणं ग्रहमैत्रीसत्त्वान्मित्रनवमपंचममिव। कथं? गुरोश्चंद्रो मित्रमेव, चंद्रस्य तु गुरुः समोऽपि मित्रमिव। 'अपदोषतैव विगुणस्य गुणः' इति न्यायात्। तथामति त्रिकोणदोषोच्छेदापत्तिः स्यादिति चेत्। उच्यते,—यत्र ह्येकस्य मित्रत्वमपरस्य समत्वं तत्र दुष्टनवपंचममिति व्यवहारः। तादृशं मीनकर्कादिकं त्रिकोणचतुष्टयमेव संभवति। यत्र तूभयतोऽपि ग्रहमैत्री तत्रैव मेषसिंहादिके मित्रनवपंचममिति व्यवहृतिः। अयं च परिहारो वरवध्वोर्मातृपित्रोरित्यस्यापि दोषांतरस्य सत्यसति वा समूलत्वे नाशको भवति तुल्यन्यायत्वात्। मृतमातापितृकयोस्तु वरवध्वोर्नायं दोषोन्मेषः। एवं द्विर्द्वादशेऽपि। तथा जगन्मोहने वसिष्ठकश्यपौ—'द्विर्द्वादशं शुभं प्रोक्तं मीनादौ युग्मराशिषु। मेषादौ युग्मराशौ तु निर्धनत्वं न संशयः ॥ आयुष्यसंपत्सुतभोगसंपत्पुत्रार्थसंपत्पतिसौख्यसंपत्। सौभाग्यसंपद्धनधान्यसंपज्झषादियुग्मे क्रमतः फलानि ॥ अजादियुग्मे क्रमतः फलानि वैधव्यमृत्युर्वधबंधनानि। वियोगसंतापसनीत्व दुःखं वसिष्ठगर्गप्रमुखैः स्मृतानि ॥' इति। अथैवंविधेऽपि प्रीतिषट्काष्टकादिविषये नाडीदोषः सर्वथा त्याज्य एवेत्याह-नाड्यृक्षशुद्धिर्यदीति। 'ज्येष्ठार्यमेशनीराधिपभयुगयुगम्' (६।३४) इत्यादिना वक्ष्यमाणानां त्रिविधनाडीनक्षत्राणां शुद्धिः स्त्रीपुरुषनक्षत्रस्थितिरेकस्यां कस्यामपि नाड्यां यदि न भवति तदा प्रीतिषट्काष्टकादि विधेयम्। यद्येकस्यां नाड्यां स्त्रीपुरुषनक्षत्रस्थितिस्तदा तु नैव विवाहः। उक्तं च रत्नमालायाम्—'भवनपतिसुहृत्त्वं स्यात्तथैकाधिपत्यं यदि भवनवशित्वं चैव षट्काष्टकेऽपि। शुभकृदिह विवाहोऽन्योन्यताराविशुद्धौ यदि खलु फणिचक्रे स्यान्न नाडीसमाजः ॥' इति। अपिशब्दान्नवमपंचमद्विर्द्वादशयोरपि। अत्र केचित्—षट्काष्टकस्यैव मरणरूपानिष्टफलश्रवणात्तस्यापवादकः षट्काष्टकेऽपीति परिहारः। किंतु निंदां प्रतिपादयतोऽपिशब्दांतस्य वाक्यस्याधिपतिमैत्र्यादिगुणप्रशंसाद्वारा नवपंचमद्विर्द्वादशयोरेव दुष्टभकूटयोर्विधानपर्यवसानात्तयोरेवापवादक इति। यथा—'ब्रह्महापि नरः पूज्यो यदि स्याद्विपुलं धनम्' इति। अत्र वाक्ये धनस्तुतिर्धनयत्नरपूजापरा नतु धनवद्ब्रह्मनरपूजा-

परापीति। मैवं वोचः। 'द्विर्द्वादशे वा नवपंचमे वा षड्डाष्टके वा' इत्यादि-वसिष्ठादिवाक्यानि दुष्टभकूटापवादभूतान्यधिपतिमैत्र्यादिविशिष्टषडष्टकादि विदधते, 'षड्डाष्टके मृत्युः' इत्यादीनि निंदार्थवादवाक्यानि तु ग्रहवैरग्रस्तषडष्टकादिविषयाणि। अन्यथा दुष्टफलषडष्टकनिराकरणस्य नवमपंचमस्य द्विर्द्वादशयोरपि तुल्यत्वेनापवादकवाक्यानां विषयालाभात्। दृष्टांते तु ब्रह्मघ्नप्रायश्चित्तविधानस्य वैयर्थ्यापातात् धनस्तुतिर्धनवत्प्रशंसापरैवेति युक्तमुत्पश्यामः। अथ नाडीसमाजपदस्यायमर्थः–अश्विन्यादित्रिकगणनया त्रिविधानां नाडीनक्षत्राणां वेधो नाडीसमाजः। यदाह श्रीपतिः—'नाड्यस्तिस्रो न्यस्तनिःशेषधिष्ण्यास्त्रिभ्यश्चाश्वादिभ्य एव प्रसूताः। सर्पाकारस्तत्र नाडीसमाजो नक्षत्राणामेकनाडीस्पृशां स्यात्॥' इति। एवं च यत्र भकूटादयः सप्त भेदाः शुभा भवंति तत्र नाडीदोषश्चेत्तदा विवाहो न विधेयः। उक्तं च सप्तर्षिमते विवाहपटले—'सदा नाशयत्येकनाडीसमाजो भकूटादिकान्सप्तभेदान्प्रशस्तान्' इति। अत्र केचित् नाडीसमाजशब्दोपादानात्समाजशब्दस्य समुदायवाचित्वात् त्रिचतुष्पंचपर्वनाडीत्रयसमुदाये स्त्रीपुरुषनक्षत्रयोरेकनाड्यां पातस्तदा समस्तवश्यादिगुणसत्त्वे विवाहो नैव भवेत्। यदा त्रिचतुष्पंचपर्वनाडीष्वेकैव नाडी स्त्रीपुरुषयोः स्यात्तदा भवत्येव विवाहः। अत एव 'भकूटादिकान्सप्तभेदांश्च ते ताम्' इति विपरीतं वचनमनुकूलम्। अस्यायमाशयः—ते इति बहुत्वात्सप्त भकूटादयः शुभास्तामित्येकवचनानुरोधादेकामेव नाडीं परिहरेयुः, न तु नाडीसमाजमित्याहुः। तच्चिंत्यम्। यतः 'चतुस्त्रिद्व्यङ्घ्रिभोत्थायाः' इति वाक्याच्चतुश्चरणनक्षत्रोत्पन्नायाः कन्यायास्त्रिपर्वैव, त्रिचरणनक्षत्रोत्पन्नायाः कन्यायाः द्विपर्वैव द्विचरणनक्षत्रोत्पन्नायाः कन्यायाः पंचपर्वैव नाडीगणनेति नियमाद्युगपन्नाडीत्रयविचारासंभव एव। किंच रत्नमालादिवाक्येषु पार्थक्येन नाडीत्रयानभिधानम्। तत्रत्यसमाजपदं नाडीसंस्थनक्षत्रसमुदायपरं। तथा हि—अश्वादिभ्यस्त्रिभ्य एव नक्षत्रेभ्यः प्रसूताः न्यस्तनिःशेषधिष्ण्याः सर्पाकारास्तिस्रो नाड्यः स्युः। तत्रैकनाडीस्पृशां नक्षत्राणां समाजो नाडी स्यात् इति। ननु 'सम्पाऽनर्थकलहागममृत्यवः स्युः पाणिग्रहादनु तयोः खलु नाडियोगे। तस्माच्चतुस्त्रियमलांघ्रिषु भेषु नूनं नाडीसमाज इति चिंत्यमनुक्रमेण॥' इति वृद्धगर्गवचनान्नाडीसमाज एव स्थिते दोषः, नैकस्यां नाड्यामिति चेत्। उच्यते—स्वयमेव 'चतुस्त्रियमलांघ्रिषु भेषु' इति परिगणितविषयत्वेनाभिधानात्समाजपदं नाडीसंस्थनक्षत्रसमुदायविषयकमिति। किंच पञ्चपर्वचतुष्पर्वनाड्योर्देशविशेषविषयत्वेनाभिधानात् त्रिनाड्यास्तु सर्वदेशविषयत्वादेतस्या एव निषेधो युक्तः। तानि च देशविशेषवाक्यान्यग्रेऽभिधास्यंते। अतः—'भकूटादिकान्सप्तभेदांश्च ते ताम्' इत्यत्र पाठे प्रशस्तानिति पठंति अभियुक्ताः शार्ङ्गधरीयज्योतिर्निबंधकारादयः। तस्मान्नाडीसमाजपदस्य प्राग्वदेव व्याख्यानं न्याय्यम्[1]। ननु यत्र नाडीनक्षत्रशुद्धिरस्ति यथा भरणीहस्तयोः षड्डाष्टकं च वर्तते ग्रहमैत्र्यपि नास्ति तत्र किं कार्यमत आह—अन्यर्क्षेऽशपयोरिति। अन्यर्क्षे प्रीतिषड्डादिभ्योऽन्यराशौ। कोऽर्थः? राशिस्वामिनोः परस्परं

1 ज्यायः इति पाठः।

शत्रुत्वे वा समत्वे वा षडष्टकादौ च सति अंशपयोस्तद्राशिनवांशस्वामिनो-र्बलित्वसखिते स्यातां, बलित्वं च सखिता च प्रथमाद्विवचनांतं पदं बलित्वं सबलत्वमुच्चादिस्थितत्वेन सखिता परस्परमैत्री ते उभे चेद्भवतः। सखिताया उपलक्षणत्वादैकाधिपत्यमपि । तदा विवाहः शुभो निरुक्तः । उक्तं च जग-न्मोहने वसिष्ठेन–'राशिनाथे विरुद्धेऽपि सबलांवशकाधिपौ । तन्मैत्रेऽपि च कर्तव्यं दंपत्योः सुखमिच्छता ॥' इति । नन्वयं परिहारो 'राशिनाथे विरुद्धे-ऽपी'त्यनुवादात्केवलग्रहदौष्ट्यापवादको नतु दुष्टभकूटग्रस्तग्रहवैरस्य । उच्यते–'खेटारित्वं नाशयेत्सद्भकूटम्' इति अग्रे ग्रंथकृद्वक्ष्यति । तत्र 'नभोगारिभावं हरेत्सद्भकूटम्' इति सप्तर्षिमतविवाहपटलीयवाक्यं संमतित्वेनास्माभिरध्य-स्यते। तदेव केवलग्रहवैरापवादकमस्ति न त्विदमपि । ननु द्वयोर्वाक्ययोर्यथा-श्रुतशब्दस्वरसेनार्थे जिज्ञासिते एकस्मिन्नेव ग्रहदौष्ट्यरूपे परिहारद्वयं दृश्यते । यथैकस्मिन्नेव दुष्टभकूटके भवनपतिसुहृत्त्वमित्यादिनानेकपरिहाराभिधानमि-त्यतोऽत्रवचने न किंचित्तादृशं विषयं पश्यामः । सत्यम् । 'नभोगारिभावं हरेत्सद्भकूटम्' इति तु निःसंदेहं ग्रहवैरस्यैवापवादकम् । परंतु 'राशिनाथे विरुद्धेऽपि मैत्र्ये चांशनाथयोः । विवाहं कारयेद्धीमान्दंपत्योः सौख्यवर्ध-नम् ॥' इति जगन्मोहनस्थवसिष्ठवाक्येन प्रागुक्तवसिष्ठवचःसमानार्थकं सत् दुष्टभकूटग्रस्तग्रहवैरापवादकम् । तथा हि–न्यूनार्थके एकस्मिन्वाक्ये राशिनाथयोः परस्परविरोधे सति तद्राशिनवांशस्वामिनोः परस्परमैत्री चेच्छुभो विवाह इत्यर्थः । अत्रांशनाथयोः सबलत्वविचारो नास्ति । यत्र त्वंशनाथयो-रुच्चादिस्थितत्वेन सबलत्वं परस्परमैत्री चेति द्वयमस्ति तद्दुष्टभकूटग्रस्तग्रहवैरा-पवादकमित्यधिकार्थवचनस्यार्थः । नन्वनयोर्वाक्ययोः सामान्यविशेषभावा-न्न्यूनार्थकवाक्यार्थानुवादेनाऽपरवाक्यस्य सबलत्वविधानपुरःसरैकवाक्यत्वा-दुपसंहारन्यायेन विशेष एव पर्यवसानं कस्मान्न भवति ? । यथा पुरोडाशं चतुर्धा करोत्याग्नेयं चतुर्धा करोतीति वाक्यद्वये । अत्र हि सामान्यतो यत्किं-चिद्देवताकस्य पुरोडाशस्य चतुर्धाकरणं प्राप्तमग्निदेवताक एव पुरोडाशे चतु-र्धाकरणं पर्यवस्यतीति चेत् । उच्यते–वेदे हि कर्तुरस्मरणात्तादृशवैदिकवाक्येषु, तथा भिन्नकर्तृकेषु स्मृतिवाक्येष्वप्येवंविधा गतिरुचिता, नत्वेककर्तृकेषु स्मृतिवाक्येषु । अन्यतरवाक्यानर्थक्यापत्तेः । तत्र किमनर्थकमित्याकांक्षाया-मधिकार्थकेन न्यूनार्थकमित्यत्रानयोर्वाक्ययोरेककर्तृकयोरेकप्रकरणपठितयो-श्चावश्यं भिन्नार्थकत्वं वाच्यम् । तत्र कस्य कोऽर्थ इति संदेहे न्यूनार्थकं केवलं ग्रहवैरापवादकमेव । नन्वपिशब्दस्यानुक्तसमुच्चयार्थत्वादिष्टविषयो लप्स्यत इति चेन्न । तदर्थकवचनांतरस्य स्पष्टस्याभावे अपिशब्दस्य समुच्चयार्थतायां दुर्लभत्वात् । एवं च 'नभोगारिभावं हरेत्सद्भकूटम्' इत्यपि वाक्यं ग्रहवैरा-पवादकं तुल्यबलत्वाद्व्रीहियववत् । अंशनाथसबलत्वाभिधायकं तु 'राशि-नाथे विरुद्धेऽपी'त्येतद्वाक्यमुभयविधविरोधपरिहारार्थकं । तथा हि–राशी च

नाथौ च एतेषां समाहारो राशिनाथं तस्मिन् राशिनाथ इत्येवं समाहारद्वंद्व आश्रीयते । तथा सत्ययमर्थः-राशी विरुद्धौ षडष्टकादिना नाथौ विरुद्धौ, कयोर्नाथावित्याकांक्षायां ययोः षडष्टकादिविचारस्तयोरेव संनिहितत्वाद्ग्रहणमिति । तयोः राश्योर्नाथौ विरुद्धौ, 'मित्राणि द्युमणेः' (६।२७) इत्यादिना परस्परं शत्रू स्यातां, तद्राशिनवांशस्वामिनोः सबलत्वे मित्रत्वे च समुचिते सति विवाहः शुभदः । नन्वतिक्लिष्टे समाहारद्वंद्वे किं प्रमाणम्? उच्यते-अंशनाथसबलत्वस्याधिकरणमेव । तच्च युगपदुत्पन्नस्य दोषद्वैविध्यस्य राशिविरोधग्रहविरोधरूपस्य परिहारकमित्यवगम्यते । अत एव ज्योतिःशास्त्राभियुक्ताः एवंविधे उभयविरोधे एवंविधं समाधिमाश्रित्य विवाहं कारयंतीत्यास्तां प्रसक्तानुप्रसक्तम् । अस्मिन्नपि पक्षे नाडीशुद्धिरपेक्षितैवेत्याह—नाड्यृक्षशुद्धौ तथेति । प्रागुक्तप्रकारेण नाडीनक्षत्रेषु स्त्रीपुरुषनक्षत्रयोरेकस्यां नाड्यामवस्थित्यभावश्चेत्सदा विवाहः शुभः । यथा भरणीहस्तयोः सत्यप्युभयविरोधे राशिनवांशयोः क्रमेण पंचमचतुर्थयोर्यौ स्वामिनौ सूर्यभौमौ तयोर्मैत्र्यप्यस्ति स्वनवांशस्थितत्वात्सबलत्वमपि तत्र विवाहः शुभफलदो निगदितः । यतोऽत्र स्त्रीपुंसनक्षत्रयोरेकनाड्यामवस्थित्यभावः । यदा त्वश्विनीहस्ताख्ये इव द्वयोर्नक्षत्रे स्यातां तदा नाडीनक्षत्रशुद्ध्यभावात्सकलगुणवत्त्वेऽपि विवाहो न भवति । किं पुनरेवंविधे विषये इति । 'सदा नाशयत्येकनाडीसमाजो भकूटादिकान् सप्तभेदान्प्रशस्तान्' इत्युक्तेः । अथैतत्परिहारासंभवे परिहारांतरमाह—ताराशुद्धिवशे इति । अत्रान्यर्क्षे इत्यनुवर्तते । प्राग्वदेव व्याख्येयमिदम् । एवंविधे विषये षडष्टकादौ च सति यदि स्त्रीपुंसनक्षत्रयोः परस्परं ताराशुद्धिवशे 'कन्यर्क्षाद्वरभं यावत्' (६।२४) इत्यादिना ताराशुद्धिरूपे वशे वश्यत्वे द्वितीयचतुर्थषष्ठाष्टमनवमतारासंज्ञके सति बुधैर्विवाहः शुभो निगदितः । अत्रोदाहरणान्यनेकानि बुधैर्ध्येयानि । अत्र संमतिः-'अन्योन्यताराविशुद्धौ' इत्युक्तं । राजमार्तंडेनायमर्थः स्पष्टमभिहितः—मैत्रीक्षेत्रपयोर्द्वयोरपि तयोरेकाधिपत्ये ऽपि चेत्तारामित्र ८ सुमित्र ९ जन्म १ शुभदा क्षेमा च संपत्करी । षष्ठाष्टे नवपंचमे व्ययधने योगेषु पुंयोषितोः प्रीत्यायुःसुतवृद्धिवित्तजनकः कार्यो विवाहस्तदा ॥' इति । चकारात्षष्ठी च । जन्मतारा यद्युत्पत्तितारा तदा राशिभेदे चरणभेदे वा शुभा ज्ञेया । दशमैकोनविंशतितारे शुभे एव । अत्रापि पक्षे नाडीशुद्धिरपेक्षितैव । नाडीशुद्ध्यभावे विवाहो नैव भवेत् । उक्तैवात्र संमतिः । अथैतस्यापि परिहारस्यासंभवे परिहारांतरमाह—अथ राशिवशताभाव इति । अत्रापि द्वयोः स्त्रीपुंसयोः राशिनाथविरोधादिके विषये षडष्टकादौ च सति 'हित्वा मृगेंद्रं नरराशिवश्याः' (६।२३) इत्यादिना पुरुषराशेः स्त्रीराशिवशताया भावे सत्त्वे सति विवाहः शुभो निगदितः । 'यदि भवनवशित्वम्' इति श्रीपत्युक्तेः । अस्मिन्नपि पक्षे नाडीशुद्धिरपेक्षितैवोक्तादेव हेतोः । तदयमत्र निष्कृष्टोऽर्थः—षडष्टकनवमपंचमद्विर्द्वादशा-

न्येषु दुष्टभकूटेषु सत्सु परस्परं ग्रहमैत्री एकः परिहारः। ऐकाधिपत्यं द्वितीयः। ग्रहवैरेऽप्यंशपयोः सबलत्वं मैत्री च तृतीयः। ताराशुद्धिश्चतुर्थः। राशिवश्यत्वं पंचमः। सर्वेष्वपि परिहारेषु नाडीशुद्धिरपेक्षितैव। नाडीविरोधसत्त्वे तु विवाहो नैव स्यादिति। एवं च ग्रंथकर्त्रा 'भवनपतिसुहृत्त्वम्' इत्यस्य श्रीपतिश्लोकस्य वाक्यचतुष्टयमंगीकृत्य तावत्परिहाराभिधानं कृतम्। तट्टीकाकृन्महादेवोऽप्येवमेव व्याख्यत्। यत्र हि प्रत्येकं परिहारकत्वं तत्र गुणसमुदायः परिहारकः स्यादिति किं वाच्यम्? वस्तुतस्तु 'मैत्रीक्षेत्रपयोर्द्वयोरपि तयोरैकाधिपत्येऽपि चेत्तारामित्रसुमित्रजन्मशुभदा क्षेमा च संपत्करी' इत्यादिप्राग्लिखितेन राजमार्तंडवाक्येन दुष्टे भकूटे ग्रहमैत्र्या सह तथैकाधिपत्येन सह ताराशुद्धिरेव परिहारिका समुचिता। अर्थादेकस्य मित्रत्वेऽपरस्य समत्वे वश्यत्वापेक्षा। अत एतद्वाक्यं ज्योतिःसारसागरकर्त्रा पितृचरणैश्चैवं विवृतम्—'अत्रान्योन्यमित्रत्वे तुल्याधिपत्वे वा ताराशुद्धिरेव चिंत्या। एकांतरमित्रतायां तु वशित्वादिगुणांतरापेक्षा, शत्रुत्वे तु सर्वथा त्यागः' इति। अत एवैतस्मिन्पद्ये चेत्पदाभिधानादेकवाक्यतावगमः। एवं श्रीपतिवाक्यमपि व्याकर्तव्यमेकवाक्यताबलात्। तत्र षट्काष्टके पुनर्भवनपतिसुहृत्त्वमिति सकलगुणसत्त्वमेव परिहारकम्। अन्ययोर्दुष्टभकूटयोर्द्वयमेव। यदाह ज्योतिर्निबंधे गर्गः-'ग्रहमैत्रं शुभा तारा राशिवश्यं त्रिभिः शुभम्॥ षडष्टकं बुधाः प्राहुर्द्वाभ्यां द्व्यर्कं त्रिकोणकम्॥' इति। द्व्यर्कं-द्विर्द्वादशं। 'द्विर्द्वादशे वा नवपंचमे वा' इत्यादीनि वसिष्ठादिवाक्यानि तूपलक्षणपरतया व्याख्येयानि। अत्र यथासंप्रदायं व्यवस्था ध्येयेत्यलमियता। सौहृद इति। सुष्ठु हृदयं यस्यासौ सुहृन्मित्रम्। 'सुहृद्दुर्हृदौ मित्रामित्रयोः' इति साधुः। सुहृदो भावः सौहृदम्। 'हायनांतयुवादिभ्योऽण्' इत्यण्. 'तद्धितेष्वचामादेः' इत्यादिवृद्धिः। केचित्तु सुष्ठु हृदयं यस्यासौ सुहृदयः, तस्य भावः सौहृदमिति युवादित्वादणि 'हृदयस्य हृल्लेखयदण्लासेषु' इति हृदादेश इत्याहुः। अपरे तु 'स्वांतं हृन्मानसं मनः' इत्यभिधानान्मनोवाची हृच्छब्दः सुष्ठु हृन्मनो यस्येति सुहृत्तस्य भावः, प्राग्वदणि रूपं सिद्धमित्यभिदधुः। तदुभयमपि चिंत्यम्। यतो 'हृद्भगसिंध्वंते पूर्वपदस्य च' इत्युभयपदवृद्धौ सत्यां सौहार्दमित्येव स्यात् नतु सौहृदमिति। ननु प्रथमपक्षेऽप्यनेनैव सूत्रेणोभयपदवृद्धिः कस्मान्न भवति? नहि तत्र कश्चिद्विशेष उपादीयते। उच्यते—'ओर्गुणः' इत्यत्र ओरोदिति वक्तव्ये गुणग्रहणम् 'संज्ञापूर्वको विधिरनित्यो यथा स्यात्' इति ज्ञापकात् 'हृद्भग-' इत्यस्यानित्यत्वेनाप्रवर्तमानत्वादादिवृद्धिरेवात्रेति ऋजवः समादधते। परे तु प्रतिपदोक्तहृदयपर्यायस्य हृच्छब्दस्य 'हृद्भग-' इत्यत्र ग्रहणात् 'हृदयस्य हृल्लेखयदण्लासेषु' इति हृदादेशस्यादिवृद्धौ साधयंति तन्न 'हृदयस्य हृल्लेख' इत्यादिग्रंथविरुद्धम्। तथा हि 'वा शोकष्यञ्रोगेषु' इत्यत्र सौहार्दं सौहृदय्यम्। ब्राह्मणादित्वात् ष्यञ्। हृदादेशपक्षे 'हृद्भगसिं-

ध्वंते पूर्वपदस्य च' इत्युभयपदवृद्धिरिति काशिकाकारो व्याख्यत् । वयं तु ब्रूमः । 'हृद्भग-' इत्यत्र 'अर्थवद्ग्रहणेनानर्थकस्य' इति परिभाषया हृदयवाचिनो हृदयादेशस्य वा हृच्छब्दस्यैव ग्रहणम् । तेनात्र 'सुहृद्दुर्हृदौ मित्रामित्रयोः' इति निपातितस्य सुहृच्छब्दस्य मित्रवाचित्वेनार्थवत्त्वात्तदवयवो हृच्छब्दस्तदंतस्योत्तरपदस्य वृद्धिर्न भवत्यवयवस्यानर्थत्वादित्यादिवृद्धिरेवात्र भवति । अमुमेवाशयं मनसि निधाय 'विनयं विशेषयति सौहृदेन सः' इति माघः । 'सौहृदं हि मनसोर्न गेहयोः' इति केशवार्कोऽपि सौहृदशब्दं प्रायुंक्तेति निरवद्यमिति ॥ ३२ ॥

अथ दुष्टानां गणकूट-भकूट-ग्रहकूटानां परिहारं शालिन्याह—

**मैत्र्यां राशिस्वामिनोरंशनाथद्वंद्वस्यापि स्याद्गणानां न दोषः ।**
**खेटारित्वं नाशयेत्सद्भकूटं खेटप्रीतिश्चापि दुष्टं भकूटम् ॥ ३३ ॥**

मैत्र्यामिति ॥ स्त्रीपुंसराशिस्वामिनोर्मैत्र्यां सत्यां तथा राशिनवांशयोर्द्वंद्वं युग्मं तस्यापि मैत्र्यां सत्यां गणानां दुष्टगणानां दोषो न स्यात् । स्त्री रक्षोगणा पुमान्मनुष्यगणो देवगणो वा तदा गणदोषो न स्यादित्यर्थः । यदाहात्रिः—'राशीशयोः सुहृद्भावे मित्रत्वे वांशनाथयोः । गणादिदोष्टेऽप्युद्वाहः पुत्रपौत्रप्रवर्धनः ॥' इति । अथ सद्भकूटं शुभफलदं भकूटं राशिकूटं तृतीयैकादशादिकं खेटारित्वं ग्रहयोः शत्रुतासंबंधिनं दोषं नाशयेत् । एवमेव खेटप्रीतिर्ग्रहमैत्री चापि दुष्टं भकूटं षडष्टकादिकसंबंधिनं दोषं नाशयेदित्यर्थः । तदुक्तं सप्तर्षिमते विवाहपटले—'नभोगारिभावं हरेत्सद्भकूटं विरुद्धं भकूटं हरेत्खेटमैत्री । सदा नाशयत्येकनाडीसमाजो भकूटादिकान्सप्तभेदांश्च तेषाम् ॥' अत्र चतुर्थचरणः 'प्रोक्ते दुष्टभकूटके' (६, ३२) इत्यादिना पुनरुक्तोऽपि स्मरणाविच्छेदार्थं पठितः । यदुक्तं नारदेन—'एकाधीशे मित्रभावे शुभदं पाणिपीडनम् । द्विद्वीदशे त्रिकोणे च न कदाचित्षडष्टके ॥' इति । एतन्नाडीदोषे सत्येव द्रष्टव्यम् । अनुनोदितवाक्यस्वरसात् । 'भवनपतिसुहृत्त्वं स्यात्तथैकाधिपत्यं यदि भवनवशित्वं चैव षष्ठाष्टकेऽपि । शुभकृदिह विवाहोऽन्योन्यताराविशुद्धौ यदि खलु फणिचक्रे स्यान्न नाडीसमाजः ॥' इति श्रीपत्युक्तेश्च । अन्यथा प्रागभिहितवसिष्ठादिवाक्यान्यनर्थकान्यापद्येरन्निति ॥ ३३ ॥

अथ क्रमप्राप्तसकलकूटप्रधानं नाडीकूटं स्रग्धरयाह—

**ज्येष्ठार्यम्णेशनीराधिपभयुगयुगं दास्रभं चैकनाडी**
**पुष्येंदुत्वाष्ट्रमित्रांतकवसुजलभं योनिबुध्न्ये च मध्या ।**
**वाय्वग्निव्यालविश्वोडुयुगयुगमथो पौष्णभं चापरा स्या-**
**द्दंपत्योरेकनाड्यां परिणयनमसन्मध्यनाड्यां हि मृत्युः ॥ ३४ ॥**

ज्येष्ठेति ॥ ज्येष्ठा प्रसिद्धा, आर्यम्णमुत्तराफाल्गुनी, ईश आर्द्रा, नीराधिपो वरुणस्तद्भं शततारका; एभ्यो नक्षत्रेभ्यो युगयुगं द्वयं द्वयं ज्येष्ठामूलं उत्तराफल्गुनीहस्तश्च आर्द्रापुनर्वसुश्च शततारकापूर्वाभाद्रपदा चेत्यर्थः । दास्रभ-

मश्विनी च एतन्नक्षत्रनवकं परस्परमेकनाडीत्युच्यते। अथ पुष्यः प्रसिद्धः, इंदुर्मृगः, त्वाष्ट्रं चित्रा, मित्रोऽनुराधा, अंतकं भरणी, वसुर्धनिष्ठा, जलभं पूर्वाषाढा, योनिः पूर्वाफल्गुनी, बुध्न्योऽहिर्बुध्न्यः उत्तराभाद्रपदा; एतन्नक्षत्रनवकं परस्परं मध्यनाडीत्युच्यते। अथ वायुः स्वाती, अग्निः कृत्तिका, व्याल आश्लेषा, विश्वोडुत्तराषाढा; एभ्यो युगयुगं स्वाती विशाखा च कृत्तिका रोहिणी च आश्लेषा मघा च उत्तराषाढा श्रवणश्चेत्यर्थः। अथो पौष्णभं रेवती च एतन्नक्षत्रनवकमपरा तृतीयनाडीत्युच्यते। एतत्फलमाह–दंपत्योः स्त्रीपुंसयोरेकनाड्यां परिणयनमसद्दुष्टफलं स्यात् । मध्यनाड्यां हि निश्चयेन मृत्युर्द्वयोरपि स्यात् । [ 'मूलेंद्रार्कभपाश्यजैकचरणादित्यार्यमेशाश्विभैर्याम्यैंद्विज्यभमित्रभाग्यवसुभत्वाष्ट्रांबुवहिर्बुध्न्यभैः । अन्यैर्नाड्य इहैकनाडिनवकं स्यातां द्विभे चेन्मृतिर्गोदादक्षिणतः क्वचिन्नृपमुखे पार्श्वैकनाडी हिता ॥' गोदादक्षिणतः सर्ववर्णेषु पार्श्वैकनाडी हिता । क्षत्रियादौ क्वचित् अन्यकन्याया अलाभे पार्श्वैकनाडी हितेत्यर्थः । ] यदाह गर्गः—'नाडीकूटं तु संग्राह्यं कूटानां तु शिरोमणिः । ब्रह्मणा कन्यकाकण्ठसूत्रत्वेन विनिर्मितम् ॥' इति । वराहः—'आद्यैकनाडी कुरुते वियोगं मध्याख्यनाड्यामुभयोर्विनाशः । अंत्या च वैधव्यमतीव दुःखं तस्माच्च तिस्रः परिवर्जनीयाः ॥' इति । अत्र चक्रन्यासो वसिष्ठेनोक्तः—'आवृत्तिभिर्भैस्त्रिभिरश्विभाद्यं क्रमोत्क्रमात्संगणयेद्बुध इति । यद्येकपर्वण्युभयोश्च धिष्ण्ये नेष्टा नृनार्योर्भृशमेकनाडी ॥' फलेऽपि विशेषमाह वसिष्ठः—'सा मध्यनाडी पुरुषं निहंति तत्पार्श्वनाडी खलु कन्यकां तु । आसन्नपर्यायसमागता चेद्वर्षेण साप्यंतरिता त्रिवर्षैः ॥' इति । उत्तरार्धस्यायमर्थः-आसन्ने समीपस्थिते पर्याये आवृत्तौ चेदेकनाडी समागता यथाऽश्विन्यार्द्रयोर्भरणीमृगयोः रोहिण्याश्लेषयोर्वा सा नाडी वर्षेणैकेन स्त्रीपुंसयोरुक्ताऽशुभफलदात्री स्यात् । यदा त्वश्विन्युत्तराफल्गुन्योरितरकृतव्यवधाना सा नाडी त्रिभिर्वर्षैरुक्ताऽशुभफलदात्री स्यात् । अत्र सफले नाडीनक्षत्रक्रमे अस्मदुक्तं पद्यद्वयम् 'दस्रेशादित्ययमार्केंद्रमूलतोयाधीशाजांघ्रिभान्येकनाडी । मध्या याम्यैंद्विज्ययोन्यृक्षचित्रामित्रक्षांभोवस्वहिर्बुध्न्यभानि ॥ वह्नियाम्यर्क्षाहिपिम्यानिलर्क्षंद्वीशाविश्वे विष्णुपौष्णे परा च । दंपत्योर्भे सन्निकृष्टे हि दुःखं वर्षेण स्यात्सांतराले त्रिवर्षैः ॥' इति । ग्रंथकर्त्रा तु नाडीदोषस्य तावदवस्थाक्रममनंगीकृत्य नाडीनक्षत्राण्येवोक्तानि ॥ अश्विनीमृगयोरिव नाडीभेदे तु दोषाभाव एव तेनाष्टौ गुणा इत्यर्थः । इयं चाश्विन्यादित्रिकगणना कन्यायाश्चतुश्चरणे जन्मनक्षत्रे सति । यदा तु त्रिचरणं नक्षत्रं तदा कृत्तिकामारभ्य चतुष्पर्वगणना साभिजित् । द्विचरणत्वे तु कन्यानक्षत्रस्य मृगशीर्षतः पंचपर्वगणना । यदाह नारदः—'चतुस्त्रिद्व्यंघ्रिभोत्थायाः कन्यायाः क्रमशोऽश्विभात् । वह्निभादिंदुभान्नाडी त्रिचतुष्पंचपर्वसु ॥ गणयेत्संख्यया चैकनाड्यां मृत्युर्न संशयः ॥ अमु-

१ एतच्छ्लोकांतर्गतः मुहूर्तमार्तंडस्यः श्लोकः सदर्भश्च टिप्पण्यादिरूपेण कश्चिल्लिखितः केनापि भ्रमेण टीकायां प्रक्षिप्त इति भाति । 'अथार्थं आर्यं मूलं मृग्यम्' इति एतच्छ्लोकटीकांतिमग्रंथविरोधात् ।

मर्थं स्पष्टमाह गर्गः—'चतुष्पात्कन्यकाऋक्षं गणयेदश्विभादिकम् । त्रिभं सव्यापसव्येन भिन्नं पर्व सुखावहम् ॥ कन्यकर्क्षं त्रिपाच्चेत्स्याद्गणयेत्कृत्तिकादिकम् । चतुर्भिः पर्वभिस्तद्वदभिजित्तारकान्वितम् ॥ कन्यकर्क्षं द्विपाच्चेत्स्याद्गणयेत्सौम्यभादिकम् । पंचभिस्त्ववरोहे तु पंचमांगुलिवर्जिते॥' एतत्फलमप्याह गर्गः—'संश्लिष्टा मध्यनाडी तु पुरुषं हंति वेगतः। संश्लिष्टा पार्श्वनाडी तु कन्यकां हंत्यसंशयम् ॥' इति । 'आसन्ना त्वेकनाडी स्यादासन्नमृतिदायिनी । दूरस्था चैकनाडी स्याद्दूरस्थानिष्टकारिणी ॥' इति । दूरं=बहुकालम् । जगन्मोहने नारदः—'एकनाडीविवाहश्च गुणैः सर्वैः समन्वितः । वर्जनीयः प्रयत्नेन दंपत्योर्निधनं यतः ॥' इति । आसां नाडीनां देशभेदेन व्यवस्थामाह जगन्मोहने नारदः—'चतुर्नाडी त्वहल्यायां पांचाले पंचनाडिका । त्रिनाडी सर्वदेशेषु वर्जनीया प्रयत्नतः ॥' इति । अहल्यापांचालौ देशविशेषौ । [ सर्वदेशशब्दः अहल्यापांचालव्यतिरिक्तदेशेषु वर्तते । 'विशेषसन्निधाने आम्नातं सामान्यं तदतिरिक्ते सामान्ये वर्तते' इति न्यायात् । ब्राह्मणा आयाता वसिष्ठोप्यायात इतिवत् । ] ननु—'चतुस्त्रिद्व्यंघ्रिभोत्थायाः' इति 'चतुर्नाडी त्वहल्यायाम्' इत्यनयोर्वाक्ययोः सामान्यविशेषभावयोः समापन्नयोरयमर्थः संपन्नः । कन्यर्क्षे च चतुष्पादे सत्यश्विन्यादित्रिनाडी अहल्यापांचालव्यतिरिक्तसर्वदेशेषु स्यात् । तथा कन्यर्क्षे त्रिपादे कृत्तिकादिचतुष्पर्वनाडी अहल्यायामेव स्यात् । तथा कन्यर्क्षे द्विपादे मृगादिपंचपर्वनाडी पांचाल एव स्यात् । एवं देशभेदेन नाडीनैयत्ये सति तद्देशेषु प्रोक्तभिन्नोत्पन्नायां कन्यकायां नाडीविचारो न स्यादेव । तथा त्रिपादे द्विपादे वा कन्यर्क्षे सति सर्वेष्वपि देशेषु त्रिनाडीविचारो न स्यात् । एवं सति पुनर्वसुकृत्तिकाप्रभृतीनां त्र्यंघ्रीणामुभयपार्श्वधिष्ण्यानां तत्तन्नाडीस्थैः सर्वनक्षत्रैः सह नाडीविचाराभावः प्रसज्येत । तथा मृगचित्राधनिष्ठाद्व्यंघ्रीणां मध्यनाडीधिष्ण्यानां मध्यनाडीसंस्थैः सर्वभरण्यादिभैः सह च तथा चतुष्पादे भे तु देशविशेषे नाड्यभाव एव प्रसज्येत । न चेष्टापत्तिरिति वाच्यम् । आर्यावर्तनिवासिसकलशिष्टाचारविरोधप्रसंगात् । न च 'त्रिनाडी सर्वदेशेषु वर्जनीया प्रयत्नतः' इत्युक्तेरहल्यापांचालयोरपि देशयोस्त्रिनाड्यस्त्येवेति वाच्यम् । 'चतुर्नाडी त्वहल्यायां पांचाले पंचनाडिका' इत्येतद्विशेषसाहचर्यात् । अत्रेमां समाधिसरणिं पश्यामः—'चतुस्त्रिद्व्यंघ्रिभोत्थायाः कन्यायाः क्रमशोऽश्विभात् । वह्निभार्द्रेंदुभान्नाडी त्रिचतुष्पंचपर्वभिः ॥' इति पद्येन कश्यपो नाडीत्रयविचारमभिधायानुपदमेव 'रेखास्तिस्रो विरच्याशु दस्रभादीनि विन्यसेत् । एकरेखास्थयोर्मृत्युर्दंपत्योर्जन्मधिष्ण्ययोः ॥' इति पुनरपि त्रिनाडीमुपन्यस्तवान् । सा च त्रिनाडी सर्वेष्वपि कन्यानक्षत्रेषु सर्वेष्वप्यहल्यापांचालसहितेषु देशेषु अवश्यं विचार्या यथा स्यादित्येतदर्थमुक्ता । न चेदं त्रिनाड्या लक्षणवाक्यमिदमिति वाच्यम् । एवं चतुर्नाडीपंचनाड्योरपि लक्षणाभिधानं कर्तव्यं स्यात् ।

---

१ [ ] एतच्चिह्नांतर्गतो ग्रंथोऽपि मध्ये केनचित्प्रक्षिप्त इव भाति । लिखितपुस्तकेष्वप्यनुपलंभात् । पूर्वापरग्रंथवत् ।

किंच यदि लक्षणवाक्यमंगीक्रियेत तदा वसिष्ठवाक्यवदनुलोमविलोमगणना वक्तव्या स्यात्, सा च नोक्तेति विधिवाक्यमेवैतत्। तस्माद्वसिष्ठादिभिर्देशनक्षत्रभेदेनानित्यप्रवृत्तिके चतुष्पंचनाड्यावुपेक्ष्य सकलदेशव्यापित्वात्सकलनक्षत्रव्यापित्वाच्च त्रिनाड्येवोक्ता। न चैतावता चतुष्पंचनाड्यौ स्वस्वदेशव्यतिरिक्तान्यदेशेषु नैवावलोक्ये, किंतु सर्वेष्वपि देशेषु विचार्ये। तत्र स्वदेशे दोषमहत्त्वमन्यदेशेषु दोषाल्पता, त्रिनाडी तु सर्वत्रैव समानदोषा । यदाह मनुः-'अहल्यायां चतुर्नाडीसंयोगः कालमृत्युदः। एष योगोऽन्यदेशेषु स्वल्पमृत्युफलप्रदः॥ पंचनाडीसमायोगः पांचाले कालदंहदः। इतरत्र समायोगो दुःखदारिद्र्यदोषकृत् ॥ त्रिनाड्यां तु समायोगः सर्वत्रानिष्टकारकः' इति। यत्तु ज्योतिर्निबंधे ज्योतिःप्रकाशे अश्विन्यादित्रिनाडीं प्रकृत्याभिहितम्-'निधनं मध्यमनाड्यां दंपत्योर्नैव पार्श्वयोर्नाड्योः' इति । अत्र पार्श्वनाड्यां मृत्युरूपमहादोषाभावं मत्वा विवाहादिकरणं शुभमित्यर्थः । तत् क्षत्रियादिविषयं गोदावरीतो दक्षिणदेशवासिविषयं वा । तदप्युक्तं तत्रैव-'करग्रहे पृष्ठनाड्यौ न निंद्ये इति यद्वचः। तत्क्षत्रियादिविषयं गौतम्या याम्यतस्तथा॥' इति। गौतमी=गोदावरी। अत्रार्थे आर्षमूलं मृग्यम् । इयं चाश्विन्यादित्रिनाडी गुर्वादिष्वप्यनिष्टा, प्रभुपण्यांगनादौ तु शुभैव। उक्तं च स्वरोदये—'एकनाडी स्थिता यत्र गुरुमंत्राश्च देवताः। तत्र द्वेषं रुजं मृत्युं क्रमेण फलमादिशेत्॥ प्रभुः पण्यांगना मित्रं देशं ग्रामं पुरं गृहम् । एकनाडीस्थितं भव्यं विरुद्धं वेधवर्जितम्॥' इति। अत्र नाडीवेधे चरणवेध आवश्यकविषयस्त्याज्यः । एतदप्युक्तं तत्रैव-'आद्यांशेन चतुर्थांशं चतुर्थांशेन चादिमम्। द्वितीयेन तृतीयं तु तृतीयेन द्वितीयकम् ॥ एवं भांशव्यधो येषां जायते वरकन्ययोः। तेषां मृत्युर्न संदेहः शेषांशाः स्वल्पदोषदाः॥' इति। तत्राप्यावश्यकत्वे गुरुः—'दोषापनुत्तये नाड्या मृत्युंजयजपादिकम् । विधाय ब्राह्मणांश्चैव तर्पयेत्कांचनादिना॥ हिरण्मयीं दक्षिणां च दद्याद्वर्णादिकूटके। गावोऽन्नं वसनं हेम सर्वदोषापहारकम्॥' इति । एवं सर्वसंमतत्वादष्टौ कूटभेदा अभिहिता नान्ये-'माहेंद्रं गौडदेशे च मालवे रज्जुसंज्ञकम्' इत्यादिवादरायणवाक्येन कूटानां तत्तद्देशविषयतापादनात्। ते च कूटभेदा वसिष्ठसंहितायामस्मत्पितृचरणकृते तोडरानंदे च सामान्यविशेषभावसहिता द्रष्टव्याः॥ ३४॥

अथ प्राच्यसंमतं वर्गकूटमार्ययाह—

अकचटतपयशवर्गाः खगेशमार्जारसिंहशुनाम्।
सर्पाखुमृगावीनां निजपंचमवैरिणामष्टौ॥ ३५॥

अकचटेति॥ नामकर्मप्रकरणे यूथेयोलापदेश्वाय इत्यज्झलरूपाः सर्वे वर्णा अस्माभिरभिहितास्तत्राद्यरूपोऽवर्गः, कुचुटुतुपुवर्गा इति पंचवर्गाः, एको यवर्गः, अन्यः शवर्गः, एवमष्टौ वर्गाः। तत्र अवर्गः खगेशस्य गरुडस्य, कवर्गो मार्जारस्य, चवर्गः सिंहस्य, टवर्गः शुनः कुक्कुरस्य, तवर्गः सर्पस्य, पवर्गः आखो-

मूषकस्य, यवर्गो मृगस्य, शवर्गो मेषस्य। अत्र निजात्स्वस्मात् पंचमा वैरिणो येषां ते तथोक्ताः। गरुडसर्पयोः मार्जारमूषकयोः, सिंहमृगयोः श्वमेषयोः परस्परं महावैरमित्यर्थः। अत्र स्त्रीपुंसयोर्नक्षत्रद्वयं भक्ष्यभक्षकवर्गे चेत् भवेत्तदाऽशुभम्। यदा त्वेकवर्गे उदासीनवर्गे वा स्यात्तदा शुभमेव। एतच्च स्वामिसेवकयोरपि विचार्यम्। उक्तं च ज्योतिर्निबंधे—'वर्गेशास्तार्क्ष्यमार्जारसिंहश्वस्यालमूषकाः। मृगश्च शशकस्तत्र स्ववर्गात्पंचमो रिपुः॥'॥ ३५॥

अथैवं कूटान्यभिधायेदानीं नक्षत्रराश्यैक्ये विशेषं शालिन्याह—

**राश्यैक्ये चेद्भिन्नमृक्षं द्वयोः स्यान्नक्षत्रैक्ये राशियुग्मं तथैव। नाडीदोषो नो गणानां च दोषो नक्षत्रैक्ये पादभेदे शुभं स्यात् ३६**

**राश्यैक्ये इति**॥ द्वयोः स्त्रीपुंसयोरेकराशित्वे सति यदि भिन्नमृक्षं स्यात्तदा नाडीदोषो गणानां च राक्षसमनुष्यगणानां च दोषो नास्ति। यथा—एकस्मिन्नेव कुंभराशौ शततारकापूर्वाभाद्रपदापादत्रयं च इत्येवंरूपो नक्षत्रभेदः, तथैव नक्षत्रैक्ये राशियुग्मं राशिद्वयं चेत्स्यात्तदापि प्रागुक्तो दोषो न स्यात्। उपलक्षणत्वात्तारादोषोऽपि न भवेत्। यथा एकस्मिन्नेव नक्षत्रे पूर्वाभाद्रपदाख्ये पूर्वाभाद्रपदायाः प्रथमपादत्रयं कुंभे चतुर्थचरणश्च मीने इत्येवंरूपो राशिभेदः। यदाह नारदः—'एकराशौ पृथग्धिष्ण्ये दंपत्योः पाणिपीडनम्। उत्तमं मध्यमं भिन्नराश्येकर्क्षगयोस्तयोः॥ एकर्क्षे चैकराशौ च विवाहः प्राणहानिदः॥' वसिष्ठः—'दंपत्योर्जन्मभे चैक्ये राशौ च निधनं तयोः। एकस्य च तयोद्वाहे किंचिद्भेदेऽपि वा न वा॥' इति। किंचिद्भेदे नक्षत्रभेदे राशिभेदे च। गर्गः—'एकराशिं विना नाडीयोगमादौ विवर्जयेत्। न दोषस्त्वेकराशिस्थे भकूटेऽन्येषु मृत्युदः॥' इति॥ भृगुरपि—'दंपत्योरेकराशिश्चेत् पृथगृक्षं यदा भवेत्। विशिष्टोऽसौ विवाहः स्याद्गणनाडीं न योजयेत्॥' इति। अत एवाह केशवार्कः—'अभिन्नराश्योर्यदि भिन्नमृक्षमभिन्नमृक्षं यदि भिन्नराश्योः। प्रीतिस्तदानीं निबिडा नृनार्योश्चेत्कृत्तिकारोहिणिवन्न नाडी॥' इति। चतुर्थचरणस्यायमर्थः चेद्यदि कृत्तिकारोहिणिवत्स्यात्तदापि नाडीदोषो न स्यात्। उपलक्षणत्वाद्गणदोषोऽपि। यथा—कृत्तिकारोहिण्योरेकनाडीत्वेऽपि गणदौष्ट्येऽपि तत्सूचिताशुभफलं नैव स्यात्। अत्रापि प्रथमतः पुंतारापेक्षिता, द्वितीया स्त्रीतारेत्यपि विशेषो ध्येयः। यदाह गर्गः—'एकराशौ पृथग्धिष्ण्ये पुंतारा प्रथमा भवेत्। अतीव शोभना प्रोक्ता स्त्रीतारा चेत्त्वशोभना॥' इति। तदेवं कैमुतिकन्यायेन यत्र नाडीगणदोषाद्यभावो यथा रोहिणीमृगयोर्हस्तचित्रयोर्वा तत्र पाणिपीडनं शुभं स्यादिति किं वाच्यमित्यर्थः। अथैकराशिनक्षत्रत्वेऽपवादमाह—**नक्षत्रैक्ये इति**। स्त्रीपुंसयो राश्यैक्ये नक्षत्रैक्ये च यदि चरणभेदो यथा भरण्याः प्रथमपादे पुंसो जन्म, द्वितीयपादे स्त्रियास्तदापि शुभं कल्याणं स्यात्। तदुक्तं केशवार्केण—'पराशरः प्राह नवांशभेदादेकर्क्षराश्योरपि सौमनस्यं' इति। सौमनस्यं=प्रीतिः। वसिष्ठेनाऽपि—'एकगृहसंभवानां भवति विवाहः

सुतार्थसंपत्त्यै । यद्युभयोरेकर्क्षं भवति तदा चांशको भिन्नः ॥' इति । एतच्च संकोचविषयं वेदितव्यम् । तथा च जगन्मोहने—'एकर्क्षे चैकराशौ च विवाहस्त्वशुभः स्मृतः । संकोचे तु तदा कार्यो भिन्नः पादो यदा तयोः ॥' इति । अत्रापि विशेषो ज्योतिर्निबंधे विधिरत्ने—'रोहिण्यार्द्रामघेंद्राग्नी तिष्यश्रवणपौष्णभम् । उत्तरा प्रोष्ठपाच्चैव नक्षत्रैक्येऽपि शोभनाः ॥' इति । इंद्राग्नी=विशाखा । तदेतत्स्पष्टमुक्तं तत्रैव कालनिर्णये–'विशाखिकार्द्रश्रवण-प्रजेशतिष्यांत्यतत्पूर्वमघाः प्रशस्ताः । स्त्रीपुंसतारैक्यपरिग्रहे तु शेषा विवर्ज्या इति संगिरंते ॥' इति । शेषास्तारा इत्यर्थः । अत्र द्वयोरन्यतरस्य वा जन्म-राशिनक्षत्राद्यज्ञाने उपायमाह वसिष्ठः—'अज्ञातजन्मनां नृणां नामभे परि-कल्पना । तेनैव चिंतयेत्सर्वं राशिकूटादि जन्मवत् ॥ जन्मभं जन्मधिष्ण्येन नामधिष्ण्येन नामभम् । व्यत्ययेन यदा योज्यं दंपत्योर्निधनप्रदम् ॥' इति । 'कुर्यात्षोडशकर्माणि जन्मराशौ बलान्विते । सर्वाण्यन्यानि कर्माणि नामराशौ बलान्विते ॥' इति । बृहस्पतिरपि–'व्यवहारराजसेवासंग्रामग्राममैत्रेषु । ज्ञातेऽपि जन्मराशौ फलमुक्तं नामराशिवशात् ॥' इति । नाम्नः सकाशाज्जन्म-नक्षत्रज्ञानं स्वरोदयाभिहितशतपदचक्रांतर्गतस्वीयनामादिवर्णवशाज्ज्ञेयमिति । यस्तु ऋकारादिवर्णो नाम्नि ऋषभादिनामसु च दृश्यते तत्र यथासंप्रदायं व्यवस्था ॥ ३६ ॥

अथ विवाहे एवं मासशुद्धिं दंपत्योरानुकूल्यशुद्धिं चोक्त्वेदानीं सूक्ष्मं निर्दोषं दिनलग्नविचारं वक्ष्यति । तत्रैकविंशतिः सर्वसंमता दोषा नारदेन परिगणिताः–'एकविंशतिदोषाणां नामरूपफलानि च । पितामहोक्तं संवीक्ष्य तानि वक्ष्ये समासतः । पंचांगशुद्धिरहितो दोषस्त्वाद्यः प्रकीर्तितः । उदया-स्तशुद्धिहीनो द्वितीयः सूर्यसंक्रमः ॥ तृतीयः पापषड्वर्गो भृगुः षष्ठः कुजो-ऽष्टमः । गंडांतं कर्तरीरिःफषडष्टेंदुश्च संग्रहः । दंपत्योरष्टमं लग्नं राशिर्विषघटी तथा । दुर्मुहूर्तो वारदोषः खार्जूरिकसमांघ्रिभम् ॥ ग्रहणोत्पातभं क्रूरविद्धर्क्षं क्रूरसंयुतम् । कुनवांशो महापातो वैधृतिश्चैकविंशतिः ॥' इति । अन्यैस्तु दश दोषा उक्ताः—'वेधश्च लत्ता च तथा च पातः खार्जूरयोगो दशयोगचक्रम् । युतिश्च जामित्रमुपग्रहाश्च बाणाख्यवज्रो दश चैव दोषाः ॥' इति व्यवहारो-च्चयेऽभिधानात् । दुर्मुहूर्तो 'रवावर्यमा-' ( ) इत्यादिः । वारदोषः कुलिकादिः । क्रूरसंयुतमित्यस्योपलक्षणत्वादकालवृष्टिनामकोऽपि दोषो गृह्यते । यदाह वसिष्ठः—'पंचांगशुद्धिरहिताश्चोत्पाताऽकालवृष्टिजाः' इति । एषां दोषाणां कर्मविशेषे फलमाह वसिष्ठ एव–'एकविंशन्महादोषास्त्वेते ब्रह्मसु-खोदिताः । कदाचिच्चैव सीदंति गुणानां कोटिकोटिभिः ॥ तस्मादेतेषु दोषेषु कदाचिन्नाचरेच्छुभम् । विवाहे विधवा नारी मरणं व्रतबंधने ॥ ग्रामनाशः प्रतिष्ठायां सीमंते गर्भनाशनम् । नवान्नभोजने मृत्युः कृषौ तत्फलनाशनम् ॥ कर्तुर्नाशो गृहारंभे प्रवेशे पतिनाशनम् । यात्रायां कर्तृनाशः स्यात्पुंसवने विशेषतः । लभ्यते सुमहत्पुण्यमेषु श्राद्धादिकर्मभिः' इति । ग्रंथकर्त्रा तु दोष-

लक्षणस्य वक्तव्यत्वात्पृथग्दोषनामानि नोक्तानि । तत्र पंचांगदोषदुर्मुहूर्तवारदोषग्रहणोत्पातनक्षत्रदोषा आद्ये शुभाशुभप्रकरणे निरूपिता एवेति पुनर्नोच्यंते । दुर्मुहूर्तवारदोषयोः पुनरभिधाने प्रयोजनं तत्रैव वयं वक्ष्यामः । अतोऽन्यान्दोषान्सलक्षणान्विवक्षुरादौ व्याख्यानिरपेक्षत्वेन सुगमं षड्वर्गदोषमाह कुजशुक्रेत्यादिचतुर्भिः पद्यैः । तत्र ग्रहनवांशस्वामिन आदिमेन मंजुभाषिणीवृत्तेनाह—

कुजशुक्रसौम्यशशिसूर्यचंद्रजाः कविभौमजीवशनिसौरयो गुरुः ।
इह राशिपाः क्रियमृगास्यतौलिकेंदुभतो नवांशविधिरुच्यते बुधैः॥

कुजेति ॥ अत्र लग्नादीनां लक्षणं नारदेनोक्तम्—'त्रिंशद्भागात्मकं लग्नं होरा तस्यार्धमुच्यते । लग्नत्रिभागो द्रेष्काणो नवमांशो नवांशकः । द्वादशांशो द्वादशांशस्त्रिंशांशस्त्रिंशदंशकः । षड्वर्गाः कथिता ह्येते तेषामीशा इमे स्मृताः' इति । तत्रैते भौमशुक्रबुधचंद्रसूर्यबुधशुक्रभौमगुरुशनिशनिगुरवः क्रमेणेह षड्वर्गे राशिपा मेषादिराशीनां स्वामिनः । क्रियेति । क्रियो मेषः, मृगास्यं मकरः, तौलिकं तुला, इंदुभं कर्कः; एभ्यो राशिभ्यो द्वादशस्वपि राशिषु नवांशविधिर्बुधैरुच्यते । मेषे मेषादेव, वृषे मकरादेव, मिथुने तुलातः, कर्के कर्कादेव, एवं सिंहेऽपि मेषादेव; एवं कन्यादिष्वपि राशिषु मकरादित एव । एवमेव धनुरादिष्वपीत्यर्थः । यदाह नारदः— सिंहस्याधिपतिर्भानुश्चंद्रः कर्कटकेश्वरः । मेषवृश्चिकयोर्भौमः कन्यामिथुनयोर्बुधः ॥ धनुर्मीनयोर्देवेज्यः शुक्रो वृषतुलेश्वरः । शनिर्मकरकुंभेश इत्येते राशिनायकाः ॥' इति । नवमांशा मेषसिंहचापे मेषादयः क्रमात् । क्रमाद्गोमृगकन्यासु ज्ञेयाः स्युर्मकरादयः ॥ तुलामिथुनकुंभेषु स्युः क्रमेण तुलादयः । अलिकर्कटमीनेषु क्रमात्स्युः कर्कटादयः ॥' इति ॥ ३७ ॥

अथ होराविधिं गायत्रीछंदोभेदेन शशिवदनावृत्तेनाह—

समगृहमध्ये शशिरविहोरा ।
विषमभमध्ये रविशशिनोः सा ॥ ३८ ॥

समगृहेति ॥ पंचदशभागात्मकैका होरा समराशिमध्ये प्रथमा चंद्रस्यापरा सूर्यस्य । विषमराशिमध्ये प्रथमा रवेरपरा चंद्रस्येत्यर्थः । 'होरार्केंद्वोरोजराशौ समभे चंद्रसूर्ययोः' इति नारदोक्तेः ॥ ३८ ॥

अथ त्रिंशांशद्रेष्काणान्वसंततिलकयाह—

शुक्रज्ञजीवशनिभूतनयस्य बाण-
शैलाष्टपंचविशिखाः समराशिमध्ये ।
त्रिंशांशको विषमभे विपरीतमस्मा-
द्द्रेष्काणकाः प्रथमपंचनवाधिपानाम् ॥ ३९ ॥

शुक्रज्ञेति ॥ समराशिमध्ये क्रमेण प्रथमतः पंचानामंशानां शुक्रः स्वामी, ततः शैलानां सप्तानां ज्ञो बुधः, ततोऽष्टानां जीवो गुरुः, ततः पंचानां शनिः, ततो विशिखा बाणाः पंच तेषां भूतनयो भौमः । शुक्रज्ञेत्यादिसमाहारद्वंद्वः । विषमभे तु अस्मात्समराशेर्विपरीतं ज्ञेयम् । यथा–प्रथमतः पंचानां भौमः, ततः पंचानां शनिः, ततोऽष्टानां गुरुः, ततः सप्तानां बुधः, ततः पंचानां शुक्र इत्यर्थः । अयमेव त्रिंशांशकसंज्ञ इति । यदाह नारदः—'कुजार्कीज्यज्ञशुक्राणां बाणेष्वष्टाद्रिमार्गणाः । भागाः स्युर्विषमे ते तु समराशौ विपर्ययात् ॥' इति । अत्र केचिदाहुः–तुर्विशेषे, तेशब्दो हि प्रथमाबहुवचनांतः, ततः प्रथमांतसामानाधिकरण्यानुरोधादानंतर्याच्च बाणादिका भागा एव परामृश्यंते न स्वामिनः, अनानंतर्याद्भिन्नविभक्तिकत्वाच्च । तथा सत्ययमर्थः–समराशौ तु विशेषः ते बाणादिका भागा विपर्ययाद्व्यत्यस्तस्थिताः यथास्थितानामेव कुजादीनां ज्ञेयाः । यथा–प्रथमतः पंचानामंशानां स्वामी भौमः, ततः सप्तानां शनिः, ततोऽष्टानां गुरुः, ततः पंचानां बुधः, ततः पंचानां शुक्र इति । मूलेऽप्येवमेव वक्तुमुचितं तत्कस्य हेतोर्द्वयोरपि वैपरीत्यम् ? उच्यते–अव्ययानामनेकार्थत्वाद्धेतोः समुच्चयार्थत्वांगीकरणात्कुजादयोऽपि समुच्चीयंते । तथा सति बाणादिका भागाः कुजादिकाः स्वामिनोऽपि विपर्यस्ता ज्ञेया इत्यर्थः । अत्रार्थे प्रमाणं श्रुतकीर्तिवचनम् । यथा–'पंचाथ पंच चाष्टौ सप्त च पंचैव चौजभवनेषु । धरणिसुतमंदसुरगुरुबुधशुक्राणां क्रमेणांशाः ॥ पंचैव सप्त चाष्टौ पंचपंचाथ युग्मभवनेषु । भागा भार्गवशशिसुतसुरेज्यशनिभूमिपुत्राणाम् ॥' इति । अत एव वराहेणापि –'युजि तु ते विपर्यस्ता' इत्यत्र तुशब्दः प्रयुक्तः । यदि नायमर्थोऽभिप्रेतः स्यात्तदा न कोऽपि तुशब्दं प्रयुंजीरन्निति सर्वं निरवद्यम् । द्रेष्काणका इति । अत्र प्रमाणदशांशाः द्वादशसु राशिषु प्रथमो द्रेष्काणः, प्रथमस्य स्वराश्यधीशस्य द्वितीयो द्रेष्काणः, स्वराशितः पंचमराशीश्वरस्य तृतीयः स्वराशितो नवमराशीश्वरस्य । यथा–वृषे प्रथमो द्रेष्काणः, वृषाधीशशुक्रस्य द्वितीयः, कन्याधीशबुधस्य तृतीयो मकराधीशशनेरित्यर्थः । 'स्युर्द्रेष्काणा लग्नपंचनवराशीश्वराः क्रमात्' इति नारदोक्तेः ॥ ३९ ॥

अथ द्वादशांशं षड्वर्गोपसंहारं सफलं वसंततिलकयाह—

> स्याद्द्वादशांश इह राशित एव गेहं
> होराथ दृक्नवमांशकसूर्यभागाः ।
> त्रिंशांशकश्च षडिमे कथितास्तु वर्गाः
> सौम्यैः शुभं भवति चाशुभमेव पापैः ॥ ४० ॥

स्यादिति ॥ इह षड्वर्गे द्वादशांशः सार्धमंशद्वयं तत्स्वराशित एवैष्टांशांतं गणितं सप्तमद्राशिस्वामी स द्वादशांशेश्वरः 'आरभ्य लग्नराशेस्तु द्वादशांशेश्वराः क्रमात्' इति नारदोक्तेः । अन्यच्चरणत्रयं स्पष्टतरम् । तदुक्तं वसि-

र्थेन—'लग्नं तदर्धं च ततस्त्रिभागो नवांशकश्च द्विदशांशकश्च । त्रिंशांशकश्चेति हि वर्गषट्कं शुभं शुभव्योमचराधिपत्यम् ॥ यः पापषड्वर्गभवो हि दोषः पंचांगसौम्यग्रहलग्नजातम् । गुणौघमंभोधिममोघबाणः शुष्यत्यशेषं खलु राघवस्य ॥' इति । तस्मात्सौम्यपापग्रहषड्वर्गसांकर्ये सति सौम्यषड्वर्गस्त्रिभ्योऽधिकश्चेच्छुभः, त्रिभ्यो हीनश्चेदशुभ इत्यर्थः इति दैवज्ञसंप्रदायः ॥ ४० ॥

[ अथेंद्रवज्रया पूर्वमध्यापरभागयोगीनि भान्याह—

पौष्णेशशाक्राद्रसरुद्रनंदापूर्वार्धमध्यापरभागयुग्मम् ।
भर्ता प्रियः प्राग्युजि भे स्त्रियाः स्यान्मध्ये द्वयोः प्रेम परे प्रिया स्त्री ॥

पौष्णेति ॥ पौष्णाद्रेवत्याः षट् भं भानि जात्यभिप्रायमेकवचनं पूर्वार्धयोगीनि ज्ञेयानि । आर्द्रादिद्वादश मध्यभागयोगीनि ज्ञेयानि । ज्येष्ठादीनि नव अपरभागयोगीनि ज्ञेयानि । फलमाह—भर्ता प्रिय इति । अयं भावः—राज्ञामंतःपुरस्थस्त्रीसमागमे गणिकादिसमागमे वा पूर्वार्धयुजि नक्षत्रे सति स्त्रीणां भर्ता प्रियः । मध्यभागयुजि भे परस्परं प्रीतिर्भवेत् । परे परभागयुजि भे स्त्री नृणां प्रिया भवेदिति । एवं वधूवरयोर्नवसमागमेऽपि ज्ञेयमिति रत्नमालाटीकायां महादेवेनोक्तम् ॥

सेवकादिभस्य स्वाम्यादिभात्पूर्वत्वे विशेषं वसंततिलकयाह—

सेव्याधमर्णयुवतीनगरादिभं चे-
त्पूर्वं हि भृत्यधनिभर्तृपुरादिसद्भात् ।
सेवाविनाशधननाशनभर्तृनाश-
ग्रामादिसौख्यहृदिदं क्रमशः प्रदिष्टम् ॥

सेव्याधमर्णेति ॥ स्पष्टार्थम् । तथा चोक्तं डामरसंग्रहे—'भामिनीजन्मनक्षत्राद्द्वितीयं पतिजन्मभम् । न शुभं भर्तृनाशाय कथितं ब्रह्मयामले ॥ प्रथमं सेव्यजन्मर्क्षं द्वितीयं सेवकस्य च । न सेवा सुस्थिरा तस्य जलबुद्बुदवत्प्रिये ॥ इति । 'ऋणग्राहकजन्मर्क्षं प्रथमं ऋणदस्य भात् । द्वितीयं ऋणसंबंधो न कर्तव्यः कदाचन ॥ कदाचिद्द्रव्यलोभेन क्रियते नैव लभ्यते । पार्वतीप्राणनाथेन प्रोक्तं डामरसंग्रहे ॥ ग्रामभं प्रथमं यस्य द्वितीयं जन्मभं भवेत । न ग्राह्यः सर्वथा ग्रामो यतः प्राप्यार्थनाशदः ॥' इति ॥ ]

अथ गंडांतदोषं शार्दूलविक्रीडितेनाह—

ज्येष्ठापौष्णभसार्पभांत्यघटिकायुग्मं च मूलाश्विनी-
पित्र्यादौ घटिकाद्वयं निगदितं तद्भस्य गंडांतकम् ।
कर्काल्यंडजभांततोऽर्धघटिका सिंहाश्वमेषादिगा-
पूर्णांते घटिकात्मकं त्वशुभदं नंदातिथेश्चादिगम् ॥ ४१ ॥

१ [ ] एतांमध्यगतं सटीकं श्लोकद्वयं लिखितपुस्तकेषु नोपलभ्यते, पूर्वापरसंबंधरहितत्वात् श्लोकाकाररहितत्वाच्च प्रक्षिप्तमिवाभाति ।

ज्येष्ठेति। गंडांतं नाम संधिविशेषः, स चानेकविधः नक्षत्रसंधिस्तिथिसंधिर्लग्नसंधिश्च तथा योगसंधिः करणसंधिर्वर्षसंधिरयनसंधिर्ऋतुसंधिर्माससंधिः पक्षसंधिर्दिनसंधी रात्रिसंधिर्मध्याह्नसंधिः प्रातःसंधिः सायंसंधिर्निशीथसंधिश्च। तत्र तिथिनक्षत्रलग्नविशेषाणां यः संधिर्नियतकालः स गंडांतसंज्ञः। अन्येषां तु संधिर्नियतकालः संधिशब्दवाच्य एव। तत्रादौ नक्षत्रगंडांतमुच्यते-ज्येष्ठा प्रसिद्धा, पौष्णभं रेवती, सार्पभमाश्लेषा, एषामंते घटिकाद्वयं, तथा मूलाश्विन्यौ प्रसिद्धे, पित्र्यं पितरो देवतास्येति पित्र्यं मघा, 'वाय्वृतुपित्रुषसो यत्' इति यत्। एषामादौ घटिकाद्वयं च गंडांतं नाम। यथा रेवत्यश्विन्योराश्लेषामघयोर्ज्येष्ठामूलयोरंतरालवर्तिघटीचतुष्टयं नक्षत्रगंडांतमशुभदमित्युत्तरार्धेनान्वयः। तदुक्तं रत्नमालायाम्—'पौष्णाश्विन्योः सार्पपित्र्यर्क्षयोश्च यच्च ज्येष्ठामूलयोरंतरालम्। तद्गंडांतं स्याच्चतुर्नाडिकं हि यात्राजन्मोद्वाहकालेष्वनिष्टम्॥' इति। यत्तु वसिष्ठेनोक्तम्—'यदंतरालं पितृसार्पयोश्च मूलेंद्रयोराश्विनपौष्णयोश्च। भसंधिगंडांतमिति त्रयं तद्यामप्रमाणं शुभकर्महंतृ॥' इति। यामः प्रहरो नक्षत्रभोगस्येति शेषः। नारदोऽपि—'सार्पेन्द्रपौष्णधिष्ण्यांते षोडशांशा भसंधयः। तदग्रभेष्वाद्यजाताः पापा गंडांतसंज्ञकाः॥ उग्रं भसंधित्रितयं गंडांतत्रितयं महत्। मृत्युदं जन्मयानादिविवाहस्थापनादिषु॥' षोडशांशो नक्षत्रभोगस्यार्धप्रहर इति यावत्। आद्यजाताः षोडशांशाः तदेतद्दोषमहत्त्वाल्पत्वसूचनार्थम्। तथा हि—चतुर्घटिके नक्षत्रगंडांते महान् दोषः। तदधिके त्वष्टघटिकात्मके मध्यमदोषः। ततोऽप्यधिके चरणावधिके त्वल्पो दोषः। अत एवोक्तं सूर्यसिद्धांते—'सार्पेन्द्रपौष्णधिष्ण्यानामंत्याः पादा भसंधयः। तदग्रभेषु साधांशो गंडांतं नाम कीर्त्यते॥ व्यतीपातत्रयं घोरं गंडांतत्रितयं तथा। एतद्भसंधित्रितयं सर्वकर्मसु वर्जयेत्॥' इति। अर्धांशश्चरणार्धं प्रहर इत्यर्थः। दीपिकायां च—'आद्ये मघाचतुर्भागे मूलपादाद्य एव च। रेवत्यंते चतुर्भागे विवाहः प्राणनाशकः॥' इति। अथ लग्नगंडांतमुच्यते—कर्केति। कर्कः प्रसिद्धः, अलिर्वृश्चिकः, अंडजो मीनः, 'मीनो वैसारिणोऽण्डजः' इत्यभिधानात्। एषां भानां लग्नानामंततः सप्तम्यंतात्तसिः। अंतेऽर्धघटिका, तथा सिंहमेषौ प्रसिद्धौ, अश्वो धनुः; एषां लग्नानामादिभूतार्धघटिका गंडांतं नाम। तथा कर्कसिंहयोर्वृश्चिकधनुषोर्मीनमेषयोर्वा लग्नयोरंतरवर्तिन्येका घटिका लग्नगंडांतमशुभमित्यर्थः। यदाह कश्यपः—'सिंहकर्कटयोश्चापकीटयोर्मीनमेषयोः। गंडांतमंतरालं तद्घटिका निधनप्रदा॥' इति। यत्तु नारदेनोक्तम्—'कुलीरसिंहयोः कीटचापयोर्मीनमेषयोः। गंडांतमंतरालं स्याद्घटिकार्धं मृतिप्रदम्॥' इति। वसिष्ठेनापि—'लग्नांतरालं घटिकार्धमेतत्कुलीरहर्योरलिचापयोश्च। मीनाजयोः सर्वगुणान्निहंति लोभो यथा सर्वगुणान्नरस्य॥' इति, तद्दोषाधिक्यसूचनार्थम्। अथ तिथिगंडांतमुच्यते—पूर्णांत इति। पूर्णाः पंचमीदशमीपंचदश्यस्तासामंते घटिकैका, तथा नंदा प्रतिपत्षष्ठ्येकादश्यस्तासामादिभूतैका

घटिका तिथिगंडांतं नाम । यथा पंचमीषष्ठ्योर्दशम्येकादश्योः पंचदशीप्रतिपदोर्वा तिथ्योरंतरालवर्तिघटीद्वयं तिथिगंडांतमशुभमित्यर्थः । यदाह नारदः- 'पूर्णानंदाख्ययोस्तिथ्योः संधिर्नाडीद्वयं सदा । गंडांतं मृत्युदं जन्मयात्रोद्वाहव्रतादिषु ॥' इति । यत्तु कश्यपेनोक्तम्-'पूर्णानंदाख्ययोस्तिथ्योः संधिर्नाडीचतुष्टयम् । उद्वाहजन्मयानेषु गंडांतं निधनप्रदम् ॥' इति, तद्दोषतारतम्यसूचनार्थम् । एवं गंडांतसंज्ञः संधिरुक्तः । तत्र तिथिलग्नगंडांतपरिहारः शाकल्यसंहितायाम्—'तथैव तिथिगंडांतं नास्तींदौ बलशालिनि । तथैव लग्नगंडांतं नास्ति जीवे बलान्विते ॥' इति । अथात्र प्रसंगादन्येषामपि संधिरुच्यतेऽस्माभिः । यदाह गुरुः—'घटिकाद्वयमृक्षांते मासांते तु दिनत्रयम् । वर्षांते वर्जयेत्पक्षं ग्रहणाद्दिनसप्तकम् ॥' इति । तिथ्यादिसंधिमप्याह वसिष्ठः—'पक्षोऽब्दसंधिस्त्रिदिनं च माससंधिस्त्रिनाड्यः खलु मध्ययोश्च । नाड्यश्चतस्रस्तिथिऋक्षयोगसंधिस्तदर्धं करणस्य संधिः ॥' वर्षेषु विशेषमाह स एव—'सौराब्दांते त्यजेत्पक्षं चांद्रे तु नवभं त्यजेत् । सावनांतेऽष्टभं त्याज्यं नाक्षत्रे पौष्णभाग्यहम् ॥' इति । अत्रापि विशेषमाह स एव—'अब्दाः स्युस्त्रिविधा जीवसौरचांद्राह्वयाः सदा । नेषामादौ तथा चांते त्रिदिनं वर्जयेच्छुभे ॥' इति । अयं च सर्वकार्यसाधारणो निषेधः । अन्यथा मीनादित्ये विवाहप्रसंगाभावादेव वर्षांतनिषेधस्य वैयर्थ्यापातात् । गुरुः—'ऋक्षांते पुत्रनाशः स्यान्मासांते तु धनक्षयः । वर्षांते वर्गनाशः स्याद्ग्रहणात्सर्वनाशनम् ॥' इति । आवश्यकत्वे तु–'नक्षत्रयोगतिथिसंधिषु नाडिकैका तिथ्य(१५)ष्ट(८)विंशति(२०)पलैः सहितोभयत्र । कर्कालिमीनतनुसंधिषु दिक्पलानि त्याज्यानि शेषविवरेषु च पंच पंच ॥' इति वामनासिद्धं केशवार्कवाक्यमनुसर्तव्यम् । वासना च सिद्धांतशिरोमणावभिहिता—'शशितनुविकलाभ्यश्चंद्रभुक्त्येंदुभान्वोर्गतिविवरकलाभिर्भूय एताभिरेव । पृथगथ गतियुत्या नाडिकाः संधिरासां अतिथिकरणयोगानां फलं तत्र मिश्रम् ॥' इति । संधिफलमप्याह केशवार्कः— 'संधौ पुरंध्री शुभमेति वंध्या मृतप्रजा वा यदि संधिसंधिः । वदंति वात्स्या ऋतुना विमुक्तां निशीथमध्यंदिनसंधिपूताम् ॥' इति । अर्धरात्रमध्यंदिनसंधिः 'अर्धे निशाह्नोर्घटीम्यंशम्' (२।३२)इत्याद्यप्रकरणेऽभिहितः । संधिसंधिस्तु केशवार्केणोक्तः—'रवेर्भवेदेकगृहाधिकस्य यदंशवृंदं खलु सायनस्य । तदत्र राशिद्वयभागतष्टं स्पष्टं वसंतादृतवो भवंति ॥ तत्संधयोऽक्षांगघटीसमाः स्युर्द्विसंगुणाश्चेद्विषुवायनीयाः । स संधिसंधिः खलु यत्र शेषं शून्यं भवेदेष विशेषपुण्यः ॥' इति । मीनसंक्रांतिमारभ्य वसंताद्यृतुगणनेति पक्षमंगीकृत्यैकगृहाधिकस्येरयुक्तम् । ग्रंथकृदप्येतत् 'विषुवायनेषु'(६।७७)इति पद्येन संक्रांतिदोषे वक्ष्यतीत्यलमतिप्रसंगेन । गंडांतदोषपरिहारमाह वसिष्ठः-'गंडांतदोषमखिलं मुहूर्तोऽभिजिदाह्वयः । हंति यद्वन्मृगव्याधः पक्षिसंघमिवाखिलम् ॥' तदेतद्दोषापवादाख्यस्य प्रकरणस्य नियामकत्वाद्विवाहविषयं न जातकादौ ॥ ४१ ॥

अथ कर्तरीदोषमनुष्टुभाह—

**लग्नात्पापावृज्वनृजू व्ययार्थस्थौ यदा तदा ।**
**कर्तरी नाम सा ज्ञेया मृत्युदारिद्र्यशोकदा ॥ ४२ ॥**

लग्नादिति ॥ यदा पापग्रहौ लग्नाद्व्ययार्थस्थावृज्वनृजू द्वादशस्थः पापग्रहो मार्गी द्वितीयस्थः पापग्रहो वक्री स्यात्तदा कर्तरीनामदोषः । कृंतति स्त्रीपुंसयोः प्राणांश्छेदयतीति 'कृती छेदने' इति धात्वर्थानुसारादन्वर्था संमुखकर्तरीयं मृत्युदारिद्र्यशोकदा भवेत् । यदाह नारदः—'लग्नाभिमुखयोः पापग्रहयोर्ऋजुवक्रयोः । सा कर्तरीति विज्ञेया दंपत्योर्गलकर्तरी ॥ कर्तरीदोषसंयुक्तं यल्लग्नं तत्परित्यजेत् । अपि सौम्यग्रहैर्युक्तं गुणैः सर्वैः समन्वितम् ॥' इति । गर्गोऽपि—'व्यये मार्गगतिः क्रूरो वक्री क्रूरो धने यदि । तौ च लग्नांशतुल्यौ च तदा घोराख्यकर्तरी ॥' यदा तु द्वितीये मार्गी द्वादशे च वक्री अथवा द्वावपि क्रूरौ व्ययार्थस्थौ संतौ शीघ्रिणौ वक्रिणौ वा स्यातां तदा कर्तरी नास्त्येव । यदाह वसिष्ठः—'लग्नस्य पृष्ठाग्रगयोरसाध्वोः सा कर्तरी स्यादृजुवक्रगत्योः । तावेव शीघ्रौ यदि वक्रचारौ न कर्तरी चेति पितामहोक्तिः ॥' इति । इयं च कर्तरी चंद्रस्यापि द्रष्टव्या । यदाह कश्यपः–'चंद्रस्य कर्तरी तद्वच्छुभदृष्टा न दोषदा' इति । परंतु लग्नस्य चंद्रस्य वा क्रूरग्रहमध्यगतत्वदोषो ऽस्त्येव कर्तरीतोऽल्पफलः कन्यानाशकरत्वात् । यदाह वसिष्ठः—'क्रूरग्रहमध्यगते लग्ने चंद्रेऽथवा कर-ग्रहणम् । ते यमसदनाभिमुखं गमनं चेच्छंति कन्यायाः ॥' इति । कर्तरीदोषे त्वन्यदप्यपवादांतरम्–'पापौ कर्तरिकारकौ' (६।८६) इत्यादिना स्वयं वक्ष्यति । अत्र लग्नादित्युपलक्षणात्सर्वेषामपि भावानां कर्तरीदोषो ध्येयः । 'यो यो भावः स्वामिदृष्टो युतो वा' इत्यादिना तुल्यन्यायत्वात् । तत्र लग्नकर्तरी महादोषकरी लग्नभंगाधायकत्वात्तस्या अन्यत्र तादृशदोषाभाव इति तत्त्वम् । अत्र केचित्–द्वादशे यः कश्चित्पापग्रहो भवतु मार्गी द्वितीयस्थाने यदि राहुः केतुर्वा स्यात्तदा कर्तर्येव नास्तीत्याहुः, ते प्रष्टव्याः किं राहुकेत्वोर्ग्रहत्वा-भावात्क्रूरग्रहत्वाभावाद्वा दृश्यग्रहत्वाभावाद्वा कर्तरी नास्ति? नाद्यः । राहो-र्ग्रहत्वं श्रुतिस्मृतिप्रामाण्यसिद्धम् । तथा हि—'स्वर्भानुर्ह वा आसुरिः सूर्यं तमसा विव्याध' इति माध्यंदिनी श्रुतिः । कश्यपश्च–'छिन्नोऽपि विष्णुचक्रेण सुधामयशिरास्तमः । केशवस्य वरेणासौ तथापि ग्रहतां गतः ॥' इति । नारदो-ऽपि—'अमृतास्वादनाद्राहुः शिरश्छिन्नोऽपि सोऽमृतः । विष्णुना तेन चक्रेण तथापि ग्रहतां गतः ॥' इति । यद्यपि—'अदृश्यरूपाः कालस्य मूर्तयो भगणा-श्रिताः । शीघ्रमंदोच्चपाताख्या ग्रहाणां गतिहेतवः ॥' इति सूर्यसिद्धांते पाता-नामदृश्यतोक्ता तथापि चंद्रपातस्य हि ग्रहत्वं वाचनिकमेव । 'स्वभुवे कुमुदिनी पतिपातो राहुमाहुरिह केऽपि तमेव' इति भास्कराचार्योक्तेश्च । अत एव राहो-र्नैर्ऋत्यदिक्स्वामित्वं दानं च संहिताकर्तृभिरुक्तं, राहोरधः शरीरभागः केतुसंज्ञ इति पुराणप्रसिद्धम् । न द्वितीयः । ननु केन वचनेन राहुकेत्वोः क्रूरत्वमुच्यते?

नच 'क्षीणेंद्वर्कयमाराः पापास्तैः संयुतः सौम्यः' इति वराहेणोक्तमिति वाच्यम्। तदुपादानाभावादेव । किंच पापग्रहत्वानभिधानाच्छुभग्रहत्वमेवावसीयते । नच 'गुरुबुधशुक्राः सौम्याः सौरिकुजार्का निसर्गतः पापाः। शशिजोऽशुभसंयुक्तः क्षीणोऽपि निशाकरः पापः ॥' इति कल्याणवर्मवाक्ये शुभग्रहमध्ये गणनाभावात्क्रूरत्वमिति वाच्यम् । पापग्रहमध्येऽपि गणना नास्तीति शुभग्रहत्वस्यापि सुवचत्वात् । उभयभ्रष्टत्वेन वा नरसिंहवज्जात्यंतरस्यापि वक्तुं शक्यत्वादिति चेत् । सत्यम् । 'सूर्यभौमशनिराहुकेतवः पापसंज्ञखचराः क्षयिचंद्रः । पूर्णचंद्रगुरुशुक्रसोमजाः सर्वकर्मसु हि सौम्यखेचराः ॥' इति वसिष्ठेन कंठतः क्रूरत्वाभिधानादस्ति क्रूरत्वम् । स्वरोदयेऽपि—'बुधशुक्रेन्दुजीवाश्च सदा सौम्यग्रहा मताः । शन्यर्कराहुमाहेयाः केतुः क्रूरग्रहा मताः ॥' इति । न तृतीयः । ननु—'स्वयमशक्तः कथं परान्साधयिष्यति' इति न्यायात्सदा चाक्षुषदर्शनाभावमितस्य राहोः केतोर्वा फलदातृत्वासामर्थ्यादिति चेन्न । अमावास्यायां प्रतिपदि वोत्पन्नस्य लग्नादिदुष्टस्थानस्थितचंद्रस्यारिष्टत्वमशुभफलजनकत्वं भवन्मते निरर्थकमापद्येत । ननु—'षष्ठेऽष्टमे च चंद्रः सद्यो मरणाय पापसंदृष्टः । अष्टाभिः शुभदृष्टो मिश्रैर्वर्षैस्तदर्धेन ॥' इति वराहोक्तेर्भविष्यतीति चेत् । इहापि—'स्वच्छंदत्वं कदशनरतिर्वलभत्वं विशीलत्वं व्याधिः सुश्रीर्मतिरथ सुखं गर्भपातप्रवृत्तिः । चूतासक्तिर्भवति रविजे वैभवं वक्रयोगं स्वर्भानौ वाप्यथ शिखिनि वा लग्नभावादिसंस्थे ॥' इति वसिष्ठपद्ये शनिवद्राहुकेत्वोः शुभाशुभफलदातृत्ववचनं किं वायसैर्भक्षितम्? सारावल्यां च—'राहुश्चतुष्टयस्थो निधनाय निरीक्षितो भवति पापैः । वर्षैर्वदंति दशभिः षोडशभिः केचिदाचार्याः ॥ अजवृषकर्कटलग्ने रक्षति राहुः समस्तपीडाभ्यः । पृथ्वीपतिः प्रसन्नः कृतापराधं यथा पुरुषम् ॥' इति राहोरशुभशुभफलाभिधानमस्ति । ननु वराहेण राहोः फलं कुत्रापि नोक्तमिति चेन्न । 'सोपप्लवे शशांके मक्रूरे लग्नगे कुजेऽष्टमगे । मात्रा सार्धं म्रियते चंद्रवदर्के स शस्त्रेण ॥' इति वराहपद्येऽपि राहुकेत्वोरन्यतराभिधानमस्ति । तथा हि—किमिदं चंद्रग्रहणं राहुसाहित्यकृतमुत केतुसाहित्यकृतमिति? तत्र ग्रहणीयचंद्रे लग्नगे सक्रूरे इत्यत्र क्रूरसाहित्यमभिहितम् । क्रूरास्तु सूर्यभौमशनय एव विवक्षिताः । इति चेत्सूर्यस्य तावद्योगाभावश्चंद्रग्रहणे हि सप्तमराशिस्थत्वात् । भौमस्यापि योगः कुजेऽष्टमग इत्युक्तेर्नास्ति । पारिशेष्याच्छनेरेव योगो वाच्यः । तत्र स्पष्टत्वार्थं शनिग्रहणमेव कस्मान्नाकारि? अतः सामान्यवाचिनः क्रूरशब्दस्य प्रयोगाद्राहुकेत्वोरन्यतरयोगोऽपि विवक्षितोऽपरस्य सप्तमराशिस्थत्वात् । योगोऽपि एकराशिस्थत्वे स्यान्नतु भिन्नराशिस्थत्वे इति । एवं च ग्रहणसंबंधिलग्नस्थसूर्यारिष्टेऽपि राहुकेत्वोरन्यतरयोगो व्याख्येयः । अत एव राहुस्तमोऽगुरसुरश्च 'शिखी इति केतुः' इति पर्यायाभिधानं कृतम् । विवाहपटलेऽपि—'मरणं लत्ता राहोः कार्यविनाशं भृगोर्वदंति' इति कंठतो राहुलत्ताप्युक्ता । तस्माद्वराहमतेऽपि राहुकेतुयोगो विवक्षित एव । एवं सति जातके यथा राहोः शुभाशुभ-

फलदातृत्वं वचनाद्वोच्यते, तथा विवाहेऽपि प्रागुक्तवसिष्ठवाक्यादपि तत्र तुल्यन्यायत्वात्कर्तरीदोषे सत्यप्यदृश्यत्वे फलदातृता त्वयापि वक्तव्यैव। ननु—'पापयोः कर्तरीकर्त्रोः शत्रुनीचगृहस्थयोः। यदा चास्तगयोर्वापि कर्तरी नैव दोषदा॥' इति कश्यपायुक्तेरस्तंगतत्वेन राहुकेत्वोः कर्तरीदोषो नास्तीति चेत्–भ्रांतोऽसि, शृणु–'संभवे व्यभिचारे च स्याद्विशेषणमर्थवत्' इति न्यायादस्तगत्वविशेषणं भौमस्य क्रूरयुक्तबुधस्य शनेर्वेति त्रयाणामेव संभवति न संभवति च। सूर्यस्तु नित्योदित एव, राहुकेतू नित्यास्तमिताविति व्यभिचाराभावात्त्रयाणां नैव विशेषणम्। यथा—'एत्येधत्यूठ्सु' इत्यत्रानुवर्तमानमेज्ग्रहणं संभवव्यभिचाराभ्यामेतेरेव विशेषणम्। यथा उपैति उपेत इति। नत्वेधतेरेजादित्वादेव नाप्यूठोऽनेजादित्वादेवेति। तस्मादीदृशे विषयेऽयं परिहारो न प्रवर्तते। किंच किमस्तगत्वं क्षितिजसंनिधिकृतमुत सूर्यसान्निध्यकृतं वेति? तत्र क्षितिजसन्निधिकृतं यत्तत्सूर्यादिसकलग्रहसाधारणम्। तथा सत्यस्तगतत्वविशेषणवैयर्थ्यम्। प्रागुक्तन्यायात्। राहोस्तु नारदादिवाक्याच्छिरोरूपमंडलावगतेः 'इंद्वर्कमंडलाकृतिरसितत्वात्किल न दृश्यते गगने' इति वराहोक्तेस्तमोरूपत्वात्तादृक्स्वरूपानुपलब्धेरगोचरत्वम्। परं स्थानमप्यस्य चंद्रशरमंडलाक्रांतिमंडलसन्निके। यदाह केशवार्कः—'वेश्म चास्य शशभृद्विमंडलक्रांतिमंडलमिलच्चतुष्पथे' इति। अत एव न विद्यंते गावः किरणा यस्येत्यगुरित्यन्वर्थताप्यवसीयते। अथ यदि सूर्यसन्निधिकृतमित्युच्येतेति चेन्न। इतरग्रहवद्राहोरप्युदयास्तप्रसिद्ध्यभावात्। किंच कालांशानभिधानात्कदोदितः कदास्तमितश्चेति निर्णेतुमशक्यत्वात्। एवं केतोरप्येतद्द्रष्टव्यम्। ननु केतूदयो धूम्पातादौ प्रत्यक्षतो दृश्यत इति चेन्न। तस्यानियतदिक्प्रभवत्वात् अनियतनक्षत्रप्रमेयत्वाच्च। किंच केतूत्पातो हि लोके दुरदृष्टसूचकः अनियतेन बहुना स्वल्पेनापि वा कालेन भवेत्। सूर्यसान्निध्यकृतोदयास्तौ तु नियतकालावेवेति तयोः कृत्वोर्भेदः स्वीकर्तव्यस्तस्माद्राहुकेतू सदा दृश्यावेवेति प्रागुक्तदोषानवसरः। तस्मात्स्थितं राहुकेत्वोर्द्वितीयस्थानस्थितत्वेन वक्रित्वात्कर्तरीदोषोऽस्त्येवेति सिद्धांतः। ननु ग्रहाणां कथं शुभाशुभफलदातृत्वमरिष्टपरिहारकर्तृत्वं च? यतः—'यदुपचितमन्यजन्मनि शुभाशुभं तस्य कर्मणः पक्तिम्। व्यञ्जयति शास्त्रमेतत्तमसि द्रव्याणि दीप इव॥' इति स्वसिद्धांतव्याघातः। सत्यम्। उपरिष्टाच्चिन्तयिष्यतेऽस्माभिरेतदित्यलमतिप्रसंगेन॥ ४२॥

अथ सग्रहदोषमनुष्टुभाह—

चंद्रे सूर्यादिसंयुक्ते दारिद्र्यं मरणं शुभम्।
सौख्यं सापत्न्यं वैराग्यं पापद्वययुते मृतिः॥ ४३॥

चंद्रे इति॥ सूर्ययुक्ते चंद्रे दारिद्र्यं स्यात्। भौमादियोगे मरणादिफलं

क्रमेण स्यादित्यर्थः। पापग्रहसाहित्येऽशुभफलं राहुकेत्वोरपि द्रष्टव्यम्। यदाह नारदः—'शशांके ग्रहसंयुक्ते दोषः सग्रहसंज्ञकः। सूर्येण संयुते चंद्रे दारिद्र्यं भवति ध्रुवम्॥ कुजेन मरणं व्याधिः सौम्येन त्वनपत्यता। दौर्भाग्यं गुरुणा युक्ते सापत्न्यं भार्गवेण तु॥ प्रव्रज्या सूर्यपुत्रेण राहुणा कलहः सदा। केतुना संयुते चंद्रे नित्यं कष्टं दरिद्रता॥ तस्मिन्सग्रहदोषे तु विवाहं नैव कारयेत्' इति। सापत्न्यं=सपत्नीभावः। सापत्न्यं भर्तुः दुःखतरं स्यात्। अत्र गुरुबुधसाहित्यफलमशुभमुक्तं, ग्रंथकर्त्रा तु वसिष्ठवाक्ये कश्चिन्मताभिप्रायेण शुभफलमुक्तम्। तदुक्तं वसिष्ठेन—'दारिद्र्यं रविणा कुजेन मरणं सौम्येन न स्युः प्रजा दौर्भाग्यं गुरुणा सितेन सहिते चंद्रे ससापत्नकम्। प्रव्रज्यार्कसुतेन मंदुजगुरौ वांछन्ति केचिच्छुभं ह्याद्यैर्मृत्युरसद्ग्रहैः शशियुतैर्दीर्घः प्रवासः शुभैः॥' इति। अत एव श्रीपतिनोक्तम्—'शुभं च दंभोऽलिभृदिज्यविद्भ्याम्' इति। दंभोलिर्वज्रस्तं बिभर्ति स दंभोलिभृदिंद्रस्तस्येज्यः पूज्यो बृहस्पतिरित्यर्थः। पापेति। पापद्वयेन युते उपलक्षणत्वात्पापत्रयादिभिर्युते मृतिरेव स्यात्। 'पापद्वययुते चंद्रे दंपत्योर्मरणं ध्रुवम्' इति नारदोक्तेः। बहुसौम्यग्रहयोगे तु बहुकालं पत्युर्देशांतरेऽवस्थानं स्यात्। तद्वाक्यमधुनैवाभिहितम्। अथास्य परिहारो नारदोक्तः—'स्वक्षेत्रगः स्वोच्चगो वा मित्रक्षेत्रगतो विधुः। युतिदोषाय न भवेद्दंपत्योः श्रेयसे तदा॥' इति। क्वचिद्गौतम इति पठ्यते। कश्यपेनापि—'तुंगमित्रस्वराशिस्थः शुभयुक्तः शुभप्रदः। एवंविधः क्रूरयुतः संपूर्णफलदः शशी॥' इति॥ ४३॥

अथाष्टमलग्नदोषं सापवादमनुष्टुभाह—

जन्मलग्नभयोर्मृत्युराशौ नेष्टः करग्रहः।
एकाधिपत्ये राशीशे मैत्रे वा नैव दोषकृत्॥ ४४॥

जन्मलग्नेति॥ जन्मलग्नजन्मराश्योः संबंधिनि मृत्युराशावष्टमलग्ने करग्रहो नेष्टः। यदाह नारदः—'दंपत्योरष्टमं लग्नं त्वष्टमो राशिरेव च। यदि लग्नगतः सोऽपि दंपत्योर्निधनप्रदः॥ स राशिः शुभयुक्तोऽपि लग्नं वा शुभसंयुतम्। लग्नं विवर्जयेद्यत्नात्तदंशांश्च तदीश्वरान्॥' इति। निधनं मरणम्। अत्र जन्मलग्ने जन्मराशौ च विशेषमाह कश्यपः—'इष्टं स्वजन्मलग्नं तज्जन्मराशिरनिष्टदः। लग्नगस्तु तयोः स्थानाच्छुभान्युपचयानि वै॥' इति। नारदोऽपि—'जन्मराश्युद्गमो नैव जन्मलग्नोदयः शुभः। तयोरुपचयस्थानं यदि लग्नगतं शुभम्॥' इति। अथाष्टमलग्नदोषपरिहारमाह-एकेति। जन्मराशिजन्मलग्नयोरन्यतरस्य विवाहलग्नस्य च स्वाम्यैक्ये सति यथा मेषवृश्चिकयोः तथा तयो राशीश्वरयोः मैत्रे यथा सिंहमीनयोः। अत्र हि सूर्यगुर्वोरन्योन्यप्रीतिरस्ति, एतादृशविषये लग्नाष्टमदोषकृद्विवाहो न स्यात्। यदाह

कश्यपः—'जन्मेशाष्टमलग्नेशौ मिथो मित्रे व्यवस्थितौ। जन्मराश्यष्टमर्क्षोत्थदोषो नश्यति भावतः॥' इति॥ ४४॥

अथोत्तरार्धोक्तमेवार्थं स्पष्टमुपजातिकयाह—

**मीनोक्षकर्कालिमृगस्त्रियोऽष्टमं लग्नं यदा नाष्टमगेहदोषकृत्।**
**अन्योन्यमित्रत्ववशेन सा वधूर्भवेत्सुतायुर्गृहसौख्यभागिनी ४५**

**मीनेति**॥ उक्षा वृषः, स्त्री कन्या, अन्ये प्रसिद्धाः; एते राशयो यद्यष्टमलग्नं स्युः; यथा-सिंहान्मीनः तुलातो वृषः, धनुषः कर्कः मेषाद्वृश्चिकः मिथुनान्मकरः कुंभात्कन्याष्टमलग्नं तदाष्टमगेहदोषकृन्न भवेत्। कुत इत्यत आह—**अन्योन्येति**। प्रागुक्तपरस्परप्रीतिवशेनेदं चोपलक्षणं मेषवृश्चिकयोस्तुलामकरयोरैकाधिपत्यात्। एवं सति सा वधूः परिणीता कन्या सुतायुर्गृहसौख्यभागिनी स्यात्। उक्तं च-'झषकुलीरवृषालिमृगांगनाजननराशिविलग्नगृहाष्टमाः। शुभफला भृगुणा कथितास्तयोरधिपती सुहृदौ हि परस्परम्॥' इति। परिहारांतरमप्याह गुरुः—'लग्नादष्टमराशीशः केंद्रगः शुभवीक्षितः। यद्यष्टमगतस्योक्तदोषमाशु व्यपोहति। रंध्रेशः स्वशुभांशस्थस्तुंगस्वक्षेत्रमित्रगः। अष्टमस्थानदोषो हि विनश्यति न संशयः॥' इति॥ ४५॥

अथाष्टमलग्नदोषप्रसंगाज्जन्मराशिजन्मलग्नाभ्यामष्टमेशस्य तदंशस्य च लग्नस्थितत्वदोषं तथा द्वादशभवनदोषं कुसुमविचित्राछंदसाह—

**मृतिभवनांशो यदि च विलग्ने तदधिपतिर्वा न शुभकरः स्यात्।**
**व्ययभवनं वा भवति तदंशस्तदधिपतिर्वा कलहकरः स्यात् ४६**

**मृतीति**॥ अष्टमभवननवांशो यदि विलग्ने स्यादथवाष्टमभवनस्वामी विलग्ने स्यात्तदा शुभकरो न स्यात्। यदाह कश्यपः—'दंपत्योरष्टमे लग्ने राशौ वापि तदंशके। तदीशे वा लग्नगते तयोर्मृत्युर्न संशयः॥' इति। अथ व्ययभवनं जन्मलग्नजन्मराशिभ्यां द्वादशं भवनं; अथवा व्ययांशोऽथ वा व्ययस्वामी यदि लग्ने स्यात्तदा कलहकृत्स्यात्। उक्तं च कश्यपेन—'तथैव द्वादशे लग्ने तदंशे वा तदीश्वरे। विवाहलग्नगे नैःस्वं नित्यं स्यात्कलहो द्वयोः॥' इति। नारदेनापि—'दंपत्योर्द्वादशं लग्नं राशिर्वा यदि लग्नगः। अर्थहानिस्तयोस्तस्मात्तदंशस्वामिनं त्यजेत्॥' इति॥ ४६॥

अथ विषघटीदोषं वंशस्थास्यामिंद्रवज्रया चाह—

**खरामतो ३० ऽस्यादितिवह्निपित्र्यभे**
**खवेदतः ४० के रदन ३२ श्च सार्पभे।**
**खबाणतो ५० श्वं धृतितो १८ ऽर्यमांबुपे**
**कृते २० भगत्वाष्ट्रभविश्वजीवभे॥ ४७॥**

मनो १४ द्विदैवानिलसौम्यशाक्रभे
  कुपक्षतः २१ शैवकरेऽष्टितो१६ऽजभे ।
युगाश्वितो २४ बुध्न्यभतोययाम्यभे
  खचंद्रतो १० मित्रभवासवश्रुतौ ॥ ४८ ॥
मूलेऽङ्कबाणा ५६ द्विपनाडिकाः कृता
  वर्ज्याः शुभेऽथो विषनाडिका ध्रुवाः ।
निघ्ना भभोगेन खतर्क ६० भाजिताः
  स्फुटा भवेयुर्विषनाडिकास्तथा ॥ ४९ ॥

खरामेति ॥ मनोरिति ॥ मूले इति ॥ रेवतीपुनर्वसुकृत्तिकामघानक्षत्रेषु खरामतः त्रिंशद्घटिकोत्तरं कृताश्चतस्रो घटिका विषनाडिकाः शुभे कार्ये वर्ज्याः स्युरिति तृतीयश्लोकेनान्वयः । एवं सर्वत्र व्याख्येयम् । के रोहिण्यां, कृतेर्विंशतेः, अजभे पूर्वाभाद्रपदायाम् । अन्यानि पदानि स्पष्टानि । तदेवं षष्टिघटीरूपे नक्षत्रभोगे ध्रुवकाश्चतस्रो विषनाडिकाश्च प्रोक्ताः । न्यूनाधिकत्वे तु स्पष्टीकरणमुच्यते । अथो इति । विषनाडीनां ध्रुवाः खरामत इत्येवमादयो नक्षत्रभोगेनेष्टेन निघ्नाः खतर्कैः षष्ट्या भाजितास्ततो विषनाडिकाध्रुवाः स्पष्टा भवेयुः । तथा विषनाडिका अपि भभोगेन निघ्नाः षष्ट्या भाज्याः लब्धाः स्पष्टा भवेयुरित्यर्थः । अत्रोपपत्तिः-त्रैराशिकेन यदि घटीषष्ट्यात्मकभभोगेनेमे ध्रुवका इमाश्चतस्रो विषनाडिकाश्च लभ्यंते तदिष्टभभोगेन किमिति ? तत्र ध्रुवा विषनाडिकाश्चेष्टभभोगेन गुण्याः षष्ट्या भाज्या इति फलितम् । यदाह कश्यपः—'वियद्बाणा वेददस्राः खरामा व्योमसागराः । वेदचंद्राश्चंद्रदस्राः खरामा व्योमबाहवः ॥ नेत्राग्नयो व्योमगुणाः शून्यदस्रा गजेंदवः । क्ष्माबाहवो वियद्दस्राः शक्राश्चंद्राः खभूमयः ॥ वेदचंद्रास्तर्कबाणा वेददस्राः खबाहवः । व्योमेंदवो व्योमचंद्रा धृतयस्तर्कभूमयः ॥ वेदाश्विनः खरामाः स्युर्दस्रर्क्षाद्घटिकाः क्रमात् । आभ्यः परस्तात्क्रमशश्चतस्रो विषनाडिकाः । ऋक्षाद्यं तद्घटीनिघ्नाः षष्टिभक्ताः स्फुटाः स्मृताः ॥ विषनाडीदोषदुष्टं लग्नं सर्वगुणान्वितम् । शुभैः सर्वैश्च संयुक्तमपि पंचेष्टकं त्यजेत् ॥' इति । वसिष्ठः—'कुर्वंत्युद्वाहितां कन्यां विधवां वत्सरत्रयात् । अन्यस्मिन्मंगले तांश्च निधनं चाथ निर्धनम् ॥' इति । ताः विषनाडिकाः । अथ प्रसंगात् ग्रंथांतरोक्तास्तिथिवारविषनाडिकाः प्रोच्यंतेऽस्माभिः । दैवज्ञमनोहरे—'तिथी १५ षु ५ नागा ८ द्रि ७ गिरी ७ षु ५ वारिधि ४ गजा ८ द्रि ७ दिक् १० पावक ३ विश्व १३ वासवाः १४। मुनी ७ भ ८ संख्या प्रथमातिथेः क्रमात्परं विषं स्याद्घटिकाचतुष्टयम् ॥ नखा २० द्वयं २ द्वादश १२ दिक् १० च शैला ७ बाणाश्च ५ तत्त्वानि २५ यथाक्रमेण । सूर्यादिवारेषु परं चतस्रो नाड्यो विषं स्यात्खलु वर्जनीयम् ॥'

ज्योतिःसागरे—'विवाहव्रतचूडासु गृहारंभप्रवेशयोः । यात्रादिशुभकार्येषु विप्रदा विषनाडिकाः ॥' इति । अस्य परिहारमाह दैवज्ञमनोहरे गुरुः—'चंद्रो विषघटीदोषं हंति केंद्रत्रिकोणगः । लग्नं विना शुभैर्दृष्टः केंद्रे वा लग्नपस्तथा ॥' इति । फलप्रदीपे-'विषनाड्युत्थितं दोषं हंति सौम्यखगः शशी । मित्रदृष्टोऽथ वा स्वीयवर्गस्थो लग्नपोऽपि च' इति ॥ ४७-४९ ॥

अथ दुर्मुहूर्तदोषं विवक्षुरादौ दिवामुहूर्तान्मालिनीछंदसाह—

गिरिशभुजगमित्राः पित्र्यवस्वंबुविश्वे-
ऽभिजिदथ च विधातापींद्र इंद्रानलौ च ।
निर्ऋतिरुदकनाथोऽप्यर्यमाथो भगः स्युः
क्रमश इह मुहूर्ता वासरे बाणचंद्राः ॥ ५० ॥

गिरिशेति ॥ अत्र बाणचंद्रा इत्युक्तेः मुहूर्तस्य पार्थक्येन लक्षणं नोक्तम् । गिरिशो महादेवः, भुजगः सर्पः, मित्रः सूर्यविशेषः, पित्र्यवस्वंबुविश्वे प्रसिद्धाः, पितरश्चतुर्थमुहूर्तस्वामिनः इत्यपेक्षितम् छंदोऽनुरोधात्तथोक्तिः । पित्र्यमिति नक्षत्राभिधानमयुक्तं प्रतिभाति । अथवा नक्षत्रतदीशयोरभेदोपचारात्स्वामिनि-वृत्तिः । अष्टमोऽभिजित् , ततो विधाता ब्रह्मा, इंद्रः इंद्रानलौ; अत्र समुदितयो-र्व्यासज्यवृत्तिर्देवतात्वं । इंद्रस्य अल्पाचतरत्वात्पूर्वनिपातः । निर्ऋती राक्षसः, उदकनाथो वरुणः, अर्यमा भगश्चेमौ सूर्यविशेषौ; इत्येते बाणचंद्राः पंचदश वासरे दिवसे मुहूर्ताः स्युः । यदाह नारदः—'दिवामुहूर्ता रुद्राहिमित्राः पितृवसूदकम् । विश्वेविधातृब्रह्मेंद्रा इंद्राग्न्यसुरतोयपाः ॥ अर्यमा भगसंज्ञश्च विज्ञेया दशपंच च ॥' इति ॥ ५० ॥

अथ रात्रिमुहूर्ताननुष्टुभाह—

शिवोऽजपादादष्टौ स्युर्भेशा अदितिजीवकौ ।
विष्ण्वर्कत्वष्टृमरुतो मुहूर्ता निशि कीर्तिताः ॥ ५१ ॥

शिव इति॥ प्रथममुहूर्तस्वामी शिवः, ततोऽजपादादष्टौ भेशा नक्षत्रस्वामिनो मुहूर्तेशाः । यथा-अजपादः अहिर्बुध्न्यः पूषा अश्विनौ यमः अग्निर्ब्रह्मा सोम इत्यष्टौ, ततो दशमेशोऽदितिः, जीवको गुरुः । स्वार्थे कः । विष्ण्वर्कत्वष्टृमरुतः प्रसिद्धाः । एते निशि मुहूर्ताः प्रकीर्तिताः । मुनिभिरिति शेषः । यदाह नारदः—'ईशाजपादहिर्बुध्न्यपूषाश्वियमवह्नयः। धातृचंद्रादितीज्याख्यविष्ण्व-र्कत्वष्टृवायवः ॥' इति । मुहूर्तलक्षणं कश्यपेनोक्तम्—'अह्नः पंचदशो भागो मुहूर्तोऽथ तथा निशि' इति । प्रयोजनमाह नारदः—'यस्मिन्भे हि यत्कर्म कथितं निखिलं च यत् । तद्दैवत्ये तन्मुहूर्ते कार्यं यात्रादिकं सदा ॥' इति ॥ यात्रेत्युपलक्षणं देवस्थापनार्थं कार्यम् । 'धिष्ण्ये प्रोक्तं स्वामितिथ्यंशकेऽस्य' इति ग्रंथकृताप्युक्तम् ॥ ५१ ॥

अथावसरप्राप्तान्दुर्मुहूर्तान् भुजंगप्रयातेनाह—

**रवावर्यमा ब्रह्मरक्षश्च सोमे कुजे वह्निपित्र्ये बुधे चाभिजित्स्यात् ।**
**गुरौ तोयरक्षौ भृगौ ब्राह्मपित्र्ये शनावीशसार्पौ मुहूर्ता निषिद्धाः ॥**

रवाविति ॥ रवेर्वारेऽर्यमा लक्षणया अर्यमस्वामिकश्चतुर्दशसंख्याको मुहूर्तो निषिद्धः । एवं सोमवारे ब्रह्मरक्षः । द्वंद्वैकवद्भावः । ब्रह्मरक्षःस्वामिकौ मुहूर्तौ निषिद्धौ । एवं सर्वत्र व्याख्येयम् । पद्यानि स्पष्टार्थानि । ईशो महादेवः, यदाह नारदः—'अर्यमा राक्षसब्राह्मौ पित्र्याग्नेयौ तथाभिजित् । राक्षसाप्यौ ब्राह्मपित्र्यौ भौजंगेशाविनादिषु ॥ वारेषु वर्जनीयास्ते मुहूर्ताः शुभकर्मणि ॥' ननु दुर्मुहूर्तोपलक्षितास्तिथ्यंशाः 'सूर्ये पट्स्वरनाग' (२।३८) इत्यादिनोक्ता इति पुनरत्राभिधानमयुक्तमिति चेत् । सत्यम् । अग्रे कुलिका अपि वक्ष्यमाणाः संति तत्पुनरुक्तिपरिहारावसरे समाधास्ये ॥ ५२ ॥

अथ वेधदोषं विवक्षुर्विहितनक्षत्रादिकमभिजिन्मानं च प्रहर्षिण्याह—

**निर्वेधैः शशिकरमूलमैत्र्यपित्र्य-**
**ब्राह्मांत्योत्तरपवनैः शुभो विवाहः ।**
**रिक्तामारहिततिथौ शुभेऽह्नि वैश्व-**
**प्रांत्यांघ्रिश्रुतितिथिभागतोऽभिजित्स्यात् ॥ ५३ ॥**

निर्वेधैरिति ॥ मृगशिरोहस्तमूलानुराधामघारोहिणीरेवत्युत्तराफल्गुन्युत्तराषाढोत्तराभाद्रपदास्वातीनक्षत्रैः निर्वेधैः वेधाख्यदोषरहितैः विवाहः शुभः शुभफलप्रदः । यदाह वसिष्ठः—'स्वातीमघायां निर्ऋतौ ध्रुवांत्यमैत्रेंदुहस्तेषु च कन्यकानाम् । पाणिग्रहस्त्विष्टफलप्रदः स्यादविद्धभेष्वेव गुणान्वितानाम् ॥' इति । नारदोऽपि—'पौष्णधात्र्युत्तरामैत्रमरुच्चंद्रार्कपित्र्यभैः । समूलभैरविद्धैस्तैः स्त्रीकरग्रह इष्यते ॥' इति । स्त्रीग्रहणं मुख्यत्वसूचनार्थम् । गृहस्थाश्रमस्य तदायत्तत्वात् । रिक्तेति । रिक्तामाः प्रसिद्धाः, आभिर्वर्जिततिथिषु शुभेऽह्नि शुभग्रहवासरेऽपि विवाहः शुभः । यदाह वसिष्ठः–'शुक्लद्वितीयादित एव कृष्णे पक्षे दशम्यंतगताः प्रशस्ताः । तास्वष्टमी स्कंदगणेशदुर्गाश्चतुर्दशी चापि तिथिर्विवर्ज्या ॥ वाराः प्रशस्ताः शुभखेचराणां सूर्यार्किवारौ खलु मध्यमौ तौ । त्याज्यः सदा भूमिसुतस्य वारः कामार्कतिथ्योरपि तौ प्रदोषौ ॥' इति । तौ सूर्यार्किवारौ त्रयोदशीद्वादश्योः प्रदोषौ प्रकृष्टदोषावित्यर्थः । गणेशश्चतुर्थी । अत्र यदि विचारितविवाहदिनमारभ्य चतुर्थीकर्मपर्यंतं पित्र्याद्यावश्यकश्राद्धदिनममावास्या वा भवति तदा विवाहो न कार्यः । उक्तं च—'विवाहमारभ्य चतुर्थिमध्ये श्राद्धं दिनं दर्शदिनं यदि स्यात् । वैधव्यमाप्नोति तदाशु कन्या जीवेत्पतिश्चेदनपत्यता स्यात् ॥' इति । अन्यच्च—'विवाहमध्ये यदि तत्क्षयाहं श्रुत्वाऽबुभुक्ष्याः पितरो न यांति । वृत्ते विवाहे परतस्तु कुर्याच्छ्राद्धं स्वधाभिर्न तु दूषयेत्तम् ॥' इति । अथ वैश्वेति । वैश्वमुत्तराषाढा, तस्यांत्यांघ्रि-

श्चतुर्थचरणः श्रुतेः श्रवणस्य पंचदशांशो मिलित्वाऽभिजिद्भोगः स्यात् । यदाह वसिष्ठः—'अभिजिद्भभोगमेतद्वैश्वेदेवांत्यपादमखिलं तत् । आद्याश्चतस्रो नाड्यो हरिभस्यैतच्च रोहिणीविद्धम् ॥' प्रयोजनमप्यग्रेनैव वक्ष्यति ॥ ५३ ॥

अथ वेधदोषं पंचशलाकाचक्रोद्धारनिरपेक्षं स्पष्टार्थं शार्दूलविक्रीडितेनाह—

वेधोऽन्योन्यमसौ विरिंच्यभिजितोर्याम्यानुराधर्क्षयो-
र्विश्वेंद्वोर्हरिपित्र्ययोर्ग्रहकृतो हस्तोत्तराभाद्रयोः ।
स्वातीवारुणयोर्भवेन्निर्ऋतिभादित्योस्तथोपांत्ययोः
खेटे तत्र गते तुरीयचरणाद्योर्वा तृतीयद्वयोः ॥ ५४ ॥

वेध इति ॥ विरिंचिः रोहिणी, रोहिण्यभिजितोर्ग्रहैः क्रूराक्रूरैः कृतो वेधोऽन्योन्यं परस्परं भवेत् । रोहिणीस्थे ग्रहे अभिजिद्विद्धः अभिजित्स्थे रोहिणी विद्धेत्यर्थः । एवं सर्वत्र व्याख्येयम् । पदानि स्पष्टार्थानि । यदाह नारदः – 'तिर्यक्पंचोर्ध्वगाः पंच रेखे द्वे द्वे च कोणयोः । द्वितीयशंभुकोणेऽग्निधिष्ण्यं चक्रेऽत्र विन्यसेत् । भान्यतः साभिजिन्त्येक रेखाखेटेन विद्धभम् ॥' इति । चक्रोद्धारो यथा—'चक्रे तस्मिन्नेकरेखास्थितेन तद्विद्धर्क्षं खेचरेण प्रदिष्टम् । क्रूरैर्विद्धं सर्वधिष्ण्यं विवर्ज्यं सौम्यैर्विद्धं नाखिलं पाद एव ॥' इति । नन्वष्टाविंशतिनक्षत्राणि चक्रे तत्र द्वयोः परस्परवेधे चतुर्दशयुग्मानि वक्तव्यानि स्युः, कथमष्टावेवाभिहितानि ? उच्यते—विवाहे एकादश नक्षत्राणामेव प्राशस्त्याभिधानात्तद्वेधोपयोगीन्येतावंत्येव युग्मानि संभवंतीनि तावतामेवाभिधानम् । अत एव दैवज्ञमनोहरे—'रोहिण्यभिजितोर्मूलादित्ययोर्मृगवैश्वयोः । रेवत्युत्तरफाल्गुन्योर्मघाश्रवणयोर्भवेत् ॥ हस्तोत्तराभाद्रयोश्च स्वातीवारुणयोर्मिथः । अनुराधाभरण्योश्च वेधोऽयं पंचरेखजः ॥' इति । वराहीयविवाहपटले प्रत्येकवेधफलानि 'रविवेधे वैधव्यं पुत्रविनाशं करोति कुजवेधः । वंध्या पंडितवेधे दीक्षाकरणं करोति गुरुवेधः । भृगुसुतवेधे पुत्री दासी रविजेंदुराहुसंभूते ॥' इति । पंडितो बुधः । दीक्षाकरणं प्रव्राजिकात्वम् । चरणवेधमाह—खेट इति । तत्र तस्मिन्नक्षत्रे गते विद्यमाने खेटे ग्रहे सति यदि स चतुर्थपादेऽस्ति तदा परनक्षत्रस्य प्रथमपादे वेधः । यदि तृतीयपादे तदा द्वितीयचरणस्य वेधः । एवं यदि द्वितीयपादे तदा तृतीयपादस्य वेधः । यदि प्रथमपादे तदा चतुर्थपादस्य वेध इत्यर्थः । यदाह वसिष्ठः 'अतोऽन्यपादमादिगो द्वितीयगस्तृतीयकम् । तृतीयगो द्वितीयकं चतुर्थगस्तु चादिमम् । भिनत्ति वेधकृद्ग्रहो न चान्यपादमादरात् ॥' एतद्यद्यपि शुभाशुभग्रहसाधारणं प्रतीयते तथापि सौम्यग्रहपरं द्रष्टव्यम् । यतो वसिष्ठेनैव क्रूरदोषाभिधानावसरे-'विषप्रदिग्धेन हतस्य पत्रिणा मृगस्य मांसं शुभदं क्षताद्विना । तथैव पादो न शुभोऽवशिष्टाः पादाः शुभाश्चेति पितामहेन ॥' इत्या-

शंक्य समाहितम्–'पाद एव न शुभः शुभग्रहैर्विद्ध इत्यखिलशास्त्रसंमतम् । क्रूरविद्धयुतं न शोभनं शोभनेषु गदितं न पादतः ॥' इति । नारदः–'पादमेव शुभैर्विद्धमशुभैर्नैव कृत्स्नतः ।' इति । कश्यपोऽपि—'क्रूरविद्धं युतं धिष्ण्यं क्राक्रांतं च कृत्स्नभम् । मणिहेममयं हर्म्यं भूताक्रांतमिव त्यजेत् ॥' इति । कृत्स्नभं=सकलनक्षत्रम् । तस्मात्क्रूरग्रहविद्धे संपूर्णनक्षत्रत्यागः शुभविद्धे चरणत्याग इति सिद्धांतः । तत्र विवाहे पंचशलाकावेध एव । यदाह वसिष्ठः–'पंचशलाकाचक्रे पाणिग्रहणे भवेधविधिरुक्तः । शस्तः शुभमिश्रकृतः सप्तशलाकाज इतरत्र ॥' इति । श्रीपतिः-'वधूप्रवेशने दाने वरणे पाणिपीडने । वेधः पंचशलाकाख्योऽन्यत्र सप्तशलाककः ॥' इति ॥ ५४ ॥

अथ केचित्सप्तशलाकाचक्रेऽपि वेधमाहुः । तदर्थं चक्रन्यासं विनैव वेधदोषं शार्दूलविक्रीडितेनाह—

शाक्रेज्ये शतभानिले जलशिवे पौष्णार्यमर्क्षे वसु-
द्वीशे वैश्वसुधांशुभे हयभगे सार्पानुराधे तथा ।
हस्तोपांतिमभे विधातृविधिभे मूलादिती त्वष्ट्रभा-
जांघ्री याम्यमघे कृशानुहरिभे विद्धेऽद्रिरेखे मिथः ॥५५॥

शाक्रेति ॥ अद्रिरेखे सप्तशलाकाख्ये चक्रे शाक्रेज्ये ज्येष्ठापुष्यनक्षत्रे मिथः परस्परं ग्रहाधिष्ठितत्वेन विद्धे ज्ञेये । एवं जलशिवे पूर्वाषाढार्द्रे विद्धे ज्ञेये । एवं सर्वत्र व्याख्येयम् । वैश्वसुधांशुभे=उत्तराषाढामृगशिरसी । हयभगे=अश्विनीपूर्वाफल्गुन्यौ । उपांतिमभे=अंत्यस्य समीपमुपांतिमम् उत्तराभाद्रपदा । अन्यत्स्पष्टम् । अत्र मूलवाक्यं स्वरोदयस्थयज्ञोपवीतप्रकरणेऽभिहितम् । चक्रोद्धारो व्यवहारसमुच्चयेऽपि—'सप्त सप्त विनिपात्य रेखिकास्तिर्यगूर्ध्वमथ [illegible]कादिकम् । लेखयेदभिजिता समन्वितं चैकरेखखगमेन विध्यते ॥ [illegible] । दीपिकायाम्–'यस्याः शशी सप्तशलाकभिन्नः पापैरपापैरथवा [illegible] उद्वाहवस्त्रेण नु संवृतांगी श्मशानभूमिं रुदती प्रयाति ॥' तथा च भोजः—'विद्धे सप्तशलाकाख्ये विधवा लग्नवाससा । पुनर्यात्यचिरात्मार्गे मुग्धाक्षी मुग्धचंद्रिकाम् ॥' वैधव्यं च नक्षत्रसंख्यातुल्याब्दैर्भवति । तदुक्तं वराहेण 'नक्षत्रजमुद्वाहे फलमब्दैस्तारकामितैः सदसत्' इति । अत्रापि तुल्यन्यायत्वात्क्रूरवेधे संपूर्णं नक्षत्रं त्याज्यम् । शुभग्रहवेधे पादस्त्याज्य इति ज्ञेयम् । नन्वत्र प्रागुक्तहेतोरष्टावेव नक्षत्रयुग्मानि वाच्यानि, किमर्थं चतुर्दशयुग्मानामभिधानम्? उच्यते,–'सप्तशलाकाज इतरत्र' इति वचनात्सकलशुभकर्मसु विचार्यमाणत्वादेतावन्तामुक्तिः । 'भुक्तं भोग्यं तथाक्रांतं विद्धं पापग्रहेण च । शुभाशुभेषु कार्येषु वर्जनीयं प्रयत्नतः ॥' इति स्वरोदयेऽपि सामान्यतोऽभिधानात् ॥ ५५ ॥

---

१ 'विद्धे कुमुद्राक्षं' इति पाठांतरम् ।

अथ क्रूराक्रांतादिनक्षत्रदोषं सापवादमनुष्टुभाह—

**ऋक्षाणि क्रूरविद्धानि क्रूरमुक्तादिकानि च ।**
**भुक्त्वा चंद्रेण मुक्तानि शुभार्हाणि प्रचक्षते ॥ ५६ ॥**

ऋक्षाणीति ॥ क्रूरग्रहैर्विद्धानि ऋक्षाणि तथा क्रूरैर्मुक्तानि त्यक्तानि आदिशब्दात्क्रूरैराक्रांतानि क्रूरगंतव्यानि च चकारस्यानुक्तसमुच्चयार्थत्वात् त्रिविधोत्पातैः दूषितानि ऋक्षाणि दूषितानि ज्ञेयानि । तानि यदि चंद्रेण भुक्त्वा मुक्तानि तथा शुभार्हाणि प्रचक्षते वदंति । मुनय इति शेषः । यदाह वात्स्यः—'भुक्तं भोग्यं तथाक्रांतं विद्धं पापग्रहेण भम् । मंगलेषु च कार्येषु यत्नतः परिवर्जयेत् ॥' इति । वसिष्ठोऽपि—'उत्पातभं ग्रहणभं क्रूरविद्धस्थितं च यत् । दहत्येव शुभं कर्म यथा रामशरोंऽबुधिम् ॥' इति । शार्ङ्गीये—'क्राश्रितं क्रूरविमुक्तविद्धं गंतव्यधिष्ण्येषु कुमारिकाणाम् । वदंति पाणिग्रहणे मुनींद्रा वैधव्यमब्दैस्त्रिभिरेवमाहुः ॥' इति । अस्यापवादमाह केशवार्कः—'उत्पातपापग्रहदूषितं भं यदींदुराक्रम्य पुनर्भुनक्ति । तदा तदहं किल मंगलेषु त्यजेत्समाक्रांततनूं रवींद्वोः ॥' इति । अयमवधिराक्रांत नक्षत्रभिन्नविषयो वेदितव्यः । तत्र हि चांडालधृतहस्त्यानवच्चंद्रभोगस्यानिर्णेजकत्वात् । तदुक्तं शार्ङ्गीये—'यद्धिष्ण्यं दोषसंयुक्तं स्यात्तथापींदुसंयुतम् । शुभकार्येषु तत्त्याज्यमन्यकर्मसु सिद्धिदम् ॥ यथा हि चांडालधृतकहस्तो मज्जन्नगाधेऽपि सरित्प्रवाहे । भवेन्न पूतः शशिभोगतोऽपि तथा न शुध्येदुडु पापयुक्तम् ॥ स्पृष्ट्वा गते तु चांडाले शुद्धिराप्लवनाद्यथा । तथा भुक्त्वा गते क्रूरे चंद्रभोगाद्विशोधनम् ॥' इति । अत एवोक्तं वसिष्ठेन—'गंतव्यधिष्ण्यं खलु भुक्तभं यत्क्रूरैर्महोत्पातविदूषितं च । चंद्रोपभोगादनलं तदानीं शुभेषु कार्येषु शुभप्रदं च ॥' इति । एतच्च समानन्यायत्वात्क्रूरविद्धे भे चंद्रभोगादपि शुद्धिर्नास्तीत्यत्रापि ध्येयम् । यत्तु नारदेनोक्तम्—'ग्रहणोत्पातभं त्याज्यं मंगलेषु ऋतुत्रयम् । यावच्च रविणा भुक्त्वा न मुक्तं च्यवकाष्ठयत ॥' इति, तत 'यावद्वचनं वाचनिकम्' इति न्यायेन ग्रहणोत्पातभयोः षण्मासपर्यंतं निषेधस्ततोऽपि यावद्रविणा भुक्त्वा न त्यक्तं तावत्त्यजेत । तत्रापि चंद्रग्रहण एव सूर्यग्रहणीयनक्षत्रस्य तु षण्मासानंतरं सूर्यभोगासंभव एव । अतो न क्रूरमुक्तादौ रविभोगापेक्षा । उत्पातभस्य तु चंद्रोपभोगोऽप्यावश्यको वसिष्ठवाक्यालोचनात । अत्र क्रूरवेधे निखिलं भं त्याज्यं न चरण एव । तदुक्तं कश्यपेन—'क्रूरविद्धयुतं धिष्ण्यं निखिलं नैव पादतः । अन्यैरपि गुणैर्युक्तं सर्वदोषविवर्जितम् ॥ त्यजेदनर्घमाणिक्यं कलंकोपहतं यथा' इति । अयं च क्राधिष्ठितत्वदोषः क्रूरग्रहचंद्रयोरेकराशिस्थत्वे वेदितव्यः । यदा तु चंद्रः प्रथमपादे क्रूरग्रहश्च तृतीयपादे एवं सति राशिभेदोऽप्युपजायते तदा क्रूरग्रहाधिष्ठितत्वदोषो नास्तीति ध्येयम् । यथा मृगशिरसि प्रथमे पादे चंद्रः तृतीये क्रूरग्रहः

१ 'राघवाग्निशरोंऽबुधिम्' इति क्वचिद्दृश्यते । २ 'भवस्थोऽपि' इति पाठः ।

तत्र सत्यप्येकनक्षत्रत्वे राशिभेदो द्वयोरिति । उक्तं च ज्योतिर्निबंधे—'एकस्मिन्नधिपे धिष्ण्ये भिन्ने राशौ खलग्रहे शशिनि । तच्चंद्रर्क्षे कुर्याद्विवाहयात्रादिकं सर्वम् ॥' इति ॥ ५६ ॥

अथ लत्तादोषमुपजातिकयाह—

**ज्ञराहुपूर्णेंदुसिताः स्वपृष्ठे भं सप्तगोजातिशरैर्मितं हि ।**
**संलत्तयंतेऽर्कशनीज्यभौमाः सूर्याष्टतर्काग्निमितं पुरस्तात् ॥ ५७ ॥**

ज्ञेति ॥ सप्त प्रसिद्धाः, गावो नव, जातयो द्वाविंशतिः, शराः पंच; एतैर्मितं भं स्वाक्रांतनक्षत्राज्ज्ञराहुपूर्णेन्दुसिताः स्वपृष्ठे संलत्तयंते । यथा-बुधः सप्तमं, राहुर्नवमं, पूर्णेन्दुः पूर्णिमांतचंद्रो द्वाविंशम्; तच्च गतकृष्णपक्षे पंचमीषष्ठीसप्तमीनामन्यतमस्यां संभवति । शुक्रः पंचमं स्वपृष्ठे लत्तयतीत्यर्थः । अर्कशनीज्यभौमाः क्रमेण पुरस्तादग्रे सूर्याष्टतर्काग्निमितं संलत्तयन्ते । यथा-सूर्यः स्वाक्रांतनक्षत्राद्द्वादशं, शनिरष्टमं, गुरुः षष्ठं, भौमस्तृतीयभं, अग्रतो लत्तयतीत्यर्थः । यदाह नारदः—'पुरतः पृष्ठतोऽर्काद्या दिनर्क्षं लत्तितं च यत् । अर्काक्रांतिगुणांगर्तुबाणाष्टनवसंख्यभम् ॥' इति । सूर्यः पुरतः, चंद्रः पृष्ठतः; एवं क्रमेण भौमादयोऽपि पुरतः पृष्ठतश्च लत्तयंतीत्यर्थः । वराहोऽपि—'सूर्यो द्वादशमृक्षं षष्ठं गुरुस्त्वनिजस्तृतीयं तु । संलत्तयति दिवाकरपुत्रोऽष्टममग्रतः पादैः ॥ पश्चाद्द्वाविंशतिभं पौर्णिमचंद्रस्तु पंचमं शुक्रः । स्वर्भानुरपि नवमं सप्तममृक्षं शशांकसुतः ॥' इति । प्रत्येकं वेधफलमाह स एव—'रविलत्ता वित्तहरी नित्यं कौजी विनिर्दिशेन्मरणम् । चांद्री नाशं कुर्याद्बौधी नाशं वदन्त्येव ॥ सौरी मरणं कथयति बंधुविनाशं बृहस्पतेर्लत्ता । मरणं लत्ता राहोः कार्यविनाशं भृगोर्वदन्तीति ॥ नन्वग्रलत्ता वा पृष्ठलत्ता वा वक्तव्या किमिति द्वैरूप्यकथनम । अत्र समाधत्ते केशवार्कः—'इति सति शुभदामभिलत्तने यदनुलत्तनमृक्षमृषिव्रजैः । तदुदुपश्चिमपूर्वविभागयोरनधिकाधिकदोषविवक्षया ॥' इति । अनधिकः=स्वल्पः । अत्र राहोः सदा वक्रित्वान्नवमं गणनाक्रमेणैव ग्राह्यम् । यथाश्विन्यां राहुराश्लेषां लत्तयति । संमुखलत्तावादिमतेऽपि वक्रगामिना राहुणा संमुखमश्विनीरेवतीत्यादिगणनया विंशतितमं भं आश्लेषैव न त्वन्यथा भ्रमितव्यमिति सांप्रदायिकाः ॥ ५७ ॥

अथ पातदोषं सुबोधं पथ्यार्ययाह—

**हर्षणवैधृतिसाध्यव्यतिपातकगंडशूलयोगानाम् ।**
**अंते यन्नक्षत्रं पातेन निपातितं तत्स्यात् ॥ ५८ ॥**

हर्षणवैधृतीति ॥ व्यतिपातकः इति स्वार्थे कः । हर्षणेत्यादिषट्योगानां अंते यच्चंद्रनक्षत्रं भवेत्तत्पातेन चंडीशचंडायुधाख्येन निपातितं स्यात् । यदाह

१ संमुखलत्तावादिमते राहुर्विंशतितमं नक्षत्रं लत्तयति । तदुक्तं विवाहवृंदावने केशवार्केण—'रविनवांभितमर्कविधुंतुदौ' इति ।

त्रिविक्रमः—'साध्यहर्षणशूलानि वैधृतिव्यतिपातयोः। यच्च गंडस्य चांते स्यात्तत्पातेन निपातितम्॥' इति। नारदेन प्रकारांतरेणैतत्प्रकारसंवादकः पातोऽभिहितः—'सूर्यभात्सार्पपित्र्यांत्यत्वाष्ट्रमित्रोडुविष्णुभे। संख्यया दिनभे तावदाश्विभात्पातदुष्टभम्॥' वसिष्ठेनापि—'रविभादहिपितृमित्रत्वाष्ट्रभ-हरिपौष्णभेषु गणितेषु। आश्विनभादिंदुयुतौ तावति वै पतति गणनया पातः॥ अयमपि पातो दोषश्चंडीशचंडायुधाह्वयो ज्ञेयः। अखिलेषु मंगलेष्वपि वर्ज्यो यस्माद्विनाशदः कर्तुः॥' इति पद्ये यद्यपि हर्षणादीनामुपादानं नास्ति तथाप्य भिहिताश्लेषादिनक्षत्रसाहित्येन पाताभिधानात्तत्तुल्यसंख्याकेष्वेव योगेषु पात-संभवो जायते इति मत्वा हर्षणादीनामुक्तिः। यद्येवं व्यतीपातवैधृतिभ्यां स्वीयभोगघटिकात्मकाभ्यां तिथिनक्षत्रादिकं सर्वमेव सामान्यतो निंद्यमुक्तं तत्किमत्रानयोर्योगयोः पुनर्ग्रहणेन? उच्यते—यदा नक्षत्रयोगयोस्तुल्यकाल एव प्रवृत्तिनिवृत्ती तदाऽनयोर्योगयोरुपादानवैयर्थ्यमेव। यदा तु सूर्योदयादा-रभ्य कियद्घटिकत्वं दुष्टयोगयोर्नक्षत्रभोगस्तु सूर्योदयादेव बहुकालव्यापी तदा पातासंभवे तावत्कालस्यैव निषेधः सामान्यवाक्यात्। पातसंभवे हि संपूर्णस्य नक्षत्रस्य निषेधो यथा स्यादिति तयोर्दुष्टयोगयोः पुनरुपादानं कृतम्। एवमन्ये-ष्वपि योगेषु पातसंभवे संपूर्णनक्षत्रस्य निषेधो यथा स्यादित्यनयोर्दुष्टयोगयोः पुनरुपादानं त्यागे इत्यर्थः। अयं च सर्वोऽपि विचार एकार्गलदोषेऽपि द्रष्टव्यः। यदा तु पातैकार्गलौ न स्तस्तदा दुष्टयोगानामुक्तादिमघटीत्यागः कर्तव्य इति॥५८॥

अथ सूर्यचंद्रक्रांतिसाम्यापरपर्यायं महापातदोषं शालिन्याह—

**पंचास्याजौ गोमृगौ तौलिकुंभौ कन्यामीनौ कर्क्यली चापयुग्मे।**
**तत्रान्योन्यं चंद्रभान्वोर्निरुक्तं क्रांतेः साम्यं नो शुभं मंगलेषु ५९**

**पंचेति**॥ पंचास्याजौ=सिंहमेषौ, अन्ये प्रसिद्धाः, एषु राशियुग्मेषु चंद्र-भान्वोः पाठक्रमेण व्युत्क्रमेण वा स्थितयोः क्रांतिसाम्यं निरुक्तं, तन्मंगलेषु नो शुभं स्यात्। अत्र पंचास्याजावित्येवमादीनां ग्रहणमुदाहरणदिक्प्रदर्शनार्थ-त्वात्। सर्वथा सूर्याचंद्रमसोः सायनयोर्योगः षड्राशिमितो द्वादशराशिमितो वा विवक्षितस्तदैव क्रांतिसाम्यस्य संभवात्। अतः संमतिवाक्यस्यानवसरः। नन्वेतावंत एव षड्राशियोगा द्वादशराशियोगा वा संभवंतीति चेन्न। राश्यं-तावच्छेदस्थित्याऽधिका अपि योगा जायंते। तथा हि—[illegible] प्रत्यंशकलाविकलांतस्थितत्वेनानंतभेदसंभवाच्च। अतः प्रागुक्तं व्याख्यानं ज्यायः। क्रांतिसाम्यस्य च महापात इति नाम। एतस्य निंद्यतामाह वसिष्ठः—'दोषो महापात इति प्रसिद्धः स वैधृतो हंति वधूं वरं च। तं रक्षितुं लग्नगुणास्त्वशक्ताः स्वबांधवास्तेऽशनितोपघातम्॥' अशनिर्वज्रम्। नारदोऽपि—'यस्मिन्दिने महापातस्तद्दिनं वर्जयेच्छुभे॥' इति। अत एव पतनात्पातः सकलशुभकर्मणामित्यन्वर्थतापि। सा च स्पष्टा सोमसिद्धांते—'यच्छुभानां विनाशाय नदन्निव पतत्ययम्। व्यतीपातः प्रसिद्धोऽत्र संज्ञाभेदेन वैधृतिः॥' इति। महापातशब्दस्य रूढिस्तु रवींदुक्रांतिसाम्य एव, नत्वन्येषां

ग्रहाणां क्रांतिसाम्ये । यथा 'जलज'शब्दस्य रूढिः कमले, ननु भेकादौ । क्रांतिर्नाम ग्रहाणां दक्षिणोत्तरवृत्ते गमनम् । या च सूर्यस्य क्रांतिः सा यदा चंद्रक्रांत्या तुल्या स्यात्स पातमध्यकालः । तत्रोत्सर्गतो रवींदुक्रांत्योः समानत्वं भुजसाम्ये सति भवति । भुजो नाम—'न्यूनं भुजः स्याद्व्यधिकेन हीनं भार्धं च भार्धादधिकं विभार्धम् । नवाधिकेनोनितमर्कभं च' इति लक्षणलक्षितः । तत्साम्यं तु सूर्याचंद्रमसोर्योगे षड्राशितुल्ये द्वादशराशितुल्ये वा सति भवति । अत एव ग्रंथकृता तादृशा योगा एव पठिताः । यदा तु भुजस्य न्यूनाधिकत्वं तदा 'दिवौकसोरंतरलिप्तिकौघाद्गत्योर्वियोगेन हृतात्' इत्यादिना प्रकारेण ग्रहयुतिवत् भुजसाम्यमानेयम् । ननु भुजसाम्यमेव क्रांतिसाम्यसाधकं चेत्किं गणितग्रंथोक्तेन बह्वायाससाध्येन पाताध्यायेन ? उच्यते—'विक्षेपाय क्रमैकत्वे क्रांतिविक्षेपसंयुता । दिग्भेदे वियुता स्पष्टा भास्करस्य यथागता ॥' इति सूर्यसिद्धांतवाक्यात्सूर्यव्यतिरिक्तानां ग्रहाणां शरसंस्कृता क्रांतिः स्पष्टेत्युच्यते तादृशी चंद्रक्रांतिश्चेत्सूर्यक्रांत्या समा यस्मिन्काले स्यात्स स्पष्टः पातमध्यकालः तत्र तादृशक्रांतिसाम्यानयनस्यातिकष्टसाध्यत्वात्तदध्यायोक्तिः सार्थिकैव । एवं ग्रंथकर्त्रा सूर्याचंद्रमसोः क्रांतिसाम्यमेव दोषोऽभिहितः—'पंचास्याजौ' इत्यादिकथनं किमर्थमिति चेदुच्यते–'विना सपातेंदुमिहायनांशकैर्युतो रविः शीतकरश्च गृह्यते । समापमत्वे व्यतिपातवैधृताह्वया-द्वदैक्ये रसभेऽर्कभे क्रमात् ॥' इति भास्कराचार्योक्तिमंगीकृत्य सामान्यतः क्रांतिसाम्यदिवसस्य शीघ्रोपस्थित्यर्थं भुजसाम्यप्रतिपादकत्वात् । नन्वेवं भुजसाम्यमेव चेत् क्रांतिसाम्योत्पादकं भवेत्तर्हि यत्र सूर्यचंद्रयोः षड्राशिमितमंतरं द्वादशराशिमितमंतरं वा यथा मेषतुलयोर्मेषयोर्वा तत्रापि भुजसाम्यस्य तादवस्थ्यात क्रांतिसाम्यं भवत्येवेति माससमध्ये महापातचतुष्टयं वक्तव्यं स्यात्कुतो हेतोर्नोक्तं ग्रंथकृता ? इति चेत्, अत्रोच्यते—योगोत्पन्ने हि पाते मुनिभिः स्नानदानादिकं फलमुक्तमतः स एव महापातो गृह्यते ननु वियोगोत्पन्न उत्क्रमतः स न गृह्यते । तदुक्तं वसिष्ठेन स्वसिद्धांते—'चक्रे चक्रार्धतुल्ये वा कियद्भागाधिकोनके । सायनार्केंदुयोगे चेत्तदा पातस्य संभवः ॥ शुभमंगलकर्माणि लोकानां च विनाशयेत् । स्नानदानादिकास्तत्र जपश्राद्धादिकाः क्रियाः ॥ कदापि कुरुते मर्त्यः सुमहत्फलमश्नुते । सूर्यग्रहे गुरुक्षेत्रे कोटिस्वर्णार्पणे फलम् ॥ तत्फलं लभते पाते स्नानश्राद्धजपादिना । उत्पत्तौ लक्षगुणितं भ्रमणे कोटिसंगुणम् । पातेऽथार्बुदसंगुण्यं पतिते कृतमक्षयम् ॥' इति । तथा सूर्यसिद्धांतेऽपि—'एकायनगतौ स्यातां सूर्याचंद्रमसौ यदा । तद्युतौ मंडले क्रांत्योस्तुल्यत्वे वैधृताभिधः ॥ विपरीतायनगतौ चंद्रार्कौ क्रांतिलिप्तिकाः । समास्तदा व्यतीपातो भगणार्धं तयोर्युतौ ॥ तुल्यांशजालसंपर्कात्तयोस्तु प्रवहाहतः । तात्क्रोधोद्भवो वह्निर्लोकाभावाय जायते ॥' इति । अत एवांतरोत्पन्नक्रांतिसाम्ये महापातदोषो नास्त्येव । तदुक्तं गणेशदैवज्ञैः—'पूर्वं तस्मात्पातमध्यं द्वितीयं पूर्वैर्नोक्तं तद्यतो नातिदुष्टम्' इति । अनेनैवाश-

येन वसिष्ठेन स्वसंहितायामुक्तम्—'शास्त्रात्समानीतमहातिपातः सर्वैस्ततो हंति वधूं वरं च । त्रिःसप्तवारानिव जामदग्न्यक्रोधोऽचिरात्क्षात्रकुलं समस्तम् ॥' इति । शास्त्राद्गणितशास्त्रोक्तान्महापाताधिकारादित्यर्थः । तत्र हि योगादेव महापातस्याऽऽनीतत्वात्तस्यैव दोषत्वं नान्यस्येत्यर्थादुक्तं भवति । किंच पंचांगीयोऽपि योगः सूर्याचंद्रमसोर्योगादेव साधितः स्पष्टाधिकारे । अतस्तस्मादेव महापातोऽपि साधयितुमुचित एव । अथात्र ज्ञाते क्रांतिसाम्ये कस्मिन्काले मंगलकृत्यं निषिद्धमित्येष विशेषविचारो 'न्यूनाधिमासकुलिकप्रहरार्धपात' (१।३४) इत्यत्रास्माभिरभिहितोऽस्ति स तत एवावगंतव्य इत्यलमतिप्रसंगेन ॥ ५९ ॥

अथ खार्जूरदोषं सुबोधमिंद्रवज्रयाह—

**व्याघातगंडव्यतिपातपूर्वशूलांत्यवज्रे परिघातिगंडे ।**
**एकार्गलाख्यो ह्यभिजित्समेतो दोषः शशी चेद्विषमर्क्षगोऽर्कात् ६०**

व्याघातेति ॥ अंत्यो वैधृतिः, अन्ये प्रसिद्धाः । यस्मिन्दिने व्याघातादिके विरुद्धे दुष्टयोगे सति अर्कादर्कनक्षत्राच्छशी चंद्रोऽभिजित्समेतो विषमे विषमसंख्याके ऋक्षे नक्षत्रे गतश्चेत् स्यात्तदा खार्जूरचक्रोत्पन्न एकार्गलाख्यो दोषः स्यात् । यदा समे स्यात्तदा न दोष इत्यर्थः । यदाह त्रिविक्रमः-'विरुद्धनामयोगेषु साभिजिद्विषमर्क्षगः । अर्कादिंदुस्तदा योगो निंद्य एकार्गलाभिधः ॥' इति । केशवार्केणापि—'न्यस्ते सहाभिजिति' इत्यादिनाऽभिजिद्गणनोक्ता । वसिष्ठेन त्वत्र चक्रमभिहितम्—'अंत्यातिगंडपरिघव्यतिपातपूर्वव्याघातगंडवरशूलमहाशनीषु । चित्रानुराधपितृपन्नगदस्रभेषु सादित्यमूलशशिसूरिषु मूर्ध्नभेषु ॥ रेखामेकामूर्ध्वगां षट् च सप्त तिर्यक् कृत्वाप्यत्र खार्जूरचक्रे । तिर्यग्रेखासंस्थयोश्चंद्रभान्वोर्दृक्संपातो दोष एकार्गलाख्यः ॥' चक्रोद्धारो यथा-'खरकरतुहिनांश्वोर्दृष्टिसंपातजन्मा अनलमयशरीरस्तूत्रिरश्मिसंधान् । भुवि पतति जनानां मंगलध्वंसनाय गुणगणशतसंधैरप्यवार्योऽग्निकोपः ॥' इति । अत्र वसिष्ठवाक्येऽभिजित्साहित्यमस्ति न वेति संदेहः । नारदस्त्वभिजिद्वर्जितं चक्रमाह—'व्याघातशूलपरिघपातपूर्वेषु सत्स्वपि । गंडातिगंडकुलिकवैधृत्या सहितेषु च ॥ अदितीन्दुमघाद्यायमूलमैत्रज्यभानि च । ज्ञेयानि सह चित्राभिर्मूर्ध्नि भानि यथाक्रमम् ॥ लिखेदूर्ध्वगतामेकां तिर्यग्रेखास्त्रयोदश । तत्र खार्जूरिके चक्रे कथितं मूर्ध्नि भं न्यसेत ॥ भान्यकरेखागतयोः सूर्याचंद्रमसोर्मिथः । एकार्गलो दृष्टिपाताद्धाभिजिद्वर्जितानि वै ॥ लांगले कमठे चक्रे फणिचक्रे त्रिनाडिके । अभिजिद्गणना नास्ति चक्रे खार्जूरिके तथा ॥' इति । कश्यपेनापि—'एकार्गलो दृष्टिपातश्चाभिजिद्रहितानि वै' इति । तत्र त्रिविक्रमकेशवार्कवाक्ययोः समूलत्वस्य शिष्टसंमतत्वाच्चाचारत्वादिवाक्यैः सह विकल्पः । ततोऽनयोः पक्षयोर्यथादेशाचारं व्यवस्थेति युक्तं प्रतीमः ॥ ६० ॥

---

१ पूर्वः आद्यो योगः विष्कंभाख्यः ।

अथोपग्रहदोषमुपेंद्रवज्रयाह—

**शराष्टदिक्शक्रनगातिधृत्यस्तिथिर्धृतिश्च प्रकृतेश्च पंच ।**
**उपग्रहाः सूर्यभतोऽब्जताराः शुभा न देशे कुरुबाह्लिकानाम् ६१**

शरेति ॥ सूर्यभतः सूर्याक्रांतनक्षत्रादब्जताराः चंद्रनक्षत्राणि पंचाष्टदशचतुर्दशसप्तैकोनविंशतिपंचदशाष्टादशैकविंशतिद्वाविंशतित्रयोविंशतिचतुर्विंशतिपंचविंशतिसंख्याकाश्चेत्स्युस्तदोपग्रहनामका दोषाः स्युः । प्रकृतिः=एकविंशतिः । यदाह नारदः—'भूकंपः सूर्यभात्सप्तमर्क्षे विद्युच्च पंचमे । शूलोऽष्टमे च दशमेऽशनिरष्टादशे ततः ॥ केतुः पंचदशे दंडश्चोल्का एकोनविंशतिः । निर्घातपातसंज्ञश्च ज्ञेयः स नवपंचमे ॥ मोघनिर्घातकंपाश्च कुलिशं परिवेषकम् । विज्ञेयाश्चैकविंशाख्यादारभ्य च यथाक्रमम् ॥ चंद्रयुक्तेषु भेष्वेषु शुभकर्म न कारयेत् ॥' इति । वराहः—'उपग्रहर्क्षेषु विवाहिता स्त्री सूर्यर्क्षतो दुर्भगतामुपैति ।' अन्यत्रापि—'गृहप्रवेशे दारिद्र्यं विवाहे मरणं भवेत् । प्रस्थाने विपदः प्रोक्ता उपग्रहदिने यदि ॥' इति । एवं सामान्यतो निषेधमभिधाय देशभेदेन परिहारमाह—शुभा इति । स्पष्टार्थम् । 'बाह्लीके गुरुदेशे च वर्जयेन्नमुपग्रहम्' इति कश्यपोक्तेः ॥ ६१ ॥

अथोपग्रहापवादप्रसंगात्पातोपग्रहलत्तास्वपवादं वारदोषभेदमर्धयामं चानुष्टुप्छंदसाह—

**पातोपग्रहलत्तासु नेष्टोंऽघ्रिः खेटपत्समः ।**
**वारस्त्रिघ्नोऽष्टभिस्तष्टः सैकः स्यादर्धयामकः ॥ ६२ ॥**

पात इति ॥ पातश्चंडीशचंडायुधाख्यो दोषः । उपग्रहः प्रागुक्त एव । लत्ता 'शराद्रिपूर्णेन्दु' ६।५७ इत्यादिनोक्ता । तत्र खेटपत्समः ग्रहचरणतुल्यो नक्षत्रचरणोऽनिष्टः । अस्यार्थः—पाते उपग्रहे च रविर्यस्मिन्नंघ्रौ स्यात्तत्संख्यचरणस्तस्य नक्षत्रस्य वर्ज्यो नान्यः । लत्तायां तु ये लत्ताकारिणो ग्रहा यच्चरणे स्युस्तत्संख्य एव चरणो वर्ज्यो नान्यः । उक्तं च मुहूर्तदीपिकायाम्—'उपग्रहेषु लत्तायां तथा चंडायुधाह्वये ॥ ग्रहोऽस्ति यत्प्रमाणांशे धिष्ण्यांशस्तत्प्रमाणतः ॥' इति उपग्रहचंडायुधयोः सूर्यकृतोऽघ्रिर्ग्राह्यस्तस्यैव संभवात् । अयं च परिहारस्तुल्यन्यायत्वात् खार्जूरकेऽपि द्रष्टव्यः । सूर्यो यस्मिन् पादे भवेत्तत्समसंख्यश्चरण एकरेखावस्थितचंद्रनक्षत्रस्य वर्ज्य इत्यर्थः । 'खार्जूरिकसमांघ्रिभम्' इति नारदोक्तेः । ज्योतिर्निबंधे गर्गः—'पूर्वाह्णे दंडदोषः स्यादपराह्णे तु मोघकः । उल्का स्यादर्धरात्रे तु कंपोऽहोरात्रदूषकः ॥ कंपोल्कादंडमोघानां खरमासदशर्तवः ७।१२।१०।६। आदितो घटिकास्तेषु वर्जनीयाः पराः शुभाः' इति । वार इति । इष्टो वारस्त्रिघ्नः सैकोऽष्टभिस्तष्टः शेषितो योऽकः सोऽर्ध-

---

१ व्यपनेयाः इति पाठः ।

यामाख्यो दोषः स्यात् । स्वार्थे कः । यदाह श्रीपतिः–'मनीषिणोऽर्धप्रहरा-द्द्वितीयादारभ्य सर्वेष्वपि मंगलेषु । भौमोशनःसूर्यबुधार्किचंद्रसुरेज्यवारेषु विवर्जयंति ॥' इति । अत्र कथं समानार्थतेति चेत् प्रथमार्धप्रहरः कस्यापि वर्ज्यो नास्ति । तत्र सूर्यस्य वारे तावद्द्वितीयादर्धप्रहरादारभ्य तृतीयोऽर्धप्रहर (अर्थाच्चतुर्थः) उक्तोऽतः त्रिगुणसैक इत्युपपन्नस्ततस्तृतीयश्चंद्रस्य वारे सूर्योद-यात्सप्तम इति वारघ्निः सैक इत्यत्रापि सिद्धम् । ततस्तृतीयो भौमस्य वारे सूर्योदयाद्दशमः । रात्रौ चार्धयामानुक्तेरिति दिवसस्याष्टावर्धयामा इत्यष्टाभिः शेषित इत्युपपन्नम् । एवं बुधवारादिष्वपि द्रष्टव्यम् । अत्र पुनरुक्तिपरिहारमग्रे-नैव वक्ष्यामः । कश्यपः—'शैलाक्षश्रुतयः सूर्ये चंद्रे पक्षेंदुपर्वताः । भौमे बाणाग्निनेत्राणि सौम्ये वेदाक्षिवायवः ॥ गुरुवारेऽग्निचंद्रभाः शुक्रे नेत्रादि-वह्नयः । शनौ चंद्रेभतर्काः स्युः कुलिको यमघंटकः ॥ अर्धप्रहरसंज्ञास्तान् मंग-लेषु विवर्जयेत् । वारदोषेण दुष्टं तल्लग्नं सर्वगुणान्वितम् । त्यजेद्यथा पुरोडाशं वायसोपहतं तथा ॥' इति । फलमाह वसिष्ठः—'निधनं प्रहरार्धे तु निःस्वत्वं यमघंटके । कुलिके सर्वनाशः स्याद्रात्रावेते न दोषदाः ॥' इति ॥ ६२ ॥

अथ वारदोषभेदं कुलिकमनुष्टुभाह—

**शक्रार्कदिग्वसुरसाब्ध्यश्विनः कुलिका रवेः ।**
**रात्रौ निरेकास्तिथ्यंशाः शनौ चांत्योऽपि निंदिताः ॥ ६३ ॥**

शक्रेति ॥ रवेरिति ल्यब्लोपे पंचमी । रविमारभ्य सर्ववारेषु क्रमादुक्त-संख्यास्तिथ्यंशा मुहूर्ताः कुलिकाः स्युः । यथा–दिवसे रवौ १४ सोमे १२ भौमे १० बुधे ८ गुरौ ६ शुक्रे ४ शनौ २ । रात्रावेते निरेकाः कार्याः । यथा–रवौ १३ सोमे ११ भौमे ९ बुधे ७ गुरौ ५ शुक्रे ३ शनौ १ शनौ त्वंत्योऽपि रात्रेः पंचदशोऽपि मुहूर्तः कुलिकः । एते कुलिका निंदिताः । यदाह श्रीपतिः— 'मन्वर्कदिग्वस्वृतुवेदपक्षैरर्कान्मुहूर्तैः कुलिका भवंति । दिवा निरेकैरथ यामिनीषु ते गर्हिताः कर्मसु शोभनेषु ॥' रत्नकोशे—'दिवा द्वितीयः कुलि-कोऽर्कजाते रात्रौ प्रदिष्टः प्रथमः स एव । रात्रेस्ततः पंचदशे विभागे एवं विवर्ज्यं कुलिकत्रयं च ॥' इति । ननु सामान्यतः 'सूर्यं षट्स्वरनाग'इत्यादिना दुर्मुहूर्तार्धयामकुलिका उक्ता इदानीं किं पुनरुच्यंते इति । सत्यम् । आव-श्यकत्वद्योतनार्थम् । तथा हि–विवाहे एषां दोषाणां सर्वथैव त्यागः 'विवाहे विधवा नारी' इत्यभिहितफलस्य दुःसहत्वात् । भर्तृमरणे हि यावज्जीवं तस्याः सर्वप्रकारकदुःखानुभवत्वात् । यज्ञोपवीतादिशुभकर्मणि तु संस्कार्य-मरणे संबंधिनां तात्कालिकं दुःखम् । पित्रोस्तु पुत्रांतराभावे कियत्कालमेव, तत्सत्त्वे पुनः कियद्दिनमात्रम् । सर्वथा विधवासदृशं दुःखं कस्यापि नास्ति । किंच वारप्रकरणे सामान्यतो मुनिभिर्दिनरात्रिसाधारण्येन कुलिकाद्युक्त्वा 'रात्रावेते न दोषदा' इत्युक्तम् । तस्यापि बाधो यथा स्यात् । अत एव कश्यपो

वारप्रकरणे कुलिककंटकार्धयामानभिधाय विवाहप्रकरणे पुनरप्यभिदधाति स्म । ग्रंथकर्त्रा मुहूर्तेष्वं कुलिकादीनामभिसंधाय दुर्मुहूर्तानामप्यभिधानं कृतम् । किंच कुलिका अत्रावश्यं वक्तव्याः, रात्रौ कुलिकज्ञानं यथा स्यात्तत्र साधारण्येन दिनरात्रिविभागेन शीघ्रोपस्थित्यर्थं पद्येनाभिधानम्—'सूर्ये षट् स्वरनाग' इत्यादिना मुहूर्तत्यागे के कुलिककंटकार्धप्रहराः इति पुनः संदेहे 'कुलिकः कालवेला च' इति पद्यस्मरणमपेक्षितमिति गौरवापत्तेश्च । अत एव शिष्टा अप्यन्येषां दोषाणां यथासंभवत्यागपूर्वकं कुलिकार्धयामदुर्मुहूर्तानाम-वश्यं त्यागं विदधते, अतो ग्रंथकर्त्रापि पुनरुक्ता इति युक्तं प्रतीम इत्यलमति-प्रसंगेन ॥ ६३ ॥

अथ पंचांगदोषविशेषं दग्धतिथ्याख्यमिंद्रवज्रयाह—

**चापांत्यगे गोघटगे पतंगे कर्काजगे स्त्रीमिथुनस्थिते च ।**
**सिंहालिगे नक्रधटे समाः स्युस्तिथ्यो द्वितीयाप्रमुखाश्च दग्धाः ६४**

चापेति ॥ तत्तद्राशियुग्मस्थिते पतंगे सूर्ये द्वितीयाप्रमुखाः शुक्लकृष्ण-पक्षसाधारणाः समास्तिथ्यो दग्धाः स्युरिति वाक्यार्थः । यथा—चापांत्यगे धनुर्मीनगते सूर्ये द्वितीया दग्धा, गोघटगे सूर्ये चतुर्थी, कर्काजगे कर्कमेषगे सूर्ये षष्ठी, स्त्रीमिथुनस्थिते कन्यामिथुनस्थिते सूर्येऽष्टमी, सिंहालिगे सूर्ये दशमी, नक्रधटे मकरतुलागते सूर्ये द्वादशी दग्धेत्यर्थः । यदाह वसिष्ठः—'एकां-तरा दिनपतौ दिवसा द्वितीयापूर्वांत्यचापधटयोर्घटभौक्षयोश्च । कर्काजयोर्मि-थुनकन्यकयोश्च कीटहर्योस्तुलामकरयोः खलु मासदग्धाः ॥ मासदग्धासु तिथिषु कृतं यन्मंगलादिकम् । तत्सर्वं नाशमायाति ग्रीष्मे कुसरितो यथा ॥' इति । पूर्वांत्येत्यत्र पूर्वा अंत्येत्याद्यपेक्षितं तत्र 'नमुने' इत्यत्र नेति योगविभा-गादसिद्धत्वाभावे संधिः । औक्षयोरिति । उक्षा वृषस्तस्यायं राशिरौक्षः 'औक्ष-मनपत्ये' इत्यकारांतो निपातितः । अस्यापवादमाह कश्यपः—'मासदग्धाश्च तिथयो मध्यदेशे विवर्जिताः' इति ॥ ६४ ॥

अथ जामित्रदोषं भ्रमरविलसितेनाह—

**लग्नाच्चंद्रान्मदनभवनगे खेटे न स्यादिह परिणयनम् ।**
**किंवा बाणाशुगमितलवगे जामित्रं स्यादशुभकरमिदम् ॥ ६५ ॥**

लग्नादिति ॥ विवाहलग्नाच्चंद्राद्वा सप्तमं भवनं गृहं तत्र गते खेटे परिण-यनं न स्यात् । उक्तं च—'जामित्रं द्विविधं प्रोक्तं गर्गगालवगौतमैः । तस्माल्ल-ग्नाच्च चंद्राच्च जामित्रं परिवर्जयेत् ॥' इति । तत्स्वरूपमाह महेश्वरः— 'लग्नाच्छीतकराद्वहा द्युगनता नेष्टा विवाहे स्मृताः' इति । वसिष्ठो लग्न-प्रकरणे—'सर्वे जामित्रसंस्था विदधति मरणम्' इत्याह स्म । लल्लः—'पापा-त्सप्तमगः शशी यदि भवेत्पापेन युक्तोऽथवा यत्नेनापि विवर्जयेन्मुनिमते दोषोऽपि संकथ्यते । उद्वाहे विधवा व्रते तु मरणं शूलं च पुंस्कर्मणा यात्रायां

विपदो गृहेषु दहनः शौरेऽपि रोगो महान् ॥' भुजबलः—'चंद्रात्सप्तमराशिगे दिनकरे त्यक्ता धनैः कन्यका भौमे च प्रमदा प्रयाति विलयं सौरेण वंध्या सरुक् । जीवः शुक्रशशांकजौ शुभकराः केचिद्वदंति क्रमाद्भर्तृप्रेप्सितदीक्षिताऽस्तभवने नित्यं प्रवासान्विता ॥' इति । अस्यापवादमाह-किंवेति । किंवाशब्दो विकल्पे । पूर्वं ग्रहाधिष्ठितराशेः सप्तमराशिस्थितः त्रिंशद्भागात्मकं लग्नं चंद्रश्च निषिद्ध इत्युक्तम् , इदानीं तदधिष्ठितराशिनवांशमारभ्य बाणाशुगाः पंचपंचाशत् तन्मितनवांशगे लग्ने चंद्रे च सति जामित्रं सूक्ष्मं स्यात् । यथा मेषराशौ पंचमनवांशे भौमोऽस्ति तस्मात्तुलायां पंचमनवांशस्थं लग्नं चंद्रोऽपि निषिद्धोऽन्येष्टौ नवांशाः शुभाः । एवंविधं सूक्ष्मं जामित्रमिदमशुभकरं स्यात् । यदाह महेश्वरः—'कैश्चित्स्वाद्यनवांशकादिषु ५५ शरैस्तुल्ये नवांशे स्थिता ॥' इति । केशवार्कस्तु चंद्रनवांशादेवाह—'हिमरश्मिनवांशकान्खलो यदि खेटः शरसायकांशके । अयमन्यगुणैर्न हन्यते निबिडैरप्युपसर्गडंबरः ॥' इति । अपवादांतरमाह राजमार्तंडः—'तुंगत्रिकोणभवने भवने निजे वा सौम्याधिमित्रगृहगोऽपि तदीक्षितो वा । जामित्रवेधजनितानपहृत्य दोषान्दोषाकरः सुखमनेकविधं विधत्ते ॥' इति । व्यवहारसमुच्चयेऽपि—'स्वोच्चोऽथवा स्वभवने स्फुरदंशुजालः सौम्यालये हितगृहे शुभवर्गगो वा । जामित्रकादिपरिसंधितदोषराशिं हत्वा ददाति बहुशः सुखमेव चंद्रः ॥' इति । कालखंडे वात्स्यायनः—'गुरुश्चंद्रश्च जामित्रे निष्टयदि बलान्वितः । धनसौभाग्यपुत्रांश्च लभते नात्र संशयः । मणिमुक्ताप्रवालैश्च सुवर्णाभरणैः शुभैः । शोभिता तु सदा निष्टद्गुरुणापि निरीक्षिते ॥ सा तु भर्तुः प्रिया नित्यं बुधे चंद्रस्य सप्तमे ॥' इति ॥ ६५ ॥

अथैकार्गलादिमहादोषाणामुक्तानां लग्नांतराभावे सत्यपवादभूतमिंद्रवज्रालक्षणाक्रांतं साक्षाद्वसिष्ठवचनमेवाह—

एकार्गलोपग्रहपातलत्ताजामित्रकर्तर्युदयास्तदोषाः ।
नश्यंति चंद्रार्कबलोपपन्ने लग्ने यथार्काभ्युदये तु दोषा ॥ ६६ ॥

एकार्गलेति ॥ एकार्गलः खार्जूरचक्रे । उपग्रहः 'शराष्ट' (६।६१) इत्यादिनोक्तः । पातश्चंडीशचंडायुधं, लत्ता 'ज्ञराहु' (६।५७) इत्यादिनोक्ता । जामित्रमधुनोक्तं । कर्तरी 'लग्नान्त्यापान्' (६।४२) इत्याद्युक्ता, उदयास्तदोषा वक्ष्यंते । एवंविधा दोषा नश्यंति । कदा ? विवाहलग्ने चंद्रार्कयोर्बलं स्वोच्चमित्रादिराशिस्थितत्वरूपं विहितस्थानस्थितत्वं च तेनोपपन्ने सहिते सति । अत्र दृष्टांतमाह—यथेति । अर्कस्य सूर्यस्याभ्युदये दोषा रात्रिर्यथा नश्यतीत्यर्थः । गाढांधकारयुक्तापि रात्रिरेकाकिना सूर्यस्योदयेन स्वयमेव नश्यति । अत एव दोषापदं प्रयुक्तम् । निशादिप्रयोगे तु साधारण्येन शुक्लपक्षीयाया अपि रात्रेः संभवाच्चंद्रेणैव कियत्तमसोनिरस्तत्वादवशिष्टांधकारनाशे सूर्यस्यापुरुषार्थत्वापत्तेरिति

कैमुतिकन्यायमपि सूचयति दोषापदम् । वसिष्ठवाक्यस्य मन्वादिवाक्यवत्प्रामाण्यान्न संमत्यंतरापेक्षा ॥ ६६ ॥

अथ केषांचिद्दोषाणां देशभेदेन परिहारभूतमुपजातिलक्षणाक्रांतं वसिष्ठपद्यमेवाह—

उपग्रहर्क्षं कुरुबाह्लिकेषु कलिंगवंगेषु च पातितं भम् ।
सौराष्ट्रशाल्वेषु च लत्तितं भं त्यजेत्तु विद्धं किल सर्वदेशे ॥ ६७ ॥

उपग्रहर्क्षमिति ॥ कुरवो बाह्लिकाश्च पश्चिमदेशास्तेषूपग्रहदोषाक्रांतभं त्यजेन्न तदतिरिक्तसर्वदेशेषु । अन्यत्र शुभमेवेत्यर्थः । कलिंगा वंगाश्च प्राग्देशौ । बहुवचनान्मगधांगादयोपि तेषु चंडीशचंडायुधापरपर्यायं पातं त्यजेत् । ननु क्रांतिसाम्यरूपं पातम् । तस्य महापात इति व्यवहारात् । सौराष्ट्रः 'सोरठ' इतिभाषायां शाल्वदेशः पश्चिमदेशविशेषः । बहुवचनं ग्रामबाहुल्यात्तेषु लत्तितं लत्ता संजातास्य तद्भं परित्यजेत् विद्धं क्रूरेण शुभेन वा पंचशलाकादिचक्रद्वारा भिन्नं भं भूतलवर्तिसर्वदेशेषु त्यजेत् । किल निश्चयेन । नन्वस्य देशभेदेन परिहारः । एतदपि वाक्यं संमत्यंतरं नार्हति । विवाहपटलेऽपि—'लत्ता मालवके देशे पातः कोशलके तथा । एकार्गलं तु काश्मीरे वेधं सर्वत्र वर्जयेत ॥' इति । वराहः-'युतिदोषो भवेद्गौडे जामित्रस्य च यामुने । वेधदोषस्तु विंध्याख्ये देशे नान्येषु केषु च ॥' इति । एषां वाक्यानां यथादेशाचारं व्यवस्था ॥ ६७ ॥

अथ दशयोगदोषमुपजातिकयाह—

शशांकसूर्यर्क्षयुतेर्भशेषे खभूयुगांगानि दशेशतिथ्यः ।
नागेंदवोंकेंदुमिता नखाश्चेद्भवंति चेते दशयोगसंज्ञाः ॥ ६८ ॥

शशांकेति ॥ चेद्यदि चंद्रसूर्यनक्षत्रयोर्युतेर्योगाद्भैः सप्तविंशत्या नक्षत्रशेषस्मिन् शून्यैकचतुःषड्दशैकादशपंचदशाष्टादशैकोनविंशतिविंशतिसंख्यांके सति एते अंकाः दशयोगसंज्ञा भवन्ति । नान्ये इत्यर्थः । शिष्टानां दशानामंकानामभिहितत्वाद्दशयोग इत्यन्वर्थसंज्ञा । तदुक्तं दीपिकायाम्—'निध्यंगवेदैकदिगूनविंशमेकादशाष्टादशविंशसंख्याः । इष्टोडुना सूर्ययुतोडुना वा योगादमी चेद्दशयोगदोषाः ॥' लल्लोऽपि—'यस्मिन्नृक्षे रविस्तिष्ठेद्यस्मिन्नृक्षे शशी तथा । द्वयोर्योगहते धिष्ण्यैः शेषः स्यात्खादितो दश ॥ शून्यवेदर्तुरूपाणि दिग्रुद्रतिथयो धृतिः । ऊनविंशा नखाश्चेति दशयोगाः प्रकीर्तिताः ॥' इति ॥ ६८ ॥

अथ दशयोगानां फलं तदपवादं च शार्दूलविक्रीडितेनाह—

वाताभ्राग्निमहीपचोरमरणं रुग्वज्रवादाः क्षति-
र्योगांके दलिते समे मनुयुतेऽथौजे तु सैकेऽर्धिते ।
भं दास्राद्थ संमितास्तु मनुभी रेखाः क्रमात्संलिखे-
द्वेधोऽस्मिन्ग्रहचंद्रयोर्न शुभदः स्यादेकरेखास्थयोः ॥ ६९ ॥

वातेति ॥ शून्ये शेषे वातात् दोषः स्यात्, एके शेषेऽभ्रान्मेघात्, चतुर्ष्ववशिष्टेष्वग्नेः, षट्सु महीपान्नाशः, दशसु चोरात्, एकादशसु मरणं द्वयोरन्यतरस्य वा, पंचदशसु रुक्, अष्टादशसु वज्रं, एकोनविंशेषु वादः कलिः। प्रकटक इति यावत्; विंशतिशेषे क्षतिर्द्रव्यनाशः स्यात्। यदाह लल्लः—'मरुन्मेघाग्निभूपालचौरमृत्युरुजोऽशनिः। कलिर्हानिर्दशोद्वाहे दोषास्त्याज्याः सदा बुधैः ॥ विवाहादौ प्रतिष्ठायां व्रते पुंसवने तथा। कर्णवेधे च चूडायां दशयोगं विवर्जयेत् ॥' इति। अथापवाद उच्यते—योगांक इति। खभूयुगांगादिरूपे योगांके समे युग्मसंख्याके सति दलिते अर्धीकृते ततो मनुभिश्चतुर्दशभिर्युते योऽकस्तद् दास्रादश्विनीतो भं नक्षत्रं स्यात्। यथा-समांशके दशयोगः १० अर्धितः ५ मनुयुतः १९ मूलनक्षत्रं जातम्। अथ योगांके ओजे अयुग्मसंख्याके सति सैक एकयुक्ते ततोऽर्धिते अश्विनीतो भं स्यात्। यथा-विषमांकः पंचदशयोगः १५ सैकः १६ अर्धितः ८ पुष्यनक्षत्रं जातम् ॥ अथेत्यनंतरं। मनुभिः संमिताश्चतुर्दश रेखास्तिर्यक्क्रमात्संलिखेत। तद्यथा-अनेन प्रकारेण यन्नक्षत्रमागतं तत आरभ्य साभिजिन्नक्षत्रवृंदमस्मिंश्चक्रे लेख्यं, तत्र ग्रहः स्वाक्रांतनक्षत्रे स्थाप्यः दिननक्षत्रे च चंद्रः। एवं सति यदि ग्रहचंद्रावेकरेखास्थौ स्यातां तयोस्तादृशयोः परस्परावलोकनरूपो वेधो न शुभदः। उक्तं च ज्योतिःसारसागरे 'योगांके विषमे सैके समे सवसुलोचने। दलीकृतेऽश्विनीपूर्वं दशयोगमुदाहृतम् ॥ दशयोगे महाचक्रे प्रमादाद्यदि विध्यते। क्रूरैः सौम्यग्रहैर्वापि दंपत्योरेकनाशनम् ॥' इति। दशयोगापवादांतरमाह भरद्वाजः-'गुरौ लग्नाधिपे शुक्रे सवीर्ये लग्नकेन्द्रगे। दशदोषा विनश्यंति यथाग्नौ तूलराशयः ॥' तूलं=कार्पासः। व्यासोऽपि—'शुक्रेण गुरुणा वापि संयुतं दृष्टमेव च। दशयोगसमायुक्तमपि लग्नं शुभावहम् ॥' इति ॥ ६९ ॥

अथ बाणदोषं शालिन्याह—

लग्नेनाढ्या याततिथ्योऽङ्कनष्टाः शेषे नागद्व्यब्धितर्केन्दुसंख्ये ।
रोगो वह्नी राजचौरौ च मृत्युर्बाणश्चायं दाक्षिणात्यप्रसिद्धः ७०

लग्नेनेति ॥ शुक्लपक्षप्रतिपदमारभ्य गततिथ्यो लग्नाख्याः युक्ताः कृत्वांकैर्नवभिस्तष्टाः शेषे नागसंख्ये रोगाख्यो बाणः, एवं द्विसंख्ये शेषे वह्न्याख्यः, चतुःसंख्ये शेषे राजाख्यः, तर्काः षट् तत्संख्ये शेषे चौराख्यः, एकसंख्ये शेषे मृत्युसंज्ञो बाणः। अयं च दाक्षिणात्येषु महाराष्ट्रदेशीयेषु प्रसिद्धः, तेन देशाचारव्यवस्थया बाणस्य त्यागः; न तु प्राच्योदीच्यपाश्चात्यानाम्। तदुक्तं स्मार्तमते विवाहपटले—'गततिथियुतलग्नं पंचधा स्थापनीयं तिथि १५ रवि १२ दश १० नागै ८ र्वेद ४ युक्तं क्रमेण। नव ९ हृतशर ५ शेषे बाणसंज्ञाः क्रमेण रुगनलनृपचौराः पंचमो मृत्युसंज्ञः ॥' इति ॥ ७० ॥

अथ प्राच्यमतेन बाणं सापवादं मालिनीछंदसाह—

रसगुणशशिनागाब्ध्याढ्यसंक्रांतियातां-
शकमिति रथतष्टांकैर्यदा पंच शेषाः ।

रुगनलनृपचौरा मृत्युसंज्ञश्च बाणो
नवहृतशरशेषे शेषकैक्ये सशल्यः ॥ ७१ ॥

रसेति । अथशब्दः पादपूरणे । रसगुणशशिनागाब्धिभिराढ्या चासौ संक्रांतियातांशकमितिश्चेति कर्मधारयसमासः । स्पष्टनिरयनांशसूर्यसंक्रांतिभुक्तांशानां मितिः संख्या पंचधा स्थाप्या, कलादिकमुपेक्ष्यं; सा क्रमेण षट्त्र्येकाष्टचतुर्भिराढ्या संयोज्यांकैर्नवभिस्तष्टा सती यदा पंचशेषा यस्मिन्स्थले पंचावशिष्यंते तत्र क्रमेण रुगादिर्बाणो ज्ञेयः । यथा-आदौ पंचशेषे रोगबाणः, द्वितीये पंचशेषेऽग्निबाणः, तृतीये पंचशेषे राजबाणः, चतुर्थे पंचशेषे चौरबाणः, पंचमे पंचशेषे मृत्युबाणः, तस्मात्तस्माद्भयं भवतीत्यर्थः । यदाह कश्यपः—'संक्रांतियातांशकनंदशेषस्तर्काग्निरूपाष्टयुगैः समेताः । तष्टो ग्रहे रोगहुताशभूपस्तेना मृतिश्चेति च पंच बाणाः ॥' इति । पंचेति पृथक् पदम् । पंच चेत् शिष्यंते तदा बाणाः स्युरित्यर्थः । तत्र बाणो द्विविधः-एकः काष्ठशल्यः, अपरो लोहशल्यः; तत्राभिहितो बाणः काष्ठशल्य उच्यते—अस्य नाम प्राच्याख्यो 'थोथा' बाण इत्याहुः । तेन तादृशे बाणे लग्ने तथा पीडा न भवेत्तदर्थं तदपवादभूतो लोहशल्यसहितो बाण उच्यते—नवेति । यानि प्रागागतानि शेषाणि तेषामैक्ये नवहृते पश्चाच्छरशेषे पंचशेषे सति सशल्यः लोहशल्यसहितो बाणः स्यात् । पंचव्यतिरिक्ते शेषे शल्यरहितो 'थोथा'बाणः ॥ अयं च तुल्यन्यायत्वात्प्राक्प्रयोक्तेऽपि बाणे सशल्यो बाणो ज्ञेयः । ज्योतिर्भिन्नामणावन्यथा बाणोऽभिहितः 'तिथिवारभलग्नांको रसाङ्ग्यंब्ध्वष्टवेदयुक् ।६।३।१।८।४॥ नंदाप्तः पंचशेषे रुग्वह्निराट्चौरमृत्युकृत् ॥' इति ॥ ७१ ॥

अथ समयभेदेन वारभेदेन वा कार्यभेदेन वा त्रिविधं बाणपरिहारं शार्दूलविक्रीडितेनाह—

रात्रौ चौररुजौ दिवाऽग्निनृपती त्याज्यौ सदा संध्ययो-
र्मृत्युश्चाथ शनौ नृपो विदि मृतिर्भौमेऽग्निचौरौ रवौ ।
रोगोऽथ व्रतगेहगोपनृपसेवायानपाणिग्रहे
वर्ज्याश्च क्रमतो बुधे रुगनलक्ष्मापालचौरा मृतिः ॥७२॥

रात्राविति ॥ तत्र तावत्कालभेदेन परिहारः । रात्रौ चौररुजौ बाणौ त्याज्यौ । दिवा दिवसेऽग्निनृपती वह्निराजबाणौ त्याज्यौ । संध्ययोः प्रातःसायंसंध्ययोः सदा मृत्युबाणस्त्याज्यः । अर्थवशाद्विभक्तिविपरिणामः । तदुक्तं ज्योतिःप्रकाशे—'रोगं चौरं त्यजेद्रात्रौ दिवा राजाग्निपंचकम् । उभयोः संध्ययोर्मृत्युमन्यकाले न निंदितम् ॥' इति । अथ वारभेदेन परिहारः—अथेति । अथ शनौ शनिवारे नृपबाणः, विदि बुधवारे मृतिबाणः, भौमेऽग्निचौर-

१ क्वचित् 'दिवा नरपतिर्वह्निः सदा' इति पाठः । प्रमिताक्षरायामपि 'दिवा नरपतिर्वह्निः सदा' इति पाठः । तट्टीका चेत्थम्-दिवा नरपतिः राजबाणस्त्याज्यः, वह्निबाणः सदा दिवारात्रौ इति । रत्नसंमतिवाक्येऽपि पाठान्तरम् 'दिवाराजन्यपंचकम् ॥ संध्ययोर्मृत्युः त्याज्य सर्वदा वह्निपंचकम् ॥' इति ।

बाणौ रवौ रोगबाणः त्याज्यस्त्याज्याविति यथायोग्यं संबंधः । उक्तं च दैवज्ञमनोहरे—'रवौ रोगं कुजे वह्निं शनौ च नृपपंचकम् । वर्ज्यं पुनः कुजे चौरं बुधवारे च मृत्युदम् ॥' इति । अथ कार्यभेदेन परिहार उच्यते–अथेति । क्रमतः एतेषु शुभकर्मसु एते बाणा वर्ज्याः । यथा–व्रते यज्ञोपवीते रुक् गेहं गृहं तस्य गोप आच्छादनं तत्राऽनलोऽग्निः नृपसेवायां क्ष्मापालो राजा याने यात्रायां चौरः पाणिग्रहे मृतिर्बाणो वर्ज्य इत्यर्थः । तदुक्तं ज्योतिःप्रकाशे—'नृपाख्यं राजसेवायां गृहगोपेऽग्निपंचकम् । याने चौरं व्रते रोगं त्यजेन्मृत्युं करग्रहे ॥' इति । केचिदेवं पाठमाहुः—'व्रते विवर्जयेद्रोगं गृहगोपेऽग्निपंचकम् । यात्रायां राजचौराख्यौ विवाहे मृतिपंचकम् ॥' इति ॥७२॥

अथोदयास्तशुद्धिं विवक्षुस्तदुपयोगिनीं ग्रहदृष्टिमुपजातिकयाह—

**त्र्याशं त्रिकोणं चतुरस्रमस्तं पश्यंति खेटाश्चरणाभिवृद्ध्या ।**
**मंदो गुरुर्भूमिसुतः परे च क्रमेण संपूर्णदृशो भवंति ॥ ७३ ॥**

त्र्याशमिति ॥ खेटा ग्रहा यस्मिन्स्थाने तिष्ठंति तस्मात्कथ्यमानानि स्थानानि चरणाभिवृद्ध्या पादवृद्ध्या पश्यंति । तद्यथा–त्र्याशं तृतीयं दशमं चैकचरणदृष्ट्या पश्यंति । त्रिकोणं नवपंचमं द्विचरणदृष्ट्या पश्यंति । चतुरस्रं चतुर्थं अष्टमं त्रिचरणदृष्ट्या पश्यंति । अस्तं सप्तमस्थानं चतुश्चरणदृष्ट्या पश्यंति । अनेन तत्तद्ग्रहोद्भवशुभफलं चरणाभिवृद्ध्यैव भवतीत्यसूचि । तदुक्तं वराहेण—'दशमतृतीये नवमपंचमे चतुर्थाष्टमे कलत्रं च । पश्यंति पादवृद्ध्या फलानि चैवं प्रयच्छंति ॥' इति । मंद इति । मंदः शनैश्चरः स्वस्थानात्त्र्याशं संपूर्णदृक् चतुश्चरणदृष्टिः । एवं गुरुस्त्रिकोणं भूमिसुतः चतुरस्रं परे चंद्रबुधसूर्यशुक्राः अस्तं संपूर्णदृश इत्यर्थः । यदाह गार्गिः—'दुश्चिक्यदशमान्सौरिस्त्रिकोणस्थान् बृहस्पतिः । चतुर्थाष्टमगान्भौमः शेषाः सप्तमसंस्थितान् । भवंति वीक्षणे नित्यमेवाधिकफला ग्रहाः ॥' इति । वराहोऽपि—'पूर्णं पश्यति रविजस्तृतीयदशमे त्रिकोणमपि जीवः । चतुरस्रं भूमिसुतः सितार्कबुधहिमकराः कलत्रं च ॥' इति ॥ ७३ ॥

अथावसरप्राप्तामुदयास्तशुद्धिं शिखरिणीभुजंगप्रयातमालिनीछंदोभिस्त्रिभिराह—

**यदा लग्नांशेशो लवमथ तनुं पश्यति युतो**
**भवेद्वायं वोढुः शुभफलमनल्पं रचयति ।**
**लवद्यूनस्वामी लवमदनभं लग्नमदनं**
**प्रपश्येद्वा वध्वाः शुभमितरथा ज्ञेयमशुभम् ॥ ७४ ॥**

यदेति ॥ प्रथमपद्यस्यायमर्थः-यदा लग्नेंऽशो लग्नांशस्तस्येशः स्वामी लवं नवांशं पश्यति; वा अथवा नवांशेन सह युतो वा भवेत्तदा वोढुर्वरस्यानल्पं बहु शुभफलं रचयति । यथा–मेषलग्ने मिथुनांशस्तदीशो बुधः तुलायां मिथुनं

पश्यति तत्र तिष्ठति वा अयमुदयशुद्धेः प्रथमः कल्पः । 'तनुफलं हि लवान-वलंबते' इति केशवार्कोक्तन्यायात् । तदलाभे नु लग्नांशेशस्तनुं लग्नं पश्यति लग्नेन सह युतो वा भवेत्तत्र तिष्ठति वा तदापि वोढुः शुभफलमनल्पं स्यात् । यथा-मेषलग्न एव मिथुननवांशस्वामी बुधो मकरे स्वनवांशं न पश्यति किंतु लग्नं पश्यति अथवा मेष एव तिष्ठति; अयं उदयशुद्धेः द्वितीयः प्रकारः । नवेति । लवद्यूनस्वामी लवान्नवांशात् द्यूनं सप्तमनवांशस्तत्स्वामी लवमदनभं लवान्मदनभं सप्तमनवांशं पश्यति तेन सह युतो वा भवेत्तदा वध्वा अनल्पं शुभं रचयति । यथा-मिथुननवांशात् सप्तमो धनुरंशस्तदधीशो गुरुर्मेषे धनुः पश्यति तत्र तिष्ठति वा अयमस्तशुद्धेः प्रथमः प्रकारः । तदलाभे नु लवद्यून-स्वामी लग्नमदनं सप्तमभवनं पश्यति युतः सप्तमभवनेन सह युतो वा भवे-त्तदा वध्वाः शुभम् । यथा-गुरुः कर्के स्वनवांशं न पश्यति किंनु सप्तमभवनं तुलां पश्यति अथवा तुलायामेवास्ति; अयमस्तशुद्धेर्द्वितीयः प्रकारः । इतर-थेति । इतरथा यदा लग्नांशेशो लवं तनुं वा न पश्यति तत्र युतो वा न स्यात्तदा कन्याया अशुभं मृत्युः स्यात् । यदा त्वस्तांशोऽस्तांशमस्तभवनं वा न पश्यति तत्र युतो वा न स्यात्तदा कन्याया अशुभं मृत्युरित्यर्थः । यदाह कश्यपः—'स्वस्वेशेनोदयास्तांशौ वीक्षितौ वाऽथ संयुतौ । लग्नं वाऽस्तगृहं तत्तदंशेशेनेक्षितं युतम्' इति । वसिष्ठः—'दृष्टोदयांशे निजपत्यदृष्टे वरस्य मृत्युस्तदसंयुते च । अस्तांशकेऽप्येवमदृष्टयुक्ते स्वस्वामिना नाशमुपैति कन्या ॥' इति । तुल्यन्यायत्वाल्लग्नेऽप्यस्तलग्नेऽपि उदयनवांशास्तांशस्वामिनोर्दृष्ट्यभावे-ऽप्येतदेव फलं ध्येयम् ॥ ७४ ॥

लवेशो लवं लग्नपो लग्नगेहं
प्रपश्येन्मिथो वा शुभं स्याद्वरस्य ।
लवद्यूनपोंऽशद्युनं द्यूनपोऽस्तं
मिथोऽवेक्षते स्याच्छुभं कन्यकायाः ॥ ७५ ॥

लवेश इति ॥ द्वितीयपद्यस्यायमर्थः—नवांशस्वामी नवांशं प्रपश्येल्लग्न-स्वामी लग्नं प्रपश्येत्तदा वरस्य शुभं स्यात् । अथवा मिथः परस्परं लवस्वामी लग्नं लग्नेशो लवं च पश्येत्तदापि वरस्य शुभं स्यात् । एवं लवद्यूनपो नवांशा-त्सप्तमनवांशस्वामी अंशद्युनमंशसप्तमराशिमीक्षते, द्यूनपो लग्नसप्तमस्वामी अस्तं लग्नात्सप्तमभवनमीक्षते तदा कन्यकायाः शुभं स्यात् । वा अथवा मिथः अंशसप्तमाधीशो लग्नसप्तमं वीक्षते लग्नात्सप्तमाधीशश्चांशसप्तममीक्षते तदापि कन्यायाः शुभं स्यात् । अत्रोदाहरणं स्पष्टत्वान्नोक्तमस्माभिः । अत्रान्यथात्वे दंपत्योरशुभमित्यर्थः । यदाह नारदः—'लग्नलग्नांशकौ स्वस्वपतिना वीक्षितौ युतौ । न चेद्वान्योन्यपतिना शुभमित्रेण वा तथा ॥ वरस्य मृत्युः स्यात्ताभ्यां सप्तसप्तोदयांशकौ । एवं तौ वीक्षितयुतौ मृत्युर्वध्वाः करग्रहे ॥' वसिष्ठोऽपि-

'उदयांशः स्वनाथेन मित्रसौम्येन वा युतः । प्रेक्षितो वा तथास्तांशो दंपत्योः पुत्रपौत्रदः ॥' इति परस्परवीक्षणेऽप्येतदेव फलं ध्येयम् । नारदवाक्यस्वरसात् ॥ ७५ ॥

अथ पूर्वोक्तप्रकारेणोदयास्तशुद्धेरभावेऽपि तृतीयप्रकार उच्यते—

लवपतिशुभमित्रं वीक्षतेंऽशं तनुं वा
परिणयनकरस्य स्याच्छुभं शास्त्रदृष्टम् ।
मदनलवपमित्रं सौम्यमंशद्युनं वा
तनुमदनगृहं चेद्वीक्षते शर्म वध्वाः ॥ ७६ ॥

लवपतीति ॥ शुभमित्रं शुभं च तन्मित्रं चेति कर्मधारयः । लवपतेर्लग्ननवांशेशस्य शुभग्रहः सोमबुधगुरुशुक्राणामन्यतमश्चेन्मित्रं स्यात्स चेदंशं स्वनवांशं तनुं लग्नं वा वीक्षते तदा परिणयनकरस्य वरस्य शास्त्रदृष्टं वसिष्ठोक्तं पुत्रपौत्रादिप्राप्तिरूपं शुभं फलं स्यात् । एवं मदनलवस्यास्तांशेशस्य मित्रं सौम्यं चेत्स्यात्तदांशद्युनमंशात्लग्ननवांशात् द्युनं सप्तमनवांशं चेद्वीक्षते वा अथवा तनुमदनगृहं लग्नात्सप्तमभवनं चेद्वीक्षते तदा वध्वाः शास्त्रदृष्टं शर्म स्यात् । यद्युभयत्रापि नवांशस्वामिनो मित्रं पापग्रहश्चेत्तस्य दृष्टिरशुभैवेति फलितोऽर्थः । यदाह वराहः—'शुद्धिस्त्विह स्यान्न यदोदयांशो लग्नेन चास्तांशमुपैति शुद्धिम् । तदा सुहृत्सौम्यनिरीक्षितो यः शुभाय स स्यात्प्रवदंति संतः ॥' इति । नन्वत्र वाक्ये 'सुहृत्सौम्यनिरीक्षित' इति पदे सुहृच्चासौ सौम्यश्चेति कर्मधारयांगीकारे भवदुक्तं व्याख्यानं सत् । यदा तु सुहृच्च सौम्यश्चेति द्वंद्वः तदा सुहृत्पापग्रहोऽपि स्यादिति चेन्न । प्रागुक्तवसिष्ठवाक्ये 'मित्रसौम्येन वा युतः' इति तृतीयैकवचनांतस्यापार्थक्योपादानात् । मित्रं चासौ सौम्यश्च मित्रसौम्यस्तेन मित्रशब्दस्य विशेषणत्वात्पूर्वनिपातः । द्वंद्वांगीकारे तु मित्रसौम्याभ्यामिति भवितव्यं, तथा सति छंदोभंगोऽपि स्यात् । समाहारद्वंद्वो भविष्यतीति चेन्नात्र किंचित्प्रमाणमस्ति । अतः कश्यपेनाप्येवमेवोक्तम्—'राश्यंशौ मित्रसौम्येन वीक्षितौ वाथ संयुतौ । उदयास्तांशयोः शुद्धिस्त्रिविधा मंगलप्रदा ॥' इति । अतो वराहवाक्येऽपि कर्मधारय एवेति युक्तं प्रतीमः । वसिष्ठः—'लग्नास्तशुद्ध्या रहितः सदोषः करोति मृत्युं वरकन्ययोश्च । शत्रुं यथा लग्नगुणास्त्वशक्तास्तं बंधुवर्गा इव सर्पदष्टम् ॥' इति । केचित्तु विवाहादौ वज्रयोगं निषिद्धमाहुस्तल्लक्षणम्—'तिथिवारं च नक्षत्रं नवभिश्च समन्वितम् । सप्तभिस्तु हरेद्भागं शेषांके फलमादिशेत् ॥ त्रिशेषे तु जलं विद्यात्पंचशेषे प्रभंजनः । सप्तशेषे वज्रपातो ज्ञेयं वज्रस्य लक्षणम् ॥' इति टोडरानंदे ॥ ७६ ॥

अथ सूर्यसंक्रमणाख्यं दोषं मंजुभाषिण्याह—

विषुवायनेषु परपूर्वमध्यमान्दिवसांस्त्यजेदितरसंक्रमेषु हि ।
घटिकास्तु षोडश शुभक्रियाविधौ परतोऽपि पूर्वमपि संत्यजेद्बुधः ॥

विषुवेति ॥ विषुवं=तुलामेषसंक्रांती, अयनं=कर्कमकरसंक्रांती; एवं चत-सृषु विषुवायनाख्यासु संक्रातिषु परपूर्वमध्यमान् गतागामिवर्तमानान् दिव-सान् बुधः शुभक्रियाविधौ विवाहयज्ञोपवीतादिशुभकार्येषु त्यजेत् । इतरे-ष्वष्टसंक्रमेषु संक्रमकालात्परतोऽग्रेऽपि पूर्वं प्रागपि षोडशघटिकाः मिलित्वा द्वात्रिंशद्घटिकास्त्यजेत् । यदाह वसिष्ठः—'विषुवतोरयनयोर्दिनत्रयं हरिपदे षडशीतिमुखेषु च । पूर्वतोऽपि परतोऽपि संक्रमान्नाडिकाश्च खलु षोडश त्यजेत् ॥ संक्रांतिदोषे त्वचिरात्कृतं यदुद्वाहपूर्वाखिलमंगलाद्यम् । लाक्षा-समूहो ज्वलिताग्निमध्ये विलीयते तद्वदशेषमेतत् ॥' इति । उद्वाहादिग्रहणा-त्स्नानदानादावनिषेधः । तद्वाक्यानि संक्रांतिप्रकरणेऽस्माभिरुक्तानि । किं तद्दि-नत्रयं त्याज्यं—किं संक्रांतिकालात् प्राग्दिनत्रयम्, उत तदनन्तरम्, उत मध्यमं वेति पक्षत्रयसंभवे निर्णयमाह गुरुः—'अयने विषुवे पूर्वं परं मध्यं दिनं त्यजेत् । अन्यसंक्रमणे पूर्वापराः षोडश नाडिकाः ॥' इति । अयं च निषेधः सायनसंक्रांतिष्वपि ध्येयः । यदाह वसिष्ठः—'यदायनप्रवेशः स्यात्तदा तद्राशिसंक्रमः । तस्मिन्नपि दिने त्याज्या नाड्यः षोडश षोडश ॥' इति । शौनकः—'अयनद्वये समूढा भर्तारं नाभिनंदते नारी । विषुवद्वयेऽपि विधवा षडशीतिमुखेषु सा म्रियते ॥ विष्णुपदेषु विगीता कन्या विकलेंद्रिया व्यतीपाते ॥ वैधृतिविष्टयोर्भ्रष्टा सुभगा शेषेषु करणेषु ॥' इति । विगीता= पुंश्चलीत्याद्यभिशापेन प्रसिद्धा ॥ ७७ ॥

अथ संक्रांतिप्रसंगात्सकलग्रहाणां संक्रांतिघटीरनुष्टुभाह—

देवग्यंकर्तवोऽष्टाष्टौ नाड्योऽङ्काः खनृपाः क्रमात् ।
वर्ज्याः संक्रमणेऽर्कादेः प्रायोऽर्कस्यातिनिंदिताः ॥ ७८ ॥

देवेति ॥ अर्कादेः सूर्यादेर्ग्रहसमूहस्यैता घटिकास्त्याज्याः । यथा—सूर्यस्य संक्रमणकालात् प्राक् पश्चात्कालौ मिलित्वा त्रयस्त्रिंशद्घटिकास्त्याज्याः । एवं चंद्रस्य द्वे घटिके, भौमस्य नव, बुधस्य षट्, गुरोरष्टाष्टौ, अष्टाशीतिः शुक्रस्यांकाः, नव शनेः खनृपाः षष्ट्यधिकशतं घटिका वर्ज्याः । तत्रार्कस्य घटिकाः प्रायो बाहुल्येनातिनिंदिताः । अत्र संमतिवाक्यं वासनासहितं सविवरणं संक्रांति-प्रकरणेऽभिहितमस्माभिस्तत एवावधार्यम् ॥ ७८ ॥

अथ पंग्वंधकाणबधिराख्यान् लग्नदोषानुपजातिकयाह—

घस्रे तुलाली बधिरौ मृगाश्वौ रात्रौ च सिंहाजवृषा दिवांधाः ।
कन्यानृयुक्कर्कटका निशांधा दिने घटोऽन्त्यो निशि पंगुसंज्ञः ॥ ७९ ॥

घस्रे इति ॥ घस्रे दिवसे तुलाली तुलावृश्चिकौ बधिरौ स्मृतौ । मृगाश्वौ मकरधनुषी रात्रौ बधिरौ नतु दिवसे । सिंहाजवृषा दिवांधा दिवसेंऽधा उक्ता नतु रात्रौ । कन्यानृयुक्कर्कटा निशांधा राज्यंधा नतु दिवांधाः । घटः कुंभो दिने पंगुसंज्ञो नतु रात्रौ । अंत्यो मीनो निशि पंगुसंज्ञो नतु दिने ।

यदाह वसिष्ठः—'मेषादे रंधकं षट्कं चत्वारो बधिराः स्मृताः । द्वौ पंगू चेति विज्ञेयाविल्येतद्राशिलक्षणम् ॥ मेषो वृषो मृगेंद्रश्च दिवसेंऽधाः प्रकीर्तिताः । नृयुक्कर्कटकन्याश्च रात्रावंधाः प्रकीर्तिताः ॥ तुला च वृश्चिकश्चैव दिवसे बधिरौ तथा । धनुश्च मकरश्चैव बधिरौ निशि कीर्तितौ ॥ कुंभमीनौ च पंगू द्वौ दिवा रात्रौ यथाक्रमम् ॥' इति । कुंभो दिवा पंगुर्मीनो रात्रौ पंगुः । अनेन यस्मिन्काले लग्नस्य योंऽधपंग्वादिदोष उक्तस्तस्मिन्नेव काले तल्लग्नं दोषावहं न कालांतरे इत्युक्तं भवति ॥ ७९ ॥

अथ परमते पंग्वंधादींल्लग्नदोषानाह—

**बधिरा धन्वितुलालयोऽपराह्णे मिथुनं कर्कटकोंऽगना निशांधाः ।**
**दिवसांधा हरिगोक्रियास्तु कुब्जा मृगकुंभांतिमभानि संध्ययोर्हि ॥**

बधिरेति ॥ धन्वितुलालयो धनुस्तुलावृश्चिका अपराह्णे दिवसस्यांतिमे तृतीयविभागे बधिराः स्मृताः; मिथुनकर्कटकन्या निशांधाः स्मृताः; हरिगोक्रियाः सिंहवृषमेषास्तु दिवसांधाः स्मृताः; मृगकुंभांतिमभानि मकरकुंभमीनाः संध्ययोः प्रातःसायंसंध्ययोर्हि निश्चयेन कुब्जाः पंगवः स्मृताः । अत्र मूलवाक्यं नोपलभ्यते ॥ ८० ॥

अथैषां प्रयोजनं सापवादं प्रहर्षिण्याह—

**दारिद्र्यं बधिरतनौ दिवांधलग्ने वैधव्यं शिशुमरणं निशांधलग्ने ।**
**पंग्वंगे निखिलधनानि नाशमीयुः सर्वत्राधिपगुरुदृष्टिभिर्न दोषः ॥**

दारिद्र्यमिति ॥ स्पष्टार्थं पद्यम् । पंग्वंगे पंगुलग्ने । यदाह वसिष्ठः—'अंधे वैधव्यमाप्नोति दारिद्र्यं बधिरे तथा । अर्थनाशो भवेत्पंगाविति धात्रा विनिश्चितम् ॥' इति । सर्वत्रेत्यस्य संमतिः । बादरायणः—'मासशून्याह्वयास्तारा राशयो बधिरादयः । स्वामिजीवबुधैर्दृष्टा युक्ता वा नैव दोषदाः' इति । एषां परिहारो देशभेदेनाप्यभिहितः कश्यपेन—'काणपंग्वंधबधिरमासशून्याश्च राशयः । गौडमालवयोस्त्याज्यास्त्वन्यदेशे न गर्हिताः ॥' इति । नारदवाक्यं तु ग्रंथकृतैव प्रागुक्तम् ॥ ८१ ॥

अथोदयास्तशुद्धिः प्रागुक्ता तत्रावसरप्राप्तान्वितहितनवांशांश्चित्रपदाछंदसाह—

**कार्मुकतौलिककन्यायुग्मलवे झषगे वा ।**
**यर्हि भवेदुपयामस्तर्हि सती खलु कन्या ॥ ८२ ॥**

कार्मुकेति ॥ कार्मुकं धनुः, तौलिकं तुला, कन्या प्रसिद्धा, युग्मं मिथुनं; एषामंशे नवांशे झषगे वा मीननवांशे वा विकल्पेन । वाशब्दः स्वकीयमतसूचनार्थः । धनुरादिनवांशाः सर्वमुनिसंमता इत्यर्थः । तेष्वंशेषु यर्हि यदा उपयामो विवाहो भवेत्तर्हि कन्या विवाहोत्तरं सती पतिव्रता खलु निश्चयेन स्यात् । यदाह वसिष्ठः—'लग्ने हि सर्वे शुभराशयश्च शुभेक्षिता वाथ युताः शुभाः स्युः । नवांशकार्मौलिनृयुग्युवत्यश्चापाद्यभागः शुभदो न चान्ये ॥ द्विभर्तृका मेषनवांशके स्याद्वृषांशके सा पशुशीलयुक्ता । धनान्विता पुत्रवती

तृतीये कुलीरकांशे कुलटाप्यजस्त्रम् ॥ सिंहांशके सा पितृमंदिरस्था कन्यांशके वित्तयुता सुशीला । तुलांशके सर्वगुणास्पदा सा कीटांशके निःस्वतरा विशीला ॥ चापांशकाद्ये धनिनी द्वितीये भागेऽन्यसक्ता मलिना गदाढ्या । निःस्वा मृगांशे विगुणा घटांशे विभर्तृका योगरता विशीर्णा ॥ मीनांशके भर्तृयुतार्थहीना शुभग्रहैर्युक्तनिरीक्षिते वा । तस्मात्सदैवोक्तनवांशकेषु कुर्याद्विवाहं गुणसंप्रवृद्धयै ॥ नवांशदोषः सकलं गुणौघं लग्नोत्थसौम्यग्रहसंभवं च । ध्रुवं निहंतीव वृकोऽजसंघं षड्वर्गजं सौम्यवियच्चराणाम् ॥' इति । पशुशीलयुक्ता पशुवद्व्यभिचारपरा गदो रोगः स्वं धनं । एते एव च नवांशाः सकलमुनिभिरुक्ताः–'तुलामिथुनकन्यांशा धनुराद्यार्धसंयुताः । एते नवांशाः शुभदा यदि नांत्यांशकः खलु ॥' इति नारदोक्तेः । शौनकस्तु मीनांशकमपि शुभमाह–'सुदती सौभाग्यवती प्रहसितवदना च मीनांशे' इति । तत्र निषेधविध्योस्तुल्यबलत्वात्षोडशिग्रहणाऽग्रहणवद्विकल्प इत्याहुः । तन्न । 'एकबाधेनोपपत्तावनेकबाधो न न्याय्यः' इति बहुमुनिवचनप्रामाण्यान्मीनांशत्याग एवोचितो नन्वेकतरमुनिवचनानुरोधात्पाक्षिको बाधः पाक्षिको विधिश्च । विकल्पस्याष्टदोषग्रस्तत्वात् । का तर्हि शौनकवाक्यगतिरिति चेत् । गुणवद्ग्रहोपलब्धौ लग्नांतरासंभवे च विचारितस्थले विहितनवांशानां दोषवत्त्वसद्भावाच्च गत्यंतराभावे मीनांशको निषिद्धोऽपि प्रशस्त इत्येवं युक्ता गतिः । यहींति । 'अनद्यतने र्हिलन्यतरस्याम्' इति किंयत्तद्भ्योऽनद्यतने काले र्हिल्प्रत्ययः । उपयामः 'यमः समुपनिविषु च' इति भावे घञ् । 'विवाहोपयमौ समौ । तथा परिणयोद्वाहोपयामाः पाणिपीडनम्' इत्यमरसिंहः ॥ ८२ ॥

अथ विहितनवांशे क्वचिन्निषेधं श्रीछंदसाह—

**अंत्यनवांशे न च परिणेया काचन वर्गोत्तममिह हित्वा ।**
**नो चरलग्ने चरलवयोगं तौलिमृगस्थे शशभृति कुर्यात् ॥८३॥**

अंत्येति ॥ विहितनवांशेष्वपि यथा मेषलग्ने धनुर्नवांशोंऽतिम इत्येवंविधे विषये लग्नांतिमनवांशे काचन कन्या न परिणेया न विवाह्या, परंतु वर्गोत्तममंतिममपि नवांशं हित्वा । तत्र विवाह उचित एव । यथा मिथुनलग्ने मिथुनांशोऽन्तिमोऽपि वर्गोत्तमः । यदाह कश्यपः—'अंत्यांशका अपि श्रेष्ठा यदि वर्गोत्तमाह्वयाः । अनुक्तांशास्तु न ग्राह्या यतस्ते कुनवांशकाः ॥' इति । वसिष्ठोऽपि—'वर्गोत्तमं विनांत्यांशो विवाहे न शुभप्रदः । वर्गोत्तमश्चेदंत्यांशः पुत्रपौत्रादिवृद्धिदः ॥' इति । अन्यच्च । नो चरलग्ने इति । तौलिमृगस्थे तुलामकरस्थे शशभृति चंद्रे सति चरलग्ने विहितचरलवयोगं नो कुर्यात् । यथा–मेषलग्ने तुलांशः । उक्तं च केशवार्केण—'चरलवं चरवेश्मगमुत्सृजेन्मृगतुलाधरगे मृगलक्ष्मणि । युवतिरत्र भवेत्कृतकौतुका मदनवत्यनवत्यजनोन्मुखी ॥' इति । न नवः अनवो जीर्णो भर्ता तस्य त्यजने त्यागे उन्मुखी परपुरुषरता स्यादित्यर्थः ॥ ८३ ॥

---

१ वर्गोत्तमे अंतिमेऽपि अंशे ।

अथ सर्वथा लग्नभंगयोगमुपजात्याह—

व्यये शनिः खेऽवनिजस्तृतीये भृगुस्तनौ चंद्रखला न शस्ताः।
लग्नेट्कविग्लौश्च रिपौ मृतौ ग्लौर्लग्नेट्शुभाराश्च मदे च सर्वे ८४

व्यये इति॥ व्यये द्वादशस्थाने स्थितः शनिः न शस्तः, 'सोमकुलेऽपि हि जातां द्वादशगो मद्यपां कुरुते' इति शौनकोक्तेः। अत्र रविसुत इत्यनुवर्तते। खे दशमेऽवनिजो मंगलो न शस्तः, 'शाकिनीं व्योम्नि वक्रः' इति केशवार्कोक्तेः। तृतीयो भृगुः शुक्रः न शस्तः, 'धन्या धनगे शुक्रे कृपणत्वं प्राप्नुयान्नारी। दुश्चिक्यगते कन्या व्यब्दान्भर्तुः कनीयसं भजते॥' इति शौनकोक्तेः। तनौ लग्ने चंद्रः खलाः पापग्रहाश्च न शस्ताः, 'लग्नस्थेऽर्के कन्या विधवा संवत्सरेऽष्टमे भवति। लग्नस्थो हिमरश्मिर्मृत्युं कुर्यात्त्रयोदशे मासे॥ भौमः सद्यो विधवां लग्नस्थोऽब्दान्न सौम्यदृग्योगात्। कामयति नीचवर्णाँल्लग्नस्थे रविसुते बहून्पुरुषान्॥ शनिवद्विधुंतुदस्य तु विज्ञेयं सदसदिति विज्ञैः' इति शौनकोक्तेः। लग्नेट् लग्नस्वामी कविः शुक्रः ग्लौश्चंद्रश्च रिपौ षष्ठस्थाने न शस्तः,'रंध्रे कुजे सौम्यखगे च मृत्युः षष्ठाष्टगे लग्नपतौ च मृत्युः' इति ज्योतिर्निबंधकृदुक्तेः। 'भृगुषट्काह्वयो दोषो लग्नात्षष्ठगते सिते। उच्चगे शुभसंयुक्ते तल्लग्नं सर्वदा त्यजेत्॥' इति नारदोक्तेः। 'अब्दचतुष्कान्मृत्युर्दंपत्योः षष्ठगे चंद्रे' इति शौनकोक्तेः। ग्लौश्चंद्रः, लग्नेट् शुभाश्चंद्रबुधगुरुशुक्राः, आरो भौमश्चैते मृतावष्टमस्थाने न शस्ताः, 'मासत्रयेण विधवां निधनस्थश्चंद्रमाः कुरुते। मासत्रयेण कन्या निधनस्थे याति पंचत्वम्॥' बुध इत्यनुवर्तते। पंचत्वं मरणम्। दंपत्योर्निधनस्थः सप्तदशाब्दाद्वियोगदो जीवः। पंचत्वं नयति भृगुर्निधनस्थः सप्तभिर्वर्षैः॥' इति शौनकोक्तेः। नारदः—'कुजाष्टमो महादोषो लग्नादष्टमगे कुजे। शुभत्रययुतं लग्नं त्यजेत्तुंगगे यदि॥' अत्र संमतिः प्रागुक्ता। लग्नेट् च पुनः सर्वे सूर्यादयो ग्रहा मदे सप्तमस्थाने न शस्ताः निषिद्धाः, 'सर्वे जामित्रसंस्था विदधति मरणम्' इति वसिष्ठोक्तेः। कश्यपोऽपि—'सप्तमस्थानगाः सर्वे ग्रहाः कुर्वंति शीघ्रतः। दंपत्योर्मरणं यद्वा स्यादेकस्य न संशयः॥' इति। अर्थादन्येषु स्थानेषु ग्रहाः समीचीनास्तत्र केषुचित्स्थानेषु शुभा एव, केषुचिन्मध्यमा एवेत्येतदपि वक्ष्यति। अतोऽमुमर्थमतिसंक्षिप्य त्रिविक्रमेण निषिद्धस्थानान्येवोक्तानि—'त्याज्या लग्नेऽब्धयो मंदात्षष्ठे शुक्रेंदुलग्नपाः। रंध्रे चंद्रादयः पंच सर्वेऽस्तेऽब्जगुरू समौ॥' इति। अब्जगुर्वोः समत्वं शौनकमतेन तादृशविरुद्धफलाभावात्। यदाह—'कन्यास्थितो जनयति सापत्न्यं चैव सप्तमे शशिनि। शीलचरित्रोपेतां करोति पत्युः कलत्रगो द्वेष्याम्॥' इति। गुरुरित्यनुवर्तते। अत्र वचनद्वयप्रामाण्याद्विकल्पः। यत्त्वत्रिणोक्तम्—'जामित्रगो यदि भवेदुडुराजा बुधो वा गीर्वाणनाथसचिवः सितचंद्रपक्षे। कन्याविवाहसमये परिहृत्य दोषान्सौभाग्यपुत्रसहितां वनितां करोति॥' इति, तच्चंद्रजामित्रविषयम्। तथा च

भुजबलः—'स्त्रीणां विवाहे तु बलैरुपेताः पत्युः प्रणाशं विहगा विदध्युः। त्यक्त्वा बुधं दैत्यगुरुं गुरुं च निशाकराद्रस्तगृहप्रपन्नाः॥' इति। दैत्यगुरुं शुक्रम्। अत एव दीपिका—'रविमंदकुजाक्रांतं मृगांकात्सप्तमं त्यजेत्। विवाहयात्राचूडासु गृहकर्मप्रवेशने॥' इति॥ ८४॥

अथैवं निषिद्धस्थानान्यभिधायेदानीं रेखादातॄन् ग्रहान्वसंततिलकयाह—

त्र्यायाष्टषट्सु रविकेतुतमोर्कपुत्रा-
स्त्र्यायारिगः क्षितिसुतो द्विगुणायगोऽब्जः।
सप्तव्ययाष्टरहितौ ज्ञगुरू सितोऽष्ट-
त्रिद्यूनषड्व्ययगृहान्परिहृत्य शस्तः॥ ८५॥

त्र्यायेति॥ तृतीयैकादशाष्टमषष्ठस्थानेषु रविकेतुतमोर्कपुत्राः शस्ताः शुभफल-दातारः। यदाह शौनकः—'बंधुजनेभ्यः पूजां त्रिंशद्वर्षाणि सहजगे त्वर्के। प्राप्नोति धनं षष्ठे त्र्यब्दादूर्ध्वं सुतांश्चैव॥ दंपत्योः सह मरणं निधनस्थेऽर्केऽष्ट-सप्तत्या। कारयति धनविवृद्धिं त्र्यब्दादूर्ध्वं तथायगः सविता॥' इति रवेः। 'धनधान्यपुत्रयुक्तां पंचमसंवत्सरात्तृतीयस्थः। षष्ठः षड्भिर्मासैरसपत्नीं कन्यकां कुरुते॥ निधनगतोऽर्किः कुर्यादामरणादामयवियुक्ताम्। आयगतोऽर्किः कन्यां त्रिवर्गयोग्यां करोति षण्मासात्॥' इति शनेः। अर्कस्यापत्यं अर्किः 'अत इञ्' इति इञ्, संज्ञापूर्वकस्य विधेरनित्यत्वाद्वृद्ध्यभावः। सत्यां वा वृद्धौ 'नसुते' इति नैनियोगविभागादसिद्धत्वाभावात्संधिर्दीर्घः 'आयगतार्किः' इति पाठः। अथवा आयगतश्चासौ आर्किश्चायगतार्किः इत्येकं पदं, एवं निधनगतार्किः इत्यत्रापि। अत्र राहुकेत्वोश्च फलं शनिवद्वेदेति 'स्वर्भानौ वाप्यथ शिखिनि वा लग्नभावादिसंस्थे' इति वसिष्ठोक्तेः। त्र्यायारिगः तृतीयैकादशषष्ठस्थानस्थितः क्षितिसुतो भौमः शस्तः, 'सहजस्थो भूमिसुतः सौभाग्यकरस्तु यावदायुष्यम्। संवत्सरेण विपुलं धनागमं शत्रुसंस्थस्तु॥ मणिकांचनरत्नाढ्यामेकादशगः कुजोऽब्दषट्केन॥' इति शौनकोक्तेः। अब्जश्चंद्रो द्विगुणायगो द्वितीयतृतीयै-कादशस्थः शस्तः, 'अब्दाद्धनसंयुक्तां करोति चंद्रो धने नार्याः। चंद्रस्तृतीय-राशौ सौभाग्यकरस्तु यावदायुष्यम्॥ लग्नादेकादशगः कन्यामिंदुर्धनान्वितां कुरुते॥' इति शौनकोक्तेः। ज्ञगुरू बुधबृहस्पती सप्तमद्वादशाष्टमातिरिक्त-स्थानस्थितौ शस्तौ। उक्तस्थानानां अशुभत्वादनुक्तस्थानानां च शुभदातृ-त्वात्। यदाह वसिष्ठः—'प्रीतिर्वृद्धिः सुगुणनिरतिर्बंधुपूजा सुताप्तिः सद्वै-पक्ष्यं तनयरहितत्वं तथा भर्तृनाशः। धर्मे बुद्धिर्भवति धरणीलब्धिरत्यंतबुद्धि-र्हानिः स्त्रीणां हिमकरसुते लग्नभावादिसंस्थे॥' इति। 'लक्ष्मीप्राप्तिर्भवति सुयशः प्रीतिरन्योन्यवृद्धिरिष्टप्राप्तिर्बहुविधमयं चाश्रमाणां विरक्तिः। पापा-सक्तिः सुकृतनिरतिर्भूरिलाभः सुरेज्ये स्त्रीणां सौख्यं रिपुकृतभयं लग्नभावादि-संस्थे॥' इति। अयं=शुभं दैवम्। 'अयः शुभावहो विधिः' इत्यमरः। क्लीबत्वं त्वार्षम्। केचित् 'बहुविधमयम्' इत्यत्र 'बहुविधभयम्' इति पठंति, तत्

मकारे भशब्दभ्रांतेः । 'उभयकुलानंदकरीं करोति न चिराद्गुरुः षष्ठे' इति षष्ठस्थानस्थितगुरोः शौनकेनापि सम्यक्फलाभिधानाच्च । सित इति । अष्टमतृतीयसप्तमषष्ठद्वादशस्थानानि परिहृत्य त्यक्त्वान्येषु स्थानेषु सितः शुक्रः शस्तः । तदुक्तं वसिष्ठेन—'भोगप्राप्तिर्विविधविभवं स्वैरवृत्तिर्महत्त्वं द्युम्नाधिक्यं भवति निधनं सर्वनाशो वसुत्वम् । तथ्यप्रीतिर्बहुविधगुणाः सर्वसंपत्समृद्धिरस्त्वं स्त्रीणामुशनसि तथा लग्नभावादिसंस्थे ॥' इति । द्युम्नं=द्रविणम् । 'हिरण्यं द्रविणं द्युम्नम्' इत्यभिधानात् । मूले गृहशब्दः पुल्लिंगः, 'गृहाः पुंसि च भूम्न्येव' इत्यमरः । अतो बुधगुरुशुक्राणां शुभाशुभस्थानोक्तेः शुभाशुभफलत्वमेव, न कदाचिन्मध्यमत्वम् । अन्येषां तु शुभाशुभस्थानातिरिक्तस्थानसद्भावान्मध्यमत्वमप्यस्ति । उत्कृष्टशुभाशुभफलानभिधानात् । किंतु किंचिन्मध्यमफलाभिधानम्; तदुक्तं वसिष्ठेन–'मृत्युर्नैःस्वं बहुविधधनं भ्रातृहानिः प्रजानां व्याधिः सौख्यं बहुविधमतो भर्तृहानिश्चिरायुः । श्रेयोहानिर्भवति हृदयव्याधिरर्थागमश्च भानौ स्त्रीणामतिशयरुजा लग्नभावादिसंस्थे ॥ नाशः संपद्बहुविधयशो बंधुवृद्धिः प्रजाप्तिः शत्रोर्नाशान्मृत्युर्भवति न चिराद्दीर्घसापत्न्यबाधा । प्रव्रज्यात्वं दुहितृजननं वर्धनं भोगभाक्त्वं दास्यं स्त्रीणां तुहिनकिरणे लग्नभावादिसंस्थे ॥' इति । अत्र चतुर्थचंद्रस्य प्रजाप्तिः फलमभिहितम् । तथैव श्रीपतिनापि । तथापि तद्वाक्ये 'सुखे तु कथितो बंधुक्षयः कैश्चन' इत्येकीयमतमनुसृत्य ग्रंथकृता चतुर्थस्थानस्य मध्यमत्वमंगीकृतम् । 'बंधुश्वशुरवियुक्तां चतुर्थसंस्थः शशी त्वष्टात्' इति शौनकोक्तेश्च । विरुद्धार्थयोः शौनक-वसिष्ठवाक्ययोः का गतिरिति चेत् । बालचंद्रविषयमशुभफलम् । तद्भिन्नचंद्रविषयं शुभफलम् । उक्तं च केशवार्केण—'बालोऽब्जः[1] प्रियविरहं शनिः स्तनांभःशून्यत्वं सृजति सुखे सुवासिनीनाम्' इति । पुनर्वसिष्ठः–'मृत्युः शोको बहुविधधनं भ्रातृवैरं कुबुद्धिर्लक्ष्मीप्राप्तिर्भवति मरणं चोभयोर्वंशनाशः । स्त्रीणां द्वेषो व्यसननिरतिः पुत्रपौत्रादिसिद्धिर्भीतिर्भूमेर्बलिनि तनये लग्नभावादिसंस्थे ॥ स्वच्छंदत्वं कदशनरतिर्वल्लभत्वं विशीलं व्याधिः सुश्रीर्मृतिरथ सुखं गर्भपाकप्रवृत्तिः । शूलासक्तिर्भवति रविजे वैभवं वक्त्ररोगं स्वर्भानौ वाप्यथ शिखिनि वा लग्नभावादिसंस्थे ॥' इति ॥ ८५ ॥

अथ लग्नभंगिकर्तर्यादिमहादोषाणामपवादं शार्दूलविक्रीडितेनाह—

पापौ कर्तरिकारकौ रिपुगृहे नीचेऽस्तगौ कर्तरी-
दोषो नैव सितेऽरिनीचगृहगे तत्षष्ठदोषोऽपि न ।
भौमेऽस्ते रिपुनीचगे न हि भवेद्भौमोऽष्टमो दोषकृ-
न्नीचे नीचनवांशके शशिनि रिःफाष्टारिदोषोऽपि न ॥८६॥

पापाविति ॥ तत्र कर्तर्यपवाद उच्यते । कर्तरीयोगलक्षणम् 'लग्नात्पापौ' (६।४७) इत्यादिनोक्तम् । यौ ग्रहौ क्रूरौ कर्तरिकारकौ रिपुगृहे शत्रुगेहे स्थितौ नीचेऽस्तगौ स्वनीचराशिस्थितौ अस्तंगतौ वा तदा कर्तरीदोषो नैव स्यात् । यदाहुः

[1] बालोऽब्जः प्रियवियुतिं[illegible] पाठः ।

कश्यपनारदवसिष्ठाः—'पापयोः कर्तरीकर्त्रोः शत्रुनीचगृहस्थयोः । यदा चास्तगयोर्वापि कर्तरी नैव दोषदा ॥' इति । इदं विशेषणं शत्रुगृहस्थत्वादिकं समुचितं व्यस्तं समस्तं वा ध्येयम् । ननु 'कर्तरिकारकौ'इत्यत्र कथं ह्रस्वत्वम् ? यावता कर्तरीशब्द 'उणादयो बहुलम्' इति बहुलोक्तेः 'कृती छेदने' इत्यस्माद्धातोर्निष्पन्नस्तत्र यदीकारांतस्तदा ङ्यंतत्वाभावात् 'ङ्यापोः संज्ञाछंदसोर्बहुलम्' इति ह्रस्वत्वं न प्राप्नोति । यदापि-'कृदिकारादक्तिनः' इति ङ्यंतत्वं तदा संज्ञाछंदसोरेवाभावाद्ध्रस्वो न स्यात् । उच्यते-बहुलवचनादसंज्ञायामप्येवंविधे प्रयोगे ह्रस्व इति दुर्घटवृत्तिकृत् । अत एव 'वैदेहियंधोर्हृदयंविद' इति कालिदासः । 'स्यादेतदेव प्रमदवनमंतःपुरोचितम्' इत्यमरसिंहोऽपि प्रयुक्तवान् । अपवादांतरमुक्तं दैवज्ञमनोहरे गर्गः—'क्रूरकर्तरिसंयुक्तं लग्नं चंद्रं च न त्यजेत् । केंद्रत्रिकोणसंस्थेषु गुरुभार्गववित्सु च' ॥ इति । अन्यत्रापि पठ्यते । 'विधौ धनोपगे शुभग्रहेऽथवांत्यगे गुरौ । न कर्तरी भवत्यहो जगाद बादरायणः ॥' इति । क्रूरद्वयस्यांतरगं विलग्नं मृतिप्रदं चंद्रमसं च रोगदम् । शुभेर्धनस्थैरथवांत्यगे गुरौ न कर्तरी स्यादिह भार्गवा विदुः ॥' इति । अथ षष्ठशुक्रापवाद उच्यते सिते शुक्रेऽरिनीचगृहगे शत्रुगृहे स्वनीचगृहगे वा सति तत्षष्ठदोषो भृगुषष्ठदोषोऽपि न स्यात् । यदाह कश्यपः—'नीचराशिगते शुक्रे शत्रुक्षेत्रगतेऽपि वा । भृगुषष्ठोत्थितो दोषो नास्ति तत्र न संशयः ॥' इति । अथाष्टमभौमदोषापवाद उच्यते-भौमेऽस्ते अस्तंगते रिपुनीचगे शत्रुगृहे वा स्वनीचगृहगे वा सति अष्टमो भौमो न दोषकृत्स्यात् । उक्तं च कश्यपेन—'अस्तगे नीचगे भौमे शत्रुक्षेत्रगतेऽपि वा । कुजाष्टमोद्भवो दोषो न किंचिदपि विद्यते ॥' इति । अथ षडष्टद्वादशस्थानचंद्रापवाद उच्यते-शशिनि चंद्रे नीचे वा नीचनवांशके वा सति रिःफाष्टारिदोषोऽपि द्वादशाष्टमशत्रुस्थानस्थितचंद्रदोषोऽपि न स्यात् । 'नीचराशिगते चंद्रे नीचांशकगतेऽपि वा । चंद्रे षष्ठारिरिःफस्थे दोषो नास्ति न संशयः ॥' इति कश्यपोक्तेः ॥ ८६ ॥

अथ विवाहे अब्ददोषाद्यनेकदोषाणामपवादं वसंततिलकयाह—

अब्दायनर्तुतिथिमासभपक्षदग्ध-
तिथ्यंधकाणबधिरांगमुखाश्च दोषाः ।
नश्यंति विद्गुरुसितेष्विह केंद्रकोणे
तद्वच्च पापविधुयुक्तनवांशदोषः ॥ ८७ ॥

अब्देति ॥ अब्ददोषः लुप्ताब्दादिः । १ अयनदोषः दक्षिणायनादिः । २ ऋतुदोषः वर्षर्त्वादिः । ३ तिथिदोषो रिक्तादिः । ४ मासदोषः । ५ भं नक्षत्रदोषः क्रूरसाहित्यादिः । ६ पक्षदोषस्त्रयोदशदिनात्मकादिः । ७ दग्धातिथिः प्रसिद्धाः; चापांत्यगे इत्यादिना अंधकाणबधिराख्यान्यंगानि लग्नानि तन्मुखा-

त्पातादयोऽन्ये अकालवृष्ट्याद्या दोषा विद्गुरुसितेषु केंद्रकोणे केन्द्रं सप्तमस्थानरहितं विवक्षितं, जामित्रदोषस्य सत्त्वात् । अत एवोक्तमग्रे 'त्रिकोणे केंद्रे वा मदनरहिते' (६।८९) इति । कोणे नवपंचमे सत्सु नश्यंति । उक्तं च कश्यपेन— 'अब्दायनर्तुमासोत्थाः पक्षतिथ्यृक्षसंभवाः । ते सर्वे नाशमायांति केंद्रसंस्थे शुभग्रहे । काणांधबधिरोद्भूता दग्धलग्नतिथेर्भवाः । ते दोषा नाशमायांति केंद्रसंस्थे शुभग्रहे ॥' इति । 'अकालजाश्च नीहारविद्युत्पांस्वभ्रसंभवाः । परिवेषप्रतिसूर्यशक्रचापध्वजादयः ॥ दोषप्रदा मंगलेषु कालजाश्चेन्न दोषदाः । गुरुरेकोऽपि केंद्रस्थः शुक्रो वा यदि वा बुधः ॥ हरेः स्मृतिर्यथा हंति तद्वद्दोषानकालजान् । लत्तोपग्रहचंडीशचंद्रजामित्रसंभवान् ॥ तत्केंद्रगो गुरुर्हंति सुपर्णः पन्नगानिव ॥' इति । अकालजत्वनिर्णयं यात्राप्रकरणे—'यदि मास्सु चतुर्षु' (११।९५) इत्यादिना वक्ष्यति । तद्वद्चेति । तथा यदि पापः क्रूरो विधुयुक्राशेर्नवांशे स्यात् ; यथा—चंद्रो मेषे सूर्यनवांशस्तद्दोषाभिधानं यज्ञोपवीतप्रकरणे तदा तत्कृतदोषोऽपि नश्यति । उक्तं च संहिताप्रदीपे—'सचंद्रराशेरशुभो नवांशः प्रोक्तः सपापोऽपि विलग्नसंस्थः । त्रिकोणकेंद्रेषु गुरुः सितो वा यदा तदासावशुभोऽपि शस्तः ॥' इति ॥ ८७ ॥

अथोक्तानुक्तदोषाणां बहून्परिहारान् शालिन्याह—

**केंद्रे कोणे जीव आये रवौ वा लग्ने चंद्रे वापि वर्गोत्तमे वा ।**
**सर्वे दोषा नाशमायांति चंद्रे लाभे तद्वद्दुर्मुहूर्तांशदोषाः ॥ ८८ ॥**

केंद्रे इति ॥ केंद्रे कोणे, केंद्रं प्रसिद्धं; कोणं नवपंचमं; तत्र च जीवो गुरुः स्यात्तदा सर्वे दोषा नाशमायांति । उपलक्षणत्वाद्बुधशुक्रावपि । यदाह नारदः—'उक्तानुक्ताश्च ये दोषास्तान्निहंति बली गुरुः । केंद्रसंस्थः सितो वापि पन्नगान्गरुडो यथा ॥' इति । सितो बुधस्याप्युपलक्षणम् । उक्तं च कश्यपेन—'काव्ये गुरौ वा सौम्ये वा यदा केंद्रत्रिकोणगे । नाशं यान्त्यखिला दोषाः पापानीव हरौ स्मृते ॥' इति । तत्रापि लग्नाख्यकेंद्रस्यातिबलवत्त्वात्तत्र स्थितो जीवः सर्वारिष्टहरः । तदुक्तं वसिष्ठेन—'ये लग्नदोषाः कुनवांशदोषाः पापैः कृता दृष्टिनिपातदोषाः । लग्ने गुरुस्तान्विमलीकरोति फलं यथांभः कतकद्रुमस्य ॥' इति । अथवा, आये एकादशे रवौ सति दोषनाशः । 'यत्रैकादशगे सूर्ये दोषा नाशं ययुस्तदा । स्मरणादेव रुद्रस्य पापं जन्मशतोद्भवम् ॥' इति । अथवा, लग्ने वर्गोत्तमे स्वनवांशयुक्ते यथा मिथुने मिथुनांशश्च तदा दोषनाशः । अथवा, चंद्रे वर्गोत्तमे स्वनवांशस्थिते वा सति दोषनाशः । द्वितीयवाशब्दस्यानुक्तसमुच्चयार्थत्वाच्चंद्रो लग्नादुपचयस्थाने चेत्स्यात्तदापि सर्वदोषनाशः । एवं क्रमेण परिहारत्रयमुक्तम् । यदाह कश्यपः—'वर्गोत्तमगते लग्ने वर्गदोषा लयं ययुः । चंद्रे चोपचये वापि ग्रीष्मे कुसरितो यथा ॥' इति । चंद्रे इति तद्वदेतेनैव प्रकारेण दुर्मुहूर्ता

रवावर्यमेत्यादयः अंशदोषाः पापग्रहनवांशाख्यास्ते सर्वे चंद्रे लाभे एकादश-स्थानस्थिते सति नाशमायांति । कश्यपोक्तं च 'मुहूर्तलग्नषड्वर्गकुनवांशग्रहो-द्भवाः । ये दोषास्तान्विहंत्येव यत्रैकादशगः शशी ॥' इति । अन्यदप्याह कश्यपः—'लग्नादुःस्थानगव्योमचरोत्थं दोषसंचयम् । शुभः केंद्रगतो हंति दावाग्निर्विपिनं यथा ॥' इति ॥ ८८ ॥

अथैवं विशिष्यदोषाभिधानपूर्वकं विशेषपरिहारानभिधायेदानीं सामान्यतो दोषसमुदायस्यैकं परिहारं शिखरिण्याह—

त्रिकोणे केंद्रे वा मदनरहिते दोषशतकं
हरेत्सौम्यः शुक्रो द्विगुणमपि लक्षं सुरगुरुः ।
भवेदाये केंद्रेऽङ्गप उत लवेशो यदि तदा
समूहं दोषाणां दहन इव तूलं शमयति ॥ ८९ ॥

त्रिकोण इति ॥ त्रिकोणे ९।५ केंद्रे सप्तमरहिते १।४।१० यदि सौम्यो बुधस्तिष्ठेत्तदा दोषशतकं हरेत् । उक्तस्थानस्थितः शुक्रोऽपि द्विगुणं दोषशतकं दोषद्विशतं हरेत् । तथोक्तस्थानस्थितो गुरुरपि लक्षं दोषान् हरेत् । यदाह नारदः-'दोषाणां हि शतं हंति बलवान्केंद्रगो बुधः । अपहाय द्युनं, शुक्रो द्विगुणं लक्षमंगिराः ॥' अत्र शतशब्देनानेकसंख्यात्वं विवक्षितम् । अत एवाह कश्यपः—'बलवान्केंद्रगः सौम्यो हंति दोषशतत्रयम् । द्युनं विहाय दैत्येज्यः सहस्रं लक्षमंगिराः ॥' इति । भवेदिति । अङ्गपः=लग्नस्वामी । उत-शब्दो वार्थे । लवेशो लग्नगतांशनाथो वा आये ११ केंद्रे १।४।१० यदि भवेत्तदा सः दोषाणां समूहं शमयति । तत्र दृष्टांतः-दहनोऽग्निस्तूलं कार्पा-समिव शमयति । तदुक्तं नारदेन—'लग्नेट् लग्नांशनाथो वा चायगः केंद्रगोऽपि वा । राशिं निहंति दोषाणामिन्धनानीव पावकः ॥' इति । जात-केऽपि—'लग्नाधिपो यदा केंद्रे लग्नादेकादशालये । सर्वग्रहकृतं रिष्टमेकोऽपि विलयं नयेत् ॥' इति ॥ ८९ ॥

अथ लग्नविंशोपकाननुष्टुभाह—

द्वौ द्वौ ज्ञभृग्वोः पंचेंदौ रवौ सार्धत्रयो गुरौ ।
रामा मंदागुकेत्वारे सार्धैकैकं विशोपकाः ॥ ९० ॥

द्वाविति ॥ ज्ञभृग्वो रेखाप्रदयोः सतोर्द्वौ द्वौ विंशोपकौ । यथा-बुधस्य २, शुक्रस्य २, एवंविधे चंद्रे पंच ५, तादृशे सूर्ये सार्धत्रयः ३।३०, गुरौ रामा-स्त्रयः ३, एकमेकमेकैकं च सार्धैकैकम् । एकशब्दस्य 'नित्यवीप्सयोः' इति द्विर्वचने 'एकं बहुव्रीहिवत्' इति बहुव्रीहिवद्भावात् 'सुपो धातु-' इति विभक्तेर्लुकि सार्धशब्देन कर्मधारयस्तथा सति प्रत्येकं सार्धैकैकमित्यर्थः । यथा-मंदे शनौ सार्धैकम् १।३०, अगौ राहौ १।३०, केतौ १।३०, आरे

भौमे १।३०; एते विंशोपका रेखादातृग्रहाणां ज्ञेयाः, न मध्यमानां । निषिद्धानां च न । यदाह वराहः—'रवौ सार्धास्त्रयो भागाश्चंद्रे पंच गुरौ त्रयः । द्वौ शुक्रे द्वौ बुधे चैव प्रोक्ता ह्येते विंशोपकाः ॥ मंदे भौमे तथा राहौ सार्धं प्रत्येकमुच्यते । बलाबलवशादेवं विज्ञातव्या विंशोपकाः ॥' इति । अत्र पद्ये राहोरुपलक्षणत्वात्केतोरपि सार्धैकमेव बलं ग्राह्यमत एव मूले केत्वभिधानम् । नन्विदमयुक्तं; यतो नवग्रहप्राबल्ये सार्धैकविंशति २१।३० विंशोपकात्मको योगो भवेत्, स चासंभवादनुपपन्नः; अत्युत्कृष्टे हि लग्ने विंशतिविंशोपकात्मकमेव बलं स्यान्न ततोऽधिकमिति । उच्यते,-विवाहादिलग्ने द्वयोरपि राहुकेत्वोर्युगपत्समीचीनत्वस्य गगनकुसुमायमानत्वाद्यदैकस्य शुभत्वमपरस्याशुभत्वमिति तदैव विंशतिर्विंशोपका लग्ने संभवंति । द्वयोरप्यनिष्टत्वे सार्धाष्टादश । एवं यस्य यस्य ग्रहस्य रेखादातृत्वहानिस्तस्य तस्य तद्विंशोपकहानिरित्यर्थः । तत्र पंचभ्यो विंशोपकेभ्यो हीनं लग्नं त्याज्यमेव । पंचभ्योऽधिकं दशभ्यो हीनं निकृष्टफलं लग्नांतराभावे हितं । दशभ्योऽधिकं पंचदशभ्यो हीनं मध्यं ततोऽधिकं तूत्तममेवेति निष्कृष्टोऽर्थः ॥ ९० ॥

अथ ग्रहवशेन श्वशुरादिविभागज्ञानं सप्रयोजनमुपजात्याह—

**श्वश्रूः सितोऽर्कः श्वशुरस्तनुस्तनुर्जामित्रपः स्याद्दयितो मनः शशी ।**
**एतद्बलं संप्रतिभाव्य तांत्रिकस्तेषां सुखं संप्रवदेद्विवाहतः ॥९१॥**

श्वश्रूरिति ॥ शुक्रः श्वश्रूः, सूर्यः श्वशुरः । अत्र कन्यानिमित्तशुभाशुभस्य विचारास्पदत्वात्तस्याः कन्यायाः श्वश्रूर्वरमाता श्वशुरो वरपिता तनुर्लग्नं तनुः स्वशरीरं जामित्रपः सप्तमाधीशो दयितो भर्ता ज्ञेयः शशी मनो ज्ञेयं; एतद्बलं एतेषां शुक्रादीनां बलं विचार्य तांत्रिकः तंत्रं सिद्धांतः 'तंत्रं प्रधाने सिद्धान्ते सूत्रवाये परिच्छदे' इत्यमरः । तं वेत्ति तांत्रिकः सिद्धांतवेत्ता ज्योतिर्वित् विवाहतो विवाहादनन्तरं तेषां श्वश्वादीनां सुखं स्यादिति प्रवदेत् । यदाह शौनकः—'श्वशुरः सहस्रकिरणः श्वश्रूर्भृगुनंदनो विनिर्दिष्टः । होरागमार्थकुशलैर्जामित्रपतिः पतिः स्त्रीणाम् ॥ शारीरं लग्नवशात्सुखदुःखं मानसं शशांकवशात् ॥' इति । शार्ङ्गीयेऽपि—'श्वशुरोऽर्कः सितः श्वश्रूः स्त्रीणामस्तपतिः पतिः । एभिरुच्चोपगैरेषां शुभं नीचादिगैरसत् ॥' इति । विशेषांतरमप्युक्तं शार्ङ्गीये एव-'सूर्यात्पतिः स्त्री च विधोस्तथाराद्भ्रिस्ं सुतो ज्ञाच्छ्वशुरं गुरोश्च । धर्मः सितादर्कसुताच्च वेश्म मृत्यात्समुद्वाहविधौ युवत्याः ॥'[1] 'एतैर्नीचस्थितैः शत्रुगतैर्वैवाहिकं न सत् । स्वगृहोच्चत्रिकोणस्थैः शुभमेषां यथोदितम् ॥' इति ॥ ९१ ॥

अथ संकीर्णजातीनां विवाहे नियतं कालविशेषं मत्तमयूरछंदसाह—

**कृष्णे पक्षे सौरिकुजार्केऽपि च वारे**
**वर्ज्ये नक्षत्रे यदि वा स्यात्करपीडा ।**

---

१ 'समुद्वाहविधौ स्वयुक्त्या' इति पाठः ।

संकीर्णानां तर्हि सुतायुर्धनलाभ-
प्रीतिप्राप्त्यै सा भवतीह स्थितिरेषा ॥ ९२ ॥

कृष्णेति ॥ कृष्णे पक्षे शनिभौमार्कवारे विवाहोक्तनक्षत्रादिभिन्ननक्षत्रेषु चकारात् 'व्याघातशूले' इत्यादिदुष्टयोगेष्वपि यदि संकीर्णानां अनुलोमप्रतिलोमजानां करपीडा विवाहः स्यात् तर्हि सा करपीडा सुतायुर्धनलाभप्रीतिप्राप्त्यै भवति । एषा स्थितिराचारोऽस्ति । अनुलोमजा मूर्धावसिक्तादयः । प्रतिलोमजाश्चाण्डालादयः । तल्लक्षणानि धर्मशास्त्रे तत एवावधार्याणि । वाग्रहणमेतदभावे विवाहाद्यावश्यकत्वे च प्रागुक्तदिनेऽपि कार्यमिति सूचनार्थम् । तदुक्तं शार्ङ्गीये-'कृष्णे पक्षे भानुभौमार्कजानां वारे योगे चापि धिष्ण्ये निषिद्धे । संकीर्णानां दारकर्म प्रशस्तं प्रीत्यर्थायुःप्राप्तये शौनकाद्याः ॥' इति । केशवार्कोऽपि—'प्रायेण संकरभुवामशुभर्क्षपक्षक्रूरक्षणेषु शुभकृत्करपीडनं स्यात्' इति ॥ ९२ ॥

अथ गांधर्वादिदुष्टविवाहे त्रिपदीचक्रे नक्षत्रशोधनमनुष्टुभाह—

गांधर्वादिविवाहेऽर्काद्वेद४नेत्र२गुणे३द्व१ः ।
कु१युगां४गा६ग्नि३भू१रामा३स्त्रिपद्यामशुभाः शुभाः ॥ ९३ ॥

गांधर्वादीति ॥ गांधर्वादिविवाहाः सलक्षणाः प्रागस्माभिरभिहिताः, तेषु अर्कात् सूर्याक्रांतनक्षत्रमारभ्य चत्वार्यशुभानि, ततो द्वे शुभे, ततस्त्रीण्यशुभानि, तत एकं शुभं, तत एकमशुभं, ततश्चत्वारि शुभानि, ततः षडशुभानि, ततस्त्रीणि शुभानि, तत एकमशुभं, ततस्त्रीणि शुभानि; एतान्यष्टाविंशतिभानि त्रिपद्यामशुभशुभान्येव ज्ञेयानि । त्रयाणां पदानां समाहारस्त्रिपदी तत्र, ब्रह्मविष्णुरुद्रपदाभिधचक्रत्रये इत्यर्थः । अत्र संमतिग्रंथानुपलंभः ॥ ९३ ॥

अथैव महता ग्रंथसंदर्भेण विवाहे सकलदोषमहादोषरहितां दिनशुद्धिमभिधायेदानीं अतः प्राक्कर्तव्यानामावश्यककर्मणां दिनशुद्धिं पृथ्वीछंदसाह—

विधोर्बलमवीक्ष्य वा दलनकंडनं वारकं
गृहांगणविभूषणान्यथ च वेदिकामंडपान् ।
विवाहविहितोडुभिर्विरचयेत्तथोद्वाहतो
न पूर्वमिदमाचरेत्रिनवषण्मिते वासरे ॥ ९४ ॥

विधोरिति ॥ अत्र विधोश्चंद्रस्य बलमवीक्ष्यागृहीत्वा वाग्रहणात् सत्यवकाशे चंद्रबलं ग्राह्यं । दलनं गोधूमादेः पिष्टीकरणं, कंडनं तंडुलादेः मुसलाद्याघातादिना शोधनं, एतयोः द्वंद्वैकवद्भावः । वारको मंगलकलशः, गृहांगणविभूषणानि गृहभूषणानि चूर्णगैरिकचित्रादिलेखादीनि, अंगणभूषणं संमार्जनगोमयाद्यालेपः । अथानंतरं वेदिका चत्वरं वधूवरयोरुपवेशनार्थं स्थल-

विशेषः, मंडपो गृहाच्छादनं कटादिना वितानादिना वा। बहुवचनात्कटाहा-द्यारोहणहरिद्राचंदनकांजिकाधारणादिसकलशुभप्रारंभान् एतानुद्वाहतः पूर्वं विवाहोक्तैरुडुभिर्नक्षत्रैः पंचांगशुद्धिसहिते दिने रचयेत्। उपलक्षणत्वाद्यज्ञोपवीतादावपि। ततः पूर्वं तन्नक्षत्रैरेतानभिहितशुभकर्मप्रारंभान् विरचयेत्। तथा इदमुक्तं कार्यजातं त्रिनवषण्मिते तृतीय-नवम-षष्ठमिते वासरे दिने पूर्वं नाचरेत्। तदुक्तं शार्ङ्गीये–'दलनकंडनमंडपवेदिकागृहसुमार्जनवारकमंडपाः। करतलग्रहमध्यगतागतं तदखिलं विदधीत विवाहभे॥ विवाहकृत्यं निखिलं विवाहभे विलोकयेन्नात्र बलं हिमद्युतेः। नवत्रिषष्ठेऽह्नि विवाहपूर्वतो न वर्णको मंडपतैलमंगलम्॥' इति। दैवज्ञमनोहरे निषिद्धभान्युक्तानि–'चित्राविशाखाशततारकाश्विनी ज्येष्ठाभरण्यौ शिवभाच्चतुष्टयम्। हित्वा प्रशस्तं फलतैलवेदिकाप्रदानकं कंडनमंडपादिकम्॥' इति। कांजिकाधारणमुहूर्तोऽपि तत्रैव–'मूलेंदुरुद्रश्रवणार्कपौष्णाविश्वेशचित्रानलरेवतीषु। संस्थापनं कांजिककुंडिकाया वारे रवेर्भूमिसुतस्य शस्तम्॥' इति। वेदिकायां विशेषमाह केशवार्कः—'वेदिकां विरचयेद्यथा तथा स्यादियं प्रविशतः प्रदक्षिणा। स्युर्जनाश्रययवोप्तिवर्णकाः षण्णवत्रिदिवसेषु नाग्रतः॥' इति। यवोप्तिः= अंकुरार्पणाख्यं कर्म। जनाश्रयः=मंडपः। 'मंडपोऽस्त्री जनाश्रयः' इत्यमरोक्तेः॥ ९४॥

अथावसरप्राप्तवेदिकालक्षणं मंडपोद्वासनमुहूर्तं च शालिन्याह—

**हस्तोच्छ्राया वेदहस्तैः समंतात्तुल्या वेदी सद्मनो वामभागे।**
**युग्मे घस्रे षष्ठहीने च पंच सप्ताहे स्यान्मंडपोद्वासनं सत्॥ ९५॥**

हस्तेति॥ सद्मनो गृहस्य वामभागे हस्तोच्छ्राया एकहस्तमितोच्चा समंतात्सर्वतः चतुर्भिर्हस्तैस्तुल्या समाना तादृशी वेदी विवाहादिमंगलकृत्ये स्यात्। 'शोभाकारिस्तंभसोपानादियुक्ता च' इत्यनुक्तमपि ध्येयम्। तदुक्तं नारदेन–'हस्तोच्छ्रितां चतुर्हस्तैश्चतुरस्रां समंततः। स्तंभैश्चतुर्भिः सुश्लक्ष्णैर्वामभागे स्वसद्मनः॥ समंडपां चतुर्दिक्षु सोपानैरुपशोभिताम्। प्रागुदक्प्रवणारंभां स्तंभैर्हंसशुकादिभिः॥ विचित्रितां चित्रकुंभैर्विविचित्रैस्तोरणांकुरैः। एवंविधां समारोहेन्मिथुनं साग्नि वेदिकाम्॥' इति। साग्नीति भिन्नं पदं मिथुनस्य विशेषणम्। वसिष्ठः—'षोडशारत्निकं कुर्याच्चतुर्द्वारोपशोभितम्। मंडपं तोरणैर्युक्तं तत्र वेदिं प्रकल्पयेत्॥ अष्टहस्तं च रचयेन्मंडपं वा द्विषट्करम्।' इति। द्विगुणिताः षट्करा यस्य तं द्वादशहस्तम्; उत्तमः षोडशहस्तः, मध्यमो द्वादशहस्तः, अधमोऽष्टहस्तः। अयं वैकल्पिको मंडपो गृहमानत एव कार्यो ननु स्वेच्छया। तदुक्तं सप्तर्षिमते विवाहपटले—'मंगलेषु च सर्वेषु मंडपो गृहमानतः। कार्यः षोडशहस्तो वा द्विषड्हस्तो दशावधि॥ स्तंभैश्चतुर्भिरेवात्र वेदी मध्ये प्रतिष्ठिता। शोभिता चित्रिता कुंभैरासमंताच्चतुर्दिशम्॥ द्वारविद्धा बलीविद्धा कूपवृक्षव्यधा तथा। न कार्या वेदिका तज्ज्ञैः शुभा मंगलकर्मसु॥' बली=काष्ठपाषाणादिनिर्मितस्तंभः। व्रतबंधे संस्कार्यत्वात्

वद्गृहस्तेन वेदीनिर्मितिः । विवाहे तु कन्यागृहे एव वरपूजनस्योक्तत्वाद्गृहस्था-श्रमस्य तदायत्तत्वाच्च कन्याहस्तेनैव वेदीनिर्माणम् । युग्मे इति । विवाहो-त्तरं युग्मे समे द्वितीयचतुर्थादिके घस्रे दिने षष्ठदिवसहीने, तथा विषमे तु पंचमे सप्तमे चाहनि दिवसे मंडपोद्वासनं देवकोत्थापनं सच्छुभफलदातृ स्यात् । यदाह नारदः—'समे तु दिवसे कुर्याद्देवकोत्थापनं बुधः । षष्ठं च विषमं नेष्टं मुक्त्वा पंचमसप्तमौ ॥' इति । समेषु षष्ठं विषमेषु च पंचमसप्तम-व्यतिरिक्तं दिनं नेष्टमित्यर्थः ॥ ९५ ॥

अथ प्राच्यशिष्टसंमतं मंडपादौ स्तंभनिवेशनमिंद्रवज्रयाह—

सूर्येऽङ्गनासिंहघटेषु शैवे स्तंभोऽलिकोदंडमृगेषु वायौ ।
मीनाजकुंभे निर्ऋतौ विवाहे स्थाप्योऽग्निकोणे वृषयुग्मकर्के ॥९६॥

सूर्य इति ॥ कन्यासिंहतुलास्थिते सूर्ये शैवे ईशानकोणे, वृश्चिकधनुर्मकर-स्थिते सूर्ये वायौ वायुकोणे, मीनमेषकुंभस्थिते सूर्ये निर्ऋतिकोणे, वृषमिथुन-कर्कस्थिते सूर्येऽग्निकोणे स्तंभः स्थाप्य इत्यर्थः । यदाह शिल्पशास्त्रे विश्व-कर्मा—'कन्यासिंहे तुलायां भुजगपतिमुखं शंभुकोणेऽग्निखातं वायव्ये स्यान्-दास्यं मकरधनुरलावीशखातं वदंति । कुंभे मीने च मेषे निर्ऋतिदिशि मुखं वायुकोणे हि खातं वह्नेः कोणे मुखं वै वृषमिथुनगते कर्कटे रक्षखातम् ॥' इति । एतद्यद्यपि गृहविषयमुक्तं तथापि वेदिनिर्माणाश्रयेण स्तंभनिवेशनं वृषादित्रित्रिराशिगतसूर्यवशेनाग्निकोणे सर्पास्यं शिवकोणे खातम् . एवमन्यत्र राशिगते सूर्येऽन्यकोणेषु स्तंभनिवेशनमूह्यम् । यदाह विश्वकर्मा—'वेद्यां वृषाद्गृहे सिंहाद्विकं मीनात्सुरालये । ईशानतो व्यस्तगत्या पृष्ठं तस्य शुभावहम् ॥' इति । तस्य=भुजगपतेः ॥ ९६ ॥

अथैवं लग्ननिर्णयमभिधायेदानीं घटिकालग्नसाधनं बहुगणितसाध्यं गोधू-लिकथनं च गणितप्रयासरहितं वक्तुमवशिष्यते, तत्र सूचीकटाहन्यायेन गोधूलिप्रशंसां मंदाक्रांतयाह—

नास्यामृक्षं न तिथिकरणं नैव लग्नस्य चिंता
नो वा वारो न च लवविधिर्नो मुहूर्तस्य चर्चा ।
नो वा योगो न मृतिभवनं नैव जामित्रदोषो
गोधूलिः सा मुनिभिरुदिता सर्वकार्येषु शस्ता ॥ ९७ ॥

नेति ॥ स्पष्टार्थमिदं पद्यम् । यदाह भागुरिः–'गोपैर्यष्ट्याहतानां खुर-पुटदलिता याति धूली दिनांते सोद्वाहे सुंदरीणां विविधधनसुतारोग्यसौ-भाग्यदात्री । तस्मिन् काले न ऋक्षं न च तिथिकरणं नैव लग्नं न योगाः ख्याताः पुंसां सुखार्थं शमयति दुरितान्युत्थितं गोरजस्तु ॥' ननु सकलदोष-निराकरणेनातिप्रशंसनाद्गोधूल्याः घटिकालग्नानां महादोषनिराकरणपूर्वकम-

मिहितानां वैयर्थ्यप्रसंगः। न च गोधूल्यभावे घटीलग्नमवकाशवदिति वाच्यम्। गोधूल्यभावो हि दोषसत्वे सति स्यात्, 'न ऋक्षं न च तिथिकरणम्' इत्यादिना स्थूलसूक्ष्मसकलदोषापवादार्थत्वात्तस्या दोषलेशो नास्ति। उच्यते,-यदयं न ऋक्षमित्यादिः स्तुत्यर्थवादः । तेन गोधूल्याः प्रशंसायां तात्पर्यं नतु विधिः, अन्यथा निषिद्धेषु अमावास्याभद्राभरणीत्यादिष्वपि गोधूलिलग्नं भवितुं युक्तं स्यात् । सामान्यवैयर्थ्यापत्तेरिष्टापत्तिरपि वक्तुमशक्या । तस्मादभिहित-तिथ्यादिष्वेव यावच्छक्याखिलदोषपरिहारपूर्वकं घटीलग्नं कार्यं, तदभावे गोधूलिलग्नं कार्यम्। यदाह लल्लः—'लग्नं यदा नास्ति विशुद्धमन्यद्गोधूलिकं साधु तदा वदंति। लग्ने विशुद्धे सति वीर्ययुक्ते गोधूलिकं नैव फलं विधत्ते ॥ शुभाशुभयुतं सर्वं राशेर्दोषं त्वनिंदितम् । विवाहलग्नवच्छ्रेष्ठं गोधूलीं प्राह भागुरिः ॥' इति । किंच-'कुलिकं क्रांतिसाम्यं च मूर्तौ षष्ठाष्टमः शशी। पंच गोधूलिके त्याज्या अन्ये दोषाः शुभावहाः ॥' इति दैवज्ञमनो-हरीयवाक्यस्यापि वैयर्थ्यापत्तेः । गोधूल्यधिकारिण आह नारदः— 'प्राच्यानां च कलिंगानां मुख्यं गोधूलिकं स्मृतम्। गांधर्वादिविवाहेषु वैश्योद्वाहे च योजयेत् ॥ चतुर्थमभिजिल्लग्नमुदयर्क्षात्तु सप्तमम् । गोधूलिकं हि भवति संपत्पुत्रादिसौख्यदम् ॥' इति । दैवज्ञमनोहरे—'घटीलग्नं यदा नास्ति तदा गोधूलिकं शुभम्। शूद्रादीनां बुधाः प्राहुर्न द्विजानां कदाचन ॥ महादोषान्परित्यज्य प्रोक्तधिष्ण्यादिकेषु च । कारयेद्गोरजो यावत्तावल्लग्नं शुभावहम् ॥' इति। 'लग्नशुद्धिर्यदा नास्ति कन्या यौवनशालिनी। तदा वै सर्ववर्णानां लग्नं गोधूलिकं शुभम् ॥' इति । अत एव भूपालवल्लभे— 'विप्रेषु घटिकाऽलाभे दातव्यं गोरजो बुधैः। संकीर्णे गोरजः शस्तं परेषु द्वितयं शुभम् ॥' इति । तत्र गोधूलिसूक्ष्मकालस्तु केशवार्केणोक्तः—'अत्रोभयत्र घटिकादलमिष्टमाहुर्ग्राह्यं तदंबरमणेरपि चार्धबिंबात्' इति। केचित्तु- 'यावद्दिनांते दिशि पश्चिमायां पश्येत्तृतीयं रविबिंबभागम् । तस्मात्परं नाडिकयुग्ममेके गोधूलिकालं मुनयो वदंति ॥' इति; तदेनयोः पक्षयोर्यथा-देशाचारं व्यवस्था ॥ ९१ ॥

अथ शीतकालादिभेदेन गोधूलीभेदं जलधरमालाछंदसाह—

**पिंडीभूते दिनकृति हेमंततौं स्यादर्धास्ते तपसमये गोधूलिः ।**
**संपूर्णास्ते जलधरमालाकाले त्रेधा योज्या सकलशुभाख्ये कार्ये ॥**

पिंडीभूत इति ॥ हेमंताख्ये ऋतौ हेमंतशब्देन शीतकाल उपलक्ष्यते। मार्गशीर्षादिमासचतुष्टये इत्यर्थः। तत्र दिनकृति सूर्ये पिंडीभूते ओदनगोलक-सदृशे संध्यायां नीहाराद्यावृतत्वेन निष्प्रभे इत्यर्थः। तस्मिन् समये गोधूलि-र्ज्ञेया। तथा तपसमये उष्णकाले चैत्रादिमासचतुष्टये सूर्येऽर्धास्ते अर्धबिंबस्य दृश्यत्वे अदृश्यत्वे च सति गोधूलिः। जलधरा मेघास्तेषां माला समूहस्तस्यो-त्पादके काले वर्षाकाले श्रावणादिमासचतुष्टये सूर्ये संपूर्णोऽस्तोऽदर्शनं यस्य

तादृशे सति गोधूलिः। जलधरमालाशब्देन छंदोऽपि सूचितम्। न केवलमियं विवाहे एव किंतु सकलशुभाख्ये समस्ते शुभनामके कार्येऽपि ज्ञेया। यदाह वराहः—'गोधूलिं त्रिविधां वदंति मुनयो नारीविवाहादिके हेमंते शिशिरे प्रयाति मृदुतां पिंडीकृते भास्करे। ग्रीष्मेऽर्धास्तमिते वसंतसमये भानौ गतेऽदृश्यतां सूर्ये चास्तमुपागते भगवति प्रावृट्शरत्कालयोः॥' इति॥ ९८॥

अथ गोधूलिसमयेऽवश्यवर्ज्यदोषान् वैश्वदेवीछंदसाह—

अस्तं याते गुरुदिवसे सौरे सार्के
लग्नान्मृत्यौ रिपुभवने लग्ने चेंदौ।
कन्यानाशस्तनुमदमृत्युस्थे भौमे
वोढुर्लाभे धनसहजे चंद्रे सौख्यम्॥ ९९॥

अस्तं याते इति॥ गोधूलिरित्यनुवर्तते। गुरुदिवसे बृहस्पतिवारे सूर्येऽस्तं याते सूर्यास्तादनंतरं गोधूलिः शुभा स्यात्। ननु सूर्यास्तात्पूर्वमर्धघटिकं गोधूलिलग्नं कार्यम्, अर्धयामसद्भावात्। तथा सौरे शनिवारे सार्के सूर्यदर्शना सहिते गोधूलिः शुभा। ननु सूर्यास्तादनंतरं, कुलिकसद्भावात्। उपलक्षणत्वात् क्रांतिसाम्यमपि त्याज्यम्। तथा लग्नात्सायंकालीनलग्नान्मृत्यावष्टमे रिपुभवने षष्ठे वा लग्न एव वा चंद्रे सति कन्यानाशः स्यात्। तदुक्तं दैवज्ञमनोहरे—'कुलिकं क्रांतिसाम्यं च मूर्तौ षष्ठाष्टमः शशी। पंच गोधूलिके त्याज्या अन्ये दोषाः शुभावहाः॥' अत्र कुलिकशब्देन तत्कालसंभाव्यर्धयामाख्योऽपि वारदोषो गृह्यते, अन्येषां त्वसंभव एव। केचित्त्वाद्यपादे—'सार्के शनौ विरवि चित्रशिखंडिसूनौ तत्केवलं कुलिकयामदलोपलंभात्' इति केशवार्कोक्तं वाक्यं संमतिः कस्मान्न भवतीत्यूचुः। तच्चिंत्यम्। पूर्वापरग्रंथालोचनया तस्य पूर्वपक्षग्रंथोऽयम्, अन्यथा पंचस्यंतहेतूपादानवाक्यमनर्थकं स्यात्। एतच्चाधुनैव निर्णेष्यते। लग्ने इति। लग्नस्थे मदनस्थे वा मृत्युस्थे वा भौमे सति वोढुर्वरस्य नाशो भवति। तदुक्तं ज्योतिःसंहितासारे—'षष्ठेऽष्टमे मूर्तिगते शशांके गोधूलिके मृत्युमुपैति कन्या। कुजेऽष्टमे मूर्तिगतेऽथवाऽस्ते वरस्य नाशं प्रवदंति गर्गाः॥' इति। अन्योऽपि विशेषस्तत्रैव—'षष्ठाष्टमे चंद्रजचंद्रजीवे क्षोणीसुते वा भृगुनंदने वा। मूर्तौ च चंद्रे नियमेन मृत्युर्गोधूलिकं स्यादिह वर्जनीयम्॥' इति। 'धिष्ण्यं क्रूरयुतं त्याज्यं मूर्तौ षष्ठाष्टमः शशी। गोरजस्तत्प्रशंसंति संतः शनिदिनं विना॥' इति। नन्विदं न वक्तव्यं, सप्तमसूर्यस्य 'अवीरास्तेऽर्के' इति फलमभिहितम्; 'अवीरा निष्पतिसुता' इति कोशः। एवं सति तादृशदोषदूषितस्य गोधूलिलग्नस्य चेदिहादरः तदा चंद्रशुद्धेरप्यादरः किमर्थम्? किंच लग्नस्था अपि सूर्यभौमशनिराहुकेतवः पूज्याः स्युः। उक्तं च केशवार्केण—'गोधूलिकेऽपि विधुमष्टमषष्ठमूर्तौ यत्त्मोचयंति तदयं स्वरुचिप्रपंचः। पंचांगशुद्धिमयमेव

१ विरवि रविरहिते। २ चित्रशिखंडिसूनौ गुरुवासरे। 'वाचस्पतिश्चित्रशिखंडिजः' इत्यमरः।

विवाहधिष्ण्यैर्यस्मादिदं सततमस्तगते पतंगे ॥ नांशो न कर्ममिह दृष्टयुतं स्वभर्त्रा नार्कारसौरितमसामपि संगभंगः । किं चंद्रवारभवमेकमिहास्तु किंच नात्र प्रमाणवचनं किमपि श्रुतं नः ॥ सार्के शनौ विरवि चित्रशिखंडिसूनौ तत्केवलं कुलिकयामदलोपलंभात् ॥' इति। उच्यते,—विशेषविधेः सामान्यशास्त्रबाधकता न्यायसिद्धा । तत्र सामान्यतः पंचघटिकात्मकस्य सायंकालीनलग्नस्य सप्तमसूर्याख्यो महान्दोषस्तत्रापि पुनर्गोधूलिकाले सूर्यार्धबिंबरूपे सूक्ष्मे न सप्तमसूर्यदोषो विशेषवचनात् । तत्राप्ययं विशेषो यद्गोधूल्यां यथाशक्ति दोषहीनं विधेयम् । घटिकालग्ने त्वखिलदोषहीनमत एव गोधूलिलग्ने न ऋक्षमित्यर्थवादोपपत्तिः । तस्याप्ययं 'षष्ठेऽष्टमे मूर्तिगते' (पृ० ३०७) इत्यत्र वाक्ये विशेषवचनात् । 'नात्र प्रमाणवचनं किमपि श्रुतं नः' इति नु प्रौढिवादमात्रम् । एतादृशानां मूलभूतवाक्यानामुपलंभात् । 'सार्के शनौ' इत्यादि नु 'कुलिकं क्रांतिसाम्यं च' (पृ० ३०३) इति वाक्यात्कुलिकादित्यागे स्वयंहेत्वभिधानपरम् । नत्वत्र तात्पर्यम् । सप्तमसूर्यातिरिक्तसकलदोषनिराकरणप्रवृत्तत्वात्तस्य । किंच यदि गोधूल्यां कोऽपि लग्नदोषो नास्तीत्यभिमतं स्यात्तदेकविंशतिमहादोषनिरूपणात्प्राक् नारदो गोधूलिलग्नमभिदध्यात् । न च व्यतीपातादिष्वपि गोधूलिलग्नं स्यादिति वाच्यम् । सामान्यवाक्यैरपि निषेधसत्त्वात् । किंचैवं भुवनम्ना वेष्टापत्तिरेव स्यादित्यास्तां प्रसक्तानुप्रसक्तम् । लाभ इति । चंद्रे लाभस्थे धने द्वितीयस्थे सहजे तृतीयस्थे वा सति स्त्रीपुरुषयोः सौख्यं स्यात् । तदुक्तं संहितासारे—'यत्रैकादशगश्चंद्रो द्वितीयो वा तृतीयगः । गोधूलिका तु विज्ञेया शेषा धूलिरिति स्मृता ॥' इति ॥ ९९ ॥

अथावसरप्राप्तां घटिकालग्नसिद्ध्यर्थां प्रक्रियां वृत्तपंचकेन वक्तुकामस्तावत्सूर्यस्पष्टगतिमिंद्रवज्रयाह—

मेषादिगेऽर्केऽष्टशरा ५८ नगाक्षाः ५७
सप्तेषवः ५७ सप्तशरा ५७ गजाक्षाः ५८ ।
गोक्षाः ५९ खतर्काः ६० कुरसाः ६१ कुतर्काः ६१
कंगानि ६१ षष्टि ६० र्नवपंच ५९ भुक्तिः ॥ १०० ॥

मेषादीति ॥ स्पष्टार्थमिदं पद्यम् । मेषादिद्वादशसु राशिषु सूर्याक्रांतासु स्थूलकलात्मिका स्पष्टगतिरित्यर्थः । उक्तं च—'नागेषवो नगशरास्तुरगेषवोऽद्रिबाणा भुजंगविषयाः क्रियतो नवाक्षाः । व्योमर्तवः शशिरसाः कुरसाः कुतर्काः षष्टिर्नवेषव इनस्य गतेः कलाः स्युः ॥' इति । इयं स्थूला गतिर्वासनासिद्धेति नार्षवचनापेक्षा । वासना च गणितस्पष्टा ॥ १०० ॥

अथ सूर्यस्य तात्कालिकीकरणमनुष्टुभाह—

संक्रांतियातघस्राद्यैर्गतिर्निघ्नी खषट् ६० हृता ।
लब्धेनांशादिना योज्यं यातर्क्षे स्पष्टभास्करः ॥ १०१ ॥

'संक्रांतीति ॥ संक्रांतयो मेषाद्याः पंचांगदृष्टाः यद्दिने यस्यां घट्यां च स्युस्तत आरभ्य स्वाभीष्टस्थूलकालपर्यंतं यावद्दिनानि यावंत्यो घटिकाश्च भवंति तैर्मेषादीष्टराशिस्थे सवितरि सति तत्सूर्यस्थूलस्पष्टगतिर्गुण्या खष-ड्भिः षष्ट्या ६० भक्ता यल्लब्धं तेंऽशा अवशिष्टं कलादि येंऽशावयवास्ते आदिशब्दवाच्याः; तेन यातर्क्षं ऋक्षं राशिः सूर्यभुक्तमेषादिराशिर्युक्तः सन् तात्कालिकस्थूलस्पष्टभास्करः स्यात् ॥ १०१ ॥

अथेष्टकालिकलग्नानयनमनुष्टुभाह—

तनोरिष्टांशकात्पूर्वे नवांशा दशसंगुणाः ।
रामाप्ता लब्धमंशाद्यं तनोर्वर्गादिसाधने ॥ १०२ ॥

तनोरिति ॥ ग्रहबलमहितस्य लग्नस्य यो विहितो नवांशो दोषरहितो विचारितः सः 'क्रियमृगास्यतौलिकेंदुभतो नवांशविधिरुच्यते बुधैः' इति गणनया यावत्संख्य आगच्छेत तत् पूर्वनवांशा यावंतः स्युस्ते दशभिः संगुणाः संगुण्याः रामैस्त्रिभिराप्ता यल्लब्धमंशाद्यमंशकलाविकलात्मकं तत्तनोरिष्टकालिकं भुक्तं स्यात्तेन कृत्वा प्रागुक्त 'कुजशुक्रसौम्य-' (६।३७) इत्यादिप्रकारेण षड्वर्ग-साधनं स्यात् । अत्रोपपत्तिः—यदि नवभिर्नवमांशैस्त्रिंशदंशा लभ्यंते तदेष्ट-नवांशेन कियंत इति अत्र 'प्रमाणमिच्छा च' इत्यादिना इष्टनवांशानां त्रिंशद्गुणको भाजको नव संपन्नः, तत्र द्वयोरपि त्रिभिरपवर्ते दश गुणकः त्रयो भाजकः इत्युपपन्नं फलमिष्टांशाः स्युः । उक्तं च महेश्वरेण—'इष्टा-त्पूर्वनवांशका दशहता रामैर्हृताः स्युर्लवाः' इति ॥ १०२ ॥

अथैवं साधिताभ्यां स्पष्टार्कलग्नाभ्यामिष्टघटिकानयनं शालिन्याह—

अर्काल्लग्नात्सायनाद्भोग्यभुक्तैर्भागैर्निघ्नात्स्वोदयात्खाग्निभक्तात् ।
भोग्यं भुक्तं चांतरालोदयाढ्यं षष्ट्या भक्तं स्वेष्टनाड्यो भवेयुः ॥

अर्कादिति ॥ सायनादयनांशसहितात्सूर्याद्राशिभोग्यांशैः सायनांशसू-र्याक्रांतराशेः स्वदेशीय उदयो मेषादिराशीनां पलात्मकं प्रमाणं गुण्यं खाग्नि-भिस्त्रिंशता भक्तं लब्धानि पलानि स्युः; एवं लग्नात्सायनांशाद्भुक्तांशैराक्रांत-स्वदेशीयराश्युदयो गुण्यः खाग्निभक्तो लब्धानि भुक्तपलानि; एवं जातानां भोग्यभुक्तपलानामैक्यं कार्यं तत्सायनांशलग्नार्कयोरंतरालोदयपलैर्युक्तं कार्यं षष्ट्या भक्तं सूर्योदयादिष्टघटिका भवेयुः । अत्रोदयज्ञानं भास्कराचार्येणोक्तम्—'लंकोदया नागतुरंगदस्रा २७८ गोंऽकाश्विनो २९९ रामरदा ३२३ विनाड्यः । क्रमोत्क्रमस्थाश्चरखंडकैः स्वैः क्रमोत्क्रमस्थैश्च विहीनयुक्ताः ॥ मेषादिषण्णामु-दयाः स्वदेशे तुलादितोऽमी च षडुत्क्रमस्थाः ॥' इति । स्वैः=स्वदेशीयैः । अत्र चरखंडानयनमपि तेनोक्तम्—'अयनलवदिनैः प्राङ्मेषसंक्रांतिकालाद्भवति दिवसमध्ये या प्रभाऽक्षप्रभा सा । दशगजदशनिघ्नी साऽक्षभाऽस्या त्रिभक्ता

---

१ इंदुभतः=कर्कात् ।

प्रतिगृह्यचरखंडानि' इति; 'अर्कस्य भोग्यस्तनुभुक्तयुक्तो मध्योदयाढ्यः स्वमयो विलग्नात्' इति च ॥ १०३ ॥

अथ घटिकानयने विशेषं शालिन्याह—

**चेल्लग्नार्कौ सायनावेकराशौ तद्विश्लेषघ्नोदयः खाग्निभक्तः।**
**स्वेष्टः कालो लग्नमूनं यदार्काद्रात्रेः शेषोऽर्कात्सषड्भान्निशायाम् ॥**

चेदिति ॥ लग्नार्कौ सायनौ अयनांशसहितौ संतौ यद्येकराशौ स्यातां तदा तयोर्लग्नार्कयोर्विश्लेषोंतरांशास्तैर्गुणितः स्वदेशीय उदयः कार्यः। खाग्निभिस्त्रिंशता भाज्यो लब्धमिष्टकालः सूर्योदयात्स्यात् । तत्र यदार्कात्सायनसूर्यादेकराशिस्थितं लग्नमूनं स्यात्तदा यः 'चेल्लग्नार्कौ सायनौ' इत्युक्तदिशा स्वेष्टकाल आगतः सः सूर्योदयात्प्राक् रात्रिशेषो भवेत् । अयमर्थः—आनीत इष्टकालः षष्ट्यां पात्यः प्राग्दिनीयसूर्योदयानंतरमेतावानिष्टकालः अथवा रात्रिमानात्पात्यः प्राग्दिनीयसूर्यास्तादनंतरमेतावानिष्टकालः । एवमिष्टकाले सामान्यतो निर्णीते रात्रौ विशेष उच्यते। निशायां रात्रावर्कात्सषड्भाद्राशिषट्कयुक्तात्प्रागुक्तप्रकारेण 'अर्कात्लग्नात्' (६।१०३) इत्यादिनेष्टकालः साध्यः। स सूर्यास्तानंतरं भवेत्। यदाह भास्करः—'यद्येकभे लग्नरवी तदा तद्भागांतरघ्नोदयखाग्निभक्तम् । स्यादिष्टकालो यदि लग्नमूनं शोध्यो द्युरात्राद्थवा रजन्याः ॥ रात्रीष्टकाले तु सषड्भसूर्याल्लग्नं ततोऽप्युक्तवदिष्टकालः ॥' इति। अत्रांशप्रवृत्तेः पंच पलानि पात्यंते विहितनवांशप्रवेशसूचनार्थमिति दैवज्ञसंप्रदायः। एवमानीत इष्टकाले दंपत्योरन्योन्यवीक्षणं कार्यमित्याह कश्यपः—'अन्योन्यवीक्षणं सम्यक्सुलग्ने कारयेत्सदा' इति। नारदोऽपि—'एवं सुलग्ने दंपत्योः कारयेत्सम्यगीक्षणम्' इति। एतेन परस्परावलोकनं सुलग्ने कार्यमितरत्तु समयांतरेऽपि विधेयमित्युक्तं भवति। तुल्यन्यायत्वादुपनयनादावपि साधितेष्टकाले संस्कार्याचार्ययोरप्यन्योन्यवीक्षणं कारणीयम्। 'शास्त्रोक्तमार्गेण सुलग्नकालं स्फुटं समानीय जलादियंत्रैः। संलभ्य तं मंगलसूक्ष्मकालं संलोकयेत्तत्र मिथोऽर्धदृष्टिः[1] ॥' इति सामान्यतो वसिष्ठोऽभिहितवान्। कश्यपोऽपि तथैवाह—'अन्योन्यवीक्षणं सम्यक् सुलग्ने कारयेत्सदा' इति। अनेन सुलग्नकाले अन्योन्यवीक्षणमेव मुख्यम्। पाणिग्रहणादिगायत्र्युपदेशादिकं तु तदुत्तरकालकर्तव्यतया गौणमिति प्रतिभाति। स चेष्टकालः कथं साधनीय इत्यत आह कश्यपः—'एवं गुणगणान् वीक्ष्य लग्नं निश्चित्य यत्नतः। सिद्धांतोक्तेन मार्गेण लग्नकालं प्रसाधयेत् ॥ जलयंत्रेण तल्लग्नं दद्यात्सेनार्चितो द्विजः। मुखं वृत्तं द्वादशभिरंगुलैश्च षडुन्नतम् ॥ घटार्धवत्ताम्रपात्रं कुर्यात्तद्दशभिः पलैः। षष्टिर्भजेदहोरात्रे घटिकापात्रमुत्तमम् ॥ माषत्रयत्र्यंशयुतस्वर्णवृत्तशलाकया। चतुर्भिरंगुलैरायतया विद्धं स्फुटं न्यसेत्। रवेरर्धोदयं दृष्ट्वा वाप्यर्धास्तमयं तथा। पूर्वोक्तलक्षणं यंत्रं मंत्रेणानेन निक्षिपेत् ॥'

१ 'मिथोऽर्धदृष्ट्या' इति पाठो लिखितपुस्तकानुगुणः।

निक्षिपेज्जलपूर्णपात्र इत्यर्थः । यदाह नारदः—'ताम्रपात्रे जलैः पूर्णे गंधपुष्पैरलंकृते । तंडुलस्थे रत्नयुते शुचिभूमावहर्पतेः ॥ मंडलार्धोदयं वीक्ष्य जलपात्रे विनिक्षिपेत् ।' इति । मंत्रमप्याह स एव—'यंत्राणां मुख्ययंत्रं त्वमिति धात्रा पुरा कृतम् । दंपत्योरायुरारोग्यसुपुत्रधनहेतवे ॥ जलयंत्रक मे तस्मादिष्टसिद्धिप्रदो भव ।' इति । ताम्रघटिकाद्यभावे द्वादशांगुलशंकुना कालः साध्यः । तदुक्तं कश्यपेन—'अथवा साधयेत्कालं द्वादशांगुलशंकुना' इति । शंकुलक्षणमाह नारदः—'न्यग्रोधखदिराश्वत्थरक्तचंदनवृक्षजम् । श्रीखंडागरुदंतोत्थमृजुशंकुमकल्मषम् । द्वादशांगुलमुत्सेधं परिणाहं षडंगुलम् । एवंलक्षणसंयुक्तं कल्पयेत्कालसाधने ॥' इति । शंकुना घटीज्ञानं तु करणकुतूहले भास्करेणाभिहितम् । यथा—'चरपलयुतहीना नाडिकाः पंचचंद्रा १५ द्युदलमथ निशार्धं याम्यगोले विलोमम् । द्युदलगतघटीनामंतरं तन्नतं स्यान्नतरहितदिनार्धं चोन्नतं जायतेऽत्र ॥ दिनदलं विशरं खहरो भवेन्नतकृतिः पृथगभ्रशराहता । खखनवाश्वपृथक्स्थितया हृता खहरतः पतितोऽभिहितो हरः ॥ अथ नतं यदि पंचदशाधिकं दिनदलात्पतितं खहरस्तदा । प्रथमखंडहृतं दलितं चरं खगुणितं स्वषडंशविवर्जितम् ॥ दशयुतं पलकर्णहृतं हृतिर्हरहता श्रवणांगुलपूर्वकः । रवियुतोनितकर्णहतेः पदं द्युतिरिनद्युतिवर्गयुतेः श्रुतिः ॥ श्रुतिविभक्तहृतिस्तु हरो भवेन्न पतितः खहरादवशेषकम् । पृथगिदं खखनंदहतं हरात्स्वविषयैरवशेषविवर्जितैः ॥ फलपदं हि नतं यदि शेषकं दिगधिकं हर एव तदुन्नतम् ॥' इति ॥ १०४ ॥

अथ विवाहादिशुभकार्येष्वावश्यकान्वर्ज्यदोषानविस्मरणार्थं शार्दूलविक्रीडितत्रयेणाह—

उत्पातान्सहपातदग्धतिथिभिर्दुष्टांश्च योगांस्तथा
चंद्रज्योशनसामथास्तमयनं तिथ्याः क्षयर्द्धी तथा ।
गंडांतं च सविष्टिसंक्रमदिनं तन्वंशपास्तं तथा
तन्वंशेशविधूनथाष्टरिपुगान्पापस्य वर्गांस्तथा ॥ १०५ ॥

सेंदुक्रूरखगोदयांशमुदयास्ताशुद्धिचंडायुधा-
न्खार्जूरं दशयोगयोगसहितं जामित्रलत्ताव्यधम् ।
बाणोपग्रहपापकर्तरि तथा तिथ्यृक्षवारोत्थितं
दुष्टं योगमथार्धयामकुलिकाद्यान्वारदोषानपि ॥ १०६ ॥

क्रूराक्रांतविमुक्तभं ग्रहणभं यत्क्रूरगंतव्यभं
त्रेधोत्पातहतं च केतुहतभं संध्योदितं भं तथा ।

तद्वच्च ग्रहभिन्नयुग्गतभं सर्वानिमान्संत्यजे-
दुद्वाहे शुभकर्मसु ग्रहकृताँल्लग्नस्य दोषानपि ॥ १०७ ॥

उत्पातानिति ॥ सेंदुक्रूरेति ॥ क्रूराक्रांतेति ॥ उत्पातादीन्दोषानुद्वाहे विवाहे यज्ञोपवीतादिशुभकर्मसु च संत्यजेदिति तृतीयश्लोकगतेनान्वयः उद्वाहग्रहणं गोबलीवर्दन्यायेन मुख्यत्वसूचनार्थम् । उत्पातान् त्रिविधान् दिव्यांतरिक्षभौमान् लक्षणया तत्संबंधिसप्तवर्ज्यदिवसांस्त्यजेत् । यदाह गुरुः—'दिग्दाहे वा महादारुपतने पांशुवर्षणे । उल्कापाते महावाते महाशनिनिपातने ॥ अनभ्राशनिपाते च भूकंपपरिवेषयोः । ग्रामोत्पाते शिवाशब्दे दुर्निमित्ते न शोभनम् ॥ केतवो यत्र दृश्यंते सधूमा वा पृथग्विधाः । चंद्रसूर्यग्रहे चैव वर्जयेद्दिनसप्तकम् ॥' इति । पातः=महापातः, क्रांतिसाम्यमिति यावत् । तद्ग्रथितप्रसिद्धम् । दग्धतिथयः 'चापांत्यगे गोघटगे' (६।६४) इत्यादिनोक्ताः । एतैः सह संत्यजेदिति संबंधः । तथा दुष्टान् योगान् व्यतीपातवैधृतिपरिघार्धादीन् । अथ चंद्रेज्योशनसां चंद्रगुरुशुक्राणां अस्तमयनमस्तं च तिथ्योः क्षयवृद्धी तिथिवृद्धिं तिथिक्षयं च पुनर्गंडांतं नक्षत्रतिथिलग्नैः त्रिविधं विष्टिर्भद्रा संक्रमदिनम् 'देवद्यंक-' (६।७८) इत्यादिना संक्रमकालादुभयतो वर्ज्या घटिकाः अयनेषु विषुवेषु च पूर्वापरं त्रिदिनमिति विशेषो ध्येयः । ताभ्यां सहितमिति पूर्वेण संबंधः । तन्वंशपास्तं तनुर्लग्नं अंशो लग्नगतविहितनवांशः तौ पात इति तन्वंशपौ तयोरस्तं लग्नाधीशलग्ननवांशाधीशास्तं चेत्यर्थः । तथा तन्वंशेशविधून् लग्नेशनवांशेशचन्द्रान् अष्टरिपुगान् अष्टषष्ठस्थानगान् तथा पापस्येत्येकत्वमविवक्षितम् । पापग्रहाणां वर्गान् सेन्दुक्रूरखगोदयांशं इन्दुश्च क्रूरखगश्चेंदुक्रूरखगौ उदयो लग्नं अंशो नवांशश्च उदयांशमिति समाहारद्वंद्वैकवचनम् । इन्दुक्रूरखगाभ्यां सहितमुदयांशं इंदुसहितं लग्नं लग्नांशं च क्रूरग्रहेण सहितं लग्नं लग्नांशं चेत्यर्थः । उदयास्ताशुद्धिचंडायुधान् उदयाशुद्धिरस्ताशुद्धिश्च 'इष्टोदयांशे निजपत्यदृष्टे वरस्य मृत्युस्तदसंयुते वा । अस्तांशकेऽप्येवमदृष्टयुक्ते स्वस्वामिना नाशमुपैति कन्या ॥' इति वसिष्ठाद्युक्तं । इतरथा ज्ञेयमशुभमिति ग्रंथकर्त्राप्युक्तं प्राक् । चंडायुधं 'हर्षणवैधृतिसाध्य-' (६।५८) इत्यादिनोक्तं, खार्जूरम् 'व्याघातगंड-' (६।६०) इत्यादिनोक्तं, दशयोगः 'सूर्यर्क्षचंद्रर्क्षयुतैः'[1] (६।६८) इत्यादिनोक्तः, योगो ग्रहयुतिश्च तत् सहितं जामित्रलत्ताव्यधं समाहारद्वंद्वैकवचनं । जामित्रं द्विविधं—लग्नजामित्रं चंद्रजामित्रं च; 'लग्नाच्चंद्रात्' (६।६५) इत्यादिनोक्तं, लत्ता 'शराद्रिपूर्णेंदुसिताः' (६।५७) इत्युक्ता । व्यधं वेधं सप्तशलाकोक्तं पंचशलाकोक्तं च । बाणाः पंचकं । उपग्रहः प्रसिद्धः 'शराष्टदिक्शक्र-' (६।६१) इत्यादिः । पापकर्तरी क्रूरग्रहकर्तरी समाहारद्वंद्वैकवचनम् । तिथ्यृक्षवारोत्थितं दुष्टं योगं तिथिनक्षत्रवारैः कृत्वोत्थितमुत्पन्नं दुष्टयोगं तथा तिथिनक्षत्रोद्भवम् । 'वैश्वमादिमे' (१।११) इत्यादि तिथिवारोद्भवम् । 'सूर्येशपंच-' (१।८) इत्यादि नक्षत्रवारोद्भवम् । 'याम्यं त्वाष्ट्रम्' (१।५) इत्यादि तिथिनक्षत्रवारोद्भवम् । 'हस्तार्कं पंचमी-' (१।२०) इत्यादि अनेकं दुष्टयोगम् । अथार्धयाम-

---

१ मूले तु 'शशांकसूर्यर्क्षयुतैः' इति (पृ० २८७) पाठो लभ्यते, तदनुगुणमेव तत्र टीकाकृद्व्याख्यानमपि दरीदृश्यते; परमत्र 'सूर्यर्क्षचंद्रर्क्षयुतैः' इति पठने हेतुस्तु चिन्त्य एव ।

कुलिकाद्यान् वारदोषानपि स्पष्टार्थं आदिशब्देन दुर्मुहूर्तादिकान् क्रूराक्रांतवि-मुक्तभं क्रूराक्रांतं क्रूरविमुक्तं च भं ग्रहणभं यस्मिन् भे सूर्यचंद्रोपरागो जात-स्तद्गं यत् क्रूरगंतव्यभं क्रूरेण जिगमिषितं यद्भं नक्षत्रं त्रेधोत्पातहतं च त्रिवि-धोत्पातैर्दिव्यभौमांतरिक्षैरुत्पातैर्हतं तन्मासषट्कं त्याज्यमेव केतुहतभं केतुना हतं भं च। ननु केतोर्दिव्योत्पातत्वात्त्रेधोत्पातहतमित्यनेनैव निषिद्धमिति किं पुनर्विशेषनिषेधेन? उच्यते,-अशुभफलदकेतोराधूमनैः स्पर्शैः स्थानैश्च नक्षत्रां-तरेऽपि दोषवत्तास्ति। यदाह वराहः-'यद्येको यदि बहवः किमनेन फलं तु सर्वथा वाच्यम्। उदयास्तमनैर्वर्णैः स्पर्शैराधूमनैः स्थानैः॥' इति। तथा संध्योदितं भं। अत्र संध्याशब्देन सायंसंध्या गृह्यते। तत्रोदितं तत्काले यन्नक्षत्रं प्राक् क्षितिजे उदितं तत्संध्योदितं सूर्यर्क्षाच्चतुर्दशं नक्षत्रमित्यर्थः। [ननु प्रातः-संध्यायाम्। तत्र हि सूर्येणाक्रांतभुक्ताभ्यामन्यतमत्वात्।][1] यदुक्तं केशा-वार्केण—'तरणितारकोऽपि चतुर्दशं तदखिलेऽपि खिलं शुभकर्मणि' इति। तारकशब्दः क्लीबेऽपि, 'कनीनिकायां नक्षत्रे तारकं तारकेति च' इति विश्वः। ननूपग्रहत्वादेव निषेधे सिद्धे पुनर्दोषाभिधानं किमर्थम्? उच्यते,-उपग्रहर्क्ष-दोषस्य सत्यावश्यकत्वे कुरुबाह्लीकविषयत्वाच्चतुर्दशस्य तु भस्य दोषाधिक्यसू-चनादावश्यकेऽपि सर्वदेशविषयत्वेन निषेधो यथा स्यादिति। तद्वच्च ग्रहभिन्न-युद्धगतभं ग्रहेण भिन्नं ग्रहयुद्धगतं च भं षण्मासं निषिद्धम्। तथा ग्रहकृतान् लग्नस्य दोषान् 'व्यये शनिः खेऽवनिजः' (६।८४) इत्यादिकान् लग्नसंबंधिदोषान् संत्यजेत्। अत्र मूलवाक्यानि सर्वाण्यस्मिन्नेव प्रकरणेऽभिहितानि, कानिचिदाद्य-प्रकरणे इति पुनरत्र नोक्तानीति शिवम्॥ १०५-७॥

केश्चित्तैलादिलापने संख्यानियम उक्तस्तमाह—

मेषादिराशिजवधूवरयोर्वटोश्च
तैलादिलापनविधौ कथितात्र संख्या।
शैलादिशःशरदिगक्षनगाद्रिबाणा-
बाणाक्षबाणगिरयो विबुधैस्तु कैश्चित्॥ १०८॥[2]

मेषादिराशिजेति॥ स्पष्टम्। देशविशेषे औदीच्यादौ प्रसिद्धम्॥

अथ विवाहप्रकरणं गद्येनोपसंहरति—

इति श्रीदैवज्ञानंतसुतदैवज्ञरामज्योतिर्विद्विरचिते मुहूर्तचिंतामणौ षष्ठं विवाहप्रकरणं समाप्तम्॥ ६॥

स्पष्टार्थम्॥

१ [ ] एतच्चिह्नांतर्गतो ग्रंथो लिखितपुस्तकेषु नास्ति। २ अयं सटीकः श्लोको लिखितपुस्तकेष्वनुपलंभात् अंकगत्यवसानाच्च शङ्कास्पदो भवति।

ज्योतिर्विद्वरनीलकण्ठविदुषः श्रीचंद्रिकायास्तथा पुत्रेणाहिगवीप्रसारितधिया मौहूर्तचिंतामणेः ॥ गोविंदेन विनिर्मिते नयविभौ पीयूषधाराभिधे व्याख्याने करपीडनप्रकरणं संपूर्णतामभ्यगात् ॥ १ ॥

इति श्रीमद्दैवज्ञमुकुटालंकारनीलकंठज्योतिर्वित्पुत्रगोविंदज्योतिर्विद्विरचितायां मुहूर्तचिंतामणिटीकायां पीयूषधाराभिधायां विवाहप्रकरणं समाप्तम् ॥ ६ ॥

## अथ वधूप्रवेशप्रकरणम् ७ ।

गणनायकमाराध्य विघ्नसंघनिवारकम् ।
वधूवेशप्रकरणं व्याख्याति विदुषां मुदे ॥ १ ॥

अथ वधूप्रवेशप्रकरणं व्याख्यायते । तत्र वध्वाः नूतनपरिणीतायाः कन्यायाः प्रथमतः करिष्यमाणो भर्तृगृहप्रवेशो 'वधूप्रवेश'शब्दवाच्यः इति अधुनावसरप्राप्तत्वात्तन्मुहूर्तमुपेन्द्रवज्रयाह—

**समाद्रिपंचांकदिने विवाहाद्वधूप्रवेशोऽष्टिदिनांतराले ।**
**शुभः परस्ताद्विषमाब्दमासदिनेऽक्षवर्षात्परतो यथेष्टम् ॥ १ ॥**

**समाद्रीति** ॥ विवाहाद्विवाहदिवसादारभ्याष्टिदिनानि षोडशदिनानि तेषामंतराले समाद्रिपंचांकदिने समदिनानि द्वितीयचतुर्थषष्ठाष्टमदशमद्वादशचतुर्दशषोडशसंख्यानि विषममध्ये सप्तमपंचमनवमदिनानि तेषु वधूप्रवेशः वध्वा नूतनपरिणीतायाः कन्याया भर्तृगृहप्रवेशः शुभः शुभफलप्रदः । यदाह नारदः—'आरभ्योद्वाहदिवसात्षष्ठे वाप्यष्टमे दिने । वधूप्रवेशः संपत्त्यै दशमेऽथ समे दिने ॥' षष्ठादीनां समत्वादेव ग्रहणात् पुनस्तदुक्तिरतिप्राशस्त्यसूचनार्थम् । ज्योतिर्निबंधे तु विशेषः—'वधूप्रवेशनं कार्यं पंचमे सप्तमे दिने । नवमे च शुभे वारे सुलग्ने शशिनो बले ॥' इति । परस्मात्प्रतिबंधवशात् षोडशदिनाभ्यंतरे वधूप्रवेशो न जातस्तदा तदनंतरं विषमाब्दमासदिने विषमवर्षे प्रथमतृतीयपंचमवर्षे विषममासे विवाहमासात्प्रथमतृतीयपंचमसप्तमनवमैकादशमासेषु विषमदिनानि सप्तदशादीनि तेषु वधूप्रवेशः शुभः । तत्रापि यदि प्रतिबंधवशात्कालातिक्रमः पंचवर्षात्मको जातस्तदा पंचवर्षादनंतरं यथेष्टं वर्षादिनियमो नास्ति किंतु दोषरहिते काले वधूप्रवेशो विधेयः । तदुक्तं च **संग्रहे**—'विवाहमारभ्य वधूप्रवेशो युग्मे दिने षोडशवासरांतः । ऊर्ध्वं ततोऽब्देऽयुजि पंचमांतं पुनः परस्मान्नियमो न चास्ति ॥' अत्राब्दे अयुजीति पदच्छेदो द्रष्टव्यः । यदुक्तं **जयतुंगे विवाहपटले**—'वधूप्रवेशः प्रथमेऽत्र वर्षे तथा तृतीयेऽप्यथ पंचमे वा । सूर्येंदुदेवेज्यबलेन कुर्यात्पुंसो मुनिर्गौतम आह सत्यम् ॥' इति । समवर्षे दोषस्मरणाच्च । यदाह धर्मशास्त्रे नारदः—'समे वर्षे समे मासे यदि नारी गृहं व्रजेत् । आयुष्यं हरते भर्तुः सा नारी मरणं

१ अत्र 'विधिवन्मुदे' इति लिखितपुस्तकेषु पाठः ।

व्रजेत् ॥' इति। अयुग्मवत्सरनिषेधः पंचवर्षात्प्राक् ज्ञेयो न पश्चात्तद्वाक्यस्य प्रागभिधानात् ॥ १ ॥

अथ वधूप्रवेशे नक्षत्रादिशुद्धिमनुष्टुभाह—

ध्रुवक्षिप्रमृदुश्रोत्रवसुमूलमघानिले।
वधूप्रवेशः सन्नेष्टो रिक्तारार्के बुधे परैः ॥ २ ॥

ध्रुवेति ॥ ध्रुवाणि रोहिण्युत्तरात्रयं च, क्षिप्राणि अश्विनीपुष्यहस्ताः, मृदूनि चित्रानुराधारेवतीमृगाः, श्रोत्रं श्रवणः, वसुर्धनिष्ठा, मूलं प्रसिद्धं, अनिलः स्वाती; एषु भेषु वधूप्रवेशः सन् शुभफलदः। रिक्ताः प्रसिद्धाः ४।९।१४ तिथयः, तथा आरार्कौ भौमरविवारौ; तत्र नेष्टो न शुभः। रिक्तारार्के इति समाहारद्वंद्वः। अर्थादन्यासु तिथिषु अर्कारभ्यामन्यवारेषु च वधूप्रवेशः प्रशस्त इत्यर्थः। उक्तं च व्यवहारतत्त्वे—'पौष्णाश्कभाद्ध श्रवणाद्ध युग्मे हस्तत्रये मूलमघोत्तरासु। पुष्ये च मैत्रे च वधूप्रवेशो रिक्तेतरे व्यर्ककुजे च शस्तः॥' इति। कभं=रोहिणी। बुधे परैरिति। अन्यैः शिष्टैर्बुधवारे वधूप्रवेशो नेष्यते। कस्मिंश्चिद्देशे शिष्टाचारो यद्बुधवारे वधूप्रवेशो न विधीयते। केचिदत्र हेतुमपि वर्णयंति यद्बुधो नपुंसक इति। तच्चिंत्यम्। शनेरपि नपुंसकत्वात्तस्यापि निषेधो वाच्यः स्यात्। एवं निर्णीतो वधूप्रवेशो रात्रावेव कार्यो न दिवेत्युक्तं स्मृत्यर्थतत्त्वे—'वधूप्रवेशो न दिवा प्रशस्तो राजप्रवेशो न निशि प्रशस्तः। दिवा च रात्रौ च गृहप्रवेशः सत्कीर्तिदः स्यात्त्रिविधः प्रवेशः॥' इति ॥ २ ॥

अथ विवाहानंतरं प्रथमेषु केषुचिन्मासेषु वध्वाः पित्रादिगृहनिवासे फलमिंद्रवंशाछंदसाह—

ज्येष्ठे पतिज्येष्ठमथाधिके पतिं हंत्यादिमे भर्तृगृहे वधूः शुचौ।
श्वश्रूं सहस्ये श्वशुरं क्षये तनुं तातं मधौ तातगृहे विवाहतः ॥ ३ ॥

ज्येष्ठ इति ॥ विवाहतो विवाहादनंतरं भर्तृगृहे स्थिता यदि आदिमे प्रथमे ज्येष्ठे मासि तिष्ठंती वधूः पतिज्येष्ठं भर्तृज्येष्ठभ्रातरं हंति। एवमादिमेऽधिके मासि स्थिता वधूः पतिं भर्तारं हंति। आदिमे शुचावाषाढे श्वश्रूं भर्तुर्जननीं हंति। आदिमे पौषे श्वशुरं भर्तुः पितरं हंति। आदिमे क्षये क्षयमासे भर्तृगृहे तिष्ठंती तनुं निजशरीरं हंति, म्रियत इत्यर्थः। तथादिमे मधौ चैत्रे तातगृहे पितृगृहे तिष्ठंति तातं पितरं हंतीत्यर्थः। यदि कन्यायाः पित्राद्यभावस्तदा तत्तन्मासे तत्तद्गेहावस्थितौ सत्यामपि न कोऽपि दोष इत्यर्थः। उक्तं च मुहूर्तमार्तंडे—'उद्वाहात्प्रथमे शुचौ यदि वसेद्भर्तुर्गृहे कन्यका हन्यात्तज्जननीं क्षये निजतनुं ज्येष्ठे पतिज्येष्ठकम्। पौषे च श्वशुरं पतिं च मलिने चैत्रे स्वपित्रालये तिष्ठंती पितरं निहंति न भयं तेषामभावे भवेत् ॥' इति। मलिनेऽधिकमासे। क्षयमासाधिकमासयोर्लक्षणं संक्रांतिप्रकरणेऽभिहितम्। तस्मान्नववध्वा विवाहानंतरं ज्येष्ठाषाढपौषाधिकमासक्षयमासेषु भर्तृगृहे न स्थातव्यं किंतु पितृगृहे एव स्थातव्यम्। एवं चैत्रे मासि पितृगृहे न स्थातव्यं किंतु भर्तृगृहे एव स्थात-

न्यमिति फलितोऽर्थः । तदुक्तं ज्योतिर्निबंधे–'विवाहात्प्रथमे पौषे आषाढे चाधिमासके । न सा भर्तृगृहे तिष्ठेच्चैत्रे पितृगृहे तथा ॥' आषाढो ज्येष्ठोपलक्षकः। अधिमासः क्षयमासोपलक्षकः । अत्र प्रमाणं (पृ. १३८) प्रागुक्तमिति ॥ ३ ॥

अथोपसंहरति—

इति श्रीदैवज्ञानंतसुतदैवज्ञरामज्योतिर्विद्विरचिते मुहूर्त-
चिंतामणौ वधूप्रवेशप्रकरणं समाप्तम् ॥ ७ ॥

ज्योतिर्विद्वरनीलकंठविदुषः श्रीचंद्रिकायास्तथा पुत्रेणाहिगवीप्रसारितधिया मौहूर्तचिंतामणेः ॥ गोविंदेन विनिर्मिते नयनिधौ पीयूषधाराभिधे व्याख्याने हि वधूप्रवेशसमयाध्यायः समाप्तिं गतः ॥ १ ॥

इति श्रीमद्दैवज्ञमुकुटालंकारनीलकंठज्योतिर्वित्पुत्रगोविंदविर-
चितायां मुहूर्तचिंतामणिटीकायां पीयूषधाराभिधायां
वधूप्रवेशप्रकरणं समाप्तम् ॥ ७ ॥

## अथ द्विरागमनप्रकरणम् ८ ।

गणनायकमाराध्य नीलकंठं गुरुं तथा ।
द्विरागमप्रकरणं व्याख्याति विदुषां मुदे ॥ १ ॥

अथ द्विरागमप्रकरणं व्याख्यायते । तत्र पूर्वं नववधूप्रवेशो जाते तदनंतरं परावृत्य पितृगृहं प्राप्ताया वध्वा यथेष्टवर्षाणि स्थितायाः पुनर्भर्तृगृहप्रवेशो द्विरागमशब्दवाच्यः; अयमाचारः प्राच्योदीच्यपाश्चात्यानामेवेति । अधुनावस-रप्राप्तत्वात्तन्मुहूर्तं पंचचामरछंदसाह—

चरेदथौजहायने घटालिमेषगे रवौ
रवीज्यशुद्धियोगतः शुभग्रहस्य वासरे ।
नृयुग्ममीनकन्यकातुलावृषे विलग्नके
द्विरागमं लघुध्रुवे चरेऽस्रपे मृदूडुनि ॥ १ ॥

चरेदिति ॥ अथ वधूप्रवेशकथनानंतरं पुनर्वधूप्रवेशः द्विरागमनं वक्ष्यमा-णनक्षत्रादिषु चरेत्कुर्यात् । कदा ? ओजहायने विषमवर्षे प्रथमे तृतीये पंचमे वा वर्षे सति, तथा घटालिमेषगे कुंभवृश्चिकमेषस्थिते रवौ, तथा वरस्य रवीज्य-शुद्धिः रवेः सूर्यस्य इज्यस्य गुरोः शुद्धियोगतः, शुभग्रहस्य सोमबुधगुरुशुक्रा-णामन्यतमस्य वासरे सति, मिथुनमीनकन्यातुलावृषाणामन्यतमे लग्ने शुभ-ग्रहावलोकिते शुभयुक्ते वा सति; लघूनि अश्विनीपुष्यहस्ताः, ध्रुवाणि प्रसिद्धानि, चराणि श्रवणादित्रयपुनर्वसुस्वात्यः, अस्रपो राक्षसस्तन्नं मूलं; मृदूनि प्रसिद्धानि एषु भेषु च द्विरागमः प्रशस्त इत्यर्थः । यदाह कश्यपः—'तिष्यादि-

---

१ प्रथमे वर्षे पौषाषाढेऽधिमासके इति पाठः ।

त्यसमीरणादितिवसुत्रीण्युत्तराण्यश्विनीरोहिण्यः शुभदाश्च वर्षमसमं मेषा-लिकुंभे रविः। कन्यामन्मथमीनमे नववधूयानं वृषे तौलिके देवाचार्यसितेंदु-सौम्यदिवसे शुद्धे गुरौ भास्करे॥' इति। ग्रंथकर्त्रात्र कानिचिन्नान्यधिकानि उक्तानि तानि राजमार्तण्डेनोक्तानि—'नीहारांशुधनोत्तरादितिगुरुब्रह्मानु-राधाश्विनीमूलाहस्करवारुणानिलहरित्वाष्ट्रेषु शस्ते तिथौ। कुंभाजालिगते रवौ शुभकरे प्रासोदये भार्गवे सूर्ये कीटघटाजगे शुभदिने पक्षे च कृष्णेतरे॥ हित्वा दिक्प्रतिलोमगौ बुधसितौ लालाटिकं दिक्पतिं चानीता गुणशालिनी नववधूर्नित्योत्सवैर्मोदते॥' लालाटिकान्योगात् यात्रायां (पृ० ३३६) वक्ष्यति। शुक्रास्तनिषेधस्तु सामान्यतो 'वाप्याराम-' (१।८६) इत्यादिनोक्त एवेति न पुनरुक्तः। यद्यपि प्राक् सामान्येन कालशुद्धिरुक्ता तथाप्यावश्यकत्वे-'चैत्रे पौषे हरिस्वप्ने गुरोरस्ते मलिम्लुचे। नवोढागमनं नैव कृते पंचत्वमाप्नुयात्॥' इति बादरायणवाक्यान्नैव वधूप्रवेशः कार्यः॥ १॥

अथ द्विरागमने संमुखशुक्रदोषं प्रहर्षिणीछंदसाह—

दैत्येज्यो ह्यभिमुखदक्षिणे यदि स्या-
द्गच्छेयुर्न हि शिशुगर्भिणीनवोढाः।
बालश्चेद्व्रजति विपद्यते नवोढा
चेद्वंध्या भवति च गर्भिणी त्वगर्भा॥ २॥

दैत्येज्य इति॥ यदि दैत्येज्यः शुक्रोऽभिमुखदक्षिणे गंतव्यदिगभिमुखे गंतुर्दक्षिणभागे वा स्थितः स्यात्तदा शिशुर्बालः गर्भिणी गर्भवती नवोढा नूतनपरिणीता चेत् व्रजेत्तदा बालश्चेत् विपद्यते म्रियते नूतनपरिणीता नवोढा चेत् वंध्या अपत्यसंभवरहिता स्यात्। गर्भिणी त्वगर्भा गर्भरहिता स्यात्। गर्भ-स्राववती भवेत्। यदाह बादरायणः—'अस्तं गते भृगोः पुत्रे तथा संमुख-मागते। नष्टे जीवे निरंशे च नैव संचालयेद्वधूम्॥ गर्भिण्या बालकेनापि नववध्वा द्विरागमे। पदमेकं न गंतव्यं शुक्रे संमुखदक्षिणे॥ गुर्विणी स्रवते गर्भं बालो वा मरणं व्रजेत्। नवा वधूर्भवेद्वंध्या शुक्रे संमुखदक्षिणे॥' यदि शुक्रः पूर्वस्यामुदितः-पूर्वदिशं गंतुः संमुखः, एवमुदीचीं गंतुर्दक्षिणः, पश्चिमां गंतुः पृष्ठे, दक्षिणां गंतुर्वामे स्यात् तदा पूर्वोत्तरे दिशौ न गच्छेत्, किंतु पश्चिम-दक्षिणे दिशौ गच्छेत्। यदि पश्चिमायामुदितः शुक्रः-पश्चिमां गंतुः संमुखः, एवं दक्षिणां गंतुः दक्षिणः, पूर्वां गंतुः पृष्ठे, उत्तरां गंतुर्वामः, तदा पश्चिमदक्षिणे दिशौ न यायात्, किंतु पूर्वोत्तरे दिशौ गच्छेत्। 'पृष्ठे भृगौ पुत्रवतीं प्रयाणे कांतां कुलीनां सुभगां करोति। अग्रे सुदुःखं विदधाति शुक्रो वैधव्यशोकौ खलु नास्ति शुक्रे॥' इति। केचिद्दीपोत्सवप्रतिपदि नक्षत्रादिनियमं विनैव वधूप्रवेशं वांछंति। उक्तं च—'अस्तं गते गुरौ शुक्रे सिंहस्थे वा बृहस्पतौ। दीपोत्सव-बलेनैव कन्या भर्तृगृहं विशेत्॥' इति, तदेतच्छिष्टाचारतो ज्ञेयम्। अत्र

१ मन्मथः=मिथुनम्। २ नास्ति शुक्रे, शुक्रास्ते इत्यर्थः। नास्ति शुक्रः इति पाठे यदि शुक्रो नास्ति नाम अस्तंगतस्तदा वैधव्यशोकौ इत्यर्थः।

लग्नशुद्धिमाह बादरायणः—'उपचयगते जीवे भृगौ केंद्रमुपागते । शुद्धे लग्ने शुभाक्रांते गंतव्यं भर्तृमंदिरम् ॥' इति ॥ २ ॥

अथ प्रतिशुक्रापवादं मंजुभाषिण्याह—

**नगरप्रवेशविषयाद्युपद्रवे करपीडने विबुधतीर्थयात्रयोः । नृपपीडने नववधूप्रवेशने प्रतिभार्गवो भवति दोषकृन्न हि ॥३॥**

नगरेति । नगरप्रवेशे विषयो देशः आदिशब्देन ग्रामः तस्योपद्रवे अन्यराजकृतोपद्रवे सति दुर्भिक्षादिना वोपद्रवे सति गंतव्यदिशि प्रतिशुक्रदोषो नास्ति । करपीडने विवाहोद्देशेन यात्रायां सत्यां वा विबुधा देवास्तेषां यात्रा, यथा नगरकोटयात्रा देवयात्रा तीर्थयात्रा प्रयागादिका तयोः । नृपपीडने नृपाद्राज्ञः सकाशात्पीडने पीडायां दंडादिकृतायां सत्यां,नववधूप्रवेशने नूतनपरिणीतायाः कन्यायाः भर्तृगृहप्रवेशे; एतेषामन्यतमसद्भावे प्रतिभार्गवः संमुखशुक्रो दोषकृन्न हि भवति । यदाह बादरायणः—'स्वभवनपुरप्रवेशे देशानां विभ्रमे तथोद्वाहे । नूतनवध्वागमने प्रतिशुक्रो नैव दूषयति ॥' 'एकग्रामे पुरे वापि दुर्भिक्षे दुष्टविप्लवे । विवाहे तीर्थयात्रायां प्रतिशुक्रं न दुष्यति ॥' इति । नूतनवधूग्रहणादभिगमनं (अन्य ?) स्त्रीणां प्रतिशुक्रं यात्रायां महान्दोषः । तद्वाक्यं प्रागुक्तम् ॥ ३ ॥

अथ प्रौढस्त्रीणां द्विरागमने तथा गोत्रपरत्वेन च प्रतिशुक्रापवादांतरमिंद्रवंशाछंदसाह—

**पित्र्ये गृहे चेत्कुचपुष्पसंभवः स्त्रीणां न दोषः प्रतिशुक्रसंभवः । भृग्वंगिरोवत्सवसिष्ठकश्यपात्रीणां भरद्वाजमुनेः कुले तथा ॥ ४ ॥**

पित्र्ये इति ॥ चेत्पित्र्ये पितुरिदं पित्र्यम्, 'वाय्वृतुपित्रुषसो यत्' इति यत्प्रत्ययः । तस्मिन्पित्र्ये गृहे कुचौ स्तनौ पुष्पमृतुः तत्संभवः स्यात्तदा स्त्रीणां प्रतिशुक्रसंभवो दोषो नास्ति । उपलक्षणत्वाद्भर्तुः सूर्यगुरुशुद्धिराहित्यसंभवोऽपि दोषो नास्तीत्यर्थः । तदुक्तं चंडेश्वरेण—'पित्र्यागारे कुचकुसुमयोः संभवो वा यदि स्यात्पत्युः शुद्धिर्न भवति रवेः संमुखो वाथ शुक्रः । शस्ते लग्ने गुणवति तिथौ चंद्रताराविशुद्धौ स्त्रीणां यात्रा भवति सफला सेवितुं स्वामिसद्म ॥' इति । वाशब्दाद्गुरुशुद्धिरपि चेन्न भवतीत्यर्थः । अथ भृगुरंगिरा वत्सो वसिष्ठः कश्यपोऽत्रिश्चैते ऋषयः तेषां कुले वंशे तथा भरद्वाजमुनेः कुले । कोऽर्थः ? भृग्वंगिरोवत्सवसिष्ठकश्यपात्रिवंशोत्पन्नानां तथा भरद्वाजवंशोत्पन्नानामपि प्रतिशुक्रसंभवो दोषो नास्ति । यदाह बादरायणः—'कश्यपेषु वसिष्ठेषु भृग्वत्र्यांगिरसेषु च । भारद्वाजेषु वात्स्येषु प्रतिशुक्रं न दुष्यति ॥' इति । अयं चापवादो यात्रामात्रसाधारणः न द्विरागमने एव, संमतिवाक्ये विशेषानुक्तेः । एवं प्राक्पद्योक्तेऽप्यपवादो ध्येयः । केचिदशुभमाहुः । यदाह महेश्वरः—'एतेषां प्रतिशुक्रयानमशुभं ये वत्सभृग्वंगिरोभारद्वाजवसिष्ठकश्यपकुलोत्पन्नास्तथाऽत्रेः कुले । दुर्भिक्षे विषयप्लवे च नियतं न स्याद्विवाहे तथा तीर्थानां गमने तथैकनगरे

१ प्रतिशुक्रविचारणा नास्तीति पाठो लिखितपुस्तकेषु । २ राष्ट्रविप्लवे इति पाठः ।

ग्रामे च सौम्यं तथा ॥' इति । सोमस्यापत्यं सौम्यो बुधः 'सोमायन' इति यम् । बुधसांमुख्येऽपि भृग्वादिगोत्रोत्पन्नानामपि तथा यानमशुभं नास्ति । चकाराद् दुर्भिक्षाद्युपद्रवसद्भावेऽन्येषामपि यानमशुभं नास्तीत्यर्थः । तच्चिन्त्यम् । मूलवाक्यस्यापवादरूपस्यानुपलंभात् । किंच यथा साधारण्येन यस्यांकस्यांचिद्दिशि यात्रायां प्राप्तायां शुक्राधिष्ठिता दिङ्निषिद्धा सा च बादरायणादिवाक्यैरपोह्यते तथा बुधसांमुख्ये गमननिषेधानुक्तेरेतदपवादस्यायुक्तत्वदर्शनात् । ननु—'प्रतिशुक्रं प्रतिबुधं प्रतिभौमं गतो नृपः । बलेन शक्रतुल्योऽपि हतसैन्यो निवर्तते ॥' इति वसिष्ठोक्तिरेव सा बुधसांमुख्यदोषनिषेधबोधिकास्ति । किंच -'कुजाय वृषभं दद्यात्स्वर्णं दद्याद्बुधाय च । तत्तत्संमुखजो दोषस्तत्क्षणादेव नश्यति ॥' इति बुधसांमुख्यदोषनिराकरणार्थापि तदुक्तिरेवास्ति प्रमाणमिति चेत् । सत्यम् । 'प्रतिशुक्रं प्रतिबुधम्' इत्यादिवाक्यैर्बुधसांमुख्यमपि दोषावहमेवेति प्रतीयते । अत्रार्थवादोऽप्यभाणि श्रीपतिना—'प्रतींदुजं भूमिपतेर्गतस्य नान्ये ग्रहास्त्राणविधौ समर्थाः' इति । त्राणं रक्षणम् । नारदेनापि—'प्रतींदुजकृतं दोषं हंतुं शक्ता ग्रहा न हि' इति । तत्र गोत्रादिविषयत्वेन परिहारो योऽभिहितः स शुक्रसांमुख्ये एव न तु बुधसांमुख्ये । यतो गोत्रपरिहारवाक्यांते 'प्रतिशुक्रं न विद्यते' इत्युक्तम् । ननु-'प्रतिशुक्रम्' इत्यादिवाक्योपात्तस्य प्रतिबुधदोषस्याप्ययं परिहारोऽस्तु दोषकथनानंतरमेव तस्याभिधानात् । प्रतिशुक्रपदं तु मुख्यतां सूचयितुमुपात्तं तदभिप्रायेण 'सौम्यं तथेति' महेश्वरोक्तिः साधीयसीति चेन्न । यद्येषोऽभिप्रायोऽभिमतः स्यात्सौम्यं तथेतिवद्भौमं तथेति वक्तव्यं स्यात् । तच्च नोक्तम् । किंच प्रतिशुक्रपदं मुख्यतां सूचयितुमुपात्तमित्युक्तं तदप्ययुक्तम् । कुतः ? शुक्रास्तदोषस्य महत्त्वोक्तेः न तद्विषयकोऽयं गोत्रादिपरिहारः । 'कामं व्रजेद्वा प्रतिशुक्रमस्तंगते च यायाच्च जिगीषुरत्र' इति श्रीपत्युक्तेः । शुक्रास्तदोषस्यापवादो बुधानुकूल्यमपि तेनैव—'अस्तंगतेऽप्यास्फुजिति प्रयायाद्बुधो यदि स्यादनुकूलवर्ती' इति । अनुकूलवर्ती=यातव्यदिक्पृष्ठवर्ती । बुधप्रातिकूल्यं तु महादोषावहमेव । तद्वाक्यं प्रागभिहितम् । परंतु बुधास्तः समीचीनोऽसमीचीनो वेति कैरपि वचनं युक्तिर्वा न काचिदभ्यधायि । तस्माद्वाचनिकेऽर्थे न युक्तिः प्रभवेदिति बुधसांमुख्ये गोत्रादिपरिहारो न शिरोमणिपदवीमारोहति । आदिशब्दात् 'स्वभवनपुरप्रवेशे देशानां विभ्रमे तथोद्वाहे । नूतनवध्वागमने प्रतिशुक्रविचारणा नास्ति ॥ एकग्रामे पुरे वापि दुर्भिक्षे राष्ट्रविप्लवे । विवाहे तीर्थयात्रायां प्रतिशुक्रं न दुष्यति ॥' इत्यादि । तुल्यन्यायत्वाद्भौमसांमुख्येऽपि न वसिष्ठाद्यृषिवचनाऽभावात् । किंतु शुक्रसांमुख्य एव स परिहारः सोऽपि सर्वेषां यात्रामात्रसाधारणः परंतु शिशुगर्भिणीनववधूनां 'अस्तं गते भृगोः पुत्रे' इत्यादि बादरायणवाक्यात्तु विशेषफलावगतिमात्रं तत्रैषां शिश्वादीनां बुधसांमुख्यविचारस्तु दूरापास्त एवेत्यलमतिप्रसंगेनेति शिवम् ॥ ४ ॥

द्विरागमनप्रकरणं गद्येनोपसंहरति—

इति श्रीदैवज्ञानंतसुतदैवज्ञरामज्योतिर्विद्विरचिते मुहूर्तचिंतामणौ द्विरागमनप्रकरणं समाप्तम् ॥ ८ ॥

स्पष्टार्थम् ॥ ज्योतिर्विद्वरनीलकंठविदुषः श्रीचंद्रिकायास्तथा पुत्रेणाहिगवीप्रसारितधिया मौहूर्तचिंतामणेः ॥ गोविंदेन विनिर्मिते नयनिधौ पीयूषधाराभिधे व्याख्याने पुनरागमनप्रकरणं संपूर्णतामभ्यगात् ॥ १ ॥

इति श्रीमद्दैवज्ञमुकुटालंकारनीलकंठज्योतिर्वित्पुत्रगोविंदज्योतिर्विद्विरचितायां मुहूर्तचिंतामणिटीकायां पीयूषधाराभिधायां द्विरागमनप्रकरणं समाप्तम् ॥ ८ ॥

---

## अथाग्न्याधानप्रकरणम्[१] ९ ।

गणनायकमाराध्य नीलकंठं गुरुं तथा ।
अग्निहोत्रप्रकरणं व्याख्याति विदुषां मुदे ॥ १ ॥

अथाऽग्न्याधानप्रकरणं व्याख्यायते । तत्राग्निर्धीयते श्रौतेन स्मार्तेन वा कर्मविशेषेणेत्यग्न्याधानम् । तत्र विप्रवदंते । केचित्पाणिग्रहणसमये एव अग्न्याधानमाहुः । अपरे पित्रा भ्रातृभिः सह वा विभागकाल एवेत्याहुः । उक्तं च श्रुतौ—'आवसथ्याधानं दारकाले दायाद्यकाले एकेषाम्' इति पारस्करः । दायाद्यकाले=विभागकाले । एतदेवाभिप्रेत्योक्तं महेश्वरेण—'अग्न्याधानं दारकाले विधेयं कैश्चित्प्रोक्तं तच्च दायाद्यकाले' इति । अन्ये वसंताद्यृतुपुरस्कारेण वर्णविशेषे आहुः । तदुक्तं श्रुतौ—'वसंते ब्राह्मणोऽग्नीनादधीत ग्रीष्मे राजन्यः शरदि वैश्यो वर्षासु रथकार आदधीत' इति । इतरे तु श्रद्धोदये एवाहुः । एतदप्युक्तं श्रुतौ—'यदहरेवैनं श्रद्धोपनमेत्तदहरेवादध्यात्' इति । एतच्च सोमाग्न्याधानविषयम् । यदाह आपस्तंबः—'सोमेन यक्ष्यमाणो नर्तुं प्रतीच्छेन्न नक्षत्रम्' इति । तत्र पाणिग्रहणकालस्य प्रागुक्तत्वात्तत्क्षणारभ्यमाणाग्न्याधानार्थं न मुहूर्तगवेषणा, एवं पित्रादिभिः सह यस्मिन्काले विभागो जातः तस्मिन्काले यथाकथंचिद्व्यतीपातभद्रादिदोषरहिते आधानं कार्यमेव तदापि उत्तरायणादिकालशुद्धेर्नापेक्षा । तत्रापि यदि प्रतिबंधवशादाधानाभावो जातस्तदा कालशुद्धिर्वक्ष्यमाणविधया विचार्यैव । अथ येषां वर्णानां वसंताद्यृतवः सोमयागाद्यर्थं नियता एवोक्तास्तेषां यद्यप्युत्तरायणविचारो नास्ति संभवत्यभिचाराभावात्, तथापि शुक्रास्तादिदोषनिवारणार्थं मुहूर्तो गवेष्य एव । येषां तु श्रद्धोदये एवाधानमिति पक्षस्तेषां सोमाधानमेव श्रद्धोदये इति यथाकथंचित्पंचांगशुद्धिर्विचार्या नर्तुनक्षत्रादिप्रतीक्षा । 'शरदि वाजपेयेन यजेत' इति वाजपेयादीनां यागविशेषाणां शरदाद्यृतुविशेषविहितानामपि सौम्यायनप्रतीक्षामकृत्वा शुक्रास्तादिदोषराहित्यं विचार्यम् ।

१ अथाग्निहोत्रप्रकरणम् इत्यपि क्वचित्पाठः ।

तदयमत्र निर्णयः संपन्नः । यत्र तु कालनियमेनाधानादि विहितं तदा न मुहूर्तविचारः । यदा तु कालनियमाभावस्तदा मुहूर्तो विचार्य एवेत्यभिसंधायाग्न्याधानसोमयागादिमुहूर्तं वसंततिलकावृत्तेनाह—

स्यादग्निहोत्रविधिरुत्तरगे दिनेशे
मिश्रध्रुवांत्यशशिशक्रसुरेज्यधिष्ण्ये ।
रिक्तासु नो शशिकुजेज्यभृगौ न नीचे
नास्तंगते न विजिते न च शत्रुगेहे ॥ १ ॥

स्यादिति ॥ उत्तरगे उत्तरायणगते दिनेशे सूर्येऽग्निहोत्रविधिः स्यात् । यदाह नारदः—'गृहप्रवेशवैवाहप्रतिष्ठामौंजिबंधनम् । मन्वादिमंगलं कर्म विधेयं चोत्तरायणे ॥' इति । मखस्याग्निहोत्रपूर्वकत्वात्तदारंभोऽपि । विवाह एव वैवाहः । स्वार्थे अण् । प्रतिष्ठा देवतादिप्रतिष्ठा । मिश्रेति । मिश्रे कृत्तिकाविशाखे, ध्रुवाणि प्रसिद्धानि, अंत्यं रेवती, शशी मृगः, शक्रो ज्येष्ठा, सुरेज्यः पुष्यः; एतेषामन्यतमेषु ऋक्षेष्वग्निहोत्रविधिः स्यात् । यदाह श्रीपतिः–'प्राजापत्ये पूषभे सद्विदेवे पुष्ये ज्येष्ठार्स्वदवे कृत्तिकासु । अग्न्याधानं ह्युत्तराणां त्रयेऽपि श्रेष्ठं प्रोक्तं प्राक्तनैर्विप्रमुख्यैः ॥' इति । रिक्तास्विति । रिक्ताः चतुर्थीनवमीचतुर्दश्यः, आसु अग्न्याधानं नो कार्यम् । तदुक्तं दीपिकायाम्–'पुष्योत्तराविशाखासु ज्येष्ठांत्याग्निकचंद्रभे । अग्न्याधानमरिक्तासु कार्यं वाऽर्ककुजेऽहनि ॥' इति । को रोहिणी । शशीति । चंद्रमंगलगुरुशुक्रेषु नीचगतेषु तथाऽस्तंगतेषु तथा ग्रहांतरैर्विजितेषु तथा शत्रुगृहस्थितेषु अग्न्याधानं नो कार्यम् । उक्तं च रत्नमालायाम्–'कुजेंदुजीवै रिपुराशिसंस्थैः पराजितैर्नीचगृहोपगैर्वा । अस्तंगतैर्वाग्निपरिग्रहं यः करोति हास्यं विदुषां स याति ॥' इति । कश्यपस्तु शुक्रदोषमप्याह । अत एव मूलपद्ये चतुर्णामभिधानम् ॥ १ ॥

अथाग्न्याधाने लग्नशुद्धिं वसंततिलकयाह—

नो कर्कनक्रझषकुंभनवांशलग्ने
नोऽब्जे तनौ रविशशीज्यकुजे त्रिकोणे ।
केंद्रर्क्षषट्त्रिभवगे च परैस्त्रिलाभ-
षट्खस्थितैर्निधनशुद्धियुते विलग्ने ॥ २ ॥

नो कर्केति ॥ कर्कः प्रसिद्धः, नक्रो मकरः, झषो मीनः, कुंभः प्रसिद्धः; एतेषामन्यतमे लग्ने नवांशे वा अग्न्याधानं नो कार्यम् । तथा अब्जे चंद्रे तनौ लग्नस्थे सति चाग्न्याधानं न कार्यम् । तथा चोक्तं श्रीपतिना–'नक्रे विलग्नेऽम्बुचरे घटे वा तदंशके वाप्यथवा शशांके । आधानकाले द्विजपुंगवानां जातोऽपि निर्वाणमुपैति वह्निः ॥' इति । निर्वाणं=नाशम् । नक्रोद्यस्य चांबुचरत्वाभावा-

---

१ वा देवजेऽहनि इति पाठः । २ नवांशकाद्यास्तेषामंबु° इति पाठः ।

र्पृथग्ग्रहणम्। वराहस्तु नैतन्मन्यते।'मकरस्य पश्चिमार्धं कुंभो मीनश्च जलचराः ख्याताः॥' इति। अत एवैतद्दूषणभयात् स्पष्टमुक्तं महेश्वरेण-'कर्कनक्रघट-मीनविलग्ने वांशगे तनुगतेऽथ तदीये। लग्नगे कुमुदिनीदयिते वा नाशमेति जनितोऽपि हुताशः॥' इति। लग्नगचंद्रस्योपलक्षणत्वाच्छुक्रोऽपि लग्ने निषिद्धः। यदाह कश्यपः-'यस्यैवाधानलग्नस्थे चंद्रे वा भृगुनंदने। उपैति तस्य जातोऽग्निर्निर्वाणं सततं ज्वलन्॥' इति। रवीति। सूर्यचंद्रगुरुभौमेषु त्रिकोणकेंद्रर्क्ष-षट्त्रिभवगेषु भवमेकादशमेषु स्थानेषु स्थितेषु सत्सु परैर्बुधशुक्रशनिराहुकेतु-भिस्त्रिलाभषट्खस्थितैस्तृतीयैकादशषष्ठदशमस्थानस्थितैः सद्भिराधानं हितं स्यात्। यदाह श्रीपतिः-'त्रिकोणकेंद्रोपचयेषु सूर्ये बृहस्पतौ शीतकरे कुजे वा। शेषग्रहेपूपचयस्थितेषु धूमध्वजोत्पादनमामनंति॥' इति। धूमध्वजोऽग्निः। निधनेति। केचिदाहुः-अग्न्याधानं विलग्ने निधनशुद्धियुते अष्टमस्थाने सकल-ग्रहराहित्यं निधनशुद्धिः तया युते सत्याधानं शुभं तस्मादष्टमस्थाने यः कश्चिद्ग्रहः स्यात्तदाऽशुभमेव। उक्तं च श्रीपतिना-'चंद्रे पत्नी मृत्युगे मृत्युमेति क्षिप्रं वह्न्याधायको याजमानः' धाधातोः 'ण्वुल्तृचौ' इति ण्वुल् 'आतो युक्चिण्कृतोः' इति युगागमः। अन्ये त्वेवमाहुः-निधनमष्टमं लग्नं, कस्मान्निधनमि-त्याकांक्षायामाधानकर्तुर्जन्मराशिजन्मलग्नाभ्यामष्टमं लग्नमित्यर्थः। तस्य शुद्धि-राहित्यं तदभाव इति यावत्। तेन युते लग्ने इति भावः। यदाह कश्यपः— 'पंचांगशुद्धिदिवसे चंद्रताराबलान्विते। चंद्रशुद्धियुते लग्ने चाष्टमोदयवर्जिते॥' इति॥ अत्र व्याख्याद्वये प्रमाणसद्भावाद्द्वयमपि युक्तमिति वयमुत्पश्यामः। तत्र निधनशुद्धिश्च निधनशुद्धिश्च ताभ्यां युते लग्ने इति मूलस्थस्य निधनशुद्धिपदस्य 'सरूपाणामेकशेष एकविभक्तौ' इत्येकशेषः। यथा 'भ्वर्था वा वादयः स्मृताः' इति तृतीयपक्षव्याख्यानावसरे वादयश्चेति तंत्रावृत्त्येकशेषाणामन्यतमाश्रयणेन पदमंजरीकारादिभिर्भ्वादीनां धातुत्वमुक्तम्॥ २॥

अथाग्निहोत्रिण आधानलग्नवशाद्यागकर्तृत्वयोगाननुष्टुभाह—

**चापे जीवे तनुस्थे वा मेषे भौमेऽम्बरे द्युने।**
**षट्त्र्यायेऽब्जे रवौ वा स्याज्जाताग्निर्यजति ध्रुवम्॥ ३॥**

चापे इति॥ जीवे गुरौ चापस्थे धनुःसंस्थे सति तनुस्थे आधानलग्ने धनुराख्ये गुर्वधिष्ठिते सतीत्यर्थः; अयमेको योगः। वा अथवा भौमे मेषलग्ने सति; अयं द्वितीयो योगः। अथवा आधानलग्नाद्दशमस्थानस्थे सप्तमस्थानस्थे वा भौमे सति; योगद्वयमेतत्। अथवा अब्जे चंद्रे षष्ठे तृतीयैकादशस्थानान्य-तमस्थानस्थे; योगत्रयमेतत्। अथवा सूर्ये षष्ठतृतीयैकादशान्यतमस्थानस्थे सति; योगत्रयमप्येतत्। एवंविधे लग्ने जाताग्निः अग्निहोत्रकर्ता स्यात् भवेत् ध्रुवं निश्चयेन यजति ज्योतिष्टोमादियागं करोतीत्यर्थः। उक्तं च श्रीपतिना— 'लग्नस्थे धनुषि गुरावथ क्रिये वा भूसूनौ दशमगतेऽथ सप्तमे वा। तिग्मांशौ

१ अत्र यद्यपि 'कुंभ' इति पाठो भिन्नादर्शेष्वपि दृश्यते तथापि वराहग्रंथे 'मकरस्य पश्चिमार्धो ज्ञेयो मीनश्च' इत्येवोपलंभात् स्वीकृतोऽयं टीकाग्रंथः।

सहजषडायगे विधौ वा जाताग्निर्यजति न संशयं द्विजेंद्रः ॥' इति । केचिदे-वमाहुः-ध्रुवं निश्चितं निरंतरमिति यावत्, यजति देवतोद्देशेनावदानत्यागो यागस्तं करोति । निरंतरमग्निहोत्रकर्मकर इत्यर्थः । यदाह कश्यपः— 'लग्नस्थे चापगे जीवे मेषे वा सप्तकर्मगे । कुजेऽर्के त्रिषडायस्थे चंद्रे वाग्नि-र्ज्वलत्यलम् ॥' इति शिवम् ॥ ३ ॥

अथाग्निहोत्रप्रकरणं गद्येनोपसंहरति—

**इति श्रीदैवज्ञानंतसुतदैवज्ञरामज्योतिर्विद्विरचिते मुहूर्तचिंतामणौ नवममग्न्याधानप्रकरणं समाप्तम् ॥ ९ ॥**

स्पष्टार्थम् ॥

ज्योतिर्विद्वरनीलकंठविदुषः श्रीचंद्रिकायास्तथा पुत्रेणाहिगवीप्रसारितधिया मौहूर्तचिंतामणेः ॥ गोविंदेन विनिर्मिते नयनिधौ पीयूषधाराभिधे व्याख्यानेऽग्निपरिग्रहप्रकरणं संपूर्णतामभ्यगात् ॥ १ ॥

इति श्रीमद्दैवज्ञमुकुटालंकारनीलकंठज्योतिर्वित्पुत्रगोविंदज्योतिर्विद्विर-चितायां मुहूर्तचिंतामणिटीकायां पीयूषधाराभिधायामग्न्या-धानप्रकरणं समाप्तम् ॥ ९ ॥

---

## अथ राजाभिषेकप्रकरणम् १० ।

गौरीतनयमाराध्य गोविंदेन सतां मुदे ।
राजाभिषेचनाध्यायः सम्यग्व्याख्यायतेऽधुना ॥ १ ॥

अथ राजाभिषेकप्रकरणं व्याख्यायते । तत्र वैदिकेनाभिषेकाख्येन विशिष्ट-कर्मणा राजशब्दवाच्यपुरुषसंस्कारविशेषो राजाभिषेकशब्देनोच्यते । तत्र तन्मुहूर्तं वक्तुकामः कालशुद्धिं तावदिंद्रवंशयाह—

**राजाभिषेकः शुभ उत्तरायणे गुर्विंदुशुक्रैरुदितैर्बलान्वितैः ।**
**भौमार्कलग्नेशदशेशजन्मपैर्नो चैत्ररिक्तारनिशामलिम्लुचे ॥ १ ॥**

राजाभिषेक इति ॥ उत्तरायणगते सूर्ये सति तथा गुर्विंदुशुक्रैरुदितैर्बला-न्वितैः बृहस्पतिचंद्रशुक्रैरुदितैः सद्भिः भौमसूर्यलग्नेशदशेशजन्मलग्नस्वामिभिः बलान्वितैः सद्भिः राज्ञोऽभिषेकः शुभः शुभफलप्रदः स्यात् । यदाह कश्यपः- 'अथातः संप्रवक्ष्यामि भूपानामभिषेचनम् । सौम्यायने सिते जीवे नास्तगे न च वृद्धगे ॥' इति । ननु 'गीर्वाणांबुप्रतिष्ठा-' (५।२६) इत्यादिना प्राक् दक्षिणायन-निषेधादेवोक्तत्वात् शस्तानां प्रयोज्यादिना च गुरुशुक्रादिदोषरहिते काले भूपा-भिषेको शास्त्रत एव किमनेन पुनरुक्तग्रंथेन ? न च कश्यपादिभिरुक्तमिति कृत्वो-

---

१ अग्निहोत्रप्रकरणम् इति पाठः ।

त्कमिति वाच्यम्। तैस्तु सामान्यप्रकरणस्याकृतत्वात् किंतु तत्तत्कृत्ये विशेषाभिधानमेव कृतम्। उच्यते–'गीर्वाणांबुप्रतिष्ठा' (५।२६) इत्यादिना 'वाप्यारामतडाग' (११४६) इत्यादिना च सामान्यत एषु कृत्येषु दोषराहित्यमुक्तम्। तत्र कस्यचिदेवं भ्रांतिः स्यात्–यदि दक्षिणायने शुक्रास्तादिदोषरहिते शुभं कर्म वाप्यारामादिकार्यं शुक्रास्तादिदोषसहिते उत्तरायणेऽपि कार्यमिति, तन्निरासार्थमाह–'राजाभिषेकः शुभ उत्तरायणे गुर्विंदुशुक्रैरुदितैर्बलान्वितैः' इति। 'सिंहस्थं मकरस्थं च गुरुं यत्नेन वर्जयेत्' इत्यादिदोषाणां 'मगधे गौडदेशे' इत्यादिना देशभेदकृतपरिहारस्य सुवचत्वादिति न तेषां पुनरुक्तिः। ननु–'सदा कृतयुगं चात्र सदा चैवोत्तरायणम्। न ग्रहास्तोदयकृतो दोषो विश्वेश्वरालये॥' इत्यादिभिः व्यासवाक्यैः शुक्रास्तादिदोषसहिते उत्तरायणेऽपि कार्यमिति, तन्निरासार्थमाह 'राजाभिषेकः शुभ उत्तरायणे गुर्विंदुशुक्रैरुदितैर्बलान्वितैः' इति, 'सिंहस्थं मकरस्थं च गुरुं यत्नेन वर्जयेत्' इत्यादिदोषाणामपि वाराणस्यादिदेशभेदेन परिहारसत्त्वात् किमियमुक्तिरिति चेन्न। काशीखंडे तीर्थयात्राप्रस्तावात्तद्विषय एवापवादः, तेन वाराणस्यादावल्पदिनस्थायिनोः पुंसः कोटिहोमदेवप्रतिष्ठादिशुभकर्माणि सुखेन स्युः। बहुदिनस्थायिनोः पुनरखिलदोषराहित्ये एव स्युः। ननु मकरस्थगुर्वादौ मगधदेशहानार्थमेव कर्तव्यावश्यं पुनरुक्तिः। सत्यं न कृतेत्येव। वस्तुतस्तु दोषाविस्मरणार्थमेतावत्येव पुनरुक्तिः। न चैतावद्दोषहानमेवावश्यकं, विवाहप्रकरणोक्तानां वेधादिदोषाणामपि निरासस्यावश्यकत्वात्। उक्तं च वसिष्ठेन—'तस्मादेतेषु दोषेषु कदाचिन्नाचरेच्छुभम्॥' इत्यलमतिप्रसंगेन। बलान्वितैः बलं सद्ग्रहाधिष्ठितत्वं तेनान्वितैः गुर्विंदुशुक्रैः सद्भी राजाभिषेकः शुभः। उक्तं च वसिष्ठेन—'मूलत्रिकोणस्वगृहोच्चमित्रगृहस्थितैर्वापि तदंशसंस्थैः। शुभे विलग्ने सततं ग्रहेंद्रा दिशंति लक्ष्मीं विपुलां च कीर्तिम्॥' इति। अर्थान्निर्बलैर्ग्रहाणामशुभं स्यात्तदप्युक्तं तेनैव—'स्वनीचगैः शत्रुगृहोपगैर्वा तदंशसंस्थैः स्वगृहोपगैर्वा। पापोदये शोकभयं स्वकीर्तिं दिशंति राज्ञां भृशमंतरायम्॥' इति। भौमेति। भौमार्कौ प्रसिद्धौ। लग्नेशो जन्मलग्नस्वामी, दशेशौ वर्तमानजातकीयमहादशांतर्दशास्वामिनौ, जन्मपो जन्मराशिस्वामी; एतैरपि बलान्वितैः सद्भी राजाभिषेकः शुभः। बलान्वितत्वमधुना व्याकृतमेव। यदाह वसिष्ठः—'आधानजन्मेशदशाधिनाथरवींदुभौमेज्यसितैर्बलिष्ठैः। उत्पातदोषादिविवर्जितेषु पदं स्थिरं स्यान्न नराधिपानाम्॥' इति। आधानं च जन्म जन्मलग्नजन्मराशी, अनयोरीशावाधानजन्मेशौ। यदाह श्रीपतिः—'विलग्नजन्मेशदशाधिनाथमार्तंडधात्रीतनयैर्बलिष्ठैः। गुर्विंदुशुक्रैः स्फुरदंशुजालैर्महीपतीनामभिषेक इष्टः॥' इति। नो चैत्रेति। चैत्राख्यो मासः, रिक्ताः ४।९।१४ तिथयः प्रसिद्धाः, आरो भौमवारः, निशा रात्रिः, मलिम्लुचोऽधिकमासः; एषु राजाभिषेको न शुभः। यदाह चंडेश्वरः—'नाभिषेकः शुभो वाच्यो नृपे चैत्रेऽधिमासके। न भूसुते प्रसुप्ते च विष्णौ रिक्तासु रात्रिषु॥' वसिष्ठेन बुधवारस्यामावास्यायाश्च निषेध उक्तः। स यथा–'रिक्तासमायां

बुधभौमवारवर्ज्येषु वारेषु दिनेषु चैव । खले दिने ऋक्षनिशे तथैव न नैधने मे त्वभिषेक इष्टः ॥' इति । यत्तु भीमपराक्रमेणोक्तम्—'राजाभिषेकाहवदुष्टदंतिसेतुच्छिदानां कृषिकर्मणां च । वादस्य च क्ष्मातनयस्य वारे प्रारंभसिद्धिं मुनयो वदंति ॥' इति । अत्र भौमवारे राजाभिषेकविधानं सेनापत्याभिषेकविषयं द्रष्टव्यम् । भौमस्य सेनापतित्वात्, 'राजानौ रविशीतगू क्षितिसुतो नेता' इति वराहोक्तत्वात् । अन्यथा वसिष्ठचंडेश्वरोक्तो भौमनिषेधो निर्विषयः स्यात् । यत्तु रत्नमालायाम्—'मंत्रौषधानि शकुनौ च सपौष्टिकानि गोविप्रराज्यपितृकर्मचतुष्पदे तु' इति । अत्र हि चतुष्पदाख्ये करणे राज्यं कर्तव्यमित्युक्तं तच्चामावास्यायामवश्यं भवत्येवेत्ययुक्तं श्रीपतिवाक्यं प्रतिभाति । उच्यते,—जीर्णराजमरणे संजाते पुत्रादेः शीघ्रमेवाखिलदोषनिरासपूर्वकशुभमुहूर्तालब्धौ कालांतरप्रतीक्षायां च द्विपदादिकृतसर्वनाशः स्यादित्येवंविषयेऽपि चतुष्पदकरणे पुत्रादिरभिषेक्तव्य एवेत्येवंपरं व्याख्येयमिति युक्तं प्रतीमः । उक्तं च दैवज्ञमनोहरे—'मृते राज्ञि न कालस्य नियमोऽत्र विधीयते । नृपाभिषेकः कर्तव्यो दैवज्ञेन पुरोधसा ॥' इति ॥ १ ॥

अथ राजाभिषेकनक्षत्राणि लग्नशुद्धिं च इंद्रवंशयाह—

**शाक्रश्रवःक्षिप्रमृदुध्रुवोडुभिः शीर्षोदये वोपचये शुभे तनौ ।**
**पापैस्त्रिषष्ठायगतैः शुभग्रहैः केंद्रत्रिकोणायधनत्रिसंस्थितैः ॥ २ ॥**

शाक्रेति ॥ शाक्रं ज्येष्ठा, श्रव श्रवणः, क्षिप्राणि अश्विनीपुष्यहस्ताः, मृदूनि मृगचित्रानुराधारेवत्यः, ध्रुवाणि रोहिण्युत्तरात्रयं च; एतैः उडुभिः सद्भी राजाभिषेकः शुभः । यदाह कश्यपः—'उत्तरात्रयमैत्रेंद्रधातृचंद्रकरोडुषु । सश्रुत्यश्वीज्यपौष्णेषु कुर्याद्राजाभिषेचनम् ॥' इति । ऐंद्रं=ज्येष्ठा । अत्र वाक्ये द्वादशभानि, ग्रंथकृद्वाक्ये त्रयोदश, चित्रैकाधिका; सा च महेश्वरवाक्यालोचनेन । यथा 'तथा श्रवःक्षिप्रमृदुध्रुवेषु सौम्यग्रहस्याह्नि तिथावरिक्ते' इति । नात्र प्रमाणं पश्यामः । रत्नमालावाक्यं भविष्यतीति चेन्न । 'मैत्रशाक्रकरपुष्यरोहिणीवैष्णवेषु तिसृषूत्तरासु च । रेवती मृगशिरोऽश्विनीषु च क्ष्माभृतां समभिषेक इष्यते ॥' इति । चंडेश्वरोऽपि-'मैत्रं शाक्रं श्रवणः पुष्यं त्रीण्युत्तराणि चाश्विकरैः । पौष्णं प्राजापत्यं मृगशिर इति शोभनो भगणः' इति तस्माच्चित्राग्रहणं निर्मूलम् । शीर्षोदय इति । शीर्षोदयाः=मिथुनसिंहकन्यातुलावृश्चिककुंभाख्याः । यदाह वराहः-'गोऽजाश्विकर्किमिथुनाः समृगा निशाख्याः पृष्ठोदया विमिथुनाः कथितास्त एव । शीर्षोदया दिनबलाश्च भवंति शेषा लग्नं समेत्युभयतः पृथुरोमयुग्मम् ॥' इति । एषु शीर्षोदयराशिषु अभिषेकलग्नगेषु वा अथवा उपचये विशेषानुक्तेः स्वजन्मलग्नात्स्वजन्मराशितो वोपचयभवने त्रिषडेकादशदशानामन्यतमे तनौ लग्नगे वा सति शुभे शुभग्रहाक्रांते शुभग्रहेक्षिते वा राजाभिषेकः शुभः । यदाह वसिष्ठः—'शीर्षोदये चोपचये ग्रहे वा स्वजन्मलग्नादथ लग्नगेऽपि । शुभग्रहैर्युक्तनिरीक्षिते वा स्थिरं पदं स्यात्सततं

हि राज्ञाम् ॥' इति । अपिशब्दात् स्वजन्मराशेरप्युपचयभवनं ग्राह्यम् । यदाह कश्यपः—'जन्मराशेरुपचये लग्ने शीर्षोदये स्थिरे । शुभग्रहेक्षितयुते नयुते नेक्षिते परैः ॥' इति । परैः=पापग्रहैः । पापैस्तृतीयषष्ठैकादशस्थानस्थितैः शुभग्रहैः प्रथमचतुर्थसप्तमदशमनवपंचमैकादशद्वितीयतृतीयस्थानस्थितैः राजाभिषेकः शुभदः । यदाह वसिष्ठः—'त्रिकोणकेंद्रत्रिधनेषु सौम्यैस्त्रिषष्ठलाभर्क्षगतैश्च पापैः । षष्ठाष्टलग्नव्ययवर्जितेन चंद्रेण राज्ञां शुभदोऽभिषेकः ॥' इति ॥ २ ॥

अथ स्थानविशेषे पापग्रहैरशुभं फलं सापवादं इंद्रवंशयाह—

**पापैस्तनौ रुङ् निधने मृतिः सुते पुत्रार्तिरर्थव्ययगैर्दरिद्रता ।**
**स्यात्खेऽलसो भ्रष्टपदो द्युनांबुगैः सर्वं शुभं केंद्रगतैः शुभग्रहैः ॥३॥**

पापैरिति ॥ तनौ लग्ने स्थितैः पापग्रहैः रुक् रोगः स्यात् ; राज्ञो नाश इति शेषः । निधने अष्टमस्थाने पापग्रहैः मृतिः मृत्युः स्यात् । सुते पंचमस्थाने पापग्रहैः पुत्रार्तिः पुत्रजनितपीडा स्यात् । अर्थव्ययगैः द्वितीयद्वादशस्थानस्थितैः पापैः दरिद्रता दारिद्र्यं स्यात् । खे दशमे पापग्रहैः अलसो निरुद्योगः । द्युनांबुगैः सप्तमचतुर्थस्थानस्थितैः पापग्रहैर्भ्रष्टपदो भ्रष्टैश्वर्यः स्यात् । उपलक्षणत्वात् षष्ठाष्टमद्वादशस्थानस्थितश्चंद्रोऽपि मृत्युदः । यदाह वसिष्ठः—'पापग्रहैः स्वांत्यगतैश्च निःस्वो रोगी विलग्नोपगतैर्भवेन्मः । पदच्युतः सप्तचतुर्थगैस्तु पुत्रस्थितैः सर्वसुतैर्विहीनः ॥' इति । 'नूनं व्ययाष्टारिगतः शशांकः क्षितीश्वरं हंति तदा बलिष्ठः' इति बलिष्ठशब्दोपादानान्निर्बलचंद्रो व्ययाष्टमषष्ठगतो न दुष्टफलद इति तात्पर्यम् ॥ अथापवादमाह—सर्वमिति । केंद्रगतैः शुभग्रहैः सर्वं प्रागुक्तं दुष्टफलं शुभं शुभोदर्कं स्यात् । उक्तं च...... ॥ ३ ॥

अथाभिषेके राज्ञः संपत्स्थैर्यकर्तृ योगद्वयं भुजंगप्रयातेनाह—

**गुरुर्लग्नकोणे कुजोऽरौ सितः खे स राजा सदा मोदते राजलक्ष्म्या ।**
**तृतीयायगौ सौरिसूर्यौ खबंध्वोर्गुरुश्चेद्धरित्री स्थिरा स्यान्नृपस्य ॥४॥**

गुरुरिति ॥ लग्ने गुरुश्चेत्स्यात्, अथवा कोणे नवमे पंचमे वा गुरुः स्यात्, कुजो मंगलोऽरौ शत्रुगृहे षष्ठे स्यात्, सितः शुक्रः कर्मगो दशमगः स्यात् ; एतादृशे अभिषेकयोगे यो राजा अभिषिच्यते स राजा सर्वदा सार्वकालं राजलक्ष्म्या मोदते । अयमेको योगः । यदाह वसिष्ठः—'यस्याभिषेके पुरुहूतमंत्री लग्ने त्रिकोणे यदि वा भवेत्सः ॥ षष्ठः कुजः कर्मगतश्च शुक्रः स मोदते विक्रमराजलक्ष्म्या ॥' इति । अथापरो योगः । सौरिसूर्यौ तृतीयायगौ स्यातां यथासंख्यं शनिस्तृतीये सूर्यः रविः एकादशे स्यात्, गुरुः खबंध्वोः खे दशमे बंधौ चतुर्थे वा चेद्गुरुः स्यात्, एवंविधे योगेऽभिषिक्तस्य नृपस्य राज्ञः धरित्री पृथ्वी स्थिरा सदा हस्तगता स्यात् । यदाह कश्यपः—'त्रिलाभस्थः शनिः सूर्यश्चतुर्थे वांबरे गुरुः । यस्याभिषेकः क्रियते तत्र तस्य मही स्थिरा ॥' इति । श्रीपतिरपि—

'त्रिलाभसंस्थौ शनितिग्मरश्मी मेषूरणे बंधुगृहे गुरुश्च । यस्यात्र योगे क्रियतेऽभिषेकः संपत्स्थिरा तस्य चिरायुषः स्यात् ॥' इति । मेषूरणं=दशमम् । केचित्त्रिलाभारिगौ सौरिसूर्याविस्याहुः । अन्यत्समानम् । तृतीयैकादशषष्ठाना-मन्यतमस्थानद्वये स्थितौ सौरिसूर्यौ स्यातामित्यर्थः । एतदपि युक्तमेव । यदाह वसिष्ठः—'दुश्चिक्यलाभारिगताविनार्की खस्थोऽमरेज्यो यदि बंधुगेहे । यस्यात्र योगे क्रियतेऽभिषेकः संपत्स्थिरा तस्य चिरायुषः स्यात् ॥' इति । अत्र वचनद्वयप्रामाण्याद्विकल्प इति शिवम् ॥ ४ ॥

अथ राजाभिषेकप्रकरणं गद्येनोपसंहरति—

## इति श्रीदैवज्ञानंतसुतदैवज्ञरामज्योतिर्विद्विरचिते मुहूर्तचिंतामणौ राजाभिषेकप्रकरणं समाप्तम् ॥ १० ॥

स्पष्टार्थमेतत् ॥

ज्योतिर्विद्वरनीलकंठविदुषः श्रीचंद्रिकायास्तथा पुत्रेणाहिगवीप्रसारितधिया मौहूर्तचिंतामणेः । गोविंदेन विनिर्मिते नयनिधौ पीयूषधाराभिधे व्याख्याने ह्यभिषेचनप्रकरणं राज्ञोऽगमत्पूर्णताम् ॥ १ ॥

इति श्रीमद्दैवज्ञमुकुटालंकारनीलकंठज्योतिर्वित्पुत्रगोविंदज्योतिर्विद्विर-चितायां मुहूर्तचिंतामणिटीकायां पीयूषधाराभिधायां राजाभिषेकप्रकरणं समाप्तम् ॥ १० ॥

# अथ यात्राप्रकरणम् ११ ।

पार्वतीहृदयपद्मभास्करं वक्रतुण्डमघसंघवारणम् ।
संप्रणम्य कुरुते नयान्वितां यात्रिकप्रकरणस्य दीपिकाम् ॥ १ ॥

अथ यात्राप्रकरणं व्याख्यायते । तत्र किंचित्कार्यमुद्दिश्य देशांतरगमनं यात्रा । सा च संक्षेपतो द्विविधा—एका समरविजययात्रा, अपरा सामान्य-यात्रा । तत्र शत्रुनगरजयार्थं वक्ष्यमाणयोगलग्नजातकोक्तराजयोगलग्नेषु प्राधा-न्येन या यात्रा सा समरविजयाख्या । यद्यपि कानिचिन्नगराणि विनैव युद्धं कटकबाहुल्यादेव वशं यांति तथापि युद्धसंभावनास्त्येव । या द्रव्यार्जनार्थं वाराणस्यादितीर्थदर्शनार्थं वा तिथ्यादिशुद्धिमंगीकृत्य यात्रा सा सामान्ययात्रा । तदुक्तं वसिष्ठेन—'परविषये विजयार्थं गंतुं यात्रा तु समरविजयाख्या । निखिलाऽपरयात्रा या सामान्या सा भवेद्द्विविधा ॥ कथिततिथिवासरर्क्षेष्व-भिमतफलदा भवेच्च सामान्या । समराह्वया च यात्रा योगविलग्नक्षितीश-योगेषु ॥' इति । तत्र यात्राप्रकरणं प्रारिप्सुर्ग्रंथकृद्यात्राधिकारिणस्तावत् प्रहर्षिणीछंदसाह—

यात्रायां प्रविदितजन्मनां नृपाणां
दातव्यं दिवसमबुद्धजन्मनां च ।
प्रश्नाद्यैरुदयनिमित्तमूलभूते-
र्विज्ञाते ह्यशुभशुभे बुधः प्रदद्यात् ॥ १ ॥

यात्रायामिति ॥ वैरिव्यतिरिक्तसकललोकहितकारित्वान्नृपस्य वक्ष्यमाण-शुभाशुभसमुदायविचारस्य सकलशिष्टसंमतत्वेन तदधीनत्वाच्च नृपग्रहणम्। न च नृपग्रहणाद्राज्ञामेवैष विचारो युक्त इति वाच्यम्। वक्ष्यमाणयोगलग्नेषु प्रतिश्लोकं राजपदानुपादानप्रसंगात्। प्रकरणादेव तल्लाभात्। अविस्मरणार्थ-मिति चेन्न। दिक्शूलादावप्यविस्मरणार्थं नृपग्रहणं कर्तव्यं स्यात्। तस्माद्यथा-संभवं राजव्यतिरिक्तस्य ब्राह्मणादेरप्येष विचार उपयोज्यः। एवमेव च वसि-ष्ठाद्युषिवाक्येष्वपि समाधेयम्। प्रविदितं छायाघटिकादिना ज्ञातं जन्म जन्म-समयो लक्षणया तत्कालीनलग्नकुण्डलीस्थशुभाशुभग्रहसूचितशुभाशुभफलो-दर्कज्ञानं येषां तेषां नृपाणां यात्रायां दिवसं दातव्यं, यात्रादिनं देयमित्यर्थः। 'वा तु क्लीबे दिवसवासरौ' इति दिवसशब्दो नपुंसकलिंगः। तच्च ज्ञानं जातक-शास्त्राधीनम्। शुभफलदग्रहस्य दशायामंतर्दशायां च राज्ञा यात्रा विधेया। अशुभफलदग्रहस्य दशायामंतर्दशायां च यात्रा नैव विधेया। यदाह वराहः-'विदिते होराराशौ स्थानादिबले ग्रहाणां च। आयुषि च परिज्ञाने शुभमशुभं यातुरिह वाच्यम् ॥' इति। वसिष्ठोऽपि—'निखिलगुणयुजां राज्ञां कथयामि विधानमत्र यात्रायाम्। जातकमवलोक्य वदेत्फलसिद्धिस्त्वन्यथा मृषा भव-ति ॥' इति। ननु यस्य दैवाज्जन्मकालो न विदितस्तस्य कथं यात्रा स्यादित्यत आह—अबुद्धेति। अबुद्धमज्ञातं जन्म जन्मकालो येषां तेषामपि प्रश्नाद्यैः पृच्छोप-श्रुत्यादिभिरशुभे शुभे विज्ञाते निर्ज्ञाते सति बुधो यात्रादिवसं प्रदद्यात्। कीदृशैः? उदयो दिने दिने राज्याभिवृद्धिः, अथवा लग्नं निमित्तं शकुनादि, एतदा-दीनि वस्तूनि मूलभूतानि निदानकारणानि येषां तैः। यदाह नारदः—'अज्ञात-जन्मनां नृणां फलाप्तिर्घुणवर्णवत्। प्रश्नोदयनिमित्ताद्यैस्तेषामपि फलोदयः ॥' इति। नन्वत्र नारदवाक्ये अज्ञातजन्मनः पुंसो यात्राफलं घुणाक्षरतुल्यमिति पूर्वार्धे उक्तम्। प्रश्नादिना तु शुभफलसद्भावे तादृशस्यापि फलाप्तिरिति पूर्वा-परविरोधः। उच्यते,-प्रश्नादिना हि शुभाशुभनिर्णयेऽकृते निष्पन्नमपि यात्राफलं घुणाक्षरतुल्यम्। घुणः=कीटविशेषः। स यथाशक्ति काष्ठं भिंदन् तत्र दैवादेकः ककारादिको वर्णो जायते तद्वदिदम्। यदा तु प्रश्नादिना शुभनिर्णयसद्भावे क्रियमाणा यात्रावश्यफलदेति न कोऽपि विरोधः। विशेषमाह वृहद्यात्रायां वराहः—'तस्मान्नृपः कुसुमपुष्पफलाग्रहस्तः प्रातः प्रणम्य रवये हरिदिङ्मु-खस्थः। होरांगशास्त्रकुशलान्हितकारिणश्च संगृह्य दैवगणकान्स्वकृदेव पृच्छेत् ॥ अथ नृपतिसमीपे दैववित् पृष्टमात्रः फलमुदयनिमित्तैर्लक्षयेच्छास्त्रदृष्ट्या ।

सदसि सविति वाच्यं यद्यपि स्यादनिष्टं स्फुटमपि कथनीयं मंत्रिणे भूभुजे वा ॥' इति ॥ १ ॥

अथ ज्ञाताज्ञातजन्मनां पुंसां साधारण्येन यात्रा वक्ष्यते । तत्र ज्ञातजन्मनां जातकाद्यवगतशुभफलानां यात्राविचारोऽल्पायाससाध्यः । अज्ञातजन्मनां तु जातकशास्त्रे प्रश्नाद्यनुक्तेः कथं तद्यात्रानिर्वाह इत्याशंक्य शुभफलयात्रावेदकं प्रश्नं द्रुतविलंबितेनाह—

**जननराशितनू यदि लग्नगे तदधिपौ यदि वा तत एव वा ।**
**त्रिरिपुखायगृहं यदि वोदयो विजय एव भवेद्वसुधापतेः ॥ २ ॥**

जननेति ॥ नन्वत्र कथमज्ञातजन्मत्वं यावता जन्मराशिलग्नज्ञानं विना समयज्ञानं नैव भवेत्? सत्यम्। यद्यपि राशिलग्नज्ञानं जातं तथापि विशिष्यजातकावगतशुभफलदग्रहदशानवगमादज्ञातजन्मत्वं ज्ञेयम्। अत एव राशिलग्नज्ञानाभावे यदि पृच्छति प्रश्नं वक्ष्यति । जननं जन्म तत्संबंधिनी राशिलग्ने ते यदि प्रश्ने स्यातां जन्मराशिर्जन्मलग्नं वा यदि प्रश्नलग्नं स्यात्तदा वसुधापते राज्ञो विजय एव । अथवा तदधिपौ जन्मलग्नजन्मराश्योः स्वामिनौ लग्नगतौ स्यातां तदापि वसुधापतेर्विजयः । अथवा तत एव ताभ्यामेव जन्मलग्नजन्मराशिभ्यामेव त्रिरिपुखायगृहं तृतीयषष्ठदशमैकादशानामन्यतमं गृहं यद्युदयो लग्नं स्यात्तदापि वसुधापतेर्विजय एव । शत्रुक्षय एव स्यादित्यर्थः । यदाह नारदः—'जन्मोदये जन्मराशौ तयोरीशस्थभेऽपि वा । ताभ्यां त्र्यायारिदशमे यातुः शत्रुक्षयो भवेत ॥' इति । अत्र तदीशः शुभग्रहश्चेल्लग्नगोऽपेक्षित इत्यपि विशेषो ध्येयः । यदाह वसिष्ठः—'जन्मराशौ लग्नगते तदीशे वापि लग्नगे। अभीष्टफलदा यात्रा राशीशश्चेच्छुभग्रहः ॥ जन्मलग्ने लग्नगते तदीशे वापि लग्नगे । अर्थलाभप्रदा यात्रा लग्नेशश्चेच्छुभग्रहः ॥' इति । केचित् ताभ्यामित्यनेन जन्मलग्नजन्मराश्यधिपाभ्यामित्याहुः । तन्न; 'जन्मराशिविलग्नाभ्यां लग्ने चोपचये गृहे । संपूर्णफलदा यात्रा तथैव विजयप्रदा ॥' इति वसिष्ठेन कंठत एव जन्मराशिलग्नाभ्यामित्युक्तत्वात् ॥ २ ॥

अथान्यं प्रश्नं मंजुभाषिणीछंदसाह—

**रिपुजन्मलग्नभमथाधिपौ तयोस्तत एव वोपचयसद्म चेद्भवेत् ।**
**हिबुके द्युनेऽथ शुभवर्गकस्तनौ यदि मस्तकोदयगृहं तदा जयः ॥**

रिपुजन्मलग्नभमिति ॥ रिपोः शत्रोर्जन्मलग्नभं यज्जन्मलग्नं जन्मराशिश्च तच्चेत्प्रश्नलग्नाद् हिबुके चतुर्थे द्युने सप्तमे वा स्यात्तदा राज्ञो जयो भवेत्। अथवा तयोः शत्रुजन्मलग्नराश्योरधिपौ स्वामिनौ प्रश्नलग्नाद्धिबुके द्युने वा स्यातां तदापि जय एव । (अथवा तत एव ताभ्यां शत्रोर्जन्मलग्नजन्मराशिभ्यामेव चोपचयगृहं त्रिषडेकादशदशमानामन्यतमगृहं प्रश्नलग्नाद्धिबुके द्युने वा चेत्

तदापि जय एव ।) अथवा तनौ प्रश्नलग्ने शुभवर्गकः शुभग्रहाणां षड्वर्गकश्चे-त्स्यात्तदापि जय एव । अथवा यदि मस्तकोदयाः शीर्षोदयराशयः प्रश्नगताश्चे-त्स्युस्तदापि जय एव । शीर्षोदयराशीनाह वराहः—'गोऽजाश्विकर्किमिथुनाः सधृगा निशाख्याः पृष्ठोदया विमिथुनाः कथितास्त एव । शीर्षोदया दिन-बलाश्च भवंति शेषा लग्नं समेत्युभयतः पृथुरोमयुग्मम् ॥' इति । पृथुरोमा= मीनः । श्रीपतिः—'इदमप्यरिसंभवं यदाऽस्ते हिबुके वा विजयस्तदापि यातुः । शिरसोदयमेति यश्च राशिर्जयकृत्सोऽप्युदये तथेष्टवर्गः ॥' इति । यदा अस्ते इति पदच्छेदः । अस्ते=सप्तमस्थाने । इदंशब्देन प्रागुक्तपद्योक्तार्थः परा-मृश्यते । 'जन्मराशिरुत जन्मविलग्नं तत्पती उदयगौ यदि वा स्तः । ष्यायकर्म-रिपुभान्युत ताभ्यां शत्रुसंक्षयमवेहि तदानीम् ॥' जन्मराशिरित्यादिकं सर्वं शत्रुसमुद्भवं चेदस्ते सप्तमस्थाने स्यादथवा हिबुके स्यात्तदापि यातुर्नृपस्य विजय इत्यर्थः । वराहोऽपि—'उदयमुदयपं वा जन्मभं जन्मपं वा तदुप-चयगृहं वा वीक्ष्य लग्ने यियासोः । विनिहतमरिपक्षं विद्धि शत्रोरिदं वा हिबुक-गृहसमेतं पृच्छतोऽस्तस्थितं वा ॥' इति ॥ ३ ॥

अथाज्ञातजन्मनां शुभफलदं प्रश्नं तोटकछंदसाह—

यदि पृच्छितनौ वसुधा रुचिरा शुभवस्तु यदि श्रुतिदर्शनगम् ।
यदि पृच्छति चादरतश्च शुभग्रहदृष्टयुतं चरलग्नमपि ॥ ४ ॥

यदीति ॥ अत्र वसुधापतेर्जय इत्यनुवर्तते । यदि पृच्छितनौ प्रश्नलग्ने वसुधा भूमी रुचिरा स्यात्, अथवा यदि शुभवस्तु मांगल्यवस्तु वस्त्राभर-णादि श्रुतिदर्शनगं श्रवणगोचरं दर्शनगोचरं वा; दर्शनमत्र चाक्षुषम्, अथवा प्रष्टा आदरतो दैवज्ञं पृच्छति, तदा वसुधापतेर्जयः स्यादिति सर्वत्र व्याख्ये-यम् । यदाह श्रीपतिः—'मनोरमा भूर्यदि पृच्छतः स्यान्मांगल्यवस्तुश्रुति-दर्शने वा । यथादरात्पृच्छति वा ग्रहज्ञं तदादिशेदस्ति जयस्तवेति ॥' इति । अथवा चरलग्नं मेषकर्कतुलामकराणामन्यतमं यदि प्रश्नलग्नं शुभग्रहैः दृष्टं युतं वा तदापि राज्ञो जयः । 'करोति राशिर्गमनं फलं च चरो विलग्ने शुभदृष्ट-युक्तः' इति श्रीपत्युक्तेः ॥ ४ ॥

अथ ज्ञाताज्ञातजन्मनां पुंसां साधारण्येनाशुभफलदं प्रश्नं मालिनीछंदसाह—

विधुकुजयुतलग्ने सौरिदृष्टेऽथ चंद्रे
मृतिभमदनसंस्थे लग्नगे भास्करेऽपि ।
हिबुकनिधनहोराद्यूनगे वापि पापे
सपदि भवति भंगः प्रश्नकर्तुस्तदानीम् ॥ ५ ॥

विध्विति ॥ विधुकुजयुते चंद्रमंगलयुक्ते लग्ने सौरिणा शनिना दृष्टे तदा

प्रश्नकर्तुर्नृपादेर्भंगः शत्रुतः पराजयो नाशो वा स्यात् । अथ चंद्रे मृतिभमदनसंस्थेऽष्टमसप्तमसंस्थे लग्नगे च भास्करे सत्येवंविधे विशिष्टे योगे प्रष्टुर्भंगः स्यात् । तथा अपिशब्दोऽव्ययानामनेकार्थत्वाद्विपर्ययार्थः । तथा हि—अपिर्विपर्यये वा, सति भास्करे मृतिभमदनसंस्थे चंद्रे लग्नगे च सति एवंविधे योगे प्रष्टुर्भंगः स्यात् । उक्तं च वराहेण—'सचंद्रे रुधिरे लग्ने भंगः सूर्यात्मजेक्षिते । द्यूननैधनगे चंद्रे लग्नं याते दिवाकरे । विपर्यये वा यातस्य त्रासभंगवधागमाः ॥' इति । वा अथवा पापग्रहे चतुर्थाष्टमलग्नसप्तमस्थानानामन्यतमस्थे सति प्रष्टुर्भंगः स्यात् । उक्तं च वराहेण—'निधनहिबुकहोरासप्तमर्क्षेषु पापा न शुभफलकराः स्युः पृच्छतां मानवानाम् । दशमभवनयुक्तेष्वेषु सौम्याः समस्ताः सदसदिदमशेषं यानकालेऽपि चिंत्यम् ॥' इति ॥ ५ ॥

अथ याता कस्यां दिशि गमिष्यतीति प्रश्ने निर्णयं भुजंगप्रयातेनाह—

त्रिकोणे कुजात्सौरिशुक्रज्ञजीवा
यदैकोऽपि वा नो गमोऽर्काच्छशी वा ।
बलीयांस्तु मध्ये तयोर्यो ग्रहः स्यात्
स्वकीयां दिशं प्रत्युतासौ नयेच्च ॥ ६ ॥

त्रिकोणे इति ॥ कुजान्मंगलात् त्रिकोणे नवमपंचमे सौरिशुक्रज्ञजीवाः शनैश्चरशुक्रबुधगुरवश्चेत्स्युरथवा एकोऽपि वा सौरिशुक्रज्ञजीवानामन्यतमश्चेत्रिकोणे स्यात्तदा याता यां दिशमुद्दिश्य जिगमिषति तत्र दिशि गमो गमनं न स्यात् । वा अथवाऽर्काच्छशी त्रिकोणे चेत्स्यात्तदाप्युद्दिष्टदिग्गमनं न स्यादेव । तर्हि कस्यां दिशि गमनं स्यादित्यत आह—बलीयानिति । तयोर्मध्येऽभूनोक्तोद्दिष्टदिक्प्रतिबंधकारकयोर्मध्ये यो ग्रहो बलवान्स्यात्स्वकीयां दिशं प्रत्युत सांप्रतं नयेत् । चः पादपूरणे । यदाह वराहः—'एकोऽपि जीवज्ञसितासितानां कुजात्त्रिकोणे रवितोऽथवेंदुः । यत्रोद्यतस्तत्र न याति याता तयोर्बलीयान्नयति स्वकाष्ठाम् ॥' इति । काष्ठां=दिशम् । ग्रहदिशस्तु 'सूर्यः सितो भूमिसुतः' (११४६) इत्यादिना वक्ष्यति ॥ ६ ॥

अथैतादृशं द्वितीयं योगं मदलेखाछंदसाह—

प्रश्ने गम्यदिगीशात्खेटः पंचमगो यः ।
बोभूयाद्बलयुक्तः स्वामाशां नयतेऽसौ ॥ ७ ॥

प्रश्न इति ॥ गम्यदिगीशात् गंतुमिष्टा या दिक् तस्या ईशः स्वामी प्रश्ने प्रश्नलग्ने यस्मिन्स्थाने स्यात्ततः पंचमे स्थाने यो ग्रहो बलयुक्तो बोभूयाद्बलयुक्तो भवेत्तदासौ ग्रहः स्वां स्वीयामाशां दिशं नयते प्रापयति । उक्तं च वराहेण—'यात्रादिगीशाद्यदि पंचमेऽन्यो गृहे ग्रहो वीर्ययुतस्तु तिष्ठेत् ।

समुद्यताऽऽशाकथितानि भंक्त्वा फलानि वीर्याज्जयति स्वकाष्ठाम् ॥' इति । अन्यदपि योगांतरं तेनैवोक्तम्—'परस्परं सौरिकुजौ रवींदू त्रिकोणगौ भार्गवलोहितौ वा । फलं यदुक्तं तदशेषमेव विनाश्य पश्चाज्जयति स्वकाष्ठाम्' इति ॥ ७ ॥

अथैवं प्रश्नलग्नात्प्रष्टुः शुभाशुभं निर्णीय यात्राकालादि भुजंगप्रयातेनाह—

धनुर्मेषसिंहेषु यात्रा प्रशस्ता
शनिज्ञोशनोराशिगे चैव मध्या ।
रवौ कर्कमीनालिसंस्थेऽतिदीर्घा
जनुः सप्त पंच त्रिताराश्च नेष्टाः ॥ ८ ॥

धनुरिति ॥ रवौ धनुर्मेषसिंहस्थिते सति यात्रा प्रशस्ता शुभफलदा । शनिज्ञोशनोराशिगे मकरकुंभकन्यामिथुनवृषतुलागते रवौ यात्रा मध्या मध्यमफलदा, न शुभदा नाप्यशुभफलदेत्यर्थः । कर्कमीनालिसंस्थे रवावतिदीर्घा बहुकालसाध्या यात्रा, हीनफलेत्यर्थः । यदाह लल्लः—'यात्राजसिंहतुरगोपगते वरिष्ठा मध्या शनैश्चरबुधोशनसां गृहेषु । भानौ कुलीरवृषवृश्चिकगेऽतिदीर्घा शस्तस्तु देवलमतेऽध्वनि पृष्ठगोऽर्कः ॥' शस्त इति; देवलाचार्यमतेऽध्वनि मार्गेऽर्कः सूर्यः पृष्ठगः शस्तः । पृष्ठगत्वं तु भ्रमणवशेन सूर्यो ह्यहोरात्रमध्ये उदयकालादारभ्य प्रहराष्टकेन प्रदक्षिणं प्राच्याद्यष्टौ दिशो भ्रमतीति । यदाह वसंतराजः—'दग्धा दिगैंद्री ज्वलिता दिगाग्नी प्रधूमिता चानलदिक् प्रभाते । इत्येवमेव प्रहराष्टकेन भुंक्ते दिशोऽष्टौ सविता क्रमेण ॥ दग्धा दिगुक्ता दिननाथमुक्ता विवस्वदाप्ता भवति प्रदीप्ता । संधूमितायां सविता प्रयाता शेषा दिगंताः खलु पंच शांताः ॥' इति । एतेन भ्रमणप्रकारेण यस्यां दिशि यस्मिन् प्रहरे भ्रमणसंभवः सा दिक् सूर्यसंमुखेत्युच्यते । तत्पंचमी दिक् सूर्यपृष्ठगतेत्युच्यते इति पितृचरणा व्याचख्युः । वयं त्वेवं व्याकुर्मः—शस्त इति; द्वादशराशिचक्रभ्रमवशेन यस्यां दिश्यर्कः स्थितस्तां पृष्ठतः कृत्वा यायादित्यर्थः । यथा—लग्नस्थेऽर्के पश्चिमां दिशं गच्छेत्, चतुर्थस्थे सूर्ये दक्षिणां दिशं गच्छेत्, सप्तमे सूर्ये पूर्वां गच्छेत्, दशमस्थे सूर्ये उत्तरां दिशं गच्छेत्; यदाह देवलः—'लग्नस्थे वरुणाशां हिबुकस्थे दक्षिणां रवौ यायात् । सप्तमगे पूर्वाशां मेषूरणसंस्थिते सौम्याम् ॥' इति । एवं विदिक्ष्वपि तुल्यन्यायत्वाज्ज्ञेयम् । यथा—द्वितीयस्थे तृतीयस्थे वा सूर्ये नैर्ऋतीं गच्छेत्, पंचमस्थे षष्ठस्थे वा सूर्ये आग्नेयीं गच्छेत्, अष्टमस्थे नवमस्थे वा सूर्ये ऐशानीं गच्छेत्, एकादशस्थे द्वादशस्थे वा सूर्ये वायव्यां गच्छेदिति । अथ तारानिषेध उच्यते—जनुरिति ॥ स्वजन्मनक्षत्रादिननक्षत्रं यत्संख्यं स्यात्तन्नवभक्तमवशिष्टाः प्रथमसप्तमपंचमतृतीयाख्यास्ताराश्चेत्स्युस्तदा नेष्टा निषिद्धाः । यदुक्तं रत्नमालायां श्रीपतिना—'त्यक्त्वा त्रिपंचादिमसप्ततारा:' इति । नारदो-

ऽपि—'विपंचससप्ताख्येषु यात्राभीष्टफलप्रदा' इति । जनुरित्यादिनक्षत्रोक्ति-समीपे वक्तव्यमप्यत्रोक्तं पादपूरणार्थम् ॥ ८ ॥

अथ तिथिनक्षत्रशुद्धी भुजंगप्रयातेनाह—

न षष्ठी न च द्वादशी नाष्टमी नो
सिताद्या तिथिः पूर्णिमाऽमा न रिक्ता ।
हयादित्यमित्रेंदुजीवांत्यहस्त-
श्रवोवासवैरेव यात्रा प्रशस्ता ॥ ९ ॥

नेति ॥ सिताद्या तिथिः शुक्लपक्षप्रतिपत्, अर्थात् कृष्णपक्षप्रतिपदुत्तमा; अमा अमावास्या, अन्यास्तिथयो नामतः प्रसिद्धा ज्ञेयाः; आसु तिथिषु यात्रा न प्रशस्तेति वाक्यार्थः । पदार्थस्त्वयम्—षष्ठी न यात्रायां प्रशस्तेत्यर्थः । एवं सर्वत्र, बहुनकारकरणं कविभिर्वे पदानां पुनरुक्त्या गौरवलाघवविचारो नास्तीति द्योतयितुम् । 'न स्वगो न च भूयमा मृदुः' इतिवत् । यदाह नारदः—'पष्ठ्यष्टमी-द्वादशिकारिक्तामावर्जितासु च । यात्रा शुक्लप्रतिपदि निधनायाऽधनाय वा ॥' इति । अर्थात्पष्ठ्यादितिथिवर्जिततिथिष्वतिरिक्तास्तिथयो यात्रायां प्रशस्ता इत्यर्थः । अत्र प्रत्येकं तिथिफलान्याह वसिष्ठः—'वलक्षपक्षे प्रतिपत्प्रयाणे भंगप्रदा वा निधनप्रदा वा । यशस्करी भूरिधनप्रदा च या पंचमी मृत्युकरी च षष्ठी ॥ सप्तमी विजयदा त्वथाष्टमी शोकदुःखभयदामयप्रदा । सर्वदुःखशमनी यश-स्करी लाभदा च दशमी निरंतरम् ॥ पशुप्रदा मानकरी सुगंधरक्तांबरानेक-शुभप्रदा स्यात् । एकादशी चित्रमृगप्रभूतधान्याकरा युत्तमवस्तुदा स्यात् ॥ भूरिभूतिनाशिनी भूरिशर्महारिणी भूरिभीतिदायिनी द्वादशी प्रभंगदा । त्रयोदशी सुभोगदा विपक्षपक्षनाशिनी विनाशदाथ पूर्णिमा यशःक्षयं करो-त्यमा ॥' वलक्षपक्षः=शुक्लपक्षः । यस्यां प्रतिपदि सत्यपि उदये चंद्रस्याति-क्षीणत्वात्कंप्रदत्वं, यदा तु चंद्रोदयाभाव एव तदा निधनप्रदत्वं मरणदातृत्वं, अर्थात् कृष्णपक्षप्रतिपदुत्तमा; आहुश्च—'प्रतिपत्सु प्रयातानां सिद्धिरेव न संशयः' इति, तत्कृष्णप्रतिपद्विषयम् । हयेति । ननु तिथयः प्रोक्ताः, मध्ये वारान्विहाय नक्षत्रोक्तिर्न संगच्छते । किंच वसिष्ठेनोक्तत्वाद्वारा वक्तव्या एव; 'सुरेज्यदैत्येज्यशशींदुजानां वाराश्च वर्गाः शुभदाः प्रयाणे । आदित्यभूसूनु-शनैश्चराणां वाराश्च वर्गा न शुभप्रदाः स्युः ॥' इति । फलान्यप्याह राज-मार्तंडः—'सूर्यदिनेऽध्वनि नाशश्चंद्रे शक्तिक्षयोऽर्थनाशश्च । ज्वलनासृक्-पित्तरुजः कौजे बौधे सुहृत्प्राप्तिः । जैवे जयधनलब्धिः शुक्रे स्त्रीवस्त्रगंधधन-लाभः । दैन्यवधबन्धरोगान्प्राप्नोति दिनेऽर्कपुत्रस्य ॥' इति । तस्माद्वारा वक्तव्या एवेति चेत् । उच्यते,–न वक्तव्या एव वारा इति वयं ब्रूमः । कुतः ? नारदकश्यपादिभिरनुक्तत्वात् । किंच 'न मंदेंदुदिने प्राचीं न गच्छेद्दक्षिणां गुरौ । सितार्कयोर्न प्रतीचीं नोदीचीं ज्ञारयोरपि ॥' इति नारदवाक्यबोधि-

तम्, 'तुहिनकरमंदवारे शक्रदिशं न व्रजेत् गुरौ च याम्यायाम्। रविसित-दिने प्रतीच्यां सौम्यदिशं शारयोश्च वारशूलं स्यात्॥' इति वसिष्ठवाक्य-बोधितमपि पापग्रहवारशूलं सर्वमते निरर्थकमापद्येत, सामान्यत एव निषेध-सत्त्वात्। दोषाधिक्यसूचनार्थमिति चेन्न। भिन्नकर्तृकेषु मुनिग्रंथेषु मुनिवच-नानां वैयर्थ्यानर्हत्वादेवंविधा गतिरुचिता; नत्वेककर्तृके ग्रंथे। तत्र हि पूर्वा-परविरोधे अर्थांतरं वा कार्यं, ग्रंथांतरेण सहैकवाक्यता वा कार्या। तत्रायं वसिष्ठवाक्यस्वरसः—'तुहिनकरमंदवारे' इति वाक्यात्पापवारनिषेधो गौण इत्यनुमीयते। तत्र तस्य गतिस्त्वेवम्—यदा स्वजन्मराशेरुपचयस्थानस्थो यो ग्रहः स्यात्स शुभः पापो वा भवतु सर्वदिक्षु हितः परंतु शूलदिशो विहाय, यदा त्वनुपचयस्थानस्थः स्यात्स कुत्रापि न हितः। यदाह राजमा-र्तंडः—'उपचयकरग्रहदिने शुद्धिः क्रूरेऽपि पापिनां भवति। सौम्येऽप्यनुपच-यस्थे न भवति यात्रा शुभा यातुः॥' इति। एवं ग्रंथभेदेन चंद्रशुभाशुभो-क्तिरपि परिहर्तव्या। केचित् पुष्टक्षीणचंद्रविषयेत्याहुः। तस्मादार्यो वारोक्त्या। अतो ग्रंथकृतापि नोक्ता वारा इत्यलमतिप्रसंगेनेति प्रस्तुतमनुसरामः। हयेति। हयोऽश्विनी, आदित्यं पुनर्वसुः, मित्रोऽनुराधा, इंदुर्मृगः, जीवः पुष्यः, अंत्यं रेवती, हस्तादयः प्रसिद्धाः; एतैर्नवनक्षत्रैरेव यात्रा प्रशस्तोत्तमा। यदाह वसिष्ठः—'पौष्णद्वयादित्यकरेज्यमित्रविष्णिवद्वस्वाह्वयभानि यानि। श्रेष्ठानि यात्रासु नवैव तानि मुक्त्वा त्रिपंचादिमसप्तमानि॥' इति। 'श्रेष्ठानि' इत्युक्तेः कियतां नक्षत्राणां मध्यमत्वं कियतां निकृष्टत्वं चानुमीयते। तदपि तेनैवोक्तम्—'तिस्रोत्तरावारुणनैर्ऋतेंद्रपूर्वात्रयं ब्राह्मभयुग्दशैव। मध्यानि नेष्टान्यनलानि-लेशद्विदैवचित्राहिमघांतकानि॥' इति। तिस्र उत्तरा इति वक्तव्ये तिस्रो-त्तरा इत्यार्षः संधिः। गुरुस्तु बहूनि भानि निषिद्धान्याह—'पूर्वासु त्रिषु याम्यर्क्षे ज्येष्ठायां रौद्रभौरगे। सर्वाशासु गते यात्रां प्राणहानिर्भविष्यति॥' इति। केचित्तु-'पूर्वात्रयं सानलमग्रजानां राज्ञां तु पुष्येण सहोत्तराणि। सपौष्णमैत्रं पितृदैवतं च प्रजापतेर्भं च कृषीवलानाम्॥ आदित्यहस्ताभिजि-दाश्विनानि वणिग्जनानां प्रभवंति भानि। मूलत्रिनेत्रानलवारुणानि भान्यु-ग्रजातेः प्रभविष्णुतायाः॥ सौम्येंद्रचित्रावसुदैवतानि सेवाजनस्वाम्यमुपा-गतानि। सार्पं विशाखा श्रवणो भरण्यश्चांडालजातेरभिनिर्दिशंति॥' इति वराहोक्तेर्जातिविशेषेण यात्रानक्षत्राण्याहुः; तच्चिंत्यम्। यतो वराहसंहितायां नक्षत्रव्यूहाध्याये पंचदशसंख्याके एतानि पद्यान्युक्तानि, तत्र देशजातिवस्त्वा-द्युक्तेरशुभोपघाते तेषां देशानां जातीनां च गोधूमादिवस्तूनां च पीडा; अन्यथा हि शुभमिति तस्यार्थः। उक्तं च तत्रैव वराहेण—'रविरविसुतभोग-मागतं क्षितिसुतभेदनवक्रदूषितम्। ग्रहणगतमथोल्कयाहतं नियतमुषाकरपी-डितं च यत्॥ तदुपहतमिति प्रचक्षते प्रकृतिविपर्यययातमेव वा। निगदित-परिवर्गदूषणं कथितविपर्ययगं समृद्धये॥' इति। परिवर्गः=स्ववर्गः॥ ९॥

अथ वारशूल-नक्षत्रशूले पृथ्वीछंदसाह—

न पूर्वदिशि शक्रभे न विधुसौरिवारे तथा
न चाजपदभे गुरौ यमदिशीनदैत्येज्ययोः ।
न पाशिदिशि धातृभे कुजबुधेऽर्यमर्क्षे तथा
न सौम्यककुभि व्रजेत्स्वजयजीवितार्थी बुधः ॥ १० ॥

न पूर्वदिशीति ॥ शक्रभे ज्येष्ठानक्षत्रे पूर्वदिशि न व्रजेत् । तथा विधुसौरिवारे सोमशनिवारेऽपि पूर्वदिशि न व्रजेत् । तथा अजपदभे पूर्वाभाद्रपदानक्षत्रे तथा गुरौ गुरुवारेऽपि यमदिशि न व्रजेत् । इनदैत्येज्ययोः रविशुक्रवारयोस्तथा धातृभे रोहिण्यां पाशिदिशि पाशी वरुणस्तस्य दिशि पश्चिमदिशि न व्रजेत् । कुजबुधे मंगलबुधवारे तथार्यमर्क्षे उत्तराफल्गुन्यां सौम्यककुभ्युत्तरदिशि न व्रजेत् । कः ? बुधः पंडितो ज्ञाता वा राजादिः । कीदृशो बुधः ? स्वजयजीवितार्थी । स्वं धनं, जयः शत्रुपराजयपूर्वकः स्वोत्कर्षः, जीवितमायुष्यं, एतानि अर्थयतेऽसौ । गच्छतश्च पुंसो द्रव्यनाशो जयनाशो मरणं वा स्यादिति निष्कृष्टोऽर्थः । यदाह नारदः—'न मंदेंदुदिने प्राचीं न व्रजेद्दक्षिणां गुरौ । सितार्कयोर्न प्रतीचीं नोदीचीं ज्ञारयोरपि ॥' इति । राजमार्तंडेन विशेष उक्तः—'तोयेशवह्निधनदांतकराक्षसानां यातोऽथवानिलशतक्रतुशंकराणाम् । दिग्भागमुष्णकिरणादिदिनेषु देवैः संरक्षितोऽपि निधनं न चिरादुपैति ॥ सूर्ये शुक्रे कुजे राहौ मंदे चंद्रे बुधे गुरौ । अग्रतः शोभना यात्रा पृष्ठतो मरणं ध्रुवम् ॥ प्रतीचीं रविवारेण प्राचीं च रविनंदने । उदीचीं भूमिपुत्रेण न यायाद्दक्षिणां गुरौ ॥' इति, तदेतदार्षवाक्यमूलाभावादुपेक्ष्यम् । वसिष्ठः—'पुरुहूतदिशं पुरंदरर्क्षे नेयाद्याम्यदिशं त्वजांघ्रिधिष्ण्ये । जलनाथदिशं पितामहर्क्षे शूलाख्यान्यथ सौम्यमर्यमर्क्षे ॥' इति । पितामहः=रोहिणी । सौम्यं सोमदेवताकं दिक्कम्, उत्तरदिशमित्यर्थः । एतत्फलमप्याह वसिष्ठः—'शूलसंज्ञानि धिष्ण्यानि शूलसंज्ञाश्च वासराः । यायिनां मृत्युदाः शीघ्रमथवा चार्थहानिदाः ॥' इति । वारशूलपरिहारमाह गुरुः 'सूर्यवारे घृतं प्राश्य सोमवारे पयस्तथा । गुडमंगारके वारे बुधवारे तिलानपि ॥ गुरुवारे दधि प्राश्य शुक्रवारे यवानपि । माषान्भुक्त्वा शनेर्वारे गच्छञ्शूले न दोषभाक् ॥ तांबूलं चंदनं मृच्च पुष्पं दधि घृतं तिलाः । वारशूलहराण्यर्काद्दानाद्धारणतोऽदनात् ॥' इति । ननु 'हयादित्य-' (११।९) इत्यादिना नवैव भानि यात्रायां प्रशस्तान्युक्तानि, तत्रैतासां ज्येष्ठापूर्वाभाद्रपदारोहिण्युत्तराफाल्गुनीनां यात्रायां प्राप्त्यभावः । किंच अग्रे (पृ० ३५३) दिग्द्वारभानि सपरिघानि वक्ष्यंते । तत्र ज्येष्ठा पश्चिमास्थत्वात्प्रागुदीच्योः परिघः । पूर्वाभाद्रपदोत्तरास्थत्वाद्दक्षिणापश्चिमयोः परिघः । रोहिणी प्राक्स्थत्वाद्दक्षिणपश्चिमयोः परिघः । उत्तराफाल्गुनी दक्षिणास्थत्वात्प्रागुदीच्योः परिघः । तत्र 'प्राप्तिपूर्वकत्वात्प्रतिषेधस्य' इति न्यायान्नक्षत्रशूलाभिधानं व्यर्थमिति चेत् । उच्यते,—'योगात्सिद्धिर्धरणिपतीनाम्' (११।५४) इति वक्ष्यति—तत्र

योगयात्राया आत्ययिककार्यविषयत्वात् पंचाङ्गशुद्धिमनादृत्य केवललग्नशुद्धौ राज्ञां यात्रायाः प्रशस्ततरत्वोक्तेः। यदाह पराशरः—'आत्ययिककार्यपाते दैवेन निपीडिते च यातव्ये। केवलबिलग्नयोगादपि याता सिद्धिमाप्नोति ॥' इति। तत्र यदि नक्षत्रशुद्धौ दैवाद्विहितनक्षत्रादन्यनक्षत्रेष्वपि यात्राप्रसक्तौ सत्यां कदाचित्पूर्वस्यां दिशि गंतुर्ज्येष्ठानक्षत्रेऽपि यात्रा स्यात्। एवं दक्षिणादिदिग्गमने पूर्वाभाद्रपदादिनक्षत्रेष्वपि यात्रा स्यात्, सा मा भूदित्येतदर्थं नक्षत्रशूलोक्तिः। किंच 'तिस्रोत्तरा-' इत्यादीनां दशनक्षत्राणां नियानियव्यतिरिक्तफलत्वेन मध्यमत्वोक्तेर्विहितनक्षत्रालाभसंभवे मध्यमनक्षत्रेषु यात्रायां प्राप्तायां ज्येष्ठादिषु दिक्शूलनक्षत्रेषु सर्वथा यात्रा न कार्येति वा समाधिः। अत एव दक्षिणदिशि त्रयाणामपि प्राशस्त्यावगतेः 'ऋक्षगुणैरपि भूदेवानाम्' (११।४४) इति वचनाद्ब्राह्मणानां नक्षत्रप्राशस्त्यस्यावश्यकत्वाच्च मध्यमनक्षत्रेषु सर्वथा यात्रा न कार्या इति वा समाधिः। अत एव दक्षिणदिशि धनिष्ठादिपंचकनिषेधोपपत्तिः। शततारकापूर्वाभाद्रपदोत्तराभाद्रपदानां मध्यमत्वात्। नन्वेवं सति दक्षिणदिशि धनिष्ठादिपंचकनिषेधादेव पूर्वाभाद्रपदानिषेधः सिद्धः, किं पुनर्निषेधेन? उच्यते,—दोषाधिक्यसूचनार्थमेवेति ऋजवः। वयं तु—यदा एकस्मिन्नेवाहनि प्रयाणं नगरप्रवेशश्च संभवेत्तदा प्रावेशिक एव मुहूर्तो विचार्य इत्युक्तम्। यदाह गर्गः—'प्रवेशनिर्गमौ स्यातामेकस्मिन्नेव वासरे। तदा प्रावेशिकं चिन्त्यं बुधैर्नैव तु यात्रिकम् ॥' इति। भृगुरपि 'एकस्मिन्नपि दिवसे यदि चेद्गमनं प्रवेशश्च। प्रतिशुक्रवारशूलं न चिंतयेद्योगिनीपूर्वम् ॥' इति। तत्र यथा प्रतिशुक्रभद्रादिको दोषो नास्ति, तथेह दक्षिणदेशगमने पंचकदोषोऽपि नास्ति, तादृशेऽपि गमने पूर्वाभाद्रपदानिषेधो यथा स्यादित्यजपादग्रहणं कृतमिति मृमः। एतच्च 'योगात्सिद्धिर्धरणिपतीनाम्' (११।४४) इत्यत्र 'कुल्माषांस्तिलतंडुलान्' (११।८१) इत्यत्रापि च सम्यक् विचारयिष्यत इत्यलं पल्लवितेन ॥ १० ॥

अथ ध्रुवादिनक्षत्रैः पूर्वाह्णादिकालविशेषे कालशूले यात्रानिषेधं शार्दूलविक्रीडितेनाह—

पूर्वाह्णे ध्रुवमिश्रभैर्न नृपतेर्यात्रा न मध्याह्नके
तीक्ष्णाख्यैरपराह्णके न लघुभैर्नो पूर्वरात्रे तथा।
मैत्राख्यैर्न च मध्यरात्रिसमये चोग्रैस्तथा नो चरै
रात्र्यंते हरिहस्तपुष्यशशिभिः स्यात्सर्वकाले शुभा ॥ ११ ॥

पूर्वाह्ण इति ॥ नृपतेरिति सर्वत्र संबध्यते। ध्रुवाख्यैर्मिश्राख्यैश्च भैर्नक्षत्रैः पूर्वाह्णे यात्रा न स्यात्। तीक्ष्णाख्यैर्भैर्मध्याह्नके यात्रा न स्यात्। मध्याह्नक इति स्वार्थे कः। अपराह्णके लघुभैर्यात्रा न स्यात्। तथा पूर्वरात्रे मैत्राख्यैर्यात्रा न स्यात्। मध्यरात्रिसमये उग्रनक्षत्रैर्यात्रा न स्यात्। तथा रात्र्यंते रात्रितृतीयभागे चरनक्षत्रैर्यात्रा न स्यात्। अत्र विशेषः—हरिहस्तपुष्यशशिभिः श्रवण-

हस्तपुष्यमृगैः सर्वकाले षष्टिघटिकात्मकेऽहोरात्ररूपे यस्मिन्कस्मिंश्चित्काले शुभा स्यात् । यदाह वसिष्ठः—'स्थिरसाधारणधिष्ण्यैः पूर्वाह्णे नैव गमनं सत् । गमनं न दारुणर्क्षैर्दिनदलसमये न कार्यमशुभं स्यात् ॥ क्षिप्रैर्नापरवासरसमये मृदुभिर्न रात्रिमुखे । उग्रर्क्षैर्निशि समये चरधिष्ण्यैरुषसि न श्रेष्ठम् ॥' निशिसमये=अर्धरात्रे । तथा चाह श्रीपतिः—'पूर्वाह्णे ध्रुवमिश्रभैर्न गमनं तीक्ष्णैर्न मध्यंदिने श्रेष्ठं नापरवासरे च लघुभिर्मैत्रैर्न रात्रेर्मुखे । उग्राख्यैर्न च मध्यरात्रिसमये नेष्टं निशांते चरैः सर्वेष्वेव करेंदुवेज्यहरिभिः कालेषु यात्रा शुभा ॥' इति । अत्र दिनस्य रात्रेश्च त्रेधा विभागं कृत्वा पूर्वाह्णादिव्यवहारः प्रसिद्धः । तदेतदुक्तं स्पष्टं महेश्वरेण—'आद्येऽह्नस्त्रिलवे ध्रुवर्क्षमहितैर्मिश्रैर्न यात्रा शुभा नो तीक्ष्णैरपरांशके न लघुभैरह्नस्त्रिभागेऽन्तिमे । त्र्यंशे त्वादिमके निशो न मृदुभैरुग्रैर्न मध्येंऽशके नान्त्यांशे चरभैः करश्रुतिमृगेज्यर्क्षैः शुभा सर्वदा ॥' इति । ननु 'प्राप्तिपूर्वकत्वात्प्रतिषेधस्य' इति न्यायात् ध्रुवर्क्षेषु यात्राप्राप्तिरेव नास्ति, किं पुनः पूर्वाह्णादिकालविशेषनिषेधेनेति चेत् । उक्तोऽत्र समाधिः । ननु प्राक्पद्ये 'निम्नोत्तरा' इत्यादिध्रुवादीनां मध्यमत्वमंगीकृत्य समाहितम् । मिश्रादीनां तु विशिष्य निषेधात्कथं प्रागुक्तः समाधिरत्र संगच्छेतेति चेत् । सत्यम् । तुल्यन्यायत्वादावश्यकयात्रायां यथा भद्राव्यतीपातादिषु दुष्टेषु केवलां लग्नशुद्धिमाश्रित्यैव यात्रा राज्ञां प्रशस्ता तथा निषिद्धनक्षत्रेष्वपि । अस्मिन्नेवार्थे इदमेव वाक्यं ज्ञापकमिति वयं ब्रूमः । एवं सति कालविशेषनिषेधोपपत्तिरपि संगता भवति । पूर्वरात्र इति । रात्रेः पूर्वः पूर्वरात्र इति 'पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे' इत्येकदेशिसमासस्तत्पुरुषः । तत्र समासशास्त्रांतर्गतस्य प्रथमांतपूर्वापरादिवाक्यस्थस्य पूर्वशब्दस्य 'प्रथमानिर्दिष्टं समास उपसर्जनम्' इत्युपसर्जनसंज्ञकत्वात् 'उपसर्जनं पूर्वम्' इति पूर्वनिपातः । ततः 'अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः' इत्यच्प्रत्ययः समासांतः । 'यस्येति च' इतीकारलोपः । अमुमेवाशयं मनसि निधाय 'उग्राख्यैर्न च मध्यरात्रसमये' इत्यत्र कृतसमासांतमध्यरात्रशब्दं केचित् पठंति; तच्चिंत्यम् । यतो रात्रेर्मध्यं मध्यरात्र इति विगृह्यते तदेकदेशिसमासविधायकसूत्रे मध्यशब्दस्याभावादेकदेशिसमासोऽनुपपन्नः । अत एव पूर्वनिपातोऽपि न । समासांतस्य त्वनुन्मेष एव । तस्माद्रात्रिमध्यसमये इत्येव पाठ्यं स्यादिति कथमयं प्रयोगः ? उच्यते,-मध्या चासौ रात्रिश्च मध्यरात्रिरिति 'विशेषणं विशेष्येण बहुलम्' इति समानाधिकरणस्तत्पुरुषः । 'पुंवत्कर्मधारयजातीयदेशीयेषु' इति पूर्वपदस्य पुंवद्भावः । 'पूर्वा दिक् पश्चिमं नभः' इत्यादिवदेकदेशपर्यवसानमर्धरात्र इत्यर्थः । समासांतस्त्वत्र नैव भवति, 'अहःसर्वैकदेश-' इत्यत्र 'कृत्रिमाकृत्रिमयोः कृत्रिमे कार्ये संप्रत्ययः' इति न्यायादेकदेशिशब्देन पूर्वापरादिसूत्रस्थः प्रतिपदोक्त एकदेशिसमासो गृह्यते, तत एव च समासांतविधानादिति घंटापथकारादयः । ये त्वेवंविधेष्वपि समासेष्वेकदेशिसमासमाश्रित्य समासांतमाहुस्ते समासविधायकसूत्राभावात्समासांतविषये न्यायविरुद्धत्वाच्च चिंत्यो-

कयो ध्येयाः। अतः 'उग्राख्यैर्न च मध्यरात्रिसमये' इति श्रीपतिवाक्येऽपि मध्यरात्रिरितीकारांतः पाठः पाठ्यः। एवं मूलेऽपीत्यलमतिविस्तरेण ॥ ११ ॥

अथ तत्रापि कालविशेषे मध्यमानां निषिद्धानां च कियतां भानां वर्ज्यघटिका इंद्रवज्राछंदसाह—

**पूर्वाग्निपित्र्यांतकतारकाणां भूपप्रकृत्युग्रतुरंगमाः स्युः।**
**स्वातीविशाखेंद्रभुजंगमानां नाड्यो निषिद्धा मनुसंमिताश्च ॥१२॥**

पूर्वेति ॥ पूर्वात्रये प्रथमातिक्रमे कारणाभावादादिमाः षोडश नाड्यो निषिद्धाः। एवमग्नेः कृत्तिकाया एकविंशतिघटिकाः, पित्र्यस्य मघाया एकादश घटिकाः, अंतकस्य भरण्याः सप्तघटिकास्त्याज्या इत्यर्थः। स्वातीविशाखाज्येष्ठाश्लेषाणां चतसृणां तारकाणां च चतुर्दश घटिकास्त्याज्याः। यदाह भरद्वाजः—'भरण्यां सप्त घटिका वह्निभे चैकविंशतिः। एकादश घटीः पित्र्ये त्रिपूर्वासु च षोडश ॥ स्वातीसार्पविशाखासु ज्येष्ठायां च चतुर्दश ॥ वर्जयेच्छेषघटिका यातुः शुभफलप्रदाः ॥' इति; एतदप्यावश्यकगमनविषयम्। तथा च तेनैवोक्तम्—'निषिद्धेष्वपि ऋक्षेषु त्यक्त्वा दुष्टघटीः क्रमात्। तदन्या घटिका ग्राह्या अवश्यगमने सति ॥' इति। अपिशब्दान्मध्यमेषु ऋक्षेषु ॥१२॥

अथ मतांतरेण वर्ज्यघटीरथमिंद्रवज्रयाह—

**पूर्वार्धमाग्नेयमघानिलानां त्यजेद्धि चित्राहियमोत्तरार्धम्।**
**नृपः समस्तां गमने जयार्थी स्वातीं मघां चोशनसो मतेन ॥१३॥**

पूर्वार्धमिति ॥ स्पष्टार्थमिदं पद्यम्। यदाह बृहद्यात्रायां वराहः—'विवर्जयेत्त्वाष्ट्रयमोरगाणामर्धं द्वितीयं गमने जयेप्सुः। पूर्वार्धमाग्नेयमघानिलानां स्वातीं मघां चोशनसः समस्तम् ॥' इति। उशनसो मतेनेति शेषः ॥ १३ ॥

अथ भानां जीवपक्षादिकाः संज्ञा भुजंगप्रयातेनाह—

**तमोभुक्ततारा: स्मृता विश्वसंख्याः**
**शुभो जीवपक्षो मृतश्चापि भोग्याः।**
**तदाक्रांतभं कर्तरीसंज्ञमुक्तं**
**ततोऽक्षेंदुसंख्यं भवेद्ग्रस्तनाम ॥ १४ ॥**

तमोभुक्ततारा इति ॥ तमो राहुनामा ग्रहो विपरीतगतिरस्ति, आगमप्रामाण्यात्; तेन भुक्ता भुक्ता एवंविधा विश्वसंख्यास्त्रयोदशसंख्यास्तारा नक्षत्राणि जीवपक्षो जीवपक्षसंज्ञानि शुभः शुभकार्यकराणि। भोग्याः राहुणाक्रांतनक्षत्राद्भोग्यानि भोक्तुं योग्यानि गम्यानि त्रयोदश नक्षत्राणि मृतो मृतपक्षसंज्ञानि। तदाक्रांतभं तेन राहुणाक्रांतभं कर्तरी इत्येवं नामकम्। ततो

राह्वाक्रांतनक्षत्रादर्क्षेंदुसंख्यं पंचदशसंख्याकं भं ग्रस्तनामकं स्यात्। यथा—राहुर्हस्तेऽस्ति, तेन भुक्तानि चित्रास्वातीविशाखानुराधाज्येष्ठामूलपूर्वाषाढोत्तराषाढाभिजिच्छ्रवणधनिष्ठाशततारकापूर्वाभाद्रपदाख्यानि भानि जीवपक्षः। तदाक्रांतभात् हस्तात्पंचदशमुत्तराभाद्रपदाभं ग्रस्तसंज्ञं तेन राहुणा भोग्यानि उत्तराफल्गुनीमघाश्लेषापुष्यपुनर्वस्वार्द्रामृगरोहिणीकृत्तिकाभरण्यश्विनीरेवत्याख्यानि मृतपक्षः हस्तस्तु कर्तरीसंज्ञमिति। यदाह वसिष्ठः—'राहुस्थितर्क्षं तस्यास्यं पुच्छं पंचदशं ततः। तदेव केतुर्विज्ञेयः सदा राहुः प्रतीपगः॥ त्रयोदश च देयानि धिष्ण्यान्युभयपार्श्वयोः। मुखभागो मृतः पक्षो जीवपक्षस्तु पृष्ठगः॥' इति। स्वरोदयेऽपि—'राहुभुक्तानि ऋक्षाणि जीवपक्षस्त्रयोदश। त्रयोदशैव भोग्यानि मृतपक्षः प्रकीर्तितः॥ यत्र ऋक्षे स्थितो राहुर्वदनं तद्विनिर्दिशेत्। मुखपंचदशे ऋक्षे तस्य पुच्छं व्यवस्थितम्॥' इति। ग्रंथकृता कर्तरीग्रस्तसंज्ञाः समरसारोक्तत्वात्कृताः। स्वरोदये षडंगराह्वभिधाने च कृताः। अत्र जीवपक्षमृतपक्षयोरन्वर्थसंज्ञाविज्ञानाज्जीवपक्षे यात्रा कार्या। मृतपक्षे यात्रा न कार्येति व्यंग्योऽर्थः। कर्तरीग्रस्तयोस्तु फलं स्वयमेव वक्ष्यति 'ग्रस्तर्क्षं मृतपक्षतः शुभकरं ग्रस्तात्तथा कर्तरी' (११।१५) इत्यादिना॥ १४॥

अथ जीवपक्षादीनां विशेषफलं शार्दूलविक्रीडितेनाह—

मार्तंडे मृतपक्षगे हिमकरश्चेज्जीवपक्षे शुभा
यात्रा स्याद्विपरीतगे क्षयकरी द्वौ जीवपक्षे शुभा।
ग्रस्तर्क्षं मृतपक्षतः शुभकरं ग्रस्तात्तथा कर्तरी
यायींदुः स्थितिमान् रविर्जयकरौ तौ द्वौ तयोर्जीवगौ १५

मार्तंड इति॥ मृतपक्षगते मार्तंडे सूर्ये सति चंद्रश्चेज्जीवपक्षे स्यात्तदा यात्रा शुभा स्यात्। विपरीतगे मार्तंडे जीवपक्षगे सति चंद्रश्चेन्मृतिपक्षगस्तदा क्रियमाणा यात्रा यातुः क्षयकरी स्यात्। उक्तं च स्वरोदये—'जीवपक्षे क्षपानाथे मृतपक्षे रवौ तथा। तस्मिन्काले शुभा यात्रा विपरीता तु हानिदा॥' इति। द्वौ सूर्याचंद्रमसौ चेज्जीवपक्षे स्यातां तदा शुभा शुभतरेत्यर्थः। अर्थात् द्वावपि सूर्याचंद्रमसौ मृतपक्षे स्यातां तदा यात्राऽतिक्षयकरी स्यात्। एतदप्युक्तं तत्रैव—'चंद्रादित्यौ यदा युक्तौ जीवपक्षे व्यवस्थितौ। तत्र क्षेमं जयो लाभो यात्राकाले न संशयः॥ मृतपक्षे यथाकाले संस्थितौ चंद्रभास्करौ। तदा हानिर्भयं भंगं मृत्युर्यात्राफलं मतम्॥' इति। अस्यापवादमाह—ग्रस्तर्क्षमिति। मृतपक्षतः मृतपक्षसंज्ञकनक्षत्रगणात् ग्रस्तर्क्षं राह्वाक्रांतनक्षत्रात्पंचदशसंख्याकं भं शुभकरं स्यात्। यथा शवान्मरिष्यमाणो देही प्रबलः, तथा ग्रस्तात् ग्रस्तनक्षत्रात् कर्तरी राह्वाक्रांतं भं शुभकरं स्यात्। तदुक्तं समरसारे—'प्रेताजन्यं किमपि तु वरं कर्तरी जन्मतश्च' इति। एवं सामान्यतः सर्वेषां यात्राफलविचारमभिधाय राज्ञां

विशेषमाह—यायीति। द्विविधो राजा स्थायी यायी चेति। यो राजा स्वदेशे दुर्गं कृत्वा तिष्ठति स स्थायी। यो वैरिणमुद्दिश्य जिगमिषुः स यायी। तत्रेंदुश्चंद्रो यायी यायिनो राज्ञः स्वामी, रविः स्थितिमान् स्थायिनो राज्ञः स्वामी, तौ द्वौ सूर्याचंद्रमसौ जीवगौ जीवपक्षगतौ संतौ तयो राज्ञोः स्थायि-यायिनोर्जयकरौ संधिकरौ स्याताम्। रविश्चेज्जीवपक्षगः तदा स्थायिनो जयः, चंद्रश्चेज्जीवपक्ष-गस्तदा यायिनो जयः। अर्थात् द्वावपि चेत् मृतपक्षगौ तदा पराजयकरौ स्याताम्। यदाह वसिष्ठः—'जीवपक्षगयोः सूर्यचंद्रयोः संधिमादिशेत्। उभौ पराजितौ ज्ञेयौ मृतपक्षगयोस्तयोः॥' इति। अत्रापि 'मार्तंडे मृतपक्षगे' इत्य-नुवर्तत एव। एवं सत्ययमर्थः-मृतपक्षगे सूर्ये चंद्रश्चेज्जीवपक्षगस्तदा यायिनां राज्ञां शुभा यात्रा जयः स्यात् स्थायिनां पराजयश्च। तदुक्तं वसिष्ठेन— 'रविः स्थायी शशी यायी तद्वशाच्च जयाजयौ। मृतपक्षगते भानौ जीवपक्ष-गते विधौ॥ यायिनां विजयस्तत्र स्थायिनां च पराजयः॥' इति। विपरीतगे इति। चंद्रे मृतिपक्षगते सूर्यश्चेज्जीवपक्षगतस्तदा स्थायिनां राज्ञां शुभा यात्रा जयः स्यात्। अर्थाद्यायिनां पराजयः। उक्तं च तेनैव—'जीवपक्षगते सूर्ये मृतपक्षगते विधौ। स्थायिनां विजयस्तत्र यायिनां च पराजयः॥' इति। यदा तु सूर्यो राह्वाक्रांतनक्षत्रे चंद्रोऽक्षेंदुसंख्ये तदा यायिनां स्वल्पो जयः स्थायिनां नैव। यदा तु चंद्रो राह्वाक्रांतनक्षत्रे सूर्योऽक्षेंदुसंख्ये तदा स्थायिनां स्वल्पो जयो यायिनां नैव। यदा द्वावपि राह्वाक्रांतनक्षत्रे तदा द्वयोरपि पराजयः। यदा तु अक्षेंदु-संख्यभस्थितौ द्वौ तदा द्वयोरपि संधिरित्यपि विशेषो ध्येयः। यदाह वसिष्ठः- 'चंद्रे पुच्छे मुखे सूर्ये जयः स्वल्पोऽपि यायिनाम्। व्यत्यये व्यत्ययफलं युद्धे-ऽप्येवं विचिंतयेत्॥ यात्रायामपि सर्वत्र चिंतनीयं प्रयत्नतः॥' इति। तस्मा-दयं विचारो युद्धयात्रायां अर्थार्जनादिसामान्ययात्रायां च ज्ञेयः। सामान्यतो मंगलकृत्येष्वपि ज्ञेयः। उक्तं च स्वरोदये—'जीवपक्षस्थिते चंद्रे कार्यं स्याद-मृतोपमम्। मृतपक्षे मृतं ज्ञेयं यतश्चंद्रबले बलम्॥' इति। अत्र स्वरोदयादि-युद्धग्रंथेषु पड्गराहुदशांगराहुनक्षत्रराहुचरणराहुफलान्यभिहितानि, तानि ग्रंथकर्त्रा ग्रंथभूयस्त्वभयान्नोक्तानीति नास्माभिर्विविच्यंते, शुश्रूषुभिश्च तत एवावधार्याणीत्यलं पल्लविनेन॥ १५॥

अथ सफलमकुलकुलाकुलचक्रं युद्धयात्रायां वसंततिलकाशार्दूलविक्रीडि-ताभ्यामाह—

स्वात्यंतकाहिवसुपौष्णकरानुराधा-
दित्यध्रुवाणि विषमास्तिथयोऽकुलाः स्युः।
सूर्येंदुमंदगुरवश्च कुलाकुला ज्ञो
मूलांबुपेशविधिभं दशषड्द्वितिथ्यः॥ १६॥
पूर्वाश्वीज्यमघेंदुकर्णदहनद्वीशेंद्रचित्रास्तथा
शुक्रारौ कुलसंज्ञकाश्च तिथयोऽर्काष्टेंद्रवेदैर्मिताः।

१ अत्रापि 'यायींदुः स्थितिमान् रविः' इत्यादि चतुर्थचरणे।

यायी स्यादकुले जयी च समरे स्थायी च तद्वत्कुले
संधिः स्यादुभयोः कुलाकुलगणे भूमीशयोर्युध्यतोः ॥१७॥

स्वातीति । पूर्वेति । स्वाती प्रसिद्धा, अंतकं भरणी, अहिराश्लेषा, वसुर्धनिष्ठा, पौष्णं रेवती, करो हस्तः, अनुराधा, आदित्यं पुनर्वसु, ध्रुवाणि रोहिण्युत्तरात्रयं च, एतानि द्वादशभानि; विषमास्तिथयः प्रतिपत्तृतीयापंचमीसप्तमीनवम्येकादशीत्रयोदशीपंचदश्य इत्यष्टौ तिथयः, वाराः सूर्येंदुमंदगुरवः, मंदः शनिः, चत्वारो वाराः; एतानि नक्षत्राणि तिथयो वाराश्च प्रत्येकमकुलसंज्ञकाः स्युः । अथ ज्ञो बुधवार एकः, मूलं प्रसिद्धं, अंबुपः शततारका, ईश आर्द्रा, विधिभमभिजित्, एतानि चत्वारि भानि; दशषट्द्वितिथयः दशमीषष्ठीद्वितीयाख्यास्तिस्त्रस्तिथयश्च; एते पदार्थाः प्रत्येकं कुलाकुलसंज्ञकाः स्युः । अथ पूर्वास्तिस्रः अश्विनावश्विनी, इज्यः पुष्यः, मघा, इंदुर्मृगः, कर्णः श्रवणः, दहनः कृत्तिका, द्वीशं विशाखा, इंद्रो ज्येष्ठा, चित्रा प्रसिद्धा, एतानि द्वादशभानि; शुक्रारौ शुक्रमंगलवारौ, अर्केंद्रवेदैर्मिताः द्वादशीचतुर्दशीचतुर्थीसंज्ञास्तिस्रस्तिथयः; एते प्रत्येकं कुलसंज्ञकाः स्युः । यदुक्तं स्वरोदये—'द्वितीया दशमी षष्ठी कुलाकुलमुदाहृताः । विषमा अकुलाः सर्वाः शेषाश्च तिथयः कुलाः । रविश्चंद्रो गुरुः सौरिश्चत्वारो ह्यकुला मताः । भौमशुक्रौ कुलाख्यौ च बुधवारः कुलाकुलः ॥ वारुणार्द्राभिजिन्मूलं कुलाकुलमुदीरितं । कुलानि माम(स्व?)धिष्ण्यानि शेषभान्यकुलानि तु ॥' अस्य फलमाह—यायीति । अकुलसंज्ञके तिथिवारनक्षत्राणां गणे समरे युद्धप्रारंभे सति यायी राजा जयी स्यात् । यदि कुलसंज्ञके तिथिनक्षत्रवारगणे सति समरे स्थायी राजा तद्वज्जयी जययुक्तः स्यात् । कुलाकुलसंज्ञके तिथिवारनक्षत्रगणे युध्यतोर्युद्धं कुर्वतोर्भूमीशयो राज्ञोरुभयोः परस्परं संधिः प्रीतिः स्यात् । उक्तं च स्वरोदये—'तिथौ वारे च नक्षत्रे अकुले यायिनो जयः । कुलाख्ये स्थायिनो ज्ञेयः संधिश्चैव कुलाकुले ॥' इति । वसिष्ठेन तु फलांतरमप्युक्तम्—'कुलभेषु च ये जातास्ते मनुजा संभवंति कुलमुख्याः । उपकुलभे परविभवं भोक्तारस्त्वन्यभेषु सामान्याः' इति । एतत्तु स्यन्यायरवाद्वारेषु तिथिष्वपि ध्येयम् ॥ १७ ॥

अथ पथिराहुचक्रं स्रग्धरयाह—

स्युर्धर्मे दस्रपुष्योरगवसुजलपद्वीशमैत्राण्यथार्थे
याम्याजांघ्रींद्रकर्णादितिपितृपवनोडून्यथो भानि कामे ।
वह्न्यार्द्राबुध्न्यचित्रानिर्ऋतिविधिभगाख्यानि मोक्षेऽथ रोहिण्यार्यम्णाप्येंदुविश्वांतिमभदिनकरर्क्षाणि पथ्यादिराहौ॥१८॥

स्युरिति ॥ अश्विनीपुष्याश्लेषाधनिष्ठाशततारकाविशाखानुराधाख्यानि भानि धर्मे धर्मस्थाने लेख्यानि स्युः । अथ भरणीपूर्वाभाद्रपदाज्येष्ठाश्रवणपुन-

र्वसुमघास्वात्याख्यान्युडूनि अर्थे लेख्यानि स्युः । अथ कृत्तिकार्द्रोत्तराभाद्रपदाचित्रामूलाभिजित्पूर्वाफाल्गुनीनक्षत्राणि कामे लेख्यानि स्युः । अथ रोहिण्युत्तराफाल्गुनीपूर्वाषाढामृगोत्तराषाढारेवतीहस्ताख्यानि भानि मोक्षमार्गे लेख्यानि स्युः । पथिशब्द आदिर्यस्य स तादृशे राहौ पथिराहावित्यर्थः । चक्रे इति विशेष्यमध्याहार्यम् । चक्रन्यासो यथा ।

| पथिराहुचक्रम् | | | |
|---|---|---|---|
| धर्मः | अर्थः | कामः | मोक्षः |
| अ | भ | कृ | रो |
| पु | पु | आ | मृ |
| आ | म | पू | उ |
| वि | स्वा | चि | ह |
| अ | ज्ये | मू | पू |
| ध | श्र | अभि | उ |
| श | पू | उ | रे |

तदुक्तं राजविजये—'ऊर्ध्वगाः पंच रेखाः स्युस्तिर्यग्रेखास्तथा नव । द्वात्रिंशत्कोष्टकैश्चक्रं पथिराहुः प्रकीर्तितः ॥ धर्मार्थकाममोक्षाः स्युरूर्ध्वकोष्टचतुष्टये । विन्यसेत्सर्पचलनादश्विन्यादीनि भान्यथ ॥' इति । सर्पचलनवदनुलोमविलोमाभ्यां भानि लेख्यानीत्यर्थः । तदेतत्स्पष्टमुक्तमादियामले—'अश्विन्यादीनि चत्वारि गणयेत्सप्तधा पुनः । अनुलोमविलोमाभ्यां साभिजिंति पुनःपुनः ॥ धर्मार्थकाममोक्षाख्या मार्गाश्चत्वार एव च ॥' इति । अत्र ग्रंथकृत्पद्ये गौरवदर्शनात्पूर्वपक्षो जायते' तदुपपत्तिस्तत्समाधिश्च 'धाक्षं वसुपुष्य-' (२।२२) इत्यादिपद्यव्याख्याने निष्ठति, सा तत एवावधार्या । अत एवोक्तमादियामले—'तिष्याश्वाहिविशाखाश्च मैत्रं शतभिषग्वसुः । एतानि सप्तऋक्षाणि धर्ममार्गे नियोजयेत् ॥ अजपादमघास्वातीयाम्यज्येष्ठाः पुनर्वसुः । श्रवणं 'सप्ततारा‌श्च धनमार्गे प्रकीर्तिताः ॥ अहिर्बुध्न्याभिजिन्मूलमगस्त्वाष्ट्राार्द्रकृत्तिकाः । एतावत्यः सप्त ताराः काममार्गे व्यवस्थिताः ॥ विधींदुविश्वहस्ताश्च उत्तरावारिपौष्णकाः ॥ तारकाः सप्तसंख्याका मुक्तिमार्गे व्यवस्थिताः ॥' इति । विधिः=रोहिणी ॥ १८ ॥

अथैवं पथिराहुचक्रमुक्त्वा तत्फलं स्रग्विणीछंदसाह—

धर्मगे भास्करे वित्तमोक्षे शशी
वित्तगे धर्ममोक्षस्थितिः शस्यते ।
कामगे धर्ममोक्षार्थगः शोभनो
मोक्षगे केवलं धर्मगः प्रोच्यते ॥ १९ ॥

धर्मग इति ॥ धर्ममार्गस्थिते भास्करे सूर्ये सति चेद्वित्तमोक्षगे अर्थमार्गे मोक्षमार्गे वा शशी स्यात्तदा शोभनश्चंद्रः । अथवा वित्तगे अर्थगे भास्करे

सति धर्ममार्गस्थितो मोक्षमार्गस्थितो वा चेच्छशी स्यात्तदा शोभनः । अथवा कामगे काममार्गस्थिते भास्करे धर्ममार्गगो मोक्षमार्गगो वा अर्थमार्गगो वा स्याच्चेच्छशी तदापि शुभः । अथवा मोक्षमार्गस्थिते भास्करे केवलं धर्ममार्गस्थितश्चेच्चंद्रः स्यात्तदापि शुभः । अर्थात् विपरीतावस्थितौ द्वयोः सूर्याचंद्रमसोरशुभत्वं स्यात् । उक्तं चादियामले—'सूर्ये धर्मगते चंद्रो धने मोक्षे शुभप्रदः । सूर्ये धनगते वित्तमोक्षमार्गे शुभः शशी ॥ कामेऽर्के धर्ममोक्षार्थसंस्थश्चंद्रो जयप्रदः । मोक्षेऽर्के धर्मगश्चंद्रः शुभोऽन्यत्र न शोभनः ॥' इति । राजविजये तु शुभाशुभाख्यं फलद्वयमप्यभिहितम्—'धर्ममार्गगते सूर्ये चंद्रे तत्रैव संस्थिते । समं युद्धं भवेत्तत्र किंचिद्यायी जयी भवेत् ॥ धर्मे सूर्योऽर्थगश्चंद्रो यायिनो विजयप्रदौ । धर्मेऽर्कः कामगश्चंद्रो विरोधो बांधवैः सह ॥ धर्मेऽर्को मोक्षगश्चंद्रः शुभयोगेन लाभकृत् । अर्थेऽर्को धर्मगश्चंद्रः शुभयुक्तश्च लाभकृत् ॥ अर्थस्थौ चंद्रसूर्यौ च यायिनां भंगदायकौ । अर्थेऽर्कः कामगश्चंद्रो निंद्यौ यात्रासु कर्मसु ॥ अर्थेऽर्को मोक्षगश्चंद्रः शुभयुग्भूमिलाभकृत् । कामेऽर्को धर्मगश्चंद्रः शुभयुग्बललाभकृत् ॥ कामेऽर्कोऽर्थगतश्चंद्रो बुधो जीवगतो यदि । श्रीलाभदौ समाख्यातौ भृगुणाथ समन्वितौ ॥ चंद्रार्कौ कामगौ यत्र रिपुयोगाद्दिदुःखदौ । कामेऽर्को मोक्षगश्चंद्रः शुभयुक्तोऽर्थलाभकृत् ॥ मोक्षेऽर्कश्चंद्रमा धर्मे महालाभः शुभान्वितः । मोक्षे सूर्योऽर्थगश्चंद्रस्तथा यात्रा न निष्फला । मोक्षेऽर्कः कामगश्चंद्रो यात्रा दुःखप्रदा भवेत् । चंद्रार्कौ मोक्षमार्गस्थौ घोरविघ्नप्रदायकौ ॥ यात्रादिसर्वकार्येषु चक्रमेतद्विलोकयेत् । पथिराहुरिति ज्ञेयः शुभाशुभफलप्रदः ॥' इति । अत एवास्य निष्कृष्टमर्थमाहुरस्मत्पितामहानंतचरणाः—'धर्मेऽर्को वित्तमोक्षेऽब्जो वित्तस्थे धर्ममोक्षगः । कामं धर्मार्थमोक्षेषु मोक्षे धर्मगतः शुभः ॥' इति ॥ इति पथिराहुचक्रम् ॥ १९ ॥

अथावश्यकर्तव्यायां यात्रायां तिथौ दुष्टायां तिथिचक्रं शालिनीवृत्तचतुष्टयेनाह—

**पौषे पक्षत्यादिका द्वादशैवं तिथ्यो माघादौ द्वितीयादिकास्ताः ।**
**कामात्तिस्रः स्युस्तृतीयादिवच्च याने प्राच्यादौ फलं तत्र वक्ष्ये २०**

**सौख्यं क्लेशो भीतिरर्थागमश्च शून्यं नैःस्वं निःस्वता मिश्रता च ।**
**द्रव्यक्लेशो दुःखमिष्टाप्तिरर्थो लाभः सौख्यं मंगलं वित्तलाभः २१**

**लाभो द्रव्याप्तिर्धनं सौख्यमुक्तं भीतिर्लाभो मृत्युरर्थागमश्च ।**
**लाभः कष्टं द्रव्यलाभः सुखं च कष्टं सौख्यं क्लेशलाभौ सुखं च २२**

**सौख्यं लाभः कार्यसिद्धिश्च कष्टं क्लेशः कष्टात्सिद्धिरर्थो धनं च ।**
**मृत्युर्लाभो द्रव्यनाशश्च शून्यं शून्यं सौख्यं मृत्युरत्यंतकष्टम् २३**

पौषे इति ॥ सौख्यमिति ॥ लाभ इति ॥ सौख्यमिति ॥ अत्र

पौषमासादितः प्रतिमासं द्वादश द्वादश कोष्टका लेख्याः । एवं कृते चतुश्चत्वा-

## ॥ अथ तिथिचक्रम् ॥

| पौ | | | चै | वै | ज्ये | आ | श्रा | भा | आ | का | | पूर्वा | दक्षि | | | उत्तरा |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | | | ६ | ७ | ८ | ९ | १० | ११ | १२ | सौम्यम् | क्लेशः | | गीतिः | |
| २ | ३ | ४ | | | ७ | ८ | ९ | | ११ | १२ | १ | शून्यम् | नैःस्वं | | नैःस्वं | |
| ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १ | २ | व्यक्लेश | दुःखं | | हृष्टाप्तिः | |
| ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १ | २ | ३ | लाभः | सौख्यं | | | |
| ५ | ६ | ७ | ८ | ९ | ० | ११ | १२ | १ | २ | ३ | ४ | लाभः | द्रव्याप्ति | | धनं | सौख्यं |
| ६ | ७ | ८ | ९ | ० | ११ | १२ | १ | २ | ३ | ४ | ५ | भीतिः | लाभः | | मृत्युः | अर्था |
| ७ | ८ | ९ | १० | १ | १२ | १ | २ | ३ | ४ | ५ | ६ | लाभः | कष्टं | | द्रव्यलाभः | सुखं |
| ८ | ९ | १० | ११ | २ | १ | २ | ३ | ४ | ५ | ६ | ७ | कष्टम् | | | भौ | सुखं |
| ९ | ० | ११ | १२ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | सौख्यः | लाभः | | कार्यसि | |
| ० | १ | १२ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | क्लेशः | | द्वे | अर्थः | धनं |
| १ | २ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | | मृत्युः | | | द्रव्य | |
| | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | ० | | शून्यम | | | मृत्युः | |

त्रिंशदधिकशतं कोष्टका जायंते, मासकोष्टकसहिताः षट्पंचाशदधिकशतं कोष्टकाः स्युरित्यर्थः । एवं चक्राकृतिर्भवति । तत्र पक्षस्य शुक्लस्य कृष्णस्य वा मूलं प्रारंभः प्रतिपदिति यावत् । 'पक्षात्तिः' इति मूलेऽर्थे तिप्रत्ययः । प्रथमं पौषे पौषमासे पक्षतिः प्रतिपत् तदादिकाः द्वादश तिथयोऽधोऽधो लेख्याः । माघादौ माघादिमासेषु द्वितीयादिकास्तिथयो लेख्याः । यथा–माघे द्वितीयादिकाः, फाल्गुने तृतीयादिकाः, चैत्रे चतुर्थ्यादिकाः, वैशाखे पंचम्यादिकाः, ज्येष्ठे षष्ठ्यादिकाः, आषाढे सप्तम्यादिकाः, श्रावणेऽष्टम्यादिकाः, भाद्रपदे नवम्यादिकाः, आश्विने दशम्यादिकाः, कार्तिके एकादश्यादिकाः, मार्गशीर्षे द्वादश्यादिका लेख्याः । सर्वास्तिथयो द्वादश्यंता लेख्याः । कामास्त्रिस्रः स्युरिति विशेषोक्तेस्त्रयोदश्याद्यग्रहणादवशिष्टस्थानानि प्रतिपदादिभिः पूरणीयानि । तत्र त्रयोदशीचतुर्दशीपंचदश्यस्तिथयोऽवशिष्यंते, तासां विभागमाह–कामादिति । कामात्त्रयोदशीतस्तिस्रस्त्रयोदशीचतुर्दशीपंचदश्यस्तृतीयादितिथिवत्स्युः । यथा-त्रयोदशी तृतीयावत्, चतुर्दशी चतुर्थीवत्, पंचदशी पंचमीवत्स्युरित्यर्थः । फलार्थमतिदेशोऽयम् । तिथिचक्रन्यासो यथा–तत्र प्राच्यादौ प्राचीदक्षिणाप्रतीच्युदीचीषु चतसृषु दिक्षु याने गमने चिकीर्षिते सति फलं शुभाशुभरूपं 'सौख्यं क्लेशः' इत्यादिना वृत्तत्रयेण वक्ष्ये कथयिष्यामि । तत्र 'सौख्यं क्लेशः' इत्यादिवृत्तत्रयं स्पष्टार्थमेव । तत्र पौषमासे प्रतिपदि दिक्चतुष्टये सौख्यं क्लेशो भीतिरर्थागमश्चेति फलचतुष्टयं क्रमेण ज्ञेयम् । एवं द्वितीयादिष्वपि क्रमेण दिक्चतुष्टये श्लोकत्रयोक्तं फलं स्यात् । तदेतत्सर्वं माघादिमासेषु द्वितीयादितिथिषु ध्येयमित्यर्थः ॥ २०–२३ ॥

अथ सवांकज्ञानं वसंततिलकयाह—

तिथ्यर्क्षवारयुतिरद्रिगजाग्नितष्टा
स्थानत्रयेऽत्र वियति प्रथमेऽतिदुःखी ।
मध्ये धनक्षतिरथो चरमे मृतिः स्या-
त्स्थानत्रयेंऽकयुजि सौख्यजयौ निरुक्तौ ॥ २४ ॥

तिथ्यृक्षवार इति ॥ तिथयोऽत्र शुक्लपक्षादितो ग्राह्याः । तत्र तिथिनक्षत्रवाराणां युतिः स्थानत्रये स्थाप्या, क्रमेण सप्तभिरष्टभिस्त्रिभिश्च तष्टा भक्तावशिष्टा सति प्रथमे स्थाने वियति शून्ये सति अतिदुःखी यात्राकर्ता स्यात् । मध्ये द्वितीयस्थाने वियति सति धनक्षतिर्द्रव्यनाशः । अथो चरमे तृतीयस्थाने वियति सति मृत्युर्मरणं स्यात् । स्थानत्रयेंऽकयुज्यंकयुते सौख्यजयौ भवेताम् । उक्तं च दैवज्ञमनोहरे चंडेश्वरेण—'तिथिवारं च नक्षत्रं संयुक्तं स्थापयेत्त्रिधा । द्वाभ्यां रामैस्तथा वेदैर्गुणयित्वाथ तद्बुधैः ॥ भाजितं चाष्टमुनिभिस्तथा द्विगुणपावकैः । आदिशून्ये भवेत्पीडा मध्यशून्ये महद्भयम् ॥ अंत्यशून्ये भवेद्धानिः सर्वशून्ये न जीवति । सर्वांके विजयो राज्ञो धनलाभो रिपोर्वधः ॥'

१ अत्र प्रमाणवाक्ये तिथ्यादियुतेर्गुणकांका निर्दिष्टास्ते ग्रंथकर्त्रा कण्ठतो नोक्तास्तत्र हेतुश्चिंत्यः । टीकाकृता तत्स्थले हेतुस्तु प्रमाणवाक्यमेव स्यादिति विभाव्यते ।

इति । द्विगुणपावकाः षट् । ननु ग्रंथकर्त्रा स्थानत्रये शून्ययुजि फलाभिधानं कस्मान्नाकारीति चेत् । सत्यम् । असंभवादेव नोक्तमिति वयं ब्रूमः । अनेकधा हि तिथिवारनक्षत्रयुतौ कल्पितायां यथाकथंचित्स्थानद्वये शून्ययोगो भवति, न कदाचित्स्थानत्रय इति । चंडेश्वरस्य क आशय इति चेत् । सत्यम् । यद्यपि सर्वशब्दो वस्तुगतं बहुत्वं प्राह तथाप्यत्रासंभवादेकत्वव्यतिरिक्तसंख्यापरस्तथा सति स्थानद्वये शून्ययुजि मृत्युरित्यर्थः । अत्र सर्वांकध्रुवांके यात्राकर्तुर्नक्षत्रं योज्यमित्याहुः; तद्वाक्यं च...... ॥ २४ ॥

अथ दाक्षिणात्यप्रसिद्धान् कियतो दोषान् वक्तुकामस्तावदाडलभ्रमणाख्यौ दोषौ प्रमाणिकाछंदसाह—

रवेर्भतोऽब्जभोन्मितिर्नगावशेषिता द्यगा ।
महाडलो न शस्यते त्रिषण्मिता भ्रमो भवेत् ॥ २५ ॥

रवेरिति ॥ सूर्यनक्षत्रादब्जभस्य चंद्रनक्षत्रस्योन्मितिर्गणना कार्या, सा नगैः सप्तभिरवशेषिता सती [illegible] द्विशेषमिता सप्तशेषमिता वा भवेत्तदा महाडलो दोषः स्यात्, स न शस्यते प्रशस्तो न भवेत् । प्रागुक्तप्रकारेण यदि त्रिषण्मिता त्रिशेषमिता षट् शेषमिता वा स्यात्तदा भ्रमणाख्यो दोषः स्यात्, सोऽपि न शस्यते; एतन्निर्मूलम् । ऋषिवाक्याभावात् । तथापि पौरुषवाक्यमेतत्–'सूर्यभाद्गणयेच्चांद्रं सप्तभिर्भागमाहरेत् । एकं च पंच चत्वारि आडलो नास्ति निश्चयात् । त्रिषट्के भ्रमणं शेषे द्वौ सप्त स्यान्महाडलः ॥' इति । तत्र भ्रमणाख्यं दोषं तु यात्रायामेव त्यजंति । आडले बहूनि शुभकर्माणि त्यजंति । आहुश्च— 'यात्रायंत्रहलप्रवाहसमरे चौर्ये च संधौ तथा कूपारामतडागबंधनविधौ पापर्द्धिदुर्गग्रहे । अश्वेभोष्ट्ररथादिरोहणकृतौ त्याज्यं सदैवाडलं यत्नादत्र शुभेषु मंगलविधौ दोषो न तस्य क्वचित् ॥' इति ॥ २५ ॥

अथ हिंबराख्यं योगमुपजातिकयाह—

शशांकभं सूर्यभतोऽत्र गण्यं पक्षादितिथ्या दिनवासरेण ।
युतं नवाप्तं नगशेषकं चेत्स्याद्धिंबरं तद्गमनेऽतिशस्तम् ॥ २६ ॥

शशांकभमिति ॥ सूर्यनक्षत्राच्चंद्रनक्षत्रं गण्यं पक्षादितिथ्या पक्षस्य शुक्लस्य कृष्णस्य वादिः प्रतिपत्तस्याः सकाशाद्वर्तमानया तिथ्या युतं दिनवासरेण रविवारादिना च युतं । तत्र नवभि९राप्तं भक्तं नग७शेषकं सप्तशेषं चेत्तदा हिंबराख्यं तद्धिंबरं गमनेऽतिशस्तं स्यात् । उक्तं च–'सूर्यभाद्गणयेच्चांद्रं पक्षादितिथिवारयुक् । नवभक्तं सप्तशेषं हिंबरं तस्य कीर्तितम् ॥' इति । तदेतन्निर्मूलम् । [प्रसंगात् घबाडमपि–'सूर्यभाद्गणयेच्चांद्रं त्रिगुणं तिथिसंयुतम् । सप्तभिस्तु हरेद्भागं त्रिशेषं स्याद्घबाडकम् ॥' एतच्च हैंबराख्यशुभं ज्ञेयम् । एतत्सर्वं दाक्षिणात्या विचारयंतीति । अत्र प्रसंगाद्ग्रंथांतरस्थसंग्रहः–'सूर्यभाद्गणयेच्चांद्रं तिथिवारं च मिश्रितम् ॥ सप्तभिस्तु हरेद्भागं पंचशेषं तु टेककम् ॥ सूर्य-

---

१ [ ] चिह्नितो हि ग्रंथो न तु मूलानुसारी न च लिखितपुस्तकेषूपलभ्यते । कश्चिल्लिखितं टिप्पणरूपेणावस्थितोऽयं टीकाग्रंथ एवेति संभाव्य केनाप्यत्रोपन्यस्त इति भाति ।

भाद्रपदयेवार्द्रं तिथिवारं च मिश्रितम् । अर्कसंख्यैर्हरेद्भागं नवशेषं तु गौरवम् ॥ प्रवेशे गौरवं दद्यान्निर्गमे हिंवरं तथा । तस्करे टेलकं दद्याद्वाडं सर्वकर्मसु ॥' इति ज्योतिर्निबंधे ] ॥ २६ ॥

अथ घातचंद्राख्यं दोषं शालिन्याह—

भूपंचांकद्व्यंगदिग्वह्निसप्तवेदाष्टेशार्काश्च घाताख्यचंद्रः ।
मेषादीनां राजसेवाविवादे यात्रायुद्धाद्ये च नान्यत्र वर्ज्यः ॥२७॥

भूपंचेति ॥ मेषादीनां राशीनां भूपंचेत्यादिको घाताख्यचंद्रो ज्ञेयः । यथा—मेषस्य प्रथमो मेष एव । वृषस्य पंचमः कन्यास्थः, मिथुनस्य नवमः कुंभस्थः, कर्कस्य द्वितीयः सिंहस्थः, सिंहस्य षष्ठो मकरस्थः, कन्यायाः दशमो मिथुनस्थः, तुलायास्तृतीयो धनुस्थः, वृश्चिकस्य सप्तमो वृषस्थः, धनुषश्चतुर्थो मीनस्थः, मकरस्याष्टमः सिंहस्थः, कुंभस्यैकादशो धनुस्थः, मीनस्य द्वादशः कुंभस्थः; एते घातचंद्रा ज्ञेया इत्यर्थः । स घातचंद्रो राजसेवायां विवादे प्रतिवादिना सह झकटके (कलहे) विद्यासंबंधिनि वा विवादे यात्रायां प्रयाणे युद्धे आदिशब्दान्मृगयादिषु वर्ज्यः । अन्यत्र विवाहान्नप्राशनादिमंगलकृत्ये न वर्ज्यः । उक्तं च—'अजाजन्मधीधर्मवित्तारिस्वत्रिस्मरांब्वष्टलाभांत्यगो घातचंद्रः । नृपद्वारयात्रावरोधागमादौ विचिंत्यो विवाहादिके नैव चिंत्यः ॥' इति । अन्यत्रापि—'भूपंचनंदा यमषट्दिशश्च वह्न्यद्रिवेदा वसुरुद्रसूर्याः । मेषादिकानां क्रमशो भवंति यात्रासु युद्धेषु च घातचंद्राः ॥ युद्धे चैव विवादे च कुमारीपूजने तथा । राजसेवावाहनादौ घातचंद्रं विवर्जयेत् ॥ तीर्थयात्राविवाहान्नप्राशनोपनयादिषु । सर्वमांगल्यकार्येषु घातचंद्रं न चिंतयेत् ॥' इति । अत्र मदीयं घातचंद्रपद्यमिदम्—'मेषकन्याघटहरिनक्रयुग्मधनुर्वृषाः । मीनसिंहधनुःकुंभा घातचंद्रा अजादितः ॥' इति । अत्र गणनाभावादर्थलाघवम् । मूलपद्ये तु अमुकस्मादमुकसंख्याक इति गणनायाः कदाचित्क्रमसद्भावाच्च गौरवमिति । एतदपि निर्मूलम् ॥ २७ ॥

'[1]आग्नेयत्वाष्ट्रजलपपित्र्यवासवरौद्रभे ।
मूलब्राह्माजपादर्क्षे पित्र्यमूलाजभे क्रमात् ॥ १ ॥
रूपद्व्यग्निभूरामव्यब्ध्यग्न्यब्धियुगाग्नयः ।
घातचन्द्रे धिष्ण्यपादा मेषाद्वर्ज्या मनीषिभिः' ॥ २ ॥

अथ घाततिथीरुपजातिकयाह—

गोसिंहनक्रे घाततिथिस्तु पूर्णा भद्रा नृयुक्कर्कटकेऽथ नंदा ।
कौर्प्याजयोर्नक्रघटे च रिक्ता जया धनुःकुंभहरौ न शस्ताः ॥ २८ ॥

---

१ इदं पद्यद्वयमपि टिप्पणी दिकोणावस्थितं ग्रंथमध्ये एव केनापि निक्षिप्तमिति प्रतिभाति ।

गोर्स्त्रीति ॥ गौर्वृषः, स्त्री कन्या, झषो मीनः; एतद्राशिमति नरे पूर्णा तिथिः पंचमीदशमीपंचदशी घाततिथिः। नृयुङ्मिथुनं, कर्कटकः प्रसिद्धः, अनयोर्भद्रातिथिः; द्वितीया सप्तमी द्वादशी च घाततिथिः। कौर्प्यो वृश्चिकः, अजो मेषः एतयोर्नंदातिथिः; प्रतिपत्षष्ठ्येकादशी च घाततिथिः। नक्रघटे मकरतुलयो रिक्ता चतुर्थी नवमी चतुर्दशी च धनुःकुंभसिंहानां जया तृतीयाष्टमीत्रयोदशी च घाततिथिः; एते घाततिथयो यात्रायां युद्धादौ च न शस्ता इति; तदुक्तं भूपालवल्लभे........॥ २८ ॥

अथ घातवारान् शालिन्याह—

**नक्रे भौमो गोहरिस्त्रीषु मंदश्चंद्रो द्वंद्वेऽर्कोऽजभे ज्ञश्च कर्के।**
**शुक्रः कोदंडालिमीनेषु कुंभजूके जीवो घातवारा न शस्ताः ॥२९॥**

नक्रे इति ॥ मकरराशिमति पुरुषे भौमो घातवारः, वृषसिंहकन्यासु मंदवारः, द्वंद्वे मिथुने चंद्रवारः, अजे मेषेऽर्कवारः, कर्के बुधवारः, धनुर्वृश्चिकमीनेषु शुक्रवारः, जूकस्तुला, कुंभतुलयोर्जीवो गुरुर्घातवारः। एते घातवाराः यात्रायां न शस्ता इति। उक्तं च........। एतदपि निर्मूलम् ॥ २९ ॥

अथ घातनक्षत्राण्यनुष्टुभाह—

**मघाकरस्वातिमैत्रमूलश्रुत्यंबुपांत्यभम्।**
**याम्यब्राह्मेशसार्पं च मेषादेर्घातभं न सत् ॥ ३० ॥**

मघाकरेति ॥ मेषादिराशीनां क्रमेण घातकभमिदं स्यात्। यथा-मेषस्य मघा, वृषस्य हस्तः, मिथुनस्य स्वाती, कर्कस्यानुराधा, सिंहस्य मूलं, कन्यायाः श्रवणः, तुलायाः शतभं, वृश्चिकस्य रेवती, धनुषो भरणी, मकरस्य रोहिणी, कुंभस्यार्द्रा, मीनस्याश्लेषा; एतद्घातनक्षत्रमित्यर्थः। तद्यात्रायां सत् शोभनं न। किंतु दोषदमित्यर्थः। उक्तं च-'मघार्कस्वातिमैत्राणि मूलं श्रवणवारुणे। रेवतीयाम्यधात्रीशसार्पं मेषादिमृत्यवे ॥' इति ॥ क्वचित् 'धात्रग्निसार्पम्' इति पाठः, तत्राग्निः कृत्तिकानक्षत्रं कुंभस्य घातभं तदा याम्यब्राह्माग्निसार्पं चेति कल्प्यमिति। तदेते दोषा दाक्षिणात्यप्रसिद्धा निर्मूलाः ॥ ३० ॥

अथ योगिनीदोषमाह—

**नवभूम्यः शिववह्नयोऽक्षविश्वेऽर्ककृताः शक्ररसास्तुरंगतिथ्यः।**
**द्विदिशोऽमावसवश्च पूर्वतः स्युस्तिथयः संमुखवामगा न शस्ताः ३१**

नवभूम्य इति ॥ एतास्तिथयः पूर्वतः पूर्वां दिशमारभ्य, ल्यब्लोपे पंचमी। पूर्वादितोऽष्टदिक्षु ज्ञेयाः। यथा-पूर्वस्यां नवभूम्यः नवमीप्रतिपच्च, आग्नेय्यां शिववह्नयः एकादशी तृतीया च, दक्षिणस्यामक्षविश्वे पंचमी त्रयोदशी च, नैर्ऋत्यामर्ककृता द्वादशी चतुर्थी च, पश्चिमायां शक्ररसाः चतुर्दशी षष्ठी च, वायव्यां तुरंगतिथ्यः सप्तमी पूर्णिमा च, उत्तरस्यां द्विदिशो द्वितीया

दशमी च, ऐशान्याममावास्याष्टमी च; एतास्तिथयस्तत्तद्दिक्षु योगिन्याख्या इति जीर्णाः । तास्तिथयः संमुखवामगा न शस्ताः । यथा—प्राच्यां गंतुः प्रतिपत् संमुखी, दक्षिणस्यां गंतुर्वामा, पश्चिमायां गंतुः पृष्ठगा, उत्तरस्यां गंतुर्दक्षिणा; एवं सर्वासु दिक्षु सर्वास्तिथयो विचार्याः; तत्र संमुख्यो वामगाश्च तिथयो न शुभाः । अर्थाद्दक्षिणाः पृष्ठगाश्च तिथयः शुभाः । उक्तं च स्वरोदये—'पूर्वस्यामुदयेद्ब्राह्मी प्रथमे नवमे तिथौ । माहेशी चोत्तरस्यां तु द्वितीयादशमीतिथौ ॥ एकादश्यां तृतीयायां कौमारी वह्निकोणगा । चतुर्थी द्वादशी प्रोक्ता वैष्णवी नैर्ऋते तथा ॥ वाराही दक्षिणे भागे पंचमी च त्रयोदशी । षष्ठी चतुर्दशी चैव इंद्राणी पश्चिमे तथा ॥ पूर्णिमायां च सप्तम्यां वायव्ये चंडिकोदयः । नष्टचंद्रदिनाष्टम्योर्महालक्ष्मीः शिवालये ॥' इति । नष्टचंद्रदिनं=अमावास्या । विजयकल्पलतायाम्—'पृष्ठतो दक्षिणे वापि योगिनी गमने हिता । वामसंमुखयोर्नेष्टा वायुमेवं विचिंतयेत् ॥' इति । समरसारे अर्धप्रहरयोगिन्यप्युक्ता । यथा—'प्राक्सोमानलरक्षोऽवाक् पाश्यीरेशदिक्षु दशांतैः । तिथिभिस्तिथिपदतोऽर्धप्रहरैरिव नव तु योगिनी शस्ता ॥' इति । अस्यार्थः—अत्र पूर्वार्धेन योगिन्युक्ता उत्तरार्धेनार्धप्रहरा योगिन्युच्यते 'तिथिपदत' इत्यादिना । ईरः समीरो वायुः, पदं स्थानं स्थितिः । या तिथिर्यस्यां दिशि प्रागुक्तक्रमेणावस्थिता तत्तिथिमारभ्य सर्वयोगिन्यस्तेनैव क्रमेण तत्तिथिमध्ये वारद्वयं भ्रमंति । यथा—द्वितीयोत्तरस्यां योगिनी, तां षोडशधा विभज्य प्रथमो विभागो द्वितीयायाः; एवमुत्तरस्यामर्धप्रहरयोगिनीसंज्ञः द्वितीयो विभाग आग्नेय्यां तृतीयाया अर्धप्रहरयोगिनीसंज्ञ इत्यग्रिमाः सर्वे विभागाः अर्धप्रहरयोगिनीसंज्ञा ज्ञेया इत्यर्थः । उक्तं च स्वरोदये—'यत्रोदयगता देवी ततो यामार्धभुक्तिगा । भ्रमंती तेन मार्गेण भवेत्तत्कालयोगिनी ॥' इति । उदयः स्थानं, देवी योगिनी । विजयकल्पलतायामपि—'यत्रैता उदयं यांति भ्रमंत्येवं तिथिक्रमात् । ततो यामार्धभुक्त्यैव योगिन्यः स्वेष्टकालिकाः ॥' इति । 'नव तु योगिनी शस्ता' इति स्पष्टार्थम् । स्वरोदये तु वारयोगिन्यप्युक्ता—'इंद्रचंद्राग्निनैर्ऋत्ययाम्यतोयानिले हरौ । सूर्यादिषु च वारेषु वर्जयेद्वारयोगिनीम् ॥' इति । फलमपि स्वरोदय एव—'जयदा पृष्ठदक्षस्था भंगदा वामसंमुखी । त्रिविधं योगिनीचक्रमित्युक्तं ब्रह्मयामले ॥' इति । त्रिविधत्वं तु तिथियोगिन्यर्धप्रहरयोगिनीवारयोगिनीभेदतः ॥ ३१ ॥

अथ घातलग्नान्याह-

भूमिद्व्यब्ध्यद्रिदिक्सूर्यांगाष्टांकेशाग्निसायकाः ।
मेषादिघातलग्नानि यात्रायां वर्जयेत्सुधीः ॥

भूमीति ॥ स्पष्टार्थम् । एतदपि यात्रायां वर्ज्यम् ॥

१ इदमपि सटीकं पद्यं निक्षिप्तमेव

अथ कालपाशाख्यौ योगौ शालिन्याह—

**कौबेरीतो वैपरीत्येन कालो वारेऽर्काद्ये संमुखे तस्य पाशः ।**
**यात्रायुद्धे संमुखे वर्जनीयौ रात्रावेतौ व्यस्तसंज्ञौ तु चिन्त्यौ ॥२२॥**

कौबेरीति ॥ कुबेरो देवता यस्याः सा, 'सास्य देवता' इत्यण्; आदिवृद्धिः, अण्णन्तत्वात् ङीप् । कौबेरी उत्तरा दिक्; ततः ल्यब्लोपे पंचमी । उत्तरां दिशमारभ्याऽर्काद्ये वारे दिवसे वैपरीत्येन दिक्प्रातिलोम्येन संहारमार्गेण यस्यां दिशि वारेशस्थितिस्तस्यां दिशि कालः स्यात् । यथा—रविवारे उत्तरस्यां कालः, सोमे वायव्यां, भौमे पश्चिमायां, बुधे नैर्ऋत्यां, गुरौ दक्षिणस्यां, शुक्रे आग्नेय्यां, शनौ पूर्वस्यामित्यर्थः । अयमर्थः स्पष्टो रत्नसारे—'रवावुत्तरतः कालः सोमे वायव्यभागके । भौमे तु पश्चिमे भागे बुधे नैर्ऋत्यकोणके ॥ जीवे च याम्यदिग्भागे शुक्रे चाग्नेयकोणके । शनौ तु पूर्वदिग्भागे कालचक्रं प्रकीर्तितम् ॥' इति । अथ पाशयोग उच्यते—तस्य कालस्य संमुखे संमुखदिशि कालदिशातः पंचमदिशि तस्य कालस्य पाशो गलकर्तनरज्जुः स्यात् । यथा—रविवारे दक्षिणस्यां पाशः, सोमे आग्नेय्यां, भौमे पूर्वस्यां, बुधे ऐशान्यां, गुरावुत्तरस्यां, शुक्रे वायव्यां, शनौ पश्चिमायामित्यर्थः । अथ फलमुच्यते—यात्रायामर्थयात्रायां, युद्धे युद्धयात्रायां; समाहारद्वंद्वः । तयोर्यात्रायुद्धयोरुपस्थितयोः सतोस्तौ कालपाशौ गंतव्यदिगवस्थितौ वर्जनीयौ । तद्दिशि न गच्छेदित्यर्थः; अर्थाद्वामभागदक्षिणभागयोः कालपाशौ शुभौ । तत्रापि कालो दक्षिणभागस्थ एव शुभः, पाशो वामभागस्थ एव शुभ इत्यनुक्तोऽपि विशेषो ज्ञेयः । उक्तं च स्वरोदये—'वारोऽह्नः पूर्वदिग्भागे मतः सव्येन मंदगः । यत्रस्थस्तत्र कालः स्यात्पाशस्तस्य तु संमुखः ॥ दक्षिणस्थः शुभः कालः पाशो वामदिगाश्रयः । यात्रायां समरे श्रेष्ठस्ततोऽन्यत्र न शोभनः ॥' इति । सव्येन प्रदक्षिणमार्गेण । मंदगः शनैश्चरः । अन्यत्र संमुखपृष्ठभागयोः । अयं कालपाशविचारो दिवैव । रात्रौ विशेष उच्यते । तुर्विशेषे । एतौ कालपाशौ तु रात्रौ व्यस्तसंज्ञौ विपरीतनामकौ चिंत्यौ ज्ञेयौ । दिवा यस्यां दिशि कालस्तस्यां दिशि रात्रौ पाशः, दिवा यस्यां दिशि पाशस्तस्यां दिशि रात्रौ कालः । यथा—रविवासरे रात्रौ दक्षिणस्यां कालः, उत्तरस्यां पाशः, एवं सर्ववारेष्वित्यर्थः । उक्तं च—'सौम्यादौ वाममार्गेण रवितः कालसंस्थितिः । तत्संमुखे भवेत्पाशो रात्रौ ज्ञेयो विलोमतः ॥' इति । सोमो देवता यस्याः सा, 'सोमाट्ट्यण्' इति देवतार्थे ट्यण्, णित्वादादिवृद्धिः; 'यस्येति च' इत्यलोपः । ततो 'हलस्तद्धितस्य' इति यलोपः । सौमी उत्तरा दिक्, तदादौ सौम्यादौ । ननु वर्ज्यत्वाविशेषाद्रात्रौ किंनाम वैपरीत्येन कृत्यमिति चेत् । उच्यते—गंतव्यदिशि कालो दक्षिणभागस्थः शुभो यथा भवेत्पाशो वामभागस्थः शुभो यथा स्यादित्येवमर्थमुक्तिरन्यथा ह्यशुभ इत्यर्थः । 'दक्षिणस्थः शुभः कालः पाशो वामदि-

१ प्रायोऽत्र 'रात्रावेतौ वैपरीत्येन गण्यौ यात्रायुद्धे संमुखे वर्जनीयौ ।' इति मूलपाठो दृश्यते; परं टीकाकृत्संमत एव पाठोऽर्थप्रतीतौ सुसङ्गतिविधायक इति विभाव्य हस्तलिखितानुसारी पाठो मूले धृतः ।

गाश्रयः' इति वचनात् । ननु कालपाशयोर्नामवैपरीत्यं स्वरोदयस्यवाक्ये कुतो नोक्तमिति चेत् । सत्यम्; साक्षात् नोक्तं परंतु स्वरोदयकर्तुरभिप्रेतमस्तीत्यनुमीयते । तथा हि—यद्यपि 'घस्रो दिनाहनी वा तु क्लीबे दिवसवासरौ' इति कोशात् । 'दशाहं शावमाशौचं सपिंडेषु विधीयते' इति धर्मशास्त्रोक्तेश्चाहःशब्दस्याहोरात्रपरत्वैव । तथापि 'आगामिवर्तमानाहर्युक्तायां निशि पक्षिणी' इत्यादिषु निशीति पदोपादानादहःशब्दः सूर्यदर्शनपरिच्छेद्यकालवाचको यथास्ति तथेहापि 'वारोऽह्नः पूर्वदिग्भागे' इत्यत्र वासरः पूर्वदिग्भागे इति वक्तव्येहःशब्दोपादानान्यथानुपपत्त्याहःशब्दः सूर्यदर्शनपरिच्छेद्यं कालमाह । तेनाहनि दिवसे ह्येवं विचारो न तु रात्रावतस्तत्र वैलक्षण्यं तद्वैलक्षण्यं नाम किं वैपरीत्यमित्यर्थः । अतः पूर्वोक्तम् 'रात्रावेतौ व्यस्तसंज्ञौ तु चिंत्यौ' इति । अथ कालपाशप्रसंगात् खंडराहुरुच्यतेऽस्माभिः । यथा स्वरोदये—'ऐंद्र्यां कृष्णे तृतीयायां सप्तम्यां शूलिनो दिशि । दशम्यां धनदाशायां वायव्यां भूतवासरे ॥ शुक्लपक्षे तु वारुण्यां चतुर्थ्यां समुदेत्यसौ । नैर्ऋत्ये च तथाष्टम्यामेकादश्यां यमौकसि ॥ आग्नेय्यां पंचदश्यां च मासे राहूदये सति । खंडगत्या भ्रमत्येवं खंडराहुस्ततो मतः ॥' इति । यमौकसि=दक्षिणस्यां । शूलिनः=ईशानस्य । अतस्तस्यां दिशि तत्तिथौ राहुसद्भावात्र गंतव्यमिति वाक्यतात्पर्यार्थः । एतासु भद्रातिथिषु भद्रामपहाय तद्रिक्तोऽन्यस्यां दिशि सुखेन गंतव्यमिति । खंडे तिथिखंडे तिथ्यर्धे भद्रारहिते गमनं गतिरित्यन्वर्थत्वमपि खंडराहौ प्रतीयते । अथ सूक्ष्मोऽर्धः यामकाल उक्तः समरसारे—'हालांतकाभसत्त्वियामदलैस्तु कालः सूर्यादिवासरगतो युधि वर्जनीयः । भासारमे दलति यामदलानि भानुवारक्रमादपि पुनः स्वहितार्थमूहेत् ॥' इति । रवौ हाकारोपलक्षितोऽष्टमोऽर्धयामः, एवं सोमे तृतीयः, भौमे प्रथमः, बुधेऽपि प्रथमः, गुरौ चतुर्थः, शुक्रे सप्तमः, शनौ द्वितीयो युध्येव वर्जनीय इति पूर्वार्धस्यार्थः । उत्तरार्धे तु मांगलिका अर्धयामा उक्ताः समस्तशुभकर्मसु निषिद्धाः । ग्रंथकर्त्रापि विवाहप्रकरणेऽभिहिताः । अर्धयामो नाम दिनस्य रात्रेर्वाऽष्टमो भाग इति । अथार्धयामराहुरप्युक्तः स्वरोदये—'इंद्रवायुयमे रुद्रतोयाग्निशशिभास्करे । यामार्धमुदितो राहुर्भ्रमत्येवं दिगष्टके ॥' इति । अयं यामार्धराहुभ्रमो दिवसे रात्रौ च तुल्यो ज्ञेयो विशेषानुक्तेः । अथ तत्रैव मुहूर्तराहुरप्युक्तः—'ईशानयमवातेंद्ररक्षःसोमाग्निवारुणे । पूर्वाह्णेऽपि भ्रमत्येवमपराह्णेऽप्ययं क्रमः ॥ जलाग्निसौम्यनैर्ऋत्यशक्रानिलयमे हरे । पूर्वरात्रे भ्रमत्येवाऽपररात्रेऽप्ययं क्रमः ॥ दिनस्य षोडशांशेन मुहूर्तः परिकीर्तितः । एवं मौहूर्तिको राहुर्ज्ञातव्यः स्वरवेदिभिः ॥' इति । दिनस्येत्युपलक्षणं, रात्रेरप्येवमेव; अत्र मुहूर्तराहौ दिने चतुर्थचतुर्थदिग्गणनोक्ता, रात्रौ तु षष्ठषष्ठदिग्गणनोक्ता । यत्तु रामवाजपेयिभिः समरसारे उक्तम्—'प्राग्वातांतकशंभुपाशिहुतभुक्पौलस्त्यरक्षोदिशो यामा-

१ यवर्गे हकारोऽष्टमवर्ण इति तेनाष्टमोऽर्धयाम उपलक्ष्यते । एवं लकारस्तृतीयो वर्णः । तकारस्तवर्गे प्रथम इत्याद्यूह्यम् ।

कैरगुरहि पाशिककुभोऽसौ षष्ठषष्ठी निशि। पृष्ठे दक्षिणतः शुभो द्विघटिकोऽसौ तुर्यतुर्यां व्रजत्रीशावाक्पवनेंद्रराक्षसमरुद्वह्निप्रतीचीं दिशम्॥' इति। अत्र यामार्धराहौ दिने प्राच्याः सकाशात्षष्ठषष्ठदिग्गणनोक्ता रात्रौ तु प्रतीच्याः सकाशात्तथैवोक्ता। उत्तरार्धे मौहूर्तिकराहौ तु दिनरात्रिविभागो नोक्तस्तट्टीकाकृता भरतेन तथैव व्याकृतश्च; यथा–अथ द्विघटिको मौहूर्तिको राहुः प्रातरारभ्यैशानीतश्चतुर्थचतुर्थदिशं मुहूर्ते मुहूर्ते याति दिनराज्योर्द्वात्रिंशन्मुहूर्ता अष्टदिशां चत्वारो भ्रमास्तत्र क्रमः ऐशानीदक्षिणवायव्यपूर्वनैर्ऋतोत्तराग्नेयपश्चिमास्विति। तदेतन्निर्मूलं मूलवाक्यानुपलंभात्। ननु कस्तर्हि तदुक्ताबाशय इति चेत्। सत्यम्। तदेवोच्यते—स्वरोदये हि यामार्धराहौ षष्ठषष्ठदिग्गणनोक्ता, मुहूर्तराहौ तु दिने चतुर्थचतुर्थदिग्गणनामभिधाय रात्रौ तु षष्ठषष्ठदिग्गणनोक्ता सा अनुचितेत्यभिसंधाय स्वयं स्वपद्ये षष्ठषष्ठदिग्गणनामुररीकृत्य दिनरात्रिविभागेन यामार्धराहुरुक्तः। मुहूर्तराहुरीशानतश्चतुर्थचतुर्थदिग्भागेन दिनरात्रिविभागमनादृत्योक्त इति। अथैवंविधे पाठे मूलांतरं मृग्यं। ऋषीणां तु स्वतंत्रेच्छानां पर्यनुयोगानर्हत्वात्स्वरोदय एवमुक्तिः। एतावत्सः स्थूलः सूक्ष्मो वा राहुः कस्यां दिशि शुभोऽशुभो वेति स्वरोदय एवाभिहितम्—'संमुखा वामसंस्था वा यस्येयं राहुमंडली। पराजयो भवेत्तस्य वादद्यूतरणादिषु॥ यस्य दक्षिणपृष्ठस्था ह्येषा राहुपरंपरा। सहस्रं स शतेनापि परसैन्यं निकृंतति॥' इति। समरसारेऽपि—'पृष्ठे दक्षे योगिनी राहुयुक्ता यस्यैकोऽयं शत्रुलक्षं निहंति। श्रेष्ठं सर्वेभ्यो बलेभ्यस्तदेव संक्षेपोऽयं सर्वसारोऽभ्यधायि॥' इति। ननु योगिनीकालपाशवारयोगिनीमृतपक्षखंडराह्वादिभिः स्थूलैर्दीर्घैरर्धयामराह्वादिभिः सूक्ष्मैश्च स्वरोदयस्थैस्तथा सांहितिकैश्चायनशूलनिषिद्धमासवारशूलनक्षत्रनिषिद्धनक्षत्रपारिघदंडमृतपक्षादिभिश्च दोषैर्यात्रादिनोऽनुन्मेष एव। तथा हि–रवौ पूर्वस्यां वारयोगिनी दक्षिणस्यां पाशो दिवा रात्रौ तु कालः पश्चिमायां वारशूलं उत्तरस्यां कालो दिवा रात्रौ तु पाशः, विदिशस्तु महादिगंतर्गत एव, 'प्रादक्षिण्यं चैवमाशो विपूर्वाः' इति श्रीपत्युक्तेः। एवं सति रविवारे कस्यामपि दिशि यात्रा न स्यादन्ये पुनर्दोषा मृतपक्षादयो विचारणीयाः। एवं सति एवं सोमवारादिष्वपि यथासंभवं दोषा ऊहनीया इति प्रागुक्तदोषो वज्रायितः। अत्र समाधिः–अयं सर्वोऽपि स्वरोदयस्थो मृतपक्षयोगिनीकालपाशादिस्थूलसूक्ष्मदोषविचारो युद्धयात्रायामेव बहुधा विचार्यः प्रकरणस्यापि नियामकत्वात्। तथा हि–सर्वेष्वपि स्वरोदयग्रंथेषु नरपतिजयचर्या उच्यते। सा च युद्धं विना न संभवति। अत एव स्वरोदयबले प्रोक्तम्—'पुण्यैरपि न योद्धव्यं यावद्धीनः स्वरोदयः। स्वरोदयबले प्राप्ते योद्धव्यं शत्रुकोटिभिः॥' इति। तथा चतुरशीतिचक्रांतेऽप्युक्तम्—'एतानि सर्वचक्राणि ज्ञात्वा युद्धं समारभेत्। जयेदिह न संदेहः शक्रतुल्येऽपि वैरिणि॥' इति। तथा भूपालवल्लभेऽप्युक्तम्–'इमानि भूबलान्यत्र ज्ञात्वा यः प्रविशेद्रणम्। अरयस्तस्य नश्यंति मेघा वातहता यथा॥' इति। एवं सति सर्वतोभद्रकाकदंष्ट्रा-

---

१ यात्रादिनः यात्रायुद्धादिकृत्यस्य।

सूर्यचंद्रकालानलचक्राणि युद्ध एव विचार्याणि यथासंभवमन्येषु शुभकृत्येष्वपि विचार्याणि । उक्तं च तत्रैव—'लाभालाभं सुखं दुःखं जयं चैव पराजयम् । चंद्रकालानले चक्रे ज्ञानं संशयवर्जितम् ॥' इति । तथा 'यात्राजन्मविवाहेषु संग्रामे विग्रहेऽपि च । घोरकालानलं चक्रं ज्ञात्वा कर्म समारभेत् ॥' इति । अथ सामान्ययात्रायामप्यावश्यकानावश्यकवशेन यथासंभवं सांहितिकदोषहानिर्विचार्या । अन्यथा हि सर्वेषां स्वरोदयस्थानां सांहितिकानां च स्थूलसूक्ष्मदोषाणां त्यागो वर्षसहस्रेणापि दुःशकः स्यात् । तत्रापि गुणानां भूयस्त्वं दोषाणां चाल्पत्वमंगीकृत्य निखिलकृत्यं निर्वाह्यम् । उक्तं च श्रीपतिना—'समस्तगुणसंपदां न खलु लब्धिरल्पैर्दिनैर्गुणप्रचुरता ततो बहुमता च दोषाल्पता । न भूरिगुणसंचये प्रभवतीह दोषोऽल्पको मुदर्चिषि हुताशने सलिलबिंदुरेको यथा ॥' इति । तत्रापि महादोषः पापग्रहवेधयुतिकर्तरीमहापातादिश्चेत्तदावश्यं वर्ज्य एव । यदि तत्समः प्रतीकारकारको गुणो न भवेत् । उभयसंभवे हि प्रबलदुर्बलविचारः कार्यः । तदप्युक्तं श्रीपतिना—'एकोऽपि हंति गुणलक्षमपीह दोषः कश्चित्परो यदि गुणोऽस्ति न तद्विरोधी । मद्यस्य बिंदुरपि पावनपंचगव्यं संपूर्णमत्र कलशं मलिनीकरोति ॥' इत्यास्तां प्रसक्तानुप्रसक्तेन ॥ ३२ ॥

अथ पारिघदंडाख्यं दोषमनुष्टुभाह—

भानि स्थाप्यान्यब्धिदिक्षु सप्तसप्तानलर्क्षतः ।
वायव्याग्नेयदिक्संस्थं पारिघं नैव लंघयेत् ॥ ३३ ॥

भानीति ॥ अब्धिदिक्षु चतुर्दिक्षु अनलर्क्षतः कृत्तिकातः सप्त भानि पूर्वस्यां स्थाप्यानि, मघातः सप्त भानि दक्षिणस्यां स्थाप्यानि, अनुराधातः सप्त भानि पश्चिमायां स्थाप्यानि, धनिष्ठातः सप्त भान्युत्तरस्यां स्थाप्यानि; तत्र वायव्याग्नेयदिगुपनिबद्धा रेखा पारिघदंडः स्यात्तं सर्वथा नैव लंघयेत् । चक्राकृतिरियम् । यदाह नारदः—'क्रमाद्दिग्द्वारभानि स्युः सप्तसप्ताग्निऋक्षतः । पारिघं लंघयेद्दंडं नाग्निश्वसनदिग्गतम् ॥' इति । कश्यपोऽपि—'अग्निधिष्ण्यात्सप्त सप्त क्रमाद्धिष्ण्यानि पूर्वतः । वाय्वग्निदिग्गतं दंडं पारिघं तु न लंघयेत् ॥' इति । ननु प्रागादिदिक्न्यस्तानां नक्षत्राणां प्रयोजनं किं नोक्तम् ? पारिघदंडाख्यानार्थत्वं तु धनिष्ठादिचतुर्दशभानि वायव्याग्नेयदिशोः पूर्वभागे स्थाप्यानि । मघादिचतुर्दशभानि तयोरेव दिशोः पश्चिमविभागे स्थाप्यानीत्येवमर्थकपद्योपनिबंधनेन स्यात् । उच्यते—स्पष्टत्वान्नोक्तम् । तथा हि—प्राग्द्वारिकैः कृत्तिकादिकसप्तनक्षत्रैः पूर्वस्यां यात्रा प्रशस्ततमा । एवं दक्षिणस्यां मघादिसप्तभैः । पश्चिमायामनुराधादिसप्तभैः । उत्तरस्यां धनिष्ठादिसप्तभैः । अयमर्थो यात्राप्रकरणे—'क्रमाद्द्वारभानि स्युः' इति नारदकश्यपाद्युक्तेर्लभ्यते । किंच त्रिविधप्रतिशुक्रविचारेऽपि दिग्द्वारभानामुपयोगोऽस्ति । यदाहात्रिः—'यद्दिग्गतः समुदयेद्विचरेच्चात्र गोलके । यद्द्वारभेषु विचरेत्त्रिविधं प्रतिभार्गवम् ॥' इति । श्रीपतिश्च—'विचरति च भचक्रे येषु दिग्द्वारभेषु'

इति । अन्यच्च गृहप्रवेशे पूर्वादिदिग्द्वारेषु गृहेषु तत्तद्दिङ्नक्षत्रैः प्रवेशश्चोक्तः । तदुक्तं वसिष्ठेन—'यद्दिग्द्वारं मंदिरं तद्दिगृक्षैरुक्तर्क्षैः स्यात्संनिवेशो न सर्वैः ॥' इत्यादीनि प्रयोजनानि ध्येयानि । तत्र प्रस्तुते पारिघदंडोक्तेरेवं ज्ञायते । यद्धनिष्ठादिचतुर्दशभानि प्रागुत्तरदिशोर्यात्रायां प्रशस्तानि । मघादिचतुर्दशभानि दक्षिणपश्चिमदिशोः प्रशस्तानि । तत्र स्वदिशि प्रशस्ततमानि अन्यदिशि प्रशस्तानि । यथा- मघादिसप्तभानि पश्चिमायामनुराधादिसप्तभानि दक्षिणस्यां प्रशस्तानीत्यर्थः । अत एवाह दुर्गादित्यः—'प्राग्दिग्गतैरुदग्दिशमुदग्गतैः प्राग्दिशं भनक्षत्रैः । दक्षिणगैरपरां दिशमपरगतैर्दक्षिणां यायात् ॥' इति । भानि=राशयो मेषाद्याः । नक्षत्राणि=कृत्तिकादीनि । यवनेश्वरोऽपि—'प्राचीमुदग्द्वारिभिरत्र यायात्प्राग्द्वारभैश्चोडुभिरप्युदीचीम् । तथैव याम्यामपराश्रितैर्भैर्याम्याश्रयैश्चाप्यपरां प्रयायात् ॥' इति । एतेन—'नो गच्छेदुत्तराशां त्रिदशपतिककुब्भैर्न याम्यप्रतीच्यैः' इति वदन् महेश्वरः प्रत्याख्यातो भवति । मूलवाक्यानुपलंभात् । किंतु सर्वथा प्रागुदङ्नक्षत्रैर्दक्षिणां पश्चिमां च नैव गच्छेत् । तथा दक्षिणपश्चिमनक्षत्रैः प्राचीमुदीचीं च नैव गच्छेत् पारिघदंडसत्त्वात् । यदाह बृहद्यात्रायां वराहः—'दिशि दिशि बहुलाद्यास्तारकाः सप्त लेख्याः पवनदहनदिक्स्थस्तिर्यगत्युग्रदंडः । सुरपतिरपि कृच्छ्रं याति तं लंघयित्वा न हि भवति विरोधो दिक्षु दंडैकगासु ॥' इति ॥ ३३ ॥

अथ कस्यचिद्विदिग्गमनं चिकीर्षितं तदा पृथङ्नक्षत्रोपदेशाभावात्तासु विदिक्षु आग्नेय्यादिषु कैर्नक्षत्रैर्गमनं स्यादित्याशंक्य विदिक्षु नक्षत्राणि आवश्यकत्वे पारिघदंडापवादं च वसंततिलकावृत्तेनाह—

अग्नेर्दिशं नृप इयात्पुरुहूतदिग्भै-
रेवं प्रदक्षिणगता विदिशोऽथ कृत्ये ।
आवश्यकेऽपि परिघं प्रविलंघ्य गच्छे-
च्छूलं विहाय यदि दिक्तनुशुद्धिरस्ति ॥ ३४ ॥

अग्नेरिति ॥ नृपः पुरुहूतदिक् प्राची तत्रस्थैः कृत्तिकादिसप्तनक्षत्रैः अग्नेर्दिशमाग्नेयीमियाद्गच्छेत् । एवमनेन प्रकारेण प्रदक्षिणगता सृष्टिमार्गेणाश्रिता विदिशो नैर्ऋत्यादीर्गच्छेत् । यथा—दक्षिणदिक्स्थैर्भैर्मघादिसप्तभिर्नैर्ऋतीं दिशं गच्छेत् । प्रतीचीस्थैरनुराधादिसप्तभिर्भैः वायव्यां गच्छेत् । उदीचीस्थैर्धनिष्ठादिसप्तभिर्भैः ऐशानीं गच्छेदित्यर्थः । यदाह नारदः—'आग्नेयीं पूर्वदिक्संस्थैर्विदिशास्त्वेवमेव हि ।' इति । अस्यार्थं स्पष्टमाह गुरुः—'प्राग्द्वारिकैश्च नक्षत्रैराग्नेय्यां शोभना गतिः । दक्षिणस्थैश्च नैर्ऋत्यां वायव्यां वारुणैरपि । ऐशान्यां दिश्युदक्संस्थैर्यात्रानीव शुभप्रदा ॥' इति । अथ पारिघदंडापवाद उच्यते—अथेति ॥ आवश्यके कृत्ये अवश्यकर्तव्ये गमनादिकृत्ये पारिघमपि पारिघदंडमपि प्रविलंघ्य लंघयित्वा नृपो गच्छेत् । परंतु शूलं

वारशूलं नक्षत्रशूलं च विहाय त्यक्त्वा यदि दिक्तनुशुद्धिरस्ति स्यात्। अस्तीति स्यादित्यस्यार्थेऽव्ययम्। पूर्वादिचतुर्दिक्षु मेषादयस्त्रिरावृत्ता दिग्राशयः स्युस्त एव तस्यांतस्यां दिशि दिग्लग्नशब्देन व्यवह्रियंते तेषां शुद्धिः शुभफलदातृग्रहानुकूल्यसाहित्यं स्यात्। यदाह श्रीपतिः—'प्रयोजनेष्वात्ययिकेषु भूपतिर्विलंघ्य रेखामपि पारिघीं व्रजेत्। विहाय दिक्शूलसमाह्वयानुडून्यदि स्वदिग्लग्नविशुद्धिराप्यते॥' इति। उडुशब्देन वारोऽप्युपलक्ष्यते। यतो वराहेण—'उल्लंघ्य दंडमपि काममियान्नरेंद्रः शूलं विहाय यदि भस्य विलग्नशुद्धिः॥' इत्यत्र शूलं विहायेति सामान्यतोऽभिधानात्। अत्र दिग्राशीनाह नारदः—'दिग्राशयः स्युः क्रमशो मेषाद्याश्च पुनः पुनः' इति। फलमाह वसिष्ठः—'पूर्वादिदिक्षु मेषाद्याः क्रमाद्दिग्द्वारराशयः। तत्तच्छुद्धिवशात्सर्वे तद्दिग्यानुः शुभप्रदाः॥ तद्वर्गाश्च तदंशाश्च तद्दीशाश्च तथाविधाः॥' इति॥ ३४॥

अथानावश्यकत्वेऽपि पारिघदंडापवादे चिकीर्षिते सर्वदिग्द्वारकनक्षत्राणि वक्रिग्रहस्य केंद्रगतत्वादिनिषेधं चेंद्रवज्रयाह—

**मैत्रार्कपुष्याश्विनभैर्निरुक्ता यात्रा शुभा सर्वदिशासु तज्ज्ञैः।**
**वक्री ग्रहः केंद्रगतोऽस्य वर्गो लग्ने दिनं चास्य गमे निषिद्धम् ३५**

मैत्रार्केति॥ मैत्रमनुराधा, अर्को हस्तः, पुष्यः प्रसिद्धः, आश्विनमश्विनी; एतैश्चतुर्भिर्नक्षत्रैः कृत्वा सर्वदिशासु प्राच्यादिचतुर्दिक्षु तज्ज्ञैर्ज्योतिर्विद्भिर्यात्रा गमनं शुभा शुभफलदा निरुक्ता। यदाह वसिष्ठः—'पुष्यार्काश्विनमैत्राणि सर्वदिग्द्वारभानि च। सर्वदिक्ष्वपि यात्रायां सर्वकामार्थदानि च॥' इति। नारदः-'पुष्ये मैत्रे करेऽश्विन्यां सर्वाशागमनं शुभम्।' आशाः=दिशः। श्रीपतिरपि— 'हस्तः पुष्यो मैत्रमप्याश्विनं च चत्वार्याहुः सर्वदिग्द्वारभानि' इति। यत्तु बालबोधिन्याम्—'पूर्वाद्याः शनिचंद्रगीष्पतिबुधादित्येषु शुक्रे कुजे नो गम्याः क्रमशस्तथा परिहरेत्प्राचीं च मूलेंद्रयोः। याम्यां च श्रवणादिषट्सु विधिभे पुष्ये प्रतीचीं त्यजेत्सौम्यां चोत्तरफाल्गुनीष्वपि तथा हस्ते न यायाद्बुधः॥' इति प्रागादिचतुर्दिक्षु श्रवणाश्विपुष्यहस्तानां क्रमेण त्याग उक्तः, स निर्मूलत्वादुपेक्ष्यः। किंच यद्येषामपि निषेधो वसिष्ठादीनामभिमतः स्यात्तदा 'पुरुहूतदिशं पुरंदरर्क्षे' इत्यादिनक्षत्रशूलपद्ये शूलनक्षत्रद्वयाभिधानं 'पुरुहूतदिशं हि विष्णुशाके नैवायाम्यदिशं त्वजांघ्रिदास्रे। जलनाथदिशं विधातृपुष्ये शूलात्यात्यथ सौम्यमर्यमार्के' इति सकृदेव कृतं स्यात्। एवमेव च नारदादीनामाशयो व्याख्येयः। बालबोधिनीवक्ष्विं वाक्यं तु दूरापास्तमेव। अन्यच्च पुष्यादष्टभानां कश्चित्सार्वदिग्द्वारिकत्वं स्मर्यते। यदाह गुरुः-'पुष्याश्विहस्तमैत्राणि पौष्णवैष्णवसौम्यभम्। वासवं सर्वदिक्ष्वाशु यात्रायां शोभनानि हि॥' इति। वराहोऽपि—'सार्वद्वारिकसंज्ञितानि गुरुभं हस्ताश्विमैत्राणि च श्रेष्ठान्यैंदवपौष्णविष्णुवसुभान्याद्यैः सहाष्टौ सदा' इति। तत्राष्टानामपि सार्वदिग्द्वारिकत्वं

स्मर्यते । चतुर्णां का कथा ? बहुमुनिवचनसंवादात् । तत्र मृगरेवतीश्रवणधनि-ष्ठानां सार्वद्वारिकत्वमावश्यकगमनेऽभ्यनुज्ञानार्थं; तत्र यदि पुष्यादीनि भानि दिग्विशेषेण त्यजेरन् तदा बहुदिक्त्वं स्यात् न सर्वदिक्त्वम् । ननु को विशेषः सर्वदिक्त्व-बहुदिक्त्वयोः ? उच्यते—सर्वशब्दः शक्त्या वस्तुमात्रवचनः, तत्र वस्तुसंघं गृहीत्वैकस्योपपत्तिः-सर्वः पदार्थ इति तस्यैव द्वित्वे च सर्वौ पदार्थौ इति भवति । सर्वे इत्यत्र तु वस्तुगतं संघगतं च बहुत्वं सर्वशब्देनोच्यते, तदेव वचसा द्योत्यते । अत्र सर्वे इति बहुवचनेन त्रिचतुरादयः पदार्था उच्यंते, बहु-शब्देन त्रय एवोच्यंते नाधिकाः । बहूनामंत्रयस्त्वेत्युक्ते चतुरादिशब्दासन्निधाने त्रय एव निर्मथ्यंते । किमत्र प्रमाणम् ? इति चेच्छृणु । मीमांसायां एकादशेऽध्याये 'वसंताय कपिंजलानालभेत' इति वैदिके वाक्ये विचारितम् । वसंताय वसंत इत्यर्थः । छांदसं रूपम् । कपिंजलाः पक्षिविशेषाः तानालभेत हन्यात् । तत्र कपिं-जलानिति बहुत्वं तावत् गम्यते, तेन त्र्यादयः परार्धावधिकाः कपिंजलास्त्रयो वा चत्वारो वा पंच वेति विकल्पेनालब्धव्या उत त्रय एवेति संशयः । तत्रैवं पूर्व-पक्षः-कपिंजलानिति बहुवचनेन द्वित्वातिरिक्तसंख्या सामान्यरूपेणाभ्यधायि तद्विशेषाकांक्षायां सत्यां त्र्यादिपरार्धान्तातिरिक्तसंख्याविशेषाभावात् त्र्यादिसं-ख्याविशेषा आक्षिप्यंते । नच तत्र त्रयोऽपि चत्वारोऽपि पंचापि हंतव्या इति संख्यांतरमेव तत्र प्रतीयते न त्र्यादयः । नच कपिंजलत्वावच्छेदकावच्छिन्नाः कपिं-जला हंतव्या इति वाच्यं । तथा सत्येकस्मिन्नेव यागे कृते जगतीतलवर्तिनां सर्वेषां कपिंजलानां विनाशप्रसंगः, तस्माद्यथाप्राप्तानां त्रिचतुरादीनां तेषामेव विकल्पे-नालंभ इति । उक्तं च जैमिनिना पूर्वपक्षसूत्रेण 'बहुवचनेन सर्वप्राप्तेर्विकल्पः स्यात्'इति । सिद्धांतस्तु घटानानयेतिवदुच्चारितस्य बहुवचनांतस्य शब्दस्य चतु-रादिशब्दोपादानमंतरेण त्रित्वमात्रं वाच्यम् । तावतैव बहुत्वोपपत्तेः । अतिरि-क्ताक्षेपे च प्रमाणाभावः । तस्मात्त्रय एव कपिंजला हिंस्याः । उक्तं च जैमि-निना-'प्रथमं वा नियम्येत कारणादतिक्रमः स्यात' इति सिद्धांतसूत्रेण । अत एव बहुत्वं त्रित्वे पर्यवसन्नमिति लोकोक्तिः साधीयसी । एवं प्रस्तुतेऽपि दीयतां दृष्टिः । नन्वत्र प्रकृतिवाच्यमेकं बहुत्वमपरं विभक्तिवाच्यं, तेन सर्वशब्दसाम्य-मिति चेन्न । प्रातिपदिकार्थेति सूत्रे वचनमात्रे प्रथमोक्तेः साधुत्वाख्यानार्थं बहव इत्यादौ प्रकृतिगतबहुत्वव्यंजकबहुवचनोत्पत्तिः । बहुः ओदनः इत्यत्र बहुवचनं कस्मान्न भवति ? सत्यम् । नात्र बहुशब्देन संख्योच्यते । किंतु वैपुल्यम् । तस्माद्बहुशब्देन त्रित्वसंख्योच्यते । सर्वशब्देन तु चतुरादिका अपि अतोऽत्र महान्भेदः । ननु एवं पुष्यादीनां सर्वदिक्त्वे समर्थिते सत्यपि नैव सर्वदिक्त्वोप-पत्तिः । यावता वारशूलसद्भावः तद्दिग्वर्जनाद्दिक्त्रयमेवावशिष्यते, तेन बहुदि-क्त्वमेवोपपद्यते इति । उच्यते-नैतावता भवदिष्टं सिध्यति । 'प्राचीं श्रवणवा-क्राभ्याम्' इत्यादिना नक्षत्रविशेषे दिग्विशेषत्याग इति । यतो वारशूलेनायमर्थ उच्यते-रविवारे पश्चिमशूलं, सोमे पूर्वेत्यादि । अतः बहुदिक्त्वसर्वदिक्त्वप्रति-पादकयोरन्यतरस्य सर्वदिक्त्ववाक्यस्य सबलत्वे निर्णीते तृतीयेन वारशूलेन सर्व-दिक्त्वं व्याहतं यद्यपि तथापि नियतबहुदिक्त्ववाक्यात्तु सबलमेव । नहि यथा

वालिसुग्रीवयोर्युध्यमानयोर्भगवता रामेण वालिनि हते वालिनि सुग्रीवापेक्षया दौर्बल्यं मन्यते शूराभिमानिन इति। किंच दक्षिणाशायां धनिष्ठोत्तरार्धादि-पंचकं त्याज्यमित्युक्तं तत्राश्विनीत्यागे धनिष्ठादिषट्कं त्याज्यमित्येवं कस्मान्नोक्तम्? नच प्रेतदाहतृणकाष्ठसंग्रहादिनिषेधार्थं तथाभिधानमिति वाच्यम्। वाक्यान्तरे हि प्रतिपदमेव पंचकस्य निषेधात्। यदाह वसिष्ठः—'वसुभस्योत्तरार्धाद्य पंचधिष्ण्येषु सर्वदा। याम्यदिग्यायिनां नृणां न मुहूर्तो जयप्रदः॥' इति। अन्यच्चापरे आहुः—पश्चिमे पुष्यस्त्याज्य इत्युच्यते च। श्रीपतिना तु—'हस्तः पुष्यः' इत्यादिना पुष्यस्य सर्वदिग्द्वारगत्वमुक्त्वा नक्षत्रप्रकरणे—'ग्रहेण विद्धो-ऽप्यशुभान्वितोऽपि विरुद्धतारोऽपि विलोमगोऽपि। करोत्यवश्यं सकलार्थसिद्धिं विहाय पाणिग्रहमेव पुष्यः॥' इत्युक्तम्। अत्र हि 'विलोमग' इति पदं टीका-कृन्महादेवो विलोमगः प्रतीच्यादिग्गमनविरुद्धोऽपि तत्र शुभ इति शब्दार्थं व्याख्यत्; तस्यायमाशयः—पुष्यो हि प्राचीनक्षत्रं तद्दक्षिणस्यां पश्चिमायां वा पारिघदंडसत्त्वाद्दिग्गमनप्रतिबंधकर्तृ सदपोद्यते। तत्र 'द्विर्बद्धं सुबद्धं भवति' इति न्यायात्पुष्योऽपि सर्वदिग्द्वारग एव। यद्येवं हस्तेऽप्यपवादः पुष्यवत्कार्यः स्यात् तुल्यन्यायत्वात्। एककर्तृके ग्रंथे एकेनैव वाक्येन सर्वदिग्द्वारत्वे सिद्धे पुनरन्येनाभिधानं व्यर्थं स्यात्। तस्मान्नैवं शक्यं वक्तुमतः प्रागुक्तमेवोपोद्ब-लकं सत्। यद्येवं कस्तर्हि विलोमग इत्यस्यार्थः? केचिदाहुः—विलोमं विप-रीतं गच्छतीति विलोमगः। यथा—'तेषां संक्षेपोऽयं प्रकृतेरन्यत्वमुत्पातः' इति वराहोक्तेर्यदोत्पातेन विलोमगामित्वं पुष्यस्य स्यात्तदापि न दोषः। यथा भौमस्योष्णादिपंचविधं वक्रत्वमुक्तं तत्रोष्णं वक्रम्। 'स्वस्वोदयर्क्षान्नवमेऽष्टमे वा सप्तर्क्षगे वा क्षितिजे प्रतीपे। तद्वक्रमुष्णाह्वयमेव तत्र वह्नेर्भयं व्याधिभयं जनानाम्॥' इति वसिष्ठेन सलक्षणमुक्तम्। तत्रैतादृशं वक्रं न कदाचित्सं-भवति तथापि उत्पातवशाद्गणितविरुद्धापि वक्रगतिः स्यात्तदर्थं फलोपन्यासः। एवं पुष्यवक्रत्वमप्यालोच्यम्। एतद्व्याख्यानं निर्मूलत्वादुपेक्ष्यम्। यथोष्णस्य वक्रस्यासंभवस्तथा पितृचरणैष्टोडरानंदे भौमचारे सम्यक् प्रत्यपादि। अन्ये त्वाहुः। विलोमगोऽपि विलोमग्रहाधिष्ठितोऽपि शुभः 'एकार्गलहतं धिष्ण्यं क्रूराक्रांतं च विद्धभम्। उत्पातदूषितं यत्तद्यात्रायां भंगदं सदा॥' इति वसि-ष्ठादिवाक्यात्। क्रूरस्य वक्रिणो मार्गिणो वा योगो दुष्ट एव। अत एवाशुभा-न्वितोऽपि पुष्यः सकलार्थसिद्धिदातेत्युक्तम्। अनेन तु सौम्यस्य गुर्वादेर्वक्रिणो योगेऽपि अशुभफलदाता पुष्यो न स्यात्। तच्चिंत्यम्। मूलभूतार्षवाक्यानुपलं-भात्। यत् वक्रिसौम्यग्रहयोगेप्यशुभफलदाता पुष्यो न भवेदिति। तथा हि-नारदः—'पुष्यः परकृतं हंतुं शक्तस्तेनापि यत्कृतम्। दोषं परो न शक्तस्तु चंद्रे-ऽप्यष्टमगे सति॥ क्रूरैर्विद्धो युतो वापि पुष्यो यदि बलान्वितः। विना पाणिग्रहं सर्वमंगलेष्विष्टदः सदा॥' इति। वसिष्ठादिवाक्यान्यप्येवमर्थकानि संति न कुत्रापि विलोमग इत्यभिहितम्। किंच सौम्यवक्रिग्रहाधिष्ठितोऽश्वि-न्यादिभगणश्चेत्तदाऽश्विन्यादेर्दोषवत्ता भवन्मते प्रसज्यते सा चाप्रसिद्धा। अन्यच्च विलोमग्रहाधिष्ठितत्वं लक्षणया व्याक्रियते मुख्यार्थसंभवे साऽप्र-

युक्ता। अस्ति च मुख्यार्थसंभवो यदुत्पातादिना नक्षत्रस्य वक्रत्वमिति । अपरे पुनराहुः—विलोमा उत्पातास्तैः सह गच्छतीति विलोमगः । त्रिविधोत्पातैर्यदि पुष्यो निहतोऽपि तत्रापि शुभ इति । तदपि न । पुष्यत्रिविधोत्पातहतो दुष्ट एव । यदाह वसिष्ठः—'मृगगणमध्ये सिंहो गुरुगणमध्ये तथैव पुष्यश्च । निजबलसहितोऽप्येवं त्रिविधोत्पातैर्न शक्तिमाविहतः ॥' इति । तस्माद्विलोमग इत्यस्यार्थश्चिन्त्यः । ननु नक्षत्रविशेषे अश्विन्यादौ विहितत्वप्रतिषिद्धत्वाभ्यां विकल्पः कस्मान्न भवति ? षोडशीग्रहणाग्रहणवत् । उच्यते,—तुल्यबलयोर्हि वाक्ययोर्विकल्पः । यथा षोडशीग्रहणाग्रहणयोः न पुनरतुल्यबलयोः । यथौदुंबर्याः सर्ववेष्टनस्पर्शनप्रतिपादिकयोः स्मृत्योः। तत्र हि स्पर्शनस्मृतेः प्रत्यक्षदृश्यो वेदः प्रमाणम् 'औदुंबरीं स्पृष्ट्वोद्गायेत्' इति । सर्ववेष्टनस्मृतेस्तु मूलवेदानुपलंभः । एतच्च स्मृतिचरणे सम्यगुपपादितं वार्तिककृता । एवमश्विन्यादिविषयकसार्वदिग्द्वारकप्रतिपादकस्य 'हस्तः पुष्यः' इत्यस्य वाक्यस्य वसिष्ठादिमुनिवाक्यानि प्रमाणानि, निषेधवाक्यस्य तु चिंत्यं मूलमित्यतुल्यबलत्वाद्विकल्पो न संभवति। तस्मान्मैत्रार्कपुष्याश्विनीनां भानां सार्वदिग्द्वारिकत्वं सिद्धम्। तत्र सर्वशब्दग्रहणाद्वा 'अग्नेर्दिशं नृप इयात्' (११।३४) इत्यादिना वा विदिस्वाग्नेयादिदिक्ष्वपि मैत्रादिभिर्यात्रोचितेति भावः । वसिष्ठः–'सर्वस्मिन्नपि समये सर्वासु च दिग्विदिक्ष्वेव । सार्वद्वारिकधिष्ण्यान्यतिशुभदारुण्यखिलनृणाम् ॥' इति । अत्र सार्वद्वारिकधिष्ण्यानामेव सर्वकालगामित्वमुक्तम् । रत्नमालायां तु श्रवणमृगशीर्षहस्तपुष्याणामुक्तम्। तच्च गुरूक्तसार्वदिग्द्वारिकत्वाभिप्रायेण । अनुराधाश्विन्योस्तु सर्वमतेन सर्वकालगामित्वम्। तदा कालविशेषनिषेधे क्षिप्रग्रहणं अश्विनीरहितं ध्येयम् । मृदुग्रहणमनुराधारहितं ध्येयम् । गुरुमते रेवतीरहितमपि । चरग्रहणं धनिष्ठाव्यतिरिक्तं गुरुमते एव द्रष्टव्यम् । एवमष्टानां सार्वदिग्द्वारिकत्वं सर्वकालगमनार्थम् । चतुर्णां पुनर्मैत्रादीनां दिक्षु यात्रार्थमपि सार्वदिग्द्वारिकत्वमित्यलमतिप्रसंगेन। वक्री ग्रह इति। वक्रं विपरीतं गमनं यस्य भौमादेः स वक्री ग्रहश्चेत्केंद्रगतः स्यात्तं गमे यात्रायां निषिद्धः । अथवास्य वक्रीग्रहस्य लग्ने वर्गः षड्वर्गश्चेत्स्यात्तदापि भंगदः । अथवा अस्य वक्रीग्रहस्य दिनं वारोऽपि स्यात् सोऽपि निषिद्धः । यदाह वराहः—'एकोऽपि वक्रोपगतो नराणां शुभोऽशुभो वापि चतुष्टयस्थः । वर्गोऽपि वास्योदयगो विनाशं बहुप्रकारं कुरुतेऽध्वगानाम् ॥' इति । श्रीपतिरपि—'नेष्टश्चतुष्टये वक्री तद्वर्गोऽपि विलग्नतः । करोति बहुधा नाशं तद्वारोऽपि वियासताम् ॥' इति । चतुष्टयं=केंद्रम् । यत्तु वसिष्ठेनोक्तम्—'एकोऽपि वक्रगः खेटो लग्नस्थो वारिराशिगः । नीचस्थो वा तदंशस्थो यात्राफलविनाशनः ॥' इति । वारिराशिः=चतुर्थस्थानम् । नारदेनापि—'विलोमगो ग्रहो यस्य यात्राकालोपगो यदि । तस्य भंगप्रदो राज्ञस्तद्वर्गोऽपि विलग्नगः ॥' इति । तद्वक्रीग्रहस्य लग्नादिस्थितत्वे दोषाधिक्यं सूचयितुम् । तर्हि कस्य वारे गमनं कार्यमित्याह वसिष्ठः—'बलप्रदस्य खेटस्य वारवर्गः शुभप्रदः । इतरग्रहवारातीयात्राया-

मधुमप्रदम् ॥' इति । अत्र केचित् 'वेदभ्रतुष्टये वक्रः' इति पाठमास्थाय वक्रो मंगल इति व्याचख्युः । 'आरो वक्रः क्रूरदृक् चावनेयः' इति वराहोक्तेः । तन्न । वक्रमस्यास्तीति वक्रः । अर्शआदित्वादच्, वक्री ग्रह एवेत्यर्थः । अत्रार्थे 'एकोऽपि वक्रगः खेट' इति 'विलोमगो ग्रहो यस्ये'ति च वसिष्ठनारदादिवाक्यान्यनुकूलानि । वक्रीति पाठे मत्वर्थीये इनिप्रत्यये सति वक्रीति रूपसिद्धौ भौमस्य गंधोऽपि नास्ति ॥ ३५ ॥

अथायनशुद्धिर्मिश्रवज्राछंदसाह—

**सौम्यायने सूर्यविधू तदोत्तरां प्राचीं व्रजेत्तौ यदि दक्षिणायने । प्रत्यग्यमाशां च तयोर्दिवानिशं भिन्नायनत्वेऽथ वधोऽन्यथा भवेत्**

सौम्यायन इति ॥ यदि सूर्यचंद्रौ सौम्यायने उत्तरायणगतौ स्यातां तदा उत्तरां दिशं प्राचीं वा व्रजेत् । तद्दिङ्मुखा यात्रा शुभेत्यर्थः । यदि तु रविचंद्रौ दक्षिणायनगतौ स्यातां तदा प्रतीचीं दक्षिणां वा व्रजेत् । यदाह पराशरः—'चंद्रार्कौ दक्षिणगतौ यायाद्याम्यां परां प्रति । सौम्यायनगतौ यायात्प्राचीं सौम्यां दिशं प्रति ॥' इति । अथ तयोः सूर्याचंद्रमसोर्भिन्नायनत्वे अयनभेदे सति दिवानिशं व्रजेत् । यथा-सूर्यो यस्मिन्नयने तां दिशमुत्तरां दक्षिणां वा दिवा दिवसे यायात् । यदा चंद्रो यस्मिन्नयने तां दिशमुत्तरां दक्षिणां वा निशि रात्रौ यायात् । अत्रोत्तरस्यां पूर्वस्या अंतर्भावः, दक्षिणस्यां पश्चिमाया इत्यपि ध्येयम् । अत्र मर्मनिर्वक्ष्यते । अथान्यथा चेत्कुर्यात्तदा वधो मरणं भवेत् । यथा-भिन्नायनत्वे सति सूर्यो यस्मिन्नयने तां दिशं यदि रात्रौ गच्छेत् चंद्रश्च यस्मिन्नयने तां दिशं दिवसे गच्छेत्तदा यातुर्वधो भवेदित्यर्थः । यदाह वसिष्ठः—'यात्रेष्टसिद्धिर्दार्केंद्वोरेकायनगयोस्तयोः । भिन्नायनगयोर्दिवा निशि चेदन्यथा वधः ॥' इति । नारदोऽपि—'रवींद्वयनयोर्यानमनुकूलं शुभप्रदम् । तदभावे दिवारात्रौ यात्रा, यातुर्वधोऽन्यथा ॥' इति । तदभावे एकायनत्वाभावे दिवारात्रौ यात्रागमनं स्यात् । स्पष्टं व्याख्यानं प्राग्वत् ध्येयम् । तदुक्तं रत्नकोशे—'दिनकरकरप्रतप्तां मकरादावुत्तरां च पूर्वां च । यायाच्च कर्कटादौ याम्यामाशां प्रतीचीं च ॥' इति । अतो विलोमदिग्यात्रायां वधः स्यात् । एतस्य नामायनप्रतिलोमयात्रेत्युच्यते । तन्माहात्म्यमाह वराहः-'यातोऽयनस्य प्रतिलोमकाष्ठां यः स्यात्स्वतंत्रोऽपि जितः परेषाम् । स केवलव्याकरणाभियुक्तः काव्यज्ञगोष्ठ्यामिव हास्यमेति ॥' इति ॥ ३६ ॥

अथ राज्ञां यात्रायां संमुखशुक्रदोषमुपजातिकाछंदसाह—

**उदेति यस्यां दिशि यत्र याति गोलभ्रमाद्वाथ ककुब्भसंघे । त्रिधोच्यते संमुख एव शुक्रो यत्रोदितस्तां तु दिशं न यायात् ३७**

उदेतीति ॥ शुक्रस्त्रिधा प्रकारत्रयेण संमुख उच्यते, मुनिभिरिति शेषः ।

कथं ? शुक्रो यस्यां दिशि प्राच्यां प्रतीच्यां वा उदेति कालांतरवशेनोदयं करोति अत्र गंतुः पुंसः शुक्रः संमुखः; अयमेकः प्रकारः । वा अथवा गोलभ्रमादुत्तरदक्षिणगोलभ्रमणवशेन यत्र यस्यां दिशि उत्तरस्यां दक्षिणस्यां वा याति गच्छति तत्र गंतुः संमुखः शुक्रः स्यात्; अयं द्वितीयः प्रकारः । यत्र शब्दोऽनुवर्तते । अथ यत्र ककुब्भसंघे प्राच्यादिदिशि कृत्तिकादिन्यासवशेन यद्दिङ्नक्षत्रे चरति तत्र दिशि गंतुः संमुखः शुक्रः स्यात्; अयं तृतीयः प्रकारः । यदाहात्रिः—'यद्दिग्गतः समुदयेद्विचरेद्यत्र गोलके । यद्द्वारभेषु विचरेत्त्रिविधं प्रतिभार्गवम् ॥' इति । एवं प्रकारत्रयेण शुक्रसांमुख्ये निर्णीते । उदयगतशुक्रदोषाधिक्यमाह—यत्रोदित इति । तुर्विशेषे । एवशब्दो भिन्नक्रमो दिशमित्यनेन संबध्यते । यस्यां दिश्युदितः शुक्रो दृश्येत तां दिशमेव न यायात्र गच्छेत् । अन्यदिश्यपि यथासंभवं न यायात् । यदाह श्रीपतिः—'उदयति दिशि यस्यां याति यत्र भ्रमाद्वा विचरति च भचक्रे येषु दिग्द्वारभेषु । त्रिविधमिह सितस्य प्रोच्यते संमुखत्वं मुनिभिरुदय एव त्यज्यते तत्र यत्नात् ॥' इति । स्पष्टार्थं पद्यम् । याति यत्र भ्रमाद्वेति । अत्र केचित्—स्वोदयकालात्प्रदक्षिणं प्राच्याद्यष्टदिक्षु प्रहराष्टकेन सूर्यवच्छुक्रोऽपि भ्रमति । सूर्यभ्रमणं च वसंतराजेनोक्तम्—'दग्धा दिगैन्द्री ज्वलिता दिगैशी प्रधूमिता चानलदिक् प्रभाते । प्रत्येकमेवं प्रहराष्टकेन भुंक्ते दिशोऽष्टौ सविता क्रमेण ॥ दग्धा दिगुक्ता दिननाथमुक्ता विवस्वदाप्ता भवति प्रदीप्ता । संधूमितायां सविता प्रयाता शेषा दिगंताः खलु पंच शांताः ॥' इति । अनेन सूर्यभ्रमणप्रकारेण शुक्रोऽपि यस्यां दिशि स्यात् सा दिक् गंतुः संमुखा स्यात् । अतस्तस्मिन्प्रहरे सापि दिक् त्याज्येत्यर्थ इत्याहुः । तन्न । वसंतराजे हि सूर्यभ्रमणवच्छुक्रभ्रमणमप्यवसेयमित्येवंविधशुक्रातिदेशवाक्याभावात् । तस्मात् भ्रमादिति गोलभ्रमादित्येव व्याख्यातव्यं । अत्रार्थेऽत्रिरप्यनुकूलस्तद्वाक्यं च प्रागुपन्यस्तम् । प्रतिशुक्रदोषफलमाह वराहः-'प्रतिशुक्रबुधाशनिवृष्टिहतादिग्वधं कुरुते नृपतेर्गमने । मदिरामुदिता मदनाकुलिता प्रमदेव कुलं परवेश्मगता ॥' इति । नारदोऽपि—'मूढे शुक्रे कार्यहानिः प्रतिशुक्रे पराजयः' इति । ननु वधूप्रवेशप्रकरणे 'दैत्येज्यो ह्यभिमुखदक्षिणे न शस्तः' इति पद्येन शुक्रसांमुख्यदोषोऽभिहितः । किं पुनर्दोषाभिधानेन ? उच्यते,-शिशुगर्भिणीनवोढाभिन्नानां लोकानां विशेषतो राज्ञां च यथासंभवं त्रिविधशुक्रसांमुख्यदोषनिराकरणार्थं पुनरभिधानम् । किंच आवश्यकयात्रायां यत्रोदितस्तामेव दिशं नेयात् । तथा सति 'पश्चादभ्युदिते शुक्रे यायात्प्राचीं तथोत्तराम् । प्राच्यामभ्युदिते शुक्रे प्रतीचीं दक्षिणां दिशम् ॥' इति वसिष्ठवाक्यमपि यथासंभवमादरणीयं च भवति । अनेन संमुखशुक्रव्यतिरिक्तदिग्यात्राभ्युपगमात् । किंच वधूप्रवेशप्रकरणे शिश्वादीनां विशेषफलाभिधानं कृतं । ननु सामान्यतो यात्रासाधारण्येनान्येषामपि राजादीनां कृतम् । अत एव यस्य विशेषतः पुनरप्यपेक्षा नास्ति 'नगरप्रवेशविषयाद्युपद्रवे' इति 'भृगवंगिरोवत्स' इति चाभिहितस्य संमुखशुक्रापवादस्याभिधानमत्र पुनर्न कृतं ।

तेनैव सिद्धेः । अथैवंविधेऽपि शुक्रसांमुख्येऽवश्यकर्तव्ये च गमने शांतिमाह वसिष्ठः—'तद्दोषशमनार्थाय शांतिं वक्ष्ये समासतः । कृत्वा शांतिं प्रयत्नेन पश्चात्सर्वं समाचरेत् ॥ भृगुकक्षे भृगोर्वारे भृगोर्वर्गे भृगूदये । उपोष्य भृगुवारेऽपि यावच्छुक्रोदयं प्रति ॥ रजतेन च शुद्धेन कारयेत्प्रतिमां भृगोः । लिखेदष्टदलं पद्मं कांस्यपात्रे च तंदुलैः ॥ शुक्लसूक्ष्मांबरैर्वेष्ट्य प्रतिमां तत्र पूजयेत् । शुक्लपुष्पाक्षतैर्गंधैर्मुक्ताहारैर्विचित्रितैः ॥ उपचाराणि कार्याणि शुक्रं ते अन्यदिग्पृथा । तन्मंत्रेण जपं कुर्यात्सम्यगष्टोत्तरं शतम् ॥ कर्मांते तेन मंत्रेण भक्त्या चार्घ्यं प्रदापयेत् । श्वेतगंधाक्षतैः पुष्पैः क्षीरमिश्रेण वारिणा ॥ दैत्यमंत्री दिवादर्शी चोशना भार्गवः कविः । श्वेतोऽथ मंडली काव्यो विधिस्थो भृगवे नमः ॥ दद्यादित्यर्घ्यं प्रयत्नेन प्रार्थयेदेव भक्तितः । अनेनैव च मंत्रेण प्रांजलिः प्रणतः स्थितः ॥ "त्वत्पूजयानया शुक्र संमुखत्वसमुद्भवम् । दोषं विनाशय क्षिप्रं रक्ष मां तेजसांनिधे ॥" इति प्रार्थ्य प्रयत्नेन प्रतिमा भूषणान्विता । दैवज्ञायैव दातव्या श्वेताश्वसहितैव च ॥ शिष्टेभ्यो दक्षिणां दद्याद्यथावित्तानुसारतः । ब्राह्मणान्भोजयेत्पश्चात्स्वयं भुंजीत बंधुभिः ॥ इतरेषां ग्रहाणां च पूजां कुर्यात्प्रयत्नतः । तत्तत्संमुखजो दोषस्तत्क्षणादेव नश्यति ॥ सूर्याय कपिलां दद्याच्छंखं चंद्रमसे तथा । कुजाय वृषभं दद्यात्स्वर्णं दद्याद्बुधाय च ॥ गुरवे पीतवस्त्रं चाश्वं सितायासिताय गाम् । एवं प्रयत्नतः कृत्वा सर्वान्कामानवाप्नुयात् ॥' इति । शुक्रवदितरग्रहसांमुख्ये तत्तल्लिंगस्वशास्त्रोक्तवैदिकमंत्रैः पूजादिकं विधेयम् । अस्मादेव शांतिकथनज्ञापकादितरसांमुख्येऽपि सांमुख्याभावबोधकं वाक्यं विनैव किंचिद्दोषोऽस्तीत्यनुमीयते । बुधसांमुख्यदोषं तु स्वयमेव वक्ष्यति । भौमसांमुख्यदोषं कंठतो वसिष्ठ एवाह; तद्वाक्यमग्रेनैव प्रदर्शयिष्यत इत्यास्तां प्रसक्तानुप्रसक्तम् । दीपिकायां तु दानमेवोक्तम्—'सितमश्वं सितं छत्रं हेममौक्तिकसंयुतम् । ततो द्विजातये दद्यात्प्रतिशुक्रप्रशांतये ॥' इति । एतच्छांतिप्रकाराशक्तौ ध्येयम् ॥ ३७ ॥

अथैवं संमुखशुक्रदोषमभिधायेदानीं तस्यैव वक्रास्तादिदोषं सापवादमुपजातिकयाह—

**वक्रास्तनीचोपगते भृगोः सुते राजा व्रजन्याति वशं हि विद्विषां ।**
**बुधोऽनुकूलो यदि तत्र संचलन् रिपूञ्जयेन्नैव जयः प्रतींदुजे ॥३८॥**

वक्रास्तेति ॥ भृगोः सुते शुक्रे वक्रोपगते अस्तोपगते नीचगते वा । उपलक्षणत्वाद्ग्रहयुद्धपराजिते वर्णरहिते वा सति राजा परराष्ट्रं व्रजन् सन् हि निश्चयेन विद्विषां शत्रूणां वशं याति । निबद्धो भवतीत्यर्थः । यदाह भारद्वाजः—'विवर्णे विजिते नीचे वक्रिते वा सितेऽस्तगे । शत्रुगृहयुते वापि तदंशे तन्निरीक्षिते ॥ यात्रां नैव प्रकुर्वीत लक्ष्म्यायुर्बलहानिदाम् ॥' इति । श्रीपति-

रपि—'नीचगग्रहजिते प्रतिलोमे भार्गवे कलुषितेऽस्तगते वा । प्रस्थितो नरपतिः प्रबलोऽपि क्षिप्रमेव वशमेति रिपूणाम् ॥' इति । अत्र विशेषमाह लघुवसिष्ठः—'शुक्रे वास्तंगते जीवे चंद्रे वास्तमुपागते । तयोर्बाल्ये वार्धके च सा यात्रा भयरोगदा ॥' इति । अथ शुक्रापवाद उच्यते—बुध इति । तत्र शुक्रास्ते यदि बुधोऽनुकूलः पृष्ठदिक्संस्थो भवेत्तदा संचलन् गच्छन् राजा रिपून् शत्रून् जयेत् । यदाह श्रीपतिः—'एवंविधे ह्यास्फुजिति प्रयायाद्बुधो यदि स्यादनुकूलवर्ती' इति । अपवादांतरमप्याह नारदः—'नीचगोऽरिगृहस्थो वा वक्रगो वा पराजितः । यातुर्भंगप्रदः शुक्रः स्वोच्चस्थश्चेद्धनप्रदः ॥' इति । नैवेति । प्रतींदुजे बुधसंमुखत्वे सति गंतू राज्ञो नैव जयः किंतु पराजयः । यदाह नारदः—'प्रतींदुजकृतं दोषं हंतुं शक्ता ग्रहा नहि' इति । वसिष्ठोऽपि—'प्रतिशुक्रं प्रतिबुधं प्रतिभौमं गतो नृपः । बलेन शक्रतुल्योऽपि हतसैन्यो निवर्तते ॥' इति । अयं च प्रतिशुक्रादिविचारो नृणां प्रथमगमने, राज्ञां तु विजययात्रायामाहुः । तथा च रैभ्यः—'प्रतिशुक्रादिदोषोऽयं नूतने गमने नृणाम् । राज्ञां विजययात्रायां नान्यथा दोषमावहेत् ॥' इति । आदिशब्दाच्छुक्रास्तप्रतिभौमप्रतिबुधा गृह्यंते, तेषामप्येवंविधे विषये दोषः ॥ ३८ ॥

अथ कालविशेषे प्रतिशुक्रापवादं शुक्रास्ते च विशेषं शालिनीछंदसाह—

**यावच्चंद्रः पूषभात्कृत्तिकाद्ये पादे शुक्रोऽन्धो न दुष्टोऽग्रदक्षे ।**
**मध्येमार्गं भार्गवास्तेऽपि राजा तावत्तिष्ठन्संमुखत्वेऽपि तस्य ॥३९॥**

यावदिति ॥ चंद्रो यदा पूषभाद्रेवतीनक्षत्रादारभ्य कृत्तिकाद्ये पादे रेवत्यश्विनीभरणीकृत्तिकाप्रथमचरणे यावच्चंद्रस्तिष्ठति तावच्छुक्रोऽन्धो ज्ञेयः । दृष्टोऽपि शुक्रो दर्शनकार्यं न करोतीत्यर्थः । तदेवाह–न दुष्ट इति । शुक्रोऽन्धो यदा भवेत्तदा अग्रे संमुखे दक्षिणभागे च दुष्टो न स्यात् । यदाह पराशरः—'पौष्णादिवह्निभाद्यांघ्रिं यावत्तिष्ठति चंद्रमाः । तावच्छुक्रो भवेदंधः संमुखे गमनं हितम् ॥' इति । मध्येमार्गमिति । मार्गस्य मध्ये मध्येमार्गम्, 'पारे मध्ये षष्ठ्या वा' इत्यव्ययीभावः समासः । पूर्वपदस्यैदंतत्वं निपातनात् पारेमध्ये इति । सुमुहूर्तप्रस्थितो राजा मार्गमध्ये यदि शुक्रास्तो भवेत्तावत्कालं तस्मिन्नेव प्रयाणे तिष्ठेत् यावच्छुक्रोदयो भवेत् । यदि शुक्रो गंतू राज्ञः संमुखो दैवात्तावत्तस्य शुक्रस्य संमुखत्वेऽपि तस्मिन्नेव प्रयाणे तिष्ठेत् । उपलक्षणत्वाद्गुरावप्येवंविधे द्रष्टव्यम् । यदाह पराशरः—'जीवः शशांकः शुक्रो वा मार्गमध्येऽस्तगो यदि । तत्रैव निवसेद्राजा यावदभ्युदितो भवेत् ॥' इति । उदयादनंतरं यदि संमुखः शुक्रस्तदापि स्थैर्यमिति प्राग्वचनाज्ज्ञायते । ततः शुक्रास्तापेक्षायां तत्रैव स्थितिः । ततः शुक्रोदयमपेक्ष्य तं च पृष्ठतः कृत्वाग्रे सुमुहूर्ते वा गच्छेदित्यनुक्तसिद्धमप्येतत्सर्वं ज्ञायत इति । एवं मध्येमार्गं गुर्वास्तश्चेत्स्यात्तदा दोषाभावः।सामान्यविशेषवाक्याभावात्।यदा तु मध्येमार्गं

बुधोदयो भवेत्स च पुनः संमुखः स्यात्तदा दोष एव । उक्तं च वसिष्ठेन— 'संमुखे चंद्रजे यत्र मार्गमध्योदितो यदि । यावदस्तंगते तस्मिंस्तावत्तत्रैव संवसेत् ॥' इति ॥ ३९ ॥

अथैवं महतायासेन दिनशुद्धिमभिधायेदानीं लग्नशुद्धिं वक्तुकामस्ताव-त्प्रयाणेऽनिष्टलग्नमनुष्टुभाह—

कुंभकुंभांशकौ त्याज्यौ सर्वथा यत्नतो बुधैः ।
तत्र प्रयातुर्नृपतेरर्थनाशः पदे पदे ॥ ४० ॥

कुंभेति ॥ स्पष्टार्थमिदं पद्यम् । यदाह नारदः—'निंद्यो निखिलयात्रासु घटलग्ने घटांशकः' इति । श्रीपतिरपि—'नेष्टः कुंभोऽप्युद्गमेंऽशस्थितो वा' इति । वराहोऽपि—'न कुंभलग्नं शुभमाह सत्यो न भागभेदाद्यवना वदंति' इति ॥ ४० ॥

अथान्यदनिष्टलग्नं शुभफलदलग्नं च मंजुभाषिणीछंदसाह—

अथ मीनलग्न उत वा तदंशके चलितस्य वक्रमिह वर्त्म जायते ।
जनिलग्नजन्मभपती शुभग्रहौ भवतस्तदा तदुदये शुभो गमः ४१

अथ मीनेति ॥ मीनलग्ने वा सत्यपि लग्नांतरे तदंशे मीनांशे वा चलितस्य राज्ञो वर्त्म वक्रं स्यात् । यदाह नारदः—'वक्रः पंथा मीनलग्ने यातुर्मीनांशकेऽपि वा' इति । श्रीपतिरपि—'वक्रः पंथा मीनलग्नेंऽशके वा कार्यासिद्धिः स्यान्निवृत्तिश्च तस्य' इति । दुर्गादित्यः—'मीनोदये गमनमन्यगृहोदयेऽपि मीनांशके कुटिलमेव च निष्फलं स्यात्' इति । एवमशुभलग्नमभिधायेदानीं शुभलग्नान्युच्यंते जनीति । जनिर्जन्म, तत्कालीनं लग्नं जनिलग्नं· जन्मभं जन्मराशिः; तयोर्जन्मलग्नजन्मराश्योः पती स्वामिनौ शुभग्रहौ चेदुदये लग्ने भवतस्तदा गमो गमनं शुभः स्यात् । जन्मलग्नं जन्मराशिश्च यात्रालग्नगं शुभमिति प्रागेवाभिहितम् 'जननराशितनू यदि लग्नगे' (११।२) इति । अर्थाज्जन्मलग्नजन्मराशिस्वामिनौ पापग्रहौ यदि यात्रालग्ने स्यातां तदा तादृशे लग्ने गमनमशुभफलदमित्यर्थः । यदाह वसिष्ठः—'जन्मराशौ लग्नगते तदीशे वा विलग्नगे । अभीष्टफलदा यात्रा राशीशश्चेच्छुभग्रहः ॥' इति । ननु 'जन्मराश्युद्गमो नैव जन्मलग्नोदयः शुभः । तयोरुपचयस्थानं यदि लग्नगतं शुभम् ॥' इति वृद्धनारदेन जन्मराशेर्यात्रालग्नावस्थितौ निषेधोऽभिहितः । सत्यम् । राशेः पापग्रहस्वामित्वे दोषः, न शुभस्वामित्वे; प्रागुक्तवसिष्ठवाक्यस्वरसात् । एवं जन्मलग्नोदयः शुभ इत्यपि जन्मलग्नस्य शुभग्रहस्वामित्वे शुभफलता, न पापस्वामित्वे इति व्याख्येयम् ॥ ४१ ॥

अथान्यदनिष्टं लग्नं रथोद्धताछंदसाह—

जन्मराशितनुतोऽष्टमे तथा स्वारिभाच्च रिपुभे तनुस्थिते ।
लग्नगास्तदधिपा यदाथवा स्युर्गतं हि नृपतेर्मृतिप्रदम् ॥ ४२ ॥

जन्मराशीति ॥ स्वस्य जन्मराशेर्जन्मलग्नाच्चाष्टमे राशौ लग्नस्थे सति, तथा स्वारिभात् जिगमिषतः स्वशत्रोर्भाद्राशेर्लग्नाच्च रिपुभे षष्ठराशौ तनुस्थिते वा सति, अथवा स्वराशिलग्नाभ्यामष्टमभवने स्वशत्रोर्जन्मराशिलग्नाभ्यां षष्ठभवने तेषां स्वामिनो यात्रालग्नगताः स्युर्यदा तदा राज्ञो मृतिप्रदाः । यदाह श्रीपतिः—'जननसमयलग्नान्नैधने जन्मभाद्वा निजरिपुभवनाद्वा शत्रुभे लग्नयाते । पतिभिरुत तदीयैर्लग्नतः पार्थिवानां गमनमथ विषं वा भक्षितं तुल्यमेव ॥' इति । विषं वा भक्षितं, मरणप्रदमित्यर्थः । वसिष्ठेन तु स्वजन्मराशिलग्नाभ्यां द्वादशभवनमपि निषिद्धमुक्तम् । यथा–'स्वाष्टलग्ने लग्नगते राशौ वा लग्नगे सति । यातुर्भंगो भवेत्तत्र द्वादशे वाथ लग्नगे ॥' इति ॥ ४२ ॥

अथान्यच्छुभलग्नं शालिन्याह—

**लग्ने चंद्रे वापि वर्गोत्तमस्थे यात्रा प्रोक्ता वांछितार्थैकदात्री ।**
**अंभोराशौ वा तदंशे प्रशस्तं नौकायानं सर्वसिद्धिप्रदायि ॥ ४३ ॥**

लग्न इति ॥ मीनकुंभव्यतिरिक्ते यस्मिन्कस्मिंश्चिल्लग्ने वर्गोत्तमस्थे वर्गोत्तमनवांशगते सति वा अथवा चंद्रे वर्गोत्तमस्थे सति यात्रा वांछितार्थस्य मनोभीष्टार्थस्यैकाऽद्वितीया दात्री । यदाह वसिष्ठः—'वर्गोत्तमांशगे लग्ने त्वथवापि सुधाकरे । यात्रा कामदुघा यातुर्माता पुत्रस्य वै यथा ॥' इति । वै निश्चयेन । अथ नौकायात्रायां असाधारणत्वेन लग्नमुच्यते—अंभोराशाविति । जलचरराशौ लग्नगते सति अथवा लग्नांतरे तदंशे जलचरांशे सति नौकायानं सर्वसिद्धिप्रदायि स्यात् । यदाह नारदः—'जलोदयो जलांशोऽपि जलयाने शुभप्रदः ।' इति । दुर्गादित्योऽपि–'नौयानमाप्यभवनेषु विलग्नगेषु कुर्यात्तथान्यगृहगेषु तदंशगेषु' इति। वराहोऽपि–'नौयानमिष्टं जलराशिलग्ने तदंशके वान्यगृहोदयेऽपि ।' इति । एतेन संमतिदर्शनेन 'लग्ने चाप्येंऽशे च नौयानमिष्टम्' इति श्रीपतिवाक्यं च आप्ये इति पदच्छेदेन स्पष्टार्थमपि चापसंबंधिनि लग्ने धनुर्लग्ने धनुरंशे च नौकायानमिष्टमित्येवं केचिद्व्याकुर्वते, तद्व्याख्यानमपाकृतं भवति । किंच तादृशे वाक्यार्थे क्रियमाणे मूलवाक्यानुपलंभः प्रयोगाशुद्धिश्च स्यात् । चापशब्दात् 'वृद्धिर्यस्याचामादिस्तद्वृद्धम्' इति वृद्धसंज्ञकात् 'वृद्धाच्छः' इति विहितस्य शैषिकच्छप्रत्ययस्येयादेशे चापीय इति पाठ्यं स्यात्तथा च पाठे छंदोभंगः स्यात् ॥ ४३ ॥

अथ मेषादीनां दिगनुलोमप्रतिलोमराशीनां लग्नावस्थितौ फलमिंद्रवज्राछंदसाह—

**दिग्द्वारभे लग्नगते प्रशस्ता यात्रार्थदात्री जयकारिणी च ।**
**हानिं विनाशं रिपुतो भयं च कुर्यात्तथा दिक्प्रतिलोमलग्ने ॥४४॥**

दिग्द्वारभ इति ॥ दिग्द्वारभानि मेषादिराशयस्तद्विलग्नेषु गंतव्यदिगव-

१ आप्यभवनं=जलराशिः कुंभो वा मीनो वा ।

स्थितेषु सत्सु यात्रा प्रशस्ता । प्रशस्तत्वमेवाह—**अर्थदात्री जयकारिणी चेति** । यथा-मेषः पूर्वस्यां, वृषो दक्षिणस्यां, मिथुनः पश्चिमायां, कर्कटः उत्तरस्यां; एवं सिंहादयो धनुरादयश्च पूर्वादिषु ध्येयाः । यदाह **वसिष्ठः**—'पूर्वादिदिक्षु मेषाद्याः क्रमाद्दिग्द्वारराशयः । दिग्द्वारराशयः सर्वे तद्दिग्यातुः शुभप्रदाः ॥' इति । **हानिमिति** । दिक्प्रतिलोमलग्ने विपरीतदिगवस्थिते लग्ने सति; यथा-पश्चिमायां मेषः, उत्तरस्यां वृषः, पूर्वस्यां मिथुनः, दक्षिणस्यां कर्कः । एवं पुनः पश्चिमादिषु दिक्षु सिंहादयो धनुरादयश्च ज्ञेयाः । तादृशे लग्ने गंतुः पुंसो यात्रा हानिं द्रव्यादिनाशं रिपुतः शत्रुतो भयं च कुर्यात् । तथाशब्दः पादपूरणे । उक्तं च **वसिष्ठेन**—'दिग्द्वारभे लग्नगते यात्रार्थविजयप्रदा । लग्ने दिक्प्रतिलोमे सा हानिदा शत्रुभीतिदा ॥' इति । बृहद्यात्रायां **वराहो**ऽपि 'यातव्यदिक्तनुगतस्य सुखेन सिद्धिर्व्यर्थश्रमो भवति दिक्प्रतिलोमलग्ने' इति ॥ ४४ ॥

अथ शुभलग्नान्येव वसंततिलकाछंदसाह—

राशिः स्वजन्मसमये शुभसंयुतो यो
यः स्यारिभान्निधनगोऽपि च वेशिसंज्ञः ।
लग्नोपगः स गमने जयदोऽथ भूप-
योगैर्गमो विजयदो मुनिभिः प्रदिष्टः ॥ ४५ ॥

**राशिरिति** ॥ जिगमिषोः पुंसः स्वजन्मसमये यो राशिः शुभग्रहैश्चंद्रबुधगुरुशुक्रैः संयुतोऽस्ति स राशिश्चेद्यात्रालग्नोपगः स्यात्, अथवा स्वारिभात् स्वशत्रोर्भं राशिर्लग्नं वा ततोऽष्टमो यो राशिः स चेद्यात्रालग्नोपगः स्यात्, अथवा यो राशिर्वेशिसंज्ञः सूर्याक्रांतराशेर्द्वितीयो राशिर्वेशिसंज्ञः स चेद्यात्रालग्नोपगः स्यात्, तदा स राशिर्गमने जयदः स्यात् । यदाह **नारदः**—'यो ग्रहो जन्मनि शुभो यो राशिर्वेशिसंज्ञकः । तावुभौ जन्मलग्नं च यात्रायां शुभदं त्रयम् ॥' इति । शुभः=शुभग्रहयुतः । यदाह **श्रीपतिः**—'यः स्वजन्मनि शुभग्रहाश्रितो यश्च राशिरिह वेशिसंज्ञकः । यः स्वशत्रुभवनाच्च नैधने लग्नगः स गमने शुभावहः ॥' इति । **वसिष्ठः**—'शत्रोरष्टमलग्ने वा राशौ वापि विलग्नगे । तदीशस्थितलग्ने वा यातुः शत्रुक्षयः सदा ॥' इति । वेशिलक्षणमाह **वराहः**—'दिनकरयुताद्राशेर्द्वितीयो वेशिः' इति । अथवा भूपयोगैर्जातकोक्तयात्रालग्नावस्थितै राजयोगैर्गमो मुनिभिर्विजयदः प्रोक्तः । यदाह **नारदः**—'ये नृपा यांत्यरीञ्जेतुं तेषां योगैर्नृपाह्वयैः । उपैति शांतिं कोपाग्निः शत्रुयोषाश्रुवारिभिः ॥' इति । **वराहो**ऽपि—'जातकोक्तनृपयोगगतानां प्रतिदिनं भवति राज्यविवृद्धिः । वातघूर्णितमिवार्णवयानं पल्वले तु समुपैति विनाशम् ॥' इति । ते च राजयोगा बृहज्जातके सारावल्यां टोडरानंदे च संति, अतस्तत एवावधार्याः ॥ ४५ ॥

अथ लालाटिकयोगान्वक्तुकामस्तावद्दिक्स्वामिन उपजातिकयाह—

सूर्यः सितो भूमिसुतोऽथ राहुः शनिः शशी ज्ञश्च बृहस्पतिश्च ।
प्राच्यादितो दिक्षु विदिक्षु चापि दिशामधीशाः क्रमतः प्रदिष्टाः ॥

सूर्य इति । स्पष्टार्थमिदं पद्यम् । यदाह वसिष्ठः—'दिगीश्वरा भास्कर-शुक्रभौमराह्वर्किचंद्रज्ञसुरार्चिताः स्युः' इति ॥ ४६ ॥

अथ दिगधीशकथनप्रयोजनं तनुमध्याछंदसाह—

केंद्रे दिगधीशे गच्छेदवनीशः ।
लालाटिनि तस्मिन्नेयादरिसेनाम् ॥ ४७ ॥

केंद्रे इति ॥ दिक्स्वामिनि 'सूर्यः सितः' (११।४६) इत्यादिनोक्ते केंद्रे केंद्र-वर्तिनि सति अवनीशो राजा गच्छेत् । तस्मिन् दिगधीशे लालाटिनि सति अरिसेनां नेयान्न गच्छेत । यदाह श्रीपतिः—'ललाटगे न प्रव्रसेद्दिगीशे गंतव्य-मस्मिन् खलु कंटकस्थे' इति ॥ ४७ ॥

अथ लालाटिकयोगान् शार्दूलविक्रीडितेनाह—

प्राच्यादौ तरणिस्तनौ भृगुसुतो लाभव्यये भूसुतः
कर्मस्थोऽथ तमो नवाष्टमगृहे सौरिस्तथा सप्तमे ।
चंद्रः शत्रुगृहात्मजेऽपि च बुधः पातालगो गीष्पति-
र्वित्तभ्रातृगृहे विलग्नसदनाल्लालाटिकाः कीर्तिताः ॥ ४८ ॥

प्राच्यादाविति ॥ प्राच्यादौ प्राच्याद्यष्टदिक्षु क्रमेण विलग्नसदनादिषु भावेषु सूर्यादिग्रहस्थित्या लालाटिकाः स्युरिति वाक्यार्थः । यथा—तनौ लग्न-स्थस्तरणिः सूर्यः प्राच्यां गंतुर्लालाटिकः, एवमाग्नेय्यां भृगुसुतो लाभव्यये एकादशद्वादशस्थाने लालाटिकः, कर्मस्थो दशमस्थो भूसुतो मंगलो दक्षिण-स्याम्, तमो राहुरष्टमनवमस्थानस्थितो नैर्ऋत्याम्, सौरिः शनिः सप्तमस्थः पश्चिमायाम्, चंद्रः शत्रुगृहात्मजे षष्ठपंचमस्थो वायव्याम्, बुधः पाताल-गश्चतुर्थस्थानस्थ उत्तरस्याम्, गीष्पतिर्बृहस्पतिर्वित्तभ्रातृगृहे द्वितीयतृतीय-स्थानस्थ ऐशान्यां लालाटिक इत्यर्थः । यदाह नारदः—'लग्नस्थो भास्करः प्राच्यां दिशि यातुर्ललाटगः । द्वादशैकादशे शुक्र आग्नेय्यां तु ललाटगः । दशमस्थः कुजो लग्नाद्याम्यायां तु ललाटगः । नवमाष्टगतो राहुर्नैर्ऋत्यां तु ललाटगः ॥ लग्नात्सप्तमगः सौरिः प्रतीच्यां तु ललाटगः । षष्ठपंचमगश्चंद्रो वायव्यां च ललाटगः ॥ चतुर्थस्थानगः सौम्य उत्तरस्यां ललाटगः । द्वित्रिस्था-नगतो जीव ऐशान्यां तु ललाटगः ॥ लालाटिदिक्पतिं त्यक्त्वा जीवितेप्सु-

व्रजेन्नृपः' इति । वराहोऽपि—'लग्ने भानुः सुतरिपुगतश्चंद्र आरो नभःस्थः पातालस्थो हिमकरसुतः स्वग्निगो देवमंत्री । तद्वच्छुक्रो व्ययभवगतो भास्करिः सप्तमस्थो राहुर्नित्यं निधननवगः स्वां दिशं वारयंति ॥' यत्तु वसिष्ठवाक्ये—'राशीनेको द्वाविनाक्रांतराशेरप्रादक्षिण्याद्विन्यसेद्दिग्विदिक्षु । यद्दिग्राशौ लग्नगे संमुखत्वं तद्दिग्यानुर्मृत्युदस्तद्दिगीशः ॥' इति, तदयुक्तं प्रतिभाति । तथा हि—सूर्याधिष्ठितराशेरप्रादक्षिण्येन द्वादशराशिचक्रे दिश्येको विदिशि द्वावित्येवं न्यस्ते 'सूर्य मितः' (११।४६) इत्यादिना प्राच्याद्यष्टदिक्षु ग्रहन्यासमहिते सति सूर्याक्रांतराशेश्चतुर्थो बुधस्तदोत्तरस्यां लालाटिकः स्यात्, स चासंभवनीयः, न हि केनापि गणितप्रकारेण सूर्याच्चतुर्थो बुधः स्यात् । अत एव वराहोऽपि—'चतुर्थभवने सूर्याज्ज्ञसितौ भवतः कथम्' इति । अन्यच्च सूर्याधिष्ठितराशेः सप्तमः शनिः पश्चिमायां लालाटिकः । तत एव दशमस्थो भौमो दक्षिणस्याम् । एवमेव सर्वेऽपि ग्रहाः लालाटिका इत्यापद्येत । इष्यते च लग्नराशेरेव । एवं सति सकलमुनिविरोधश्चापनेन । तस्माद्वसिष्ठसंहितापुस्तके 'इनाक्रांतराशेः' इति लेखकभ्रमसंभूतपाठः । तस्मात् 'राशीनेको द्वाविनो लग्नराशेः' इति पाठः साधीयान् कल्प्यः । एवं सति चतुर्थस्थानगतबुधासंभवः सकलमुनिविरोधश्च नास्ति । रत्नकोशे—'योऽधिपतिर्दिशि यस्यास्तस्मिन्नस्थे न तां दिशं यायात् । अनुकूले च दिगीशे गंतव्यं कंटकोपगने ॥' इति । अत्र सूर्यभौमशनिबुधानामस्ति च कंटकोपगतत्वमस्ति च लालाटिकत्वम् । अन्येषां शुक्रादीनामुभयरूपत्वासंभव एव । तत्र लालाटिकस्थानव्यतिरिक्तं स्थानत्रयं कंटकशब्देन व्यवहर्तव्यम् । बहुव्यापकत्वाल्पव्यापकत्वरूपसामान्यविशेषभावसत्त्वात् । तस्माल्लालाटिकव्यतिरिक्ते कंटकस्थाने यदि दिगीशस्तदा शुभफलदा यात्रा, अन्यथा त्वशोभनेति हृदयम् ॥ ४८ ॥

अथ पर्युषितयात्रायोगचतुष्टयमनुष्टुभेंद्रवज्राभ्यामाह—

मृगे गत्वा शिवे स्थित्वाऽदितौ गच्छञ्जयेद्रिपून् ।
मैत्रे प्रस्थाय शाक्रे हि स्थित्वा मूले व्रजंस्तथा ॥ ४९ ॥
प्रस्थाय हस्तेऽनिलतक्षधिष्ण्ये स्थित्वा जयार्थी प्रवसेद्द्विदैवे ।
वस्वंत्यपुष्ये निजसीम्नि चैकरात्रोषितः क्ष्मां लभतेऽवनीशः ५०

मृगे इति ॥ प्रस्थायेति ॥ मृगशिरसि स्वगृहाद्यातव्यदिगभिमुखं कस्यचिदिष्टस्य गेहे गत्वा प्रस्थायार्द्रायां तस्मिन्नेव गृहे स्थित्वोषित्वाऽदितौ पुनर्वसौ गच्छन् तद्गेहं त्यक्त्वा ग्रामाद्बहिरेव गच्छन्सन् रिपून् शत्रून् जयेत् । अयमेको योगः । एवमेव मैत्रेऽनुराधायां प्रस्थाय शाक्रे ज्येष्ठायां स्थित्वा मूले व्रजन्सन् तथा शत्रून् जयेदित्यर्थः । अयं द्वितीयो योगः । तथा हस्ते प्रस्थायानिलतक्षधिष्ण्ये स्वातीचित्रानक्षत्रद्वये स्थित्वा द्विदैवे विशाखायां जयार्थी

भूपादिः प्रवसेद्देशान्तरं गच्छेत् । अयं तृतीयो योगः । वस्वंत्यपुष्ये धनिष्ठा-रेवतीपुष्येषु निजसीम्नि स्वनगरप्रांते प्रस्थितः सन् यदि एकरात्रोषितः स्यात्तदाऽवनीशो राजा क्ष्मां भूमिं, शत्रोरिति शेषः । लभते जयेन प्राप्नोतीत्यर्थः । अयं चतुर्थो योगः । यदाह बृहद्यात्रायां वराहः—'सौम्ये गत्वाध्युष्य रौद्रेऽदितीशे संप्रस्थाता बाधते शत्रुसंघान् । मैत्रे गत्वा पौरुहूते समुष्य मूले यायाच्छत्रुनाशाय भूपः ॥ हस्ते गत्वा स्वातिचित्रे समुष्य शक्राग्न्योर्भे प्रस्थितो बाधतेऽरीन् । तिष्ये पौष्णे वासवे चैकरात्रं सीम्नि स्थित्वा भूतिमाप्नोति याता ॥' इति । कश्चिन्मृगे प्रस्थायार्द्रायां पुनर्वसौ च स्थित्वा पुष्ये गच्छेदित्युक्तम् । यदाह गुरुः—'सौम्ये गत्वा समध्युष्य रौद्रादित्ये व्रजेत्पुनः । पुष्येऽतिसंपदे विद्वाँल्लभते जीवसंपदः ॥' इति । विशेषमाह वराहः—'यथेष्टवेलागमनं प्रशस्तं हस्तैंद्रवोपेंद्रसुरेशभेषु । कृत्वा प्रयाणं श्रवणे श्रियोऽर्थी वसेन्न जातु क्षितिपः स्वसीम्नि ॥' इति । उपेंद्रः=श्रवणः । सुरेशभं=ज्येष्ठा ॥ ४९–५० ॥

अथ समयबलमनुष्टुभाह—

उषःकालो विना पूर्वां गोधूलिः पश्चिमां विना ।
विनोत्तरां निशीथः सन् याने याम्यां विनाऽभिजित् ॥५१॥

उषःकाल इति ॥ स्पष्टार्थं पद्यम् । सन्शब्दश्चरणचतुष्टयेऽपि संबध्यते । निशीथोऽर्धरात्रम् । याने यात्रायाम् । सर्वत्र विनायोगे द्वितीया, 'पृथग्विनानानाभिस्तृतीयान्यतरस्याम्' इति पक्षे द्वितीयाया अपि विधानात् । अत्र हि 'दग्धा दिगैंशी ज्वलिता दिगैंद्री' इति वसंतराजोक्त्या तुर्यस्य तत्तद्दिगवस्थानात्तस्यां तस्यां दिशि यात्रा निषिद्धेति युक्तिसिद्धोऽयमर्थ उपनिबद्धः । वराहेण दिग्विशेषे समयविशेषः प्रशस्तोऽभिहितः । यथा—'पूर्वाह्णे तूत्तरां गच्छेन्मध्याह्ने पूर्वतो व्रजेत् । अपराह्णे व्रजेद्याम्यां मध्यरात्रे तु पश्चिमाम् ॥' इति । वसिष्ठोऽपि—'पूर्वाह्णेऽप्युत्तरां गच्छेत्प्राचीं मध्यंदिने तथा । दक्षिणां चापराह्णे तु पश्चिमामर्धरात्रके ॥ न तत्रांगारको विष्टिर्व्यतीपातो न वैधृतिः । सिध्यंति सर्वकार्याणि यात्रायां दक्षिणे रविः ॥' इति । अत्राभिजित्प्रशंसामाह श्रीपतिः—'अष्टमो ह्यभिजिदाह्वयक्षणो दक्षिणाभिमुखयानमंतरा । कीर्तितोऽपरककुप्सु सूरिभिर्यायिनामभिमतार्थसिद्धये ॥' इति ॥ ५१ ॥

अथ लग्नादिभावानां संज्ञा अनुष्टुभाह—

लग्नाद्भावाः क्रमादेह १ कोश २ धानुष्क ३ वाहनम् ४ ।
मंत्रो५ऽरि६मार्ग७आयुश्च८हृद्९व्यापारा१०गम११व्ययाः१२

लग्नादिति ॥ हृन्मनः, 'स्वांतं हृन्मानसं मनः' इत्यभिधानात् । आगमः प्राप्तिः । अन्यत्स्पष्टार्थं पद्यम् । 'मूर्तिः कोशो धन्विनश्च वाहनं मंत्रसंज्ञकः । शत्रुर्मार्गस्तथायुश्च मनोव्यापारसंज्ञकः ॥ प्राप्तिरप्राप्तिरुदयाद्भावाः स्युर्द्वादशैव

ते ।' इति नारदोक्तेः । एवंविधसंज्ञाकथनप्रयोजनं तु क्रूरग्रहसाहित्ये तत्तद्भावानां पीडा शुभग्रहसाहित्ये तद्भावानां शुभमित्युत्सर्गः ॥ ५२ ॥

अथ विशिष्यशुभाशुभफलं शालिन्याह—

**केंद्रे कोणे सौम्यखेटाः शुभाः स्युर्याने पापास्त्र्यायषट्खेषु चंद्रः । नेष्टो लग्नांत्यारिरंध्रे शनिः खेऽस्ते शुक्रो लग्नेण्नगांत्यारिरंध्रे ५३**

केंद्रे इति ॥ केंद्राणि १।४।७।१०, कोणं ९।५, यदि सौम्यग्रहाः केंद्रे कोणे स्युस्तदा याने शुभफलदाः स्युः; अर्थादन्येषु भावेष्वशुभफलदाः । पापग्रहास्त्र्यायषट्खेषु तृतीयैकादशषष्ठदशमस्थानस्थाः शुभफलदाः; अर्थादन्येषु अशुभफलदाः । चंद्रो लग्नांत्यारिरंध्रे लग्नद्वादशषष्ठाष्टमेषु स्थितो नेष्टोऽशुभफलदः । शनिः खे दशमे नेष्टोऽशुभफलदः । शुक्रोऽस्ते सप्तमे नेष्टः । यदाह वसिष्ठः—'घ्नंति क्रूरास्त्रिषडायभावान्हित्वा परान्सदा । पुष्णंति सौम्यखचराः षष्ठाष्टांत्यं विना परान् ॥ लग्नषष्ठाष्टमं हंति चंद्रः शुक्रोऽस्तगस्तथा । मृत्युलग्नस्थितश्चंद्रो यातुर्मृत्युप्रदः सदा ॥' इति । अन्यत्रापि 'केंद्रत्रिकोणगैः सौम्यैस्त्रिभवारिगतैः परैः । अलग्नारिःफचंद्रेण यात्राभीष्टफलप्रदा ॥' इति । वराहोऽपि—'प्रायो जगुः सहजशत्रुदशायसंस्थाः पापाः शुभाः सवितृजं परिहृत्य खस्थम् । सर्वत्रगाः शुभफलं जनयंति सौम्यास्त्यक्त्वाऽस्तसंस्थममरारिगुरुं यियासोः ॥' इति । श्रीपतिरपि—'क्रूरग्रहास्त्र्यरिदशायगताः शुभाः स्युर्हित्वा शनिं दशमभावगतं यियासोः । मूर्त्यादिभावनिचये सकलेऽपि सौम्याः श्रेष्ठा भृगोस्तनयमस्तगतं विहाय ॥' इति । लग्नेडिति । लग्नेट् यात्रालग्नस्वामी नगांत्यारिरंध्रे सप्तमद्वादशषष्ठाष्टमस्थश्चेत्तदानिष्टोऽशुभफलदो मृत्युद इत्यर्थः । यदाह गुरुः—'लग्नपो मृत्युदो याने रंध्रास्तारिव्ययोपगः । केऽप्याहुर्भयदो धन शेषस्थाने शुभावहः ॥' इति । अथात्र यात्राकालीनलग्ने लग्नादिद्वादशभावावस्थितानां ग्रहाणां फलानि बादरायणप्रोक्तानि लिख्यंते । यथा—'राहुर्भौमदिवाकरेंदुरविजाः प्रस्थानलग्ने गताः क्षुत्तृष्णाऽग्निविषायुधज्वरभवा रोगाश्च नानाविधाः । जीवः सोमसुतस्तथैव भृगुजो यात्रोदयस्थो नृणां सा यात्रा धनधान्यभोगसुखदा पुण्यैः कृतैर्लभ्यते ॥ १ ॥ कोशस्थाने नराणामसुरगुरुबुधैर्धर्मकामार्थलाभं पुत्रोत्पत्तिं च जीवो धनसुखमतुलं शत्रुपक्षक्षयं च । मंदो बंधं सुदीर्घं क्षतिमवनिसुतः कोशहानिं च भास्वांश्चंद्रः कुर्याद्वैरं प्रियजनसहितं राहुरुत्पातरूपम् ॥ २ ॥ प्रस्थाने भूमिपस्य क्षितिसुतरविजौ तिग्मभानुश्च राहुः शुक्रश्चंद्रात्मजो वा सुरगुरुरथवा शीतरश्मिर्धनायुः । दुश्चिक्यस्थानसंस्थो गजतुरगरथान्प्राप्य सर्वार्थसिद्धिं जित्वा शत्रूनशेषान्विचरति वसुधागोकुले गोपवेषः ॥ ३ ॥ बंधुस्थानगतो ददाति विपुलान्भोगान् भृगोरात्मजो जीवः शत्रुविनाशमिच्छति महालाभं करोतींदुजः । हानिं बंधुगतः करोति रविजो वृद्धिं क्षयं चंद्रमा राहु-

१ हित्वा इति पाठः ।

भूमिसुतस्तथोष्णकिरणः कुर्वंति दुःखं महत् ॥ ४ ॥ कुर्यादर्थस्य सिद्धिं सुत-भवनगतो वाक्पतिः शत्रुनाशं शुक्रः शीतांशुपुत्रः सुरगुरुसदृशं युद्धकाले करोति । सूर्यश्चंद्रश्च भौमो दिनकरतनयः सिंहिकानंदनोऽसौ सर्वे ते पंचमस्था विविधभयकराः पार्थिवानां रणोर्व्याम् ॥ ५ ॥ शत्रुस्थाने नराणां दिनकरतनयो भूमिपुत्रस्तथार्कः शीतांशुर्दैत्यमंत्री रजनिकरसुतः सैंहिकेयोऽथ जीवः । कुर्वंत्येवार्थलाभं परबलमथनं सिद्धिमाप्नोति कार्ये शत्रुघ्नं भूमिपानां भवति हि गमने धर्मकामार्थसिद्धिः ॥ ६ ॥ नाशं शुक्रदिवाकरार्कतनया राहुस्तथा भूमिजः क्षिप्रं शत्रुवशं नयंति पथिकं स्थाने स्थिताः सप्तमे । सौम्यो मित्रसमागमं सुरगुरुः स्त्रीवित्तलाभं नृणां चंद्रोऽभीष्टसुखं ददाति च धनं यात्रासु जामित्रगः ॥ ७ ॥ आरोग्यं चंद्रपुत्रो जनयति भृगुजः सर्वकामार्थसिद्धिं जीवो रक्षत्यशेषं सुतमिव जननी यात्रिकं नैधनस्थः । चंद्रार्कौ चेत्तमो वा जनयति नियतं शत्रुपक्षस्य वृद्धिं भौमश्चार्कात्मजो वा जनयति सततं तस्करेभ्यो भयं च ॥ ८ ॥ शुक्रोऽतिसौख्यं नवमो बुधश्च जीवो जयश्रीधनधान्यलाभम् । चंद्रार्कसौरा नवमाः सभौमाः कुर्वंत्यनेकान्पुरुषस्य दोषान् ॥ ९ ॥ कर्मस्थानस्थितोऽर्कः प्रचुरजयकरः पुष्टिदः शीतरश्मिर्जीवः संग्रामकाले भवति शुभकरः सर्वकार्यप्रदो ज्ञः । शुक्रः साम्राज्यलक्ष्मीं वितरति च महीनंदनः प्राज्यकीर्तिं राहुर्वैरापनुत्तिं जनयति सततं दीर्घरोगं तथार्किः ॥ १० ॥ शशिबुधगुरुशुक्राः सूर्यराह्वार्किभौमा व्रजति हि नरनाथे क्षिप्रमेकादशस्थाः । द्रुतमिह रिपुवर्गं घ्नंति नूनं प्रयातुर्विचरति गजराजो युद्धमध्यस्थितो वा ॥ ११ ॥ क्षितिजरविसुतार्काः सैंहिकेयो नराणां जनयति रजनीशः श्रेष्ठभृत्येषु भेदम् । रिपुजयधननाशं भृत्यनाशं च कुर्युर्यदि बुधगुरुशुक्रा द्वादशस्था भवंति ॥ १२ ॥' इति बादरायणीययात्रायां भावफलानि । एवं सम्यग्यात्रालग्नं दत्त्वा यात्रा कार्येति तात्पर्यार्थः । तत्रैकस्मिन्नपि लग्नभंगिनि ग्रहे सति यात्रा सर्वथा न विधेया । तथा हि—मृत्युमूर्त्योश्चंद्रस्य स्थितिर्लग्नभंगिनी । सप्तमस्थानस्थितिः शुक्रस्य । दशमस्थानस्थितिः शनैश्चरस्य । एवंविधे ग्रहेऽन्येषु ग्रहेषु शुभफलदातृष्वपि नैव कार्या यात्रा । अत्र कश्चिद्वल्गुः—चेल्लग्नाधीशः केंद्रे स्यात्तदा लग्नभंगी ग्रहो दोषदो न भवति । यथा-मकरलग्नाधीशः शनिस्तुलायां दशमे स्यात्, कुंभलग्नाधीशो वृश्चिके, तथा वृषलग्नाधीशो भृगुः सप्तमे वृश्चिके स्यात् तुलाधीशश्च मेषे, तथा कर्कराशिस्थितश्चंद्रो यात्रालग्ने कर्काख्ये स्यात्; एतादृशे यात्रालग्ने दोषो नास्तीति । उक्तं च जातकेऽपि—'लग्नाधिपो यदा केंद्रे लग्नादेकादशालये । सर्वग्रहकृतं रिष्टमेकोऽपि विलयं नयेत् ॥' इति । सत्यम् । इदं तावद्वाक्यं जातकविषयकमेवेति । तत्रैवोत्पत्तिसत्त्वात् । 'ये जातकोक्तक्षितिपालयोगैर्महीभृतो यांति रिपून्विजेतुम् । तेषां प्रकोपाग्निरुपैति शांतिं विद्वेषियोषाश्रुजलप्रवाहैः ॥' इतिवदतिदेशाभावाच्च । प्राग्वाक्यं तु निर्मूलमेव निबंधेष्वदृष्टत्वात् । सत्यपि वा समूलत्वे

सामान्यदूषणस्य सामान्यत एव परिहार उचितः । यथा—'घ्नंति क्रूराव्ययाय-वर्जं हि भावान् व्यापारं निहतः सूर्यभौमौ' इति वाक्यात्सर्वे क्रूरग्रहास्तृतीयैकादशस्थानवर्जितानि स्थानानि घ्नंति, तत्र सूर्यभौमौ दशमस्थानं 'न हतः' इतिवत्सूर्यो वा भौमो वा चेल्लग्नाधीशः सन् लग्नचतुर्थसप्तमस्थानगतो भवति तदा केंद्रगतत्वेन 'घ्नंति क्रूराव्ययायवर्जं हि भावान्' इति तस्यापवादांतरमप्यस्तु न काप्यस्माकं हानिः । यत्र तु विशिष्यस्थानविशेषो ग्रहव्यक्तिविशेषश्चोच्यते । यथा—'शुक्रश्चास्तं मृत्युमूर्तिस्तथेंदुं' 'हित्वा शनिं दशमभावगतं हिमांशुम्' इति च । तत्रैतस्माद्विशेषवाक्यान्निषेधप्राबल्यमेवास्ति । यथा—शुक्रश्चेल्लग्नाधीशः सन् सप्तमाख्यकेंद्रे चंद्रो वा लग्नाधीशः सन् लग्न एव चेत्कर्के शनिर्वा लग्नाधीशः सन् दशमाख्यकेंद्रे एव चेत्स्यात्तदा निषेध एव प्रबलः, 'सामान्यशास्त्रतो नूनं विशेषो बलवान्भवेत्' इत्युक्तेः । अतो निषिद्धकेंद्रव्यतिरिक्तकेंद्रेषु स्थिताः सोमशुक्रशनयः सामान्यतोऽरिष्टपरिहारकर्तारः स्युरिति कथमस्य सामान्यवाक्यत्वम् ? उच्यते,—लग्नाधिप इत्यत्र लग्नपदेन द्वादशराशय उच्यंते । तेषामधिप इत्यनेन सप्तापि ग्रहाः प्रोच्यंते । केंद्रपदेन च चत्वारि स्थानान्युच्यंते इति परिहारवाक्ये सामान्यतोऽभिहितमस्ति । निषेधवाक्ये तूभयोः स्थानविशेषग्रहविशेषयोरभिधानमिति प्रागुक्तदोषो वज्रायितः । एवं लालाटिकयोगेष्वपि ध्येयम् । यथा–'प्राच्यादौ तरणिस्तनौ भृगुसुतो लाभव्यये भूसुतः कर्मस्थः' इति लालाटिकयोगवाक्येषु यदि प्राच्यां यातुः सिंहलग्नाधीशः सूर्यो लग्न एव चेत्तदा लालाटिकत्वेन दोष एव प्रबलो ननु लग्नाधीशस्य केंद्रगतत्वेन सिंहलग्नं शुभदम् । एवं दक्षिणस्यां यातुर्मेषवृश्चिकयोरधीशो भौमः क्रमेण मकरस्थ उच्चगतः सिंहस्थो मित्रगृहगतोऽपि तथैव । एवं पश्चिमायां यातुर्मकरकुंभयोरधीशः शनिः क्रमेण कर्के सिंहे वा तथैव । एवं उत्तरस्यां यातुर्मिथुनकन्यालग्नयोरधीशो बुधः क्रमेण कन्यायां धनुषि वा चेत्तदापि तथैव । उच्चगतत्वादिकं तु दैवागतम् 'केंद्रे दिगधीशे' (११४७) इति परिहारवाक्यं तु तत्तत्स्थानविशेषव्यतिरिक्तकेंद्रपरं द्रष्टव्यम् । यदिदं वाक्यमेष्वपि केंद्रेषु प्रवर्तते तदा प्राचीदक्षिणाप्रतीच्युत्तरासु महादिक्षु लालाटिकदोषाभिधानं खपुष्पायितमेव स्यात्तासु विषयालाभात् । किंतु विदिक्षु चतसृषु विशिष्यैव लालाटिकदोषाभिधानं वक्तव्यं स्यान्मुनीनाम् । एवं च–'लग्नपो मृत्युदो याने भ्रास्तारिव्ययोपगे' इति गुरुवाक्येऽपि लग्नाधीशस्य सप्तमस्थानगतत्वमशुभमुक्तम् । तत्र सप्तमस्थानस्य केंद्रत्वेन परिहारोऽनुचित एव । अन्यथा दोषोक्तिरेव वक्तव्या भवेदिति । ननु–'एको हि दोषो गुणसन्निपाते निमज्जतींदोः किरणेष्विवांकः' इति दृष्टांताल्लग्नस्य समीचीनस्थानस्थितबहुग्रहसाहित्येन सबलत्वात्तद्दोषाभाव इति चेत् चिंत्यमेतत् । यतो 'वक्रः पंथा मीनलग्नेऽशके वा कार्यासिद्धिः स्यान्निवृत्तिश्च तत्र । नेष्टः कुंभोऽप्युद्गमेशस्थितो वा लग्ने चाप्यंशे च नौयानमिष्टम्' इति स्वरूपतो दुष्टयोः कुंभमीनसंज्ञकयोर्यात्रा-

लग्नयोर्ग्राह्यता भवन्मते प्रसज्येत । तत्रेष्टापत्तिरिति चेत् । ज्योतिःशास्त्रे हि सामान्यशास्त्रेणैव सर्वसिद्धविषयस्य व्यापृतत्वाद्विशेषशास्त्रे दत्तजलांजलिता-दोषप्रसंगः स्यात् । एवं च 'न हिंस्यात्सर्वा भूतानि' इत्यादिसाधारणवैदिक-वाक्यानां 'अग्नीषोमीयं पशुमालभेत' इत्यादिविशेषवाक्येष्वपि व्यापृतत्वा-द्विशेषशास्त्रोच्छेदापत्तिः । अत्र ग्रहाणां फलदातृत्वं सबलानां दुर्बलानां वा यादृशतादृशानां वा स्यादिति संदेहस्तत्र निर्णयमाह श्रीपतिः—'अस्तंगता ग्रहजिता रिपुदृष्टदेहा नीचस्थिता विरुचयोऽरिगृहं प्रयाताः । ऋक्षाण्यवश्य-कमपि स्वफलं विलग्ने दातुं क्षमाः खलु भवंति न खेचरेंद्राः ॥ युद्धे जिताः शुभफलानि विनाशयंति पापानि चाशु नितरां परिवर्धयंति' इति । 'औत्पा-तिकाः सवितृलुप्तकरा विरूक्षा नीचं गता रिपुगृहं च नभश्चरेंद्राः' इति सारावल्याम् । अत एव तादृशाधिकारविशेषमाह श्रीपतिः—'स्वोच्चे रूपं चरणरहितं स्वत्रिकोणे स्वभेऽर्धं नागांशानां त्रयमधिसुहृद्गेहगेऽमित्रभेंऽघ्रिः । अंशोऽष्टानां समगृहगते भूपभागोऽरिगेहे दंतांशः स्याद्धिरिपुगृहे नीचगे शून्यमेव ॥ एतच्छुभाख्यमशुभं च पुनर्गृहेषु स्वोच्चादिवर्तिषु वदंति तदून-मेकम्' इति ॥ ५३ ॥

अथ योगयात्रा व्याख्यायते । तत्र ग्रंथकृच्छंदःशास्त्रकृतपटुतराभ्यासं सूचयन्नानाविधैश्छंदोभिः मंजुभाषिणीप्रभृतिभिर्ग्रथितामावश्यकराजयात्रौप-यिकीं योगयात्रां वक्तुकामस्तदारंभप्रयोजनमाह—

योगात्सिद्धिर्धरणिपतीनामृक्षगुणैरपि भूदेवानाम् ।
चौराणामपि शकुनैरुक्ता भवति मुहूर्तादपि मनुजानाम् ॥ ५४ ॥

योगादिति ॥ पादाकुलकं छंदः । तल्लक्षणं वृत्तरत्नाकरे—'यदतीत-कृतविविधलक्ष्मयुतैर्मात्रासमादिपादैः कलितम् । अनियतवृत्तपरिमाणसहितं प्रथितं जगत्सु पादाकुलकम् ॥' इदं लक्षणम् 'द्विकगुणितवसुलघुरचलधृतिरिह' इत्येतत्प्रकरणे पठ्यते । तेन चरणचतुष्टये प्रत्येकं षोडशमात्रा ज्ञेयाः । तत्र गुरोर्मात्राद्वयं लघोर्मात्रैका मिलित्वा षोडश यथात्र पद्ये । अत्र प्रथम-तृतीयचतुर्थचरणेषु मात्रासमकलक्षणम् । उक्तं च 'मात्रासमकं नवमो ल्गांतम्' इति । मात्रासमकाख्ये छंदसि नवमो ल् लघुरित्यर्थः । गांतं पादांते गुरुः । द्वितीयचरणे उपचित्रालक्षणम् । उक्तं च 'उपचित्रा नवमे परयुक्ते' परा दशमी मात्रा तया युक्ते नवमे नवमदशममात्राद्वयेनैको गुरुः स्यादित्यर्थः । अत एवो-क्तम्—'यदतीतकृतविविधलक्ष्मयुतैः' इति । न चास्यत्र मात्रासाम्यम् । परंतु अनियतवृत्तपरिमाणसहितमिति तेन पादाकुलकमित्यन्वर्थसंज्ञाप्यस्ति । धरणिपतीनां राज्ञां योगाद्वक्ष्यमाणसहितयोगयात्रालग्नवशाद् दुष्टेऽपि तिथ्यादौ सिद्धिर्वांछितकार्यनिष्पत्तिः स्यात् । भूदेवानां ब्राह्मणानामृक्षगुणैर्नक्षत्रगुणै-श्चंद्रबलताराबलविहितनक्षत्रत्वादिभिः सिद्धिर्भवति । अपिशब्दात्पंचांगशु-द्ध्यादिष्वनावश्यकता । चौराणां शकुनैर्वक्ष्यमाणशुभसूचकशकुनैः सिद्धिर्भवति ।

केचित्तु शिवालिखितोक्तमुहूर्तात्सिद्धिः स्यादित्याहुः । यदाह नारदः—'फलसिद्धिर्योगबलाद्राज्ञो विप्रस्य धिष्ण्यतः । मुहूर्तशक्तितोऽन्येषां शकुनैस्तस्करस्य च ॥' इति । वराहोऽपि—'योगैः क्षितिपालविनिर्मिताः शकुनैस्तस्करचारणादयः । नक्षत्रबलैर्द्विजातयः क्षणवीर्यादितरो जनोऽर्थभाक् ॥' इति । द्विजातयो ब्राह्मणाः । अत्र द्विजातय इति ब्राह्मणक्षत्रियवैश्या इति भट्टोत्पलो व्याख्यत् । तन्न । नारदवाक्ये साक्षाद्विप्रपदोपादानात् । अत एव वसिष्ठोऽपि—'फलसिद्धिर्धिष्ण्यगुणैरग्रजानां भवेत्सदा । योगलग्नैः क्षितीशानां चौराणां शकुनैर्भृशम् ॥' इत्यग्रजपदं प्रायुंक्त । नन्वत्र राज्ञां योगैर्यात्रा फलसिद्धिदेत्युक्तं, तत्रेयं योगयात्रा किं सर्वदोषापवादिका, उत विषयविवेकः? इति । सर्वापवादिकेति चेत् किं सर्वशब्देन शुभाशुभप्रकरणाभिहिता दोषा उच्यंते, उत एतद्यात्राप्रकरणोक्तनक्षत्रशूलवारशूलपारिघदंडप्रतिशुक्रादिका दोषाः, उताविशेषात्सर्वेऽपि दोषाः? इति । तत्र यदि शुभाशुभप्रकरणोक्तदोषापवादकत्वे सति योगयात्रालग्ने तद्विचारस्य त्यागप्रसंगादिति चेत्; न । 'न हिंस्यात्सर्वा भूतानि' 'अग्नीषोमीयं पशुमालभेत' इति वदन्नोत्सर्गापवादस्य शिष्टसंमतत्वाभावात् । अत्र यात्राप्रकरणोक्तदोषापवादकत्वे सति नक्षत्रशूलप्रतिशुक्रादीनां राजविषयकाणामनभिधानप्रसंगात् । तथा हि—'ज्येष्ठायां पुरुहूतदिङ्मुखगतः प्राप्तो बलिर्बंधनं याम्यामाजपदे मुरश्च दितिजो यातो मुरारेर्वशम् । रोहिण्यां नमुचिः प्रतीच्यभिगतश्चूर्णीकृतो वज्रिणा सौम्यामर्यमदैवतेन गतवान्मृत्योर्वशं शंबरः ॥' इति । 'प्रतिशुक्रं प्रतिबुधं प्रतिभौमं गतो नृपः । बलेन शक्रतुल्योऽपि हतसैन्यो निवर्तते ॥' इत्यादिषु नृपविषयत्वात् । ननु नक्षत्रशूलकथने वसिष्ठादिभी राजपदोपादानं तादृशो दृष्टांतो वा नाभ्यधायि, कथं नृपतिविषयतांगीक्रियते? सत्यम् । सामान्यवाक्यस्य विशेषवाक्यानुरोधाद्विशेषे पर्यवसानम् । यथा—'पुरोडाशं चतुर्धा करोति, आग्नेयं चतुर्धा करोति' इतिवत् । तेन न वैश्वदेवाख्यपुरोडाशस्य चतुर्धाकरणम् । किंच योगादेव फलसिद्धिस्तदा 'न षष्ठी न च द्वादशी नाष्टमी' (११।९) इत्येतत्प्रकरणपठितं तिथिशुद्ध्यादिकं व्यर्थं स्यात् । न च विप्राद्यर्थं तिथिशुद्ध्यादिसार्थकं स्यादिति वाच्यम् । तत्रापि नक्षत्रगुणादिभिरेव प्राशस्त्यावबोधनात् । अथोभयदोषापवादकत्वे इष्टे शुभाशुभप्रकरणं यात्राप्रकरणं चोल्लंघ्य स्थलांतरेऽतिदेशं विना योगयात्रोपनिबंधः कर्तव्यः स्यात् शवप्रतिकृतिदाहश्राद्धनिर्णयकथनवत् । नहि तत्र पंचांगदोषा युज्यंते । यद्येवं संस्कारप्रकरणगृहप्रवेशप्रकरणादीनां पार्थक्योपनिबंधात्पंचांगदोषापवादकता कुतो नास्तीति चेत् । उच्यते—तत्र हि 'पंचांगसंशुद्धदिनादिके च' इति वसिष्ठादिभिः 'पर्वाख्यरिक्तोनतिथौ शुभेऽह्नि' इति ग्रंथकृताप्यतिदेशोपनिबंधस्य कृतत्वात् । अतः सर्वापवादिकेत्ययुक्तः पक्षः । तस्मात् 'अबाधेनोपपत्तौ बाधो न न्याय्यः' इति हेतोर्विषयविवेक इत्येव युक्तः पक्षः । स च यथा । यात्रा हि द्विविधा—एका साधारणयात्रा, अपरा समरविजयाख्या । साधारणयात्रा तु वर्णचतुष्टयसाधारणी ।

तत्र बहुधा बहुना कालेन बहुदोषहानं बहुगुणोपादानं चोदितम् । द्वितीया समरविजयाख्या राज्ञामेव । तत्र योगयात्रा समरविजयोपयोगिनी । उपस्थिते युद्धे पंचांगशुद्धिर्बहुदिवसप्राप्येति तद्विचारानुपयोगात् । उक्तं च वसिष्ठेन योगयात्राप्रारंभे—'उक्ता साधारणी यात्रा युद्धयात्रां ब्रवीम्यहम् । व्रजंति ये नृपाः सूक्ष्मे लग्ने ते जयिनः सदा ॥ योगलग्नैर्युता राज्ञां यात्रा च विजयप्रदा । विचित्रान्योगलग्नांस्तान्सम्यग्वक्ष्ये समासतः ॥' इति । अन्ये तु युद्धं विनैव आत्ययिककार्यविषयैव योगयात्रेत्याहुः । यदाह पराशरः—'आत्ययिककार्यपाते दैवेन निपीडिते च यातव्ये । केवलबलप्रयोगादपि याता सिद्धिमाप्नोति ॥' इति । तत्रापि केवलेन योगयात्राबलेनैवंविधे विषये यात्रा न विधेया, किंतु यथासंभवं पंचांगसंबंधिनां द्विविधानां दोषाणां त्यागः तादृशानां गुणानां चोपादानं विधेयम् । संति हि द्विविधा दोषाः-नैसर्गिका अन्याहिताश्च । यथा तिथेः 'न षष्ठी न च द्वादशी' (११।१०) इति नैसर्गिको दोषः । 'चापांत्यगे गोघटगे' (६।६४) इति दग्धदोषोऽन्याहितः । एवं वारनक्षत्रयोगानां द्वैविध्यं ऊह्यम् । एवं गुणा अपि द्विविधाः 'हयादित्य-' (११।०) इति विहितनक्षत्रत्वान्नैसर्गिको गुणः । शुभग्रहस्य साहित्यमन्याहितो गुणः । एवमन्येषामपि गुणानां द्वैविध्यमूह्यम् । तत्र यथा राज्ञां यथासंभवं दोषहानं गुणोपादानं चांगीकृत्य योगयात्रा विधेया । एवं ब्राह्मणादीनामप्यावश्यककार्यातिपातविषये नक्षत्रादिबलं ग्राह्यं । यथासंभवं च लग्नादिष्वमन्दोषगुणानां हानोपादाने न्याय्ये स्त इति । तथाच लल्लः—'यातव्ये व्यसनगते ह्यनिष्टदैवे च भूपतिस्त्वरया । लग्नैरभीष्टकल्पैर्व्रजेत्तिथौ भेषु च समेषु ॥ कार्येषु पराधीनेष्वनेकसाधारणेषु शीघ्रेषु । प्रायेण गमनमिष्टं सदैव ननु सूक्ष्मचिंताऽस्ति' इति ॥ अत एव—'न तिथिर्न च नक्षत्रं न ग्रहो नैदवं बलम् । योगमेव प्रशंसंति वसिष्ठात्रिपराशराः ॥' इति वराहवाक्यं योगयात्रालग्नप्रशंसापरं ननु तिथ्यादीनामपवादकमिति तात्पर्यम् । ननु पूर्वं दोषहानपूर्वकं सर्वार्वानलग्नाभिधानं कृतमेवास्ति, कोऽस्ति योगयात्रालग्नेषु विशेषः ? उच्यते,-शुक्रः सप्तमो लग्नभंगकर्तेत्युक्तं प्राक्, अत्र तु शशिनि चतुर्थे सति शुक्रः सबुधश्चेत्सप्तमस्थस्तदा तद्योगयात्रालग्नमतीव शुभफलदम् । एतादृशं योगलग्नं ग्रंथकृद्वक्ष्यति । तत्र कियतामेव ग्रहाणां नियतस्थानावस्थित्या प्रागुक्तरीत्याऽशुभमपि शुभफलदायकं लग्नं भवति । यदाह श्रीपतिः—'यथा हि योगादमृतायते विषं विषायते मध्वपि सर्पिषा समम् । तथा विहाय स्वबलानि खेचराः फलं प्रयच्छंति हि योगसंभवम् ॥' इति । योगात् दुग्धादिद्रव्ययोगेन शोधनादित्यर्थः । सर्पिर्घृतम् । स्वभावतो लग्नप्राबल्ये योगोऽपि चेत्संभवेत्तदातीव शुभफलदं लग्नम् । अत एव योगेन यात्रा योगयात्रेत्यन्वर्थसंज्ञाविज्ञानमपि प्रतीयते । योगो नाम कियतां ग्रहाणां नियतस्थानावस्थितत्वम् । एवं वक्ष्यमाणेषु सर्वेष्वपि योगयात्रालग्नेषु यथासंभवं किंचिद्दूषणं समुह्य तस्मादेव वाक्याद्दोषाभावपूर्वकं गुणाधिक्यमस्तीति व्याकर्तव्यमित्यलमतिप्रसंगेन ॥ ५४ ॥

अथ योगयात्रालग्नमाह—

**सहजे रविर्दशममे शशी तथा शनिमंगलौ रिपुगृहे सितः सुते।**
**हिबुके बुधो गुरुरपीह लग्नगः स जयत्यरीन्प्रचलितोऽचिरान्नृपः॥**

**सहजे इति** ॥ मंजुभाषिणीछंदः। तल्लक्षणं च—'सजसा जगौ भवति मंजुभाषिणी' इति। अस्यार्थः—सगणजगणसगणजगणगुरवो यस्य पद्यस्य चरणे तन्मंजुभाषिणीनाम। यथा···। ननु मंजुभाषिणीति पद्यनामधेयमुक्तं, लक्षणं तु चरणस्यैवोक्तं न सकलस्य पद्यस्य। सत्यम्। एतच्चरणलक्षणं पादचतुष्टयेऽपि ध्येयम्। समवृत्तत्वात्। त्रिविधानि हि वर्णच्छंदांसि—समम्, अर्धसमं, विषमं चेति 'सममर्धसमं वृत्तं विषमं च तथापरम्' इति तत्रैवोक्तत्वात्। तत्र यस्य पद्यस्य चत्वारश्चरणा एकलक्षणग्रथितास्तत्समवृत्तम्। उक्तं च 'अंघ्रयो यस्य चत्वारस्तुल्यलक्षणलक्षिताः। तच्छंदःशास्त्रतत्त्वज्ञाः समवृत्तं प्रचक्षते॥' तुल्यमेकम्। यथा द्रुतविलंबितम्—'नवपलाशपलाशवनं पुरः स्फुटपरागपरागतपंकजम्। मृदुलतान्तलतान्तमलोकयत्स सुरभिं सुरभिं सुमनोभरैः॥' इति। तल्लक्षणं चेदम्—'द्रुतविलंबितमाह नभौ भरौ' इति। यस्य पद्यस्य प्रथमचरणस्तृतीयचरणश्चैकलक्षणलक्षितो द्वितीयश्चतुर्थश्चाप्येकलक्षणलक्षितस्तदर्धसमं वृत्तम्। 'प्रथमांघ्रिसमो यस्य तृतीयश्चरणो भवेत्। द्वितीयस्तुर्यवद्वृत्तं तदर्धसममुच्यते॥' इति तत्रैवोक्तत्वात्। एतेनार्धं सममर्धसममित्यन्वर्थसंज्ञापि। यथा पुष्पिताग्रा—'अनुगिरमृतुभिर्वितायमानामथ स विलोकयितुं वनांतलक्ष्मीम्। निरगमदभिराद्धुमादृतानां भवति महत्सु न निष्फलः प्रयासः॥' इति। पुष्पिताग्रालक्षणं चेदम्—'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति। यस्य चतुर्षु चरणेषु प्रत्येकं भिन्नं भिन्नं लक्षणं तद्विषमं वृत्तम्। उक्तं च—'यस्य पादचतुष्केऽपि लक्ष्म भिन्नं परस्परम्। तदाहुर्विषमं वृत्तं छंदःशास्त्रविशारदाः॥' इति। यथोद्गता—'ननु सर्व एव समवेक्ष्य कमपि गुणमेति पूज्यताम्। सर्वगुणविरहितस्य हरेः परिपूजया कुरुनरेंद्र को गुणः॥' इति। लक्षणं चास्येदम्—'सजसादिमे सलघुकौ च नसजगुरुकैरथोद्गता। त्र्यंघ्रिगतभनजला गयुताः सजसा जगौ चरणमेकतः पठेत्॥' इति। मगणादिकगणा उक्ताः भामहेन—'मस्त्रिगुरुस्त्रिलघुश्च नकारो भादिगुरुः पुनरादिलघुर्यः। जो गुरुमध्यगतो रलमध्यः सोऽन्तगुरुः कथितोऽन्तलघुस्तः॥' इति। एवं सत्यत्र मंजुभाषिणीछंदसः समवृत्तत्वादेकचरणलक्षणाभिधानं कृतं केदारेणेत्यलमतिप्रसंगेन। अथ प्रस्तुतमनुसरामः। **सहज इति**। रविः सहजे तृतीयस्थाने स्यात्, शशी चंद्रो दशमभे दशमस्थाने, शनिमंगलौ रिपुगृहे षष्ठस्थाने स्याताम्, सितः शुक्रः सुते पंचमस्थाने, बुधो हिबुके चतुर्थस्थाने, गुरुर्लग्नगश्चेत्स्यात्, अपि-तथाशब्दौ पादपूरणे; इहैवंविधे योगे यात्रालग्ने

नृपो राजा प्रचलितः शत्रुनगरजयार्थं कृतयात्रः सन्नचिरात्स्वल्पकालेनैवारीन् शत्रून् जयति वशीकरोतीत्यर्थः। यदाह वराहः—'लग्ने गुरुर्बुधभृगू हिबुकात्मजस्थौ षष्ठौ कुजार्कतनयौ दिनकृत्तृतीयः। चंद्रश्च यस्य दशमे भवति प्रयातुस्तस्याभिवांछितफलाप्तिरलं नृपस्य ॥' इति। बुधो हिबुके, भृगुरात्मजे, इति यथासंख्येनान्वयः। क्वचित् 'भृगुबुधौ' इति पाठः, स चिंत्यः; 'भृगुर्हिबुके' इति तावद्युक्तं परंतु रविस्तृतीये बुधः पंचमे इतीदमयुक्तम्। नहि सूर्यात्तृतीयो बुधः क्वचिदपि संभवेत्, तस्मात्प्रागुक्त एव साधीयान् पाठः ॥ ५५ ॥

अथान्ययोगयात्रालग्नमाह—

भ्रातरि सौरिर्भूमिसुतो वैरिणि लग्ने देवगुरुः।
आयगतेऽर्के शत्रुजयश्चेदनुकूलो दैत्यगुरुः ॥ ५६ ॥

भ्रातरीति ॥ अस्य गाथाछंदः। तल्लक्षणं च—'विषमाक्षरपादं वा पादैरसमं दशधर्मवत्। यच्छंदो नोक्तमत्र गाथेति तत्सूरिभिः प्रोक्तम् ॥' इति। 'अत्र ग्रंथे उक्तछंदोभ्यो यदन्यद्विषमाक्षरपादं पादैरसमं वा छंदस्तद्गाथाख्यम्' इति केचिदाहुः। अपरे तु प्रागुक्तेषु समानाक्षरपादेषूक्तादिष्वपि विशिष्य यस्याभिधानं नोक्तं तद्गाथेत्यूचुः। तदेतदर्थद्वयं यच्छंदो नोक्तमत्र गाथेनीत्येतस्यावृत्त्या लभ्यम्। अत एव पिंगलः सूत्रकारोऽपि मंमुग्धाकारेण–'अत्रानुक्तं गाथा' इत्यवोचत। छंदोग्रंथांतरेऽस्य नामास्ति। भ्रातरि तृतीये सौरिः शनिः स्यात्, वैरिणि षष्ठे भूमिसुतो मंगलः, लग्ने देवगुरुः, आय एकादशस्थानं तत्र गतोऽर्कश्च; एवंविधे योगे राज्ञः शत्रुजयो भवेत्। चेद्दैत्यगुरुः शुक्रोनुकूलो यातव्यदिक्पृष्ठवर्ती भवति। यदाह वराहः—'होरातृतीयरिपुलाभगतैः क्रमेण जीवार्किभौमरविभिर्भृगुजेऽनुकूले। यातोऽनिदसमपि शत्रुबलं निहंति नैशं तमिस्रमिव तिग्ममयूखमाली ॥' इति। भृगुजानुकूल्यं यातव्यदिक्पृष्ठवर्तित्वं विवक्षितम्। यदाह बादरायणः—'लग्नत्रिलाभारिगतैः क्रमेण जीवार्किसूर्यावनिजैः सितश्च। यातव्यदिक्पृष्ठगतो नरेंद्रः शत्रोर्बलं हंति गतोऽचिरेण ॥' इति ॥ ५६ ॥

अथान्ययोगयात्रालग्नमाह—

तनौ जीव इंदुर्मृतौ वैरिगोऽर्कः।
प्रयाता महींद्रो जयत्येव शत्रून् ॥ ५७ ॥

तनौ जीव इति ॥ गाथाछंदः प्राग्वत् स्वमते ग्रंथांतरे च। तनौ लग्ने जीवो गुरुः स्यात्, मृतावष्टमस्थाने इंदुः स्यात्, वैरिगः षष्ठस्थानगतोऽर्कश्चेत्स्यात्; एवंविधे योगे प्रयाता गंता महींद्रो राजा शत्रून् जयत्येव। यदाह श्रीपतिः—'गुरुर्लग्ने रविः षष्ठे रंध्रेणेंदुश्च गच्छतः। यस्य तस्यारिसेनाग्रे खलमैत्रीव न स्थिरा ॥' इति। रंध्रेणेत्युपलक्षणे तृतीया। अत्र केचित् 'रंध्रे नेंदुः' इति पाठं पठंति।

१ छन्दःशास्त्रकृतांमतमसम्मतम्।

तत्र रंध्रेऽष्टमे स्थाने इंदुर्नापेक्षितो यत्र कुत्राप्यस्तु चंद्र इति व्याकुर्वते । तदशुद्धम् । यस्मात्स्पष्टमाह वराहः—'गुरुरुदये रिपुराशिगतोऽर्को यदि निधनेऽपि च शीतमयूखः । भवति गतोऽत्र शशीव नरेंद्रो रिपुवनितानतामरसानाम् ॥' इति । नारदोऽपि—'जीवार्कचंद्रा लग्नारिरंध्रगा यदि गच्छतः । तस्याग्रे स्खलमैत्रीव न स्थिरा रिपुवाहिनी ॥' इति । बादरायणोऽपि—'गुरुर्विलग्ने रिपुराशिगोऽर्कस्तथाष्टमे शीतमयूखमाली । गतोऽत्र योगे रिपुकामिनीनां वक्त्रारविंदेषु शशित्वमेति ॥' इति ॥ ५७ ॥

अथान्ययोगयात्रालग्नमाह—

लग्नगतः स्याद्देवपुरोधाः ।
लाभधनस्थैः शेषनभोगैः ॥ ५८ ॥

लग्नगत इति ॥ अत्र सुप्रतिष्ठायां पंक्तिच्छंदः । तल्लक्षणं च–'भ्गौ गिति पंक्तिः' । यथा बृहस्पतिर्लग्नगतः स्यात्, अन्ये ग्रहा लाभधनस्था एकादशद्वितीयस्थानस्थाश्चेदेवंविधे योगे राज्ञो विजयः । उक्तं च नारदेन—'लग्नस्थे त्रिदशाचार्ये धनायस्थैः परग्रहैः । गतस्य राज्ञोऽरिसेना नीयते यममंदिरम् ॥' इति । श्रीपतिनाऽपि—'वाक्पतौ तनुस्थिते वित्तलाभगैः परैः । गच्छतोऽरिवाहिनी नीयतेऽन्तकालयम् ॥' इति ॥ ५८ ॥

अथान्ययोगयात्रालग्नमाह-

द्यूने चंद्रे समुदयगेऽर्के जीवे शुक्रे विदि धनसंस्थे ।
ईदृग्योगे चलति नरेशो जेता शत्रून्गरुड इवाहीन् ॥ ५९ ॥

द्यून इति ॥ अत्र पंक्तौ मत्ताच्छंदः । तल्लक्षणं च–'ज्ञेया मत्ता मभसगयुक्ता' । चंद्रे द्यूने सप्तमस्थाने सति, अर्के समुदयगे लग्नगते सति, जीवे शुक्रे विदि बुधे एषु त्रिषु ग्रहेषु धनसंस्थेषु द्वितीयस्थानेषु सत्सु एवंविधे योगे चेन्नरेशश्चलति तदा शत्रून् जेता जेष्यति । कः कानिव ? गरुडोऽहीन्सर्पान् यथा जयति । यदाह वराहः—'शुक्रवाक्पतिबुधैर्धनसंस्थैः सप्तमे शशिनि लग्नगतेऽर्के । निर्गतो नृपतिरेति कृतार्थो वैनतेयवदरीन्विनिहन्ति ॥' इति ॥ ५९ ॥

अथान्यदपि योगलग्नमाह—

वित्तगतः शशिपुत्रो भ्रातरि वासरनाथः ।
लग्नगते भृगुपुत्रे स्युः शलभा इव सर्वे ॥ ६० ॥

वित्तगत इति ॥ अस्यानुष्टुभि चित्रपदाछंदः । तल्लक्षणं च–'भौ गिति चित्रपदा गः' । शशिपुत्रो बुधो वित्तगतः द्वितीयस्थः वासरनाथः सूर्यो भ्रातरि तृतीयस्थः भृगुपुत्रे शुक्रे लग्नसंस्थे सति एवंविधे योगे चेद्राजा चलति तदा

शत्रवः शलभा इव स्युः । यथा शलभा अग्नौ स्वयमेव गत्वा पतंति तथा शत्रवोऽपि गंतृराजप्रतापानले पतिष्यंतीत्यर्थः । यदाह वराहः—'मूर्तिवित्त-सहजेषु संस्थिताः शुक्रचंद्रसुततिग्मरश्मयः । यस्य यानसमये रणानले तस्य यांति शलभा इवारयः ॥' इति ॥ ६० ॥

अथान्ययोगलग्नमाह—

उदये रविर्यदि सौरिररिगः शशी दशमेऽपि ।
वसुधापतिर्यदि याति रिपुवाहिनी वशमेति ॥ ६१ ॥

उदय इति ॥ अस्य गाथाछंदः प्रागवस्त्वमते ग्रंथांतरे च । यदि उदयलग्ने रविः स्यात्, सौरिः अरिगः षष्ठस्थः स्यात्, शशी दशमस्थः स्यात्, तदा एवंविधे योगे वसुधापतिः राजा याति तदा रिपुवाहिनी शत्रुसेना वशमेतीति । यदाह नारदः—'व्यापारशत्रुमूर्तिस्थैश्चंद्रमंददिवाकरैः । रणे गतस्य भूपस्य जयलक्ष्मी प्रमाणिका ॥' इति । व्यापारः=दशमम् । वराहोऽपि—'दिवा-करो लग्नगतो यदि स्यात्षष्ठेऽर्कसूनुर्दशमे शशी च । योगेऽत्र यातस्य न तिष्ठतेऽन्यो बलेन हीनस्य बलान्वितोऽपि ॥' इति ॥ ६१ ॥

अथान्ययोगयात्रालग्नद्वयमाह—

तनौ शनिकुजौ रविर्दशमभे बुधो भृगुसुतोऽपि लाभदशमे ।
त्रिलाभरिपुभेषु भूसुतशनी गुरुज्ञभृगुजास्तथा बलयुताः ॥ ६२ ॥

तनाविति ॥ अस्य जगत्यां जलोद्धतगतिछंदः । तल्लक्षणं च–'रसैर्जसजसा जलोद्धतगतिः' रसैः षड्भिः षड्भिरक्षरैर्यतिर्विच्छेदः । इत आरभ्य 'वसुधापति-र्यदि याति रिपुवाहिनी वशमेति' इत्युत्तरार्धं 'सहजे कुजः' (११।७२) इत्येतत्पद्यप-र्यंतमनुवर्तते । तेन यत्र यत्र श्लोके फलनिर्देशो नास्ति तत्र जिगमिषो राज्ञो विजयः स्यादिति वाक्यार्थो ध्येयः । तनौ लग्नस्थौ शनिमंगलौ यथासंभवं स्यातां, रविर्दशमभे स्यात्, बुधो लाभे दशमे वा स्यात्, भृगुसुतो वा लाभे दशमे वा स्यात्; तदेवंविधे योगे प्रचलितस्य राज्ञो जयः स्यात् । यदाह वराहः— 'सौरौ भौमे लग्नगेऽर्के खमध्ये कर्मण्याये भार्गवे चंद्रजे वा । यायान्नृपः शत्रु-देशं निहंतुं रत्नं शत्रुं कालवत्क्रूरचेष्टः ॥' इति । गुरुरपि—'आरे वा सूर्यजे वापि लग्नगे दशमे रवौ । कर्मण्याये सिते ज्ञे वा योगोऽयं यातुरुत्तमः ॥' इति । अयमेको योगः । अथ द्वितीययोगः । त्रिलाभरिपुभेषु तृतीयैकादश-षष्ठस्थानानामन्यतमस्थानद्वयस्थितौ भूसुतशनी मंगलशनैश्चरौ यदि स्यातां, येषुकस्मिन् कस्मिंश्चित्स्थाने स्थिता गुरुज्ञभृगुजा बलयुताः स्युः, तदेवंविधे योगे तथा राज्ञो विजय इत्यर्थः । यदाह नारदः—'त्रिषडायेषु सौरारौ बलवंतः शुभा यदि । यात्रायां नृपतेस्तस्य करस्था शत्रुमेदिनी ॥' इति । श्रीपति-रपि—'व्यायारिपु यमारौ चेच्छकिभाजः शुभग्रहाः । प्रयाणे नृपतेर्यस्य हस्तस्था तस्य मेदिनी ॥' इति । शुभग्रहाश्चंद्ररहिता विवक्षिताः । यदाह

गुरुः—'यमारौ त्रिषडायस्थौ बुधजीवसितास्तदा । महाबल्युता योगो यातु-रिष्टार्थदः सदा ॥' इति ॥ ६२ ॥

अथान्ययोगयात्राऌप्रमाह—

समुदयगे विबुधगुरौ मदनगते हिमकिरणे ।
हिबुकगतौ बुधभृगुजौ सहजगताः खलखचगः ॥ ६३ ॥

समुदयगे इति ॥ अस्य गाथाछंदः प्राग्वरग्रमते ग्रंथांतरे च । समुदयगे लग्नस्थे गुरौ सति, हिमकिरणे चंद्रे मदनगते सप्तमस्थे सति, हिबुकं चतुर्थस्थानं तत्र गतौ बुधशुक्रौ स्यातां, खलखचरे पापग्रहे सहजं तृतीयस्थानं तत्र गते च सति, एवंविधे योगे वसुधापतिर्यदि याति रिपुवाहिनी तदा वशमेति । यदाह वराहः—'पापास्तृतीये हिबुके सितज्ञौ जीवो विलग्ने मृगलांछनोऽस्ते । यस्योद्यमे तस्य बलं रिपूणां कृतं कृतघ्नेष्विव याति नाशम् ॥' इति ॥ ६३ ॥

अथान्ययात्रायोगमाह—

त्रिदशगुरुस्तनुगो मदने हिमकिरणो रविरायगतः ।
सितशशिजावपि कर्मगतौ रविसुतभूमिसुतौ सहजे ॥ ६४ ॥

त्रिदशगुरुरिति ॥ अस्य त्रिष्टुभि सुमुखीछंदः । तल्लक्षणं–'नजजलगैर्ग-दिता सुमुखी' । यथा बृहस्पतिर्लग्नगः स्यात् चंद्रः सप्तमे स्यात् शुक्रबुधौ दशमगतौ स्यातां सूर्य एकादशस्थः स्यात् शनिमंगलौ तृतीयस्थाने स्यातां एवंविधे योगे राज्ञो विजय एव । यदाह वराहः—'चंद्रेऽस्तगे देवगुरौ विलग्ने ज्ञशुक्रयोः कर्मणि लाभगेऽर्के । सौरारयोर्भ्रातृगयोश्च याता नृपः स्वभृ-त्यानिव शास्ति शत्रून् ॥' इति ॥ ६४ ॥

अथान्ययोगयात्राऌप्रमाह—

देवगुरौ वा शशिनि तनुस्थे वासरनाथे रिपुभवनस्थे ।
पंचमगेहे हिमकरपुत्रः कर्मणि सौरिः सुहृदि सितश्च ॥ ६५ ॥

देवगुराविति ॥ अस्य त्रिष्टुभि श्रीछंदः । तल्लक्षणं च 'पंचरसैः श्रीर्भत-नगगैश्च' पंचरसैः पंचभिः षड्भिरक्षरैश्च यतिः । गुरौ चंद्रे वा लग्नस्थे सति, सूर्ये षष्ठस्थे बुधश्च पंचमस्थाने शनिर्दशमे स्यात्, शुक्रः चतुर्थस्थाने स्यात्, एवंविधे योगे जिगमिषो राज्ञो विजय एव । यदाह वराहः—'गुरौ विलग्ने यदि वा शशांके षष्ठे रवौ कर्मगतेऽर्कपुत्रे । सितज्ञयोर्बंधुसुतस्थयोश्च यात्रा जनित्रीव हितानि धत्ते ॥' इति । जनित्री माता ॥ ६५ ॥

अथान्ययोगयात्राऌप्रमाह-

हिमकिरणसुतो बली चेत्तनौ त्रिदशपतिगुरुर्हि केंद्रस्थितः ।
व्ययगृहसहजारिधर्मस्थितो यदि च भवति निर्बलश्चंद्रमाः ६६

हिमकिरणसुत इति ॥ अस्य जगत्यां प्रमुदितवदनाछंदः । तल्लक्षणं च–'प्रमुदितवदना भवेन्नौ ररौ' । बुधो बली संश्चेत्तनौ लग्ने स्यात् हि निश्चयेन बृहस्पतिश्चेत्केंद्रगतः प्रथमचतुर्थसप्तमदशमानामन्यतमस्थानस्थः यदि च निर्बलो नीचाद्यशुभाधिकारप्राप्त्या बलरहितः सन् चंद्रो द्वादशतृतीयषष्ठनवमानामन्यतमस्थानस्थस्तदैवंविधे योगे जिगमिषो राज्ञो विजय एव । यदाह वराहः—'त्रिषण्णवांत्येष्वबलः शशांकश्चांद्रिर्बली यस्य गुरुश्च केंद्रे । तस्यारियोषाभरणैः प्रियाणि प्रियाः प्रियाणां जनयंति सैन्ये ॥' इति । तस्य सैन्ये प्रियाः सैनिका अरियोषाभरणानि बलादपहृत्य स्वस्त्रीभ्यो दत्त्वा तासां प्रियाणि जनयंतीत्यर्थः । अत्र यद्यपि बुधस्य स्थानविशेषो नाभ्यधायि तथापि लग्नस्थो बुध इति व्याकर्तव्यम् । यदाह गुरुः—'त्रिषण्णवांत्यगे चंद्रे लग्ने च सबले बुधे । गुरौ केंद्रे तदा याता राजलक्ष्मीं लभेन्नृपः ॥' इति ॥ ६६ ॥

अथान्ययोगयात्रालग्नमाह—

**अशुभखगैर्नवाष्टमदस्थैर्हिबुकसहोदरलाभगृहस्थः ।**
**कविरिह केंद्रगगीष्पतिदृष्टो वसुचयलाभकरः खलु योगः ॥६७॥**

अशुभखगैरिति ॥ अस्य जगत्यामभिनवतामरसाख्यं छंदः । तल्लक्षणं च वृत्तरत्नाकरे 'अभिनवतामरसं नजजाद्यः' इति । अशुभखगैः पापग्रहैर्हि निश्चितं नवमाष्टमसप्तमस्थानव्यतिरिक्तस्थानस्थैः सद्भिर्यदि कविः शुक्रः चतुर्थतृतीयैकादशस्थानस्थः सन् केंद्रस्थितो यो गीष्पतिर्गुरुस्तेन दृष्टो भवेत् एवंविधो योगो वसुचयो द्रव्यसमूहस्तस्य लाभकरः स्यात् । विजिगीषो राज्ञो विजयोऽपि स्यात् । उक्तं च वराहेण—'केंद्रोपगतेन वीक्षिते गुरुणा त्र्यायचतुर्थगे सिते । पापैरनवाष्टसप्तगैर्वसु तत्किं न यदाप्नुयान्नृपः ॥' इति । कश्चित्तु पापग्रहा नवमाष्टमसप्तमस्थाः शुभा एवेत्युक्तम् । तथा च गुरुः—'आत्राय-गृहगे शुक्रे केन्द्रे देवगुरौ स्थिते । सप्ताष्टनवराशिस्थाः पापा यान्तुः शुभप्रदाः ॥' इति । गृहं=चतुर्थस्थानम् ॥ ६७ ॥

अथान्ययोगयात्रालग्नमाह-

**रिपुलग्नकर्महिबुके शशिजे परिवीक्षिते शुभनभोगमनैः ।**
**व्ययलग्नमन्मथगृहेषु जयः परिवर्जितेष्वशुभनामचरैः ॥६८॥**

रिपुलग्नेति ॥ अस्य जगत्यां प्रमिताक्षराछंदः । तल्लक्षणं च 'प्रमिताक्षरा सजससैरुदिता' । षष्ठ ६ लग्न १ दशम १० चतुर्थ ४ स्थानानामन्यतमस्थानस्थे शशिजे बुधे शुभनभोगमनैः शुभग्रहैश्चंद्रगुरुशुक्रैः परिवीक्षिते दृष्टे सति द्वादश १२ लग्न १ सप्तम ७ स्थानेभ्यो व्यतिरिक्तस्थानस्थितैरशुभनामचरैः पापग्रहैरुपलक्षिते सति एवंविधे विशिष्टे योगे जिगमिषो राज्ञो जय एव स्यात् । यदाह वराहः—'लग्नारिकर्महिबुकेषु शुभेक्षिते ज्ञे द्यूनांत्यलग्नरहितेष्वशुभग्रहेषु ।

यातुर्भयं न भवति प्रतरेत्समुद्रं यद्यश्मनापि किमुतारिसमागमेषु ॥' इति ॥ ६८ ॥

अथान्ययोगयात्रालग्नद्वयमाह—

**लग्ने यदि जीवः पापा यदि लाभे कर्मण्यपि चेद्राज्याधिगमः स्यात्**
**द्यूने बुधशुक्रौ चंद्रो हिबुके वा तद्वत्फलमुक्तं सर्वैर्मुनिवर्यैः ॥६९॥**

लग्न इति ॥ अस्य जगत्यां मणिमालाछंदः । तल्लक्षणं च—'त्यौ त्यौ मणिमाला छिन्ना गुहवक्त्रैः' तगणयगणतगणयगणाः गुहः कार्तिकेयस्तस्य वक्त्राणि मुखानि षट् तैः षड्भिरक्षरैश्छिन्ना यतिसहिता । लग्ने गुरुर्यदि स्यात् अथवा लाभे एकादशस्थाने कर्मणि दशमस्थाने पापग्रहाः स्युस्तदा राज्यप्राप्तिर्भवेत् । उक्तंच वराहेण—'होराश्रिते देवगुरौ प्रयाता क्रूरग्रहैः कर्मणि लाभगैर्वा । कृत्वा रिपूणां क्षयमक्षतांगः क्षयं क्षितीशोऽक्षयकोशमेति ॥' इति । क्षितीशो राजा रिपूणां क्षयं नाशं कृत्वाऽक्षतांगः क्षतरहितशरीरः सन् अक्षयकोशमक्षीणकोशं क्षयं स्वगृहमेति आगच्छतीत्यर्थः । अथवा द्यूने सप्तमे बुधशुक्रौ स्यातां चंद्रश्च हिबुके चतुर्थस्थाने स्यादेवंविधे योगे सर्वैर्मुनिवर्यैस्तद्वत्फलमुक्तं राज्याधिगमः स्यात् । तथा च श्रीपतिः—'शशिनि चतुर्थे सविदि सितेऽस्ते जयति गतोऽरीन्हरिरिव युक्ते' इति । वराहोऽपि—'शशिनि चतुर्थगृहं समुपेते बुधसहिते च तथा भृगुपुत्रे । गमनमवाप्य पतिर्मनुजानां जयति रिपून्समरेण विनैव ॥' इति ॥ ६९ ॥

अथान्ययोगत्रयमाह—

**रिपुतनुनिधने शुक्रजीवेंदवो ह्यथ बुधभृगुजौ तुर्यगेहं स्थितौ ।**
**मदनभवनगश्चंद्रमा वांबुगः शशिसुतभृगुजांतर्गतश्चंद्रमाः ॥७०॥**

रिपुतनुनिधने इति ॥ अस्यातिजगत्यां चंद्रिकाछंदः । तल्लक्षणं च 'ननततगुरुभिश्चंद्रिकाऽश्वर्तुभिः' सप्तभिः षड्भिश्चाक्षरैर्यतिः । रिपुविति । अत्र स्थानसाम्याद्ग्रहसाम्याच्च यथासंख्यं ज्ञेयम् । यथा रिपौ षष्ठे शुक्रः तनौ जीवः निधने अष्टमे इंदुश्चंद्र एवंविधे विशिष्टे योगे राज्ञो विजयः स्यादित्यर्थः । यदाह वराहः—'गुरौ विलग्ने भृगुजेऽरिसंस्थे चंद्रेऽष्टमे हंति गतोऽरिसेनाम् । वृष्टिं यथा दक्षिणमार्गचारी वृद्धो यथा ह्रस्वतनुश्च शुक्रः ॥' इति । अयं प्रथमो योगः ॥ अथ द्वितीययोगः । अथ बुधभृगुजौ तुर्यगेहं चतुर्थस्थानं तत्र स्थितौ चेत्स्यातां चंद्रमा मदनभवनगः सप्तमस्थानस्थितश्चेत्स्यात्तदेवंविधेऽपि योगे राज्ञो विजयः । यदाह वराहः—'सितेंदुजौ चतुर्थगौ निशाकरश्च सप्तमे । यदा तदा गतो नृपः प्रशास्त्यरीन्विना रणम् ॥' इति । अथ तृतीयो योगः । अथवा चंद्रमा अंबुगश्चतुर्थस्थः सन् शशिसुतभृगुजयोर्बुधशुक्रयोरंतर्गतो मध्यवर्ती स्यात्, एवंविधे योगे गंतू राज्ञो विजय एव । यदाह वराहः—

'बुधभार्गवमध्यगते हिमगौ हिबुकोपगते च बुधः प्रवसेत् । पुरुहूतरिपुं यदि वांतकृतः पुरुहूतयमप्रतिमो भवति ॥' इति । ननु चंद्रस्य बुधभार्गवमध्यवर्तित्वं किं भिन्नराशिस्थितत्वे सत्युतैकराशिस्थितत्वे सति विवक्षितम्? तत्र भिन्नराशिकृतमध्यवर्तित्वे विवक्षिते सत्ययमर्थः स्यात् बुधभार्गवयोरन्यतरः तृतीयस्थाने परः पंचमे चंद्रश्चतुर्थे इति । एकराशिस्थितत्वे त्वंशकृतं पौर्वापर्यम् । चतुर्थे स्थाने बुधः शुक्रो वा स्वल्पांशः स्यात् । तयोरन्यतरोऽतिबह्वंशस्तत्रैव स्थाने चंद्रस्तत्रैवांशैर्मध्यवर्ती स्यात् । यथा बुधो राश्यादिः ३।५।१०. चंद्रः ३।१५।२० शुक्रः ३।२५।३० एवं पक्षद्वयसंभवे किं युक्तमिति? उच्यते-यद्यपि वराहवाक्ये संदेहस्तथापि बादरायणवाक्यादेकराशिव्यवधानकृतमेव मध्यवर्तित्वं विवक्षितम् । यदाह बादरायणः—'पुत्रांबुदुश्चिक्यगतैः क्रमेण दुश्चिक्यतोयात्मजसंस्थितैर्वा । बुधेंदुशुक्रैर्यमशक्रनाथकाष्ठां प्रयातस्य जयः प्रदिष्टः ॥' इति । काष्ठां दिशम् । एतच्चोपलक्षणं तेन लग्नस्थचंद्रः पार्श्ववर्तिस्थानद्वयवर्तिनोर्बुधशुक्रयोर्मध्यवर्ती चेत्स्यात्तदा सोऽपि राज्ञो विजयद इति । यदाह गुरुः—'चंद्रे ज्ञसितयोर्मध्ये हिबुके लग्नगेऽपि वा । प्रयाता श्रियमाप्नोति जित्वा शत्रून्महीमपि ॥' इति ॥ ७० ॥

अथान्ययोगयात्रालग्नद्वयमाह—

सितजीवभौमबुधभानुतनूजा-
स्तनुमन्मथारिहिबुकत्रिगृहे चेत् ।
क्रमतोऽरिसोदरखशात्रवहोरा
हिबुकायगैर्गुरुदिनेऽखिलखेटैः ॥ ७१ ॥

सितजीवेति ॥ अस्य गाथाछंदः प्राग्वत्स्वमते ग्रंथांतरे च । लग्ने शुक्रः स्यात्, सप्तमे जीवः, षष्ठे भौमः, चतुर्थे बुधः, तृतीये शनिः, एवंविधे विशिष्टे योगे राज्ञो विजय एव । यदाह वराहः—'यस्योदयास्तारिचतुस्त्रिसंस्थाः शुक्रांगिरोऽङ्गारकसौम्यसौराः । द्विपद्वलन्नीवदनानि तस्य कांतानि कांता न विलोकयंति ॥' इति । नारदोऽपि—'शुक्रार्यज्ञार्किभौमेषु लग्नास्तांबुत्रिशत्रुषु । गतस्याग्रे ह्यरिचमूरग्नौ लाक्षेव लीयते ॥' श्रीपतिरपि—'यमज्ञशुक्रेज्यमहीसुतेषु त्रिबंधुलग्नास्तरिपुस्थितेषु । विलीयते वैरिचमू रणाग्रे लाक्षेव वह्नौ नृपतेर्गतस्य ॥' इति । अयमेको योगः ॥ अथान्यः । गुरुदिने बृहस्पतिवासरे अखिलखेटैः समस्तग्रहैः सूर्यादिभिः सप्तभिः क्रमतोऽर्यादिस्थानस्थितैः सद्भिरुपलक्षिते सति; यथा-षष्ठे सूर्यः, तृतीये चंद्रः, दशमे मंगलः, षष्ठे बुधः, लग्ने गुरुः, चतुर्थे शुक्रः, एकादशे शनिरिति एवंविधे योगे राज्ञो विजय एव । यदाह वराहः—'सूर्यादयोऽरिसहजांबरशत्रुलग्नबंध्वायगाः सुरगुरोर्दिवसश्च यस्य । यानेऽरिसैन्यमुपगच्छति तस्य नाशं मीमांसकश्रमणकेष्विव तीर्थपुण्यम् ॥' इति । मीमांसाविचारस्तन्मात्रनिष्ठा मीमांसका ननु वेदार्थविदः एवंविधा ये

श्रमणका बौद्धसंन्यासिनस्तेषु वैदिकानां तीर्थगतेषु यथा तीर्थानां पुण्यभागः ॥ ७१ ॥

अथान्ययोगयात्रालग्नद्वयमाह—

सहजे कुजो निधनगश्च भार्गवो
मदने बुधो रविररौ तनौ गुरुः ।
अथ चेत्स्युरिज्यसितभानवो जल-
त्रिगताहि सौरिरुधिरौ रिपुस्थितौ ॥ ७२ ॥

सहज इति ॥ अस्यातिजगत्यां मंजुभाषिणीछंदः । तल्लक्षणमुक्तं प्राक् । यथा तृतीये मंगलः स्यात् अष्टमे शुक्रः सप्तमे बुधः षष्ठे सूर्यः लग्ने गुरुः एवंविधे योगे गंतुः राज्ञो विजय एव । यदाह वराहः—'त्रिनिधनतनुसप्तमारिसंस्थाः कुजसितजीवबुधा रविश्च यस्य । खलजनजनितेव लोकयात्रा न भवति तस्य चिराय शत्रुसेना ॥' इति । अयमेको योगः ॥ अथेति योगांतरमुच्यते—इज्यसितभानवो बृहस्पतिशुक्रसूर्याः जलत्रिगताश्चतुर्थतृतीयस्थानगताश्चेत्स्युः सौरिरुधिरौ शनिमंगलौ रिपुस्थितौ षष्ठस्थितौ भवेतां एवंविधे विशिष्टे योगे हि निश्चितं राज्ञो जयः स्यात् । यदाह वराहः—'कुजरविजयुतेऽरिभे गतानां जलसहजोपगतैः सितार्कजीवैः । रिपुबलमुपयाति नाशमाशु श्रुतमधनस्य कुटुंबचिंतयेव ॥' इति ॥ ७२ ॥

अथ नामविशेषपुरस्कारेण योगयात्रालग्नान्याह—

एको ज्ञेज्यसितेषु पंचमतपःकेंद्रेषु योगस्तथा
द्वौ चेत्तेष्वधियोग एषु सकला योगाधियोगः स्मृतः ।
योगे क्षेममथाधियोगगमने क्षेमं रिपूणां वधं
चाथो क्षेमयशोवनीश्च लभते योगाधियोगे व्रजन् ॥७३॥

एक इति ॥ अस्यातिधृत्यां शार्दूलविक्रीडितं छंदः । तल्लक्षणं च 'सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्' सूर्याश्वैर्द्वादशभिः सप्तभिश्चाक्षरैर्यतिः । ज्ञेज्यसितेषु बुधबृहस्पतिशुक्रेष्वेकोऽपि बुधो वा गुरुर्वा शुक्रो वा चेत्पंचमतपःकेंद्रेषु स्यात् पंचमे वा स्थाने तपसि नवमे वा केंद्रे प्रथमचतुर्थसप्तमदशमानामन्यतमे स्थाने वा स्यात् तदा योगाख्यो योगः । तथा तेषु ज्ञेज्यशुक्रेषु द्वौ बुधगुरू बुधशुक्रौ वा गुरुशुक्रौ वा चेत्पंचमतपःकेंद्राणामन्यतमस्थाने स्थानभेदेनैक्येन वा स्थितौ स्यातां तदा अधियोगाख्यो योगः । तथा सकला ज्ञेज्यसिता एषु पंचमतपःकेंद्राणामन्यतमस्थानेषु स्थानभेदेन स्थानैक्येन वा स्थिताश्चेत्स्युस्तदा योगाधियोगाख्यो योगः । अथ फलमाह—योग इति । योगे

व्रजन् राजा क्षेमं कुशलं लभते कुशलेन गतागतं करोतीत्यर्थः। अथाधियोगे राजा व्रजन् क्षेमं तथा रिपूणां शत्रूणां वधं च लभते । अथो योगाधियोगे व्रजन् राजा क्षेम यशोऽवनीप्रकाराच्छत्रुवधं च लभते॥ यदाह नारदः—'केंद्र-त्रिकोणेष्वेकेन योगः शुक्रज्ञसूरिषु । अधियोगः स चेद्वाभ्यां त्रिभिर्योगाधि-योगकः॥ योगे यियासतां क्षेममधियोगो जयावहः। योगाधियोगे क्षेमायु-र्विजयार्थविभूतयः॥' इति। वराहोऽपि—'एकेन वा बुधबृहस्पतिभार्गवाणां योगो भवेन्नवमपंचमकंटकेषु। द्वाभ्यां वदंति मुनयस्त्वधियोगमेषां योगाधि-योगमपरे त्रिभिरुद्दिशंति॥ योगेन ये नृपतयोऽरिपुरं व्रजंति क्षेमेण ते गम-नमागमनं च कुर्युः। क्षेमं यशोरिपुविनाशमथाधियोगे योगाधियोगग-मनेन जयेद्धरित्रीम्॥' इति । अत्र योगस्याधियोगस्य च भेदविचारः। तत्र योगस्याष्टादश १८ भेदाः। तथा हि-त्रयो ग्रहाः, षट् स्थानानि, तत्रैकस्य तु तनुस्थानषट्कस्थित्या षट्भेदाः,एवं गुरोः षट्,शुक्रस्यापि षट्,एवं योगेऽष्टादश भेदाः। अथाधियोगस्याष्टोत्तरशतभेदाः। यथा-इज्यज्ञशुक्राणां द्वयोर्द्वयोर्योगे त्रयो भेदाः, बुधगुरू बुधशुक्रौ गुरुशुक्रौ तत्र बुधगुर्वोरेकैकस्थानस्थित्या षट् भेदाः, स्थानभेदे तु बुधः प्रथमे स्थाने गुरुर्द्वितीयादिषु पंचसु स्थानेषु स्थितस्तदा पंच, एवं गुरुः प्रथमे स्थाने बुधो द्वितीयादिषु पंचसु तत्रापि पंचैव,अथ बुधो द्वितीये गुरुस्तृतीयादिषु चतुर्षु तदा चत्वारो भेदाः, एवं वैपरीत्येऽपि चत्वारः, तथा बुधस्तृतीये गुरुश्चतुर्थादिषु तदा त्रयः, एवं वैपरीत्येऽपि त्रयः, तथा बुधश्चतुर्थे गुरुः पंचमे षष्ठे वा तदा द्वौ भेदौ, एवं वैपरीत्येऽपि द्वौ, तथा बुधः पंचमे गुरुः षष्ठे तदैको भेदः एवं वैपरीत्येऽप्येकः, एवं बुधगुर्वोः सर्वे मिलिताः षट्त्रिंशत् ३६ भेदाः स्युः । अनेनैव प्रकारेण बुधशुक्रयोः षट्त्रिंशद्भेदाः। एवं गुरुशुक्रयोरपि तावंत एव । मिलित्वाऽष्टोत्तरशतं १०८ भेदा भवेयुः। अथ योगाधियोगभेदाः । तथा हि—इज्यज्ञशुक्राणां संघेनैकैकस्थानस्थित्या षट् भेदाः भवंति । अथ स्थानभेदेनोच्यंते भेदाः । तत्र द्वयोः समुदाय एको भिन्नश्चैवं ग्रहाणां त्रयो भेदाः स्युः। यथा हि संघः प्रथमस्थाने एको द्वितीयादिषु तदापि पंचैव । अथ द्विग्रहसंघो द्वितीये एकः, तृतीयादिषु चतुर्षु चत्वारो भेदाः,एवं भेदवैपरीत्येऽपि चत्वारः, तथा द्विसंघस्तृतीये एकः, चतुर्थादिषु तदा त्रयः,तथा द्विग्रहसंघश्चतुर्थे एकः,पंचमे षष्ठे वा तदा द्वौ भेदौ। एवं वैपरीत्येऽपि द्वौ। तथा द्विग्रहसंघः पंचमे एकः षष्ठे तदैको भेदः वैपरीत्येऽप्येक एव। एवं बुधगुरुसमुदायस्य शुक्रसहितस्य ३० त्रिंशद्भेदाः; एवमेव बुधशुक्रसंघस्य गुरु-सहितस्य त्रिंशत् ३०, तथा गुरुशुक्रसंघस्य बुधसहितस्य तावंत एव ३०, सर्व-भेदैक्यं ९०। अथ त्रयाणां ग्रहाणां स्थानत्रयाक्रांतत्वेन भेदा उच्यंते। तत्र बुधगुरुशुक्राणामन्योन्यपरिवर्तनात्षट्भेदा भवंति । यथा एतदुत्पत्तिप्रकारो भास्कराचार्येण 'अंकपाशगणितस्थानांतमेकादिचांकघातः' इत्यादिनाभ्य-धायि। तत्र त्रिभिर्ग्रहैः षण्णां स्थानानां मध्ये निरंतरस्थानत्रयाक्रांतत्वेन

चत्वारो भेदाः, एवं पंचभिरपि भेदैरित्येवं चत्वारो जाताः सर्वे चतुर्विंशतिः २४ । अत्रायं विचारः—बुधश्चतुर्थे उत्तरस्यां दिशि लालाटिकः केंद्रगतत्वाद्योगकर्ता च,

| | | | | | |
|---|---|---|---|---|---|
| बु. | बृ. | शु. | बु. | बृ. | शु. |
| बु. | शु. | बृ. | बृ. | बु. | बु. |
| !. | शु. | बु. | शु. | शु. | बृ. |

तत्र किं योगः प्रबलः, उत लालाटिक इति ? तत्र सामान्यविशेषभावेन लालाटिकयोग एव प्रबलः । एवं सप्तमश्च शुक्रो लग्नभंगी प्रबल एव । तथैवाधियोगे योगाधियोगे चोक्तहेतुः । तथैव बुधशुक्रयोर्लालाटिकलग्नभंगिदोषौ प्रबलाविति बालानामप्येतत्सुबोधम् । अत्र वसिष्ठकश्यपनारदाद्यृषिभिर्वराहादिभिश्च भूयांसि योगयात्रालग्नान्युक्तानि तानि तद्ग्रंथेभ्य एवावधार्याणि, ग्रंथाधिक्यभयादत्र ग्रंथकृता नोक्तानि ॥ ७३ ॥

अथ विजयादशमीसंज्ञकं सिद्धमुहूर्तमाह—

इषमासि सिता दशमी विजया शुभकर्मसु सिद्धिकरी कथिता ।
श्रवणर्क्षयुता सुतरां शुभदा नृपतेस्तु गमे जयसंधिकरी ॥७४॥

इषमासीति ॥ अस्य जगत्यां तोटकाख्यं छंदः । तल्लक्षणम्–'इह तोटकमंबुधिसैः प्रथितं ।' स्पष्टार्थं पद्यम् । यदाह नारदः—'वलक्षपक्षदशमी आश्विने विजयाभिधा । विजयस्तत्र यातॄणां संधिर्वा न पराजयः ॥' इति । कश्यपोऽपि—'मासीषे शुक्लदशमी सर्वदा विजयाभिधा । जयप्रदा सा यातॄणां संधिर्वा न पराजयः ॥' इति । वसिष्ठेन तु श्रवणसाहित्येऽतिप्राशस्त्यमुक्तम् । 'श्रवणर्क्षं यदा काले सा तिथिर्विजयाभिधा । विजयादशमी तत्र सर्वकार्येष्वनिंदिता ॥ यात्रायां जयदा राज्ञां संधिं वापि प्रयच्छति ॥' इति । आश्वयुक्शुक्ले इत्यनुवर्तते । काले=कालस्वामिकायां तिथौ दशम्याम् ॥ ७४ ॥

अथैवं महतायासेन विचारिते पंचांगशुद्धिसहिते लग्ने सत्यपि मनोविशुद्धौ वक्ष्यमाणशकुनाद्यावश्यकत्वं तत्रापि प्रबलदुर्बलभावं च वसंततिलकाछंदसाह—

चेतोनिमित्तशकुनैरतिसुप्रशस्तै-
र्ज्ञात्वा विलग्नबलमुर्व्यधिपः प्रयाति ।
सिद्धिर्भवेदथ पुनः शकुनादितोऽपि
चेतोविशुद्धिरधिका न च तां विनेयात् ॥ ७५ ॥

चेत इति ॥ अथशब्दो मंगलार्थ आनंतर्यार्थश्च । चेतोऽन्तःकरणं, निमित्तमंगस्फुरणादि, शकुनानि वक्ष्यमाणानि; एतैः खलु निश्चयेन सुप्रशस्तैः सद्भिः कृत्वा तथा सर्मीचीनं विलग्नबलमपि ज्ञात्वा उर्व्यधिपो राजा प्रयाति तथा सिद्धिर्वांछितकार्यसिद्धिर्भवति । यदाह नारदः—'मनोनिमित्तशकुनैर्लग्नं

लब्ध्वा रिपोः पुरम् । विजिगीषुर्यो व्रजति विजयश्रीस्तमेत्यलम् ॥' इति । निमित्तम्=अंगस्फुरणादि । श्रीपतिरपि—'शकुननिमित्तमनोभिरनिंदितैस्तदपवि-शुद्धिमिह प्रतिपद्य । रिपुविषयं प्रति यो विजिगीषुर्व्रजति तमेत्यचिराद्विज-यश्रीः ॥' इति । यदा तु लग्नादिबले सत्यपि निंद्यानि चेच्छकुनादीनि स्यु-स्तदा यात्रा निषिद्धैव । यदाह वसिष्ठः—'अशुभानि निमित्तानि उत्पात-शकुनानि च । यात्राकाले नृणां तेषां निधनायाधनाय वा ॥' इति । यदा तु दैवाच्छकुनलग्नादीन्यनिंद्यानि लब्धानि, मनोविशुद्धिश्च नास्त्येव, तत्र कस्य प्राबल्यमित्यत आह—अधिकेति । शकुनादितः सकाशाच्चेतोविशुद्धिरधिका तां चेतोविशुद्धिं विना नेयात् न गच्छेत् । यदाह कश्यपः—'निमित्तशकुना-दिभ्यः प्रधानो हि मनोजयः । तस्माद्यियासतां नृणां फलसिद्धिर्मनोजयात् ॥' इति । श्रीपतिश्च—'निमित्तराशिरेकतो नृणां मनस्तथैकतः । अयो यियासतां बुधैर्मनोविशुद्धिरिष्यते ॥' इति ॥ ७५ ॥

अथ शुभसूचकसकलपदार्थसमवायेऽपि यात्रायामवश्यनिषिद्धनिमित्ता-न्याह—

व्रतबंधनदैवतप्रतिष्ठाकरपीडोत्सवसूतकासमाप्तौ ।
न कदापि चलेदकालविद्युद्घनवर्षातुहिनेऽपि सप्तरात्रम् ॥ ७६ ॥

व्रतबंधनेति ॥ अस्य विषमछंदसि वसंतमालिकाछंदः । तल्लक्षणं च—'विषमे ससजा गुरू समे चेत्सभरा यश्च वसंतमालिका सा ।' व्रतबंधनं य-ज्ञोपवीतं, दैवतप्रतिष्ठा प्रसिद्धा, करपीडा विवाहः, उत्सवो होलिकादिः, सूतकं द्विविधं-जननसूतकं मरणसूतकं च; एतेषां पदार्थानां शास्त्रोक्तयावद्दिनसमा-प्त्यानामसमाप्तौ समाप्तिं विना कदापि नैव चलेद्गच्छेत् । यदाह नारदः—'उत्सवोपनयोद्वाहप्रतिष्ठाशौचसूतके । असमाप्ते न कुर्वीत यात्रां तत्र जिजी-विषुः॥' इति । आशौचं मरणाशौचं । सूतकं जननाशौचम् । अकालेति । विद्यु-त्प्रसिद्धा, घनो घनगर्जितं, वर्षा वृष्टिः, तुहिनं नीहारः; एषु पदार्थेष्वकालजेषु सत्सु सप्तरात्रं दिवससप्तकं न चलेत् । यदाह राजमार्तंडः—'पौषादिचतुरो मासान्प्राप्त। वृष्टिरकालजा । व्रतं यात्रादिकं चैव वर्जयेत्सप्तवासरान् ॥' श्रीपतिः—'वृष्टिरकालप्रभवा चतुर्षु मासेषु पौषपूर्वेषु । आसप्ताहं त्याज्यं व्रतं च यात्रादिकं तत्र ॥' इति । नारदोऽपि-'अकालजेषु नृपतिर्विद्युद्गर्जितवृष्टिषु । उत्पातेषु त्रिविधेषु सप्तरात्रं नतु व्रजेत् ॥' इति । त्रिविधत्वं दिव्यांतरिक्षभौम-भेदेन । यदाह श्रीपतिः—'सौदामिनीवर्षणगर्जितेषु माकालजेषु प्रवसेन्नरेंद्रः । आसप्तरात्राद्भुवमद्भुतेषु दिव्यांतरिक्षक्षितिजेषु चैवम् ॥' इति । ग्रंथकर्त्रात्रोत्पात-ग्रहणं न कृतम् । 'उत्पातग्रहतोऽग्रहांश्च' (१।३२) इति शुभाशुभप्रकरणेऽभि-हितत्वात् । अत्रोत्पाताः केतुव्यतिरिक्ता ग्रहण्याः । केतौ तु यावद्दर्शनं गमन-निषेधः । यदाह ऋषिपुत्रः—'यावदभ्युदितः केतुरस्तमेवोपगच्छति । तावद्राजा

न गच्छेत नावर्तेत गतोऽन्यथा ॥' इति। अत्र श्रीपतिवाक्ये 'सौदामिनी-' इत्यादिषु तात्कालिक एव निषेधः। आसप्तरात्रादिति तूत्तरार्धपठितेषूत्पातेष्वेव संबध्यत इत्याहुः। यदाह वसिष्ठः—'प्रयाणसमये यस्य विद्युन्नीहारवृष्टयः। अकालजा भवंत्येते तदा भंगकरा नृणाम् ॥' इति। ननु देहलीदीपन्यायेनात्र पूर्वत्रापरत्र वा संबंधः स्यान्नोभयत्र। कथम्—'सकृदुच्चरितः शब्दः सकृदर्थ-प्रत्यायकः' इति न्यायेनैकत्र पूर्वत्रापरत्र वा संबंधः स्यान्नोभयत्र। न चावृत्त्या सेत्स्यनीति वाच्यम्। आवृत्तौ प्रमाणाभावात् गौरवापत्तेश्च। अत्रोच्यते—आसप्तरात्रादित्युभयत्रापि संबध्यते। 'ध्रुवमत्रुतेषु दिव्यांतरिक्षक्षितिजेषु चैवम्' इति समुच्चयद्योतकस्य चकारस्य स्पष्टानुवृत्तिसूचकस्य चैवंकारस्य करणात्। अत एव नारदोऽपि—'अकालजेषु नृपतिर्विद्युन्नीहारवृष्टिषु। उत्पा-तेषु त्रिविधेषु सप्तरात्रं न तु व्रजेत् ॥' इति दोषानुवादपूर्वकम् 'सप्तरात्रं न तु व्रजेत्' इति वाक्यांतेऽभिदधाति स्म। कश्यपोऽपि—'उत्पातेषु त्रिविधेषु तडिद्गर्जितवृष्टिषु। अकालजेष्वेषु मन्सु सप्तरात्रं न तु व्रजेत् ॥' इति। 'प्रया-णसमये यस्य' इति वसिष्ठवाक्यं प्रयाणदिवसोत्पन्नस्य विद्युदादेर्दोषाति-शयसूचनार्थम्। तेन तस्मिन् दिने नैव गच्छेदित्यर्थः। वृष्ट्यर्थं स्वयमेवाग्रे वक्ष्यति 'यदि मास्सु' (१।८।५) इति ॥ ७६ ॥

अथ राज्ञ एकदिनसाध्ये एकस्मान्नगरान्नगरांतरगमने चिकीर्षिते दिक्शूल-त्वाद्यभावं वंशस्थवृत्तेनाह—

> महीपतेरेकदिने पुरात्पुरे यदा भवेतां गमनप्रवेशकौ।
> भवारशूलप्रतिशुक्रयोगिनीर्विचारयेन्नैव कदापि पंडितः ७७

महीपतेरिति ॥ यथा वाराणसीनगराच्चरणाद्रिगमनमेकदिनसाध्यम्। तद्वदन्यत्रापि महीपते राज्ञः पुरादेकस्मान्नगरात्पुरे नगरांतरे एकदिने एव गमनप्रवेशकौ स्याताम्। कोऽर्थः? यस्मिन्नेव दिने एकस्मात्पुराद्गमनं तस्मिन् दिने एव च नगरांतरे प्रवेशः। तत्र यथाकथंचित्पंचांगशुद्धिमालोच्य नक्षत्र-शूलं वारशूलं प्रतिशुक्रश्च योगिन्यश्च एतान् दोषान् पंडितः कदापि नैव विचारयेत्। उक्तं च भृगुणा—'एकस्मिन्नपि दिवसे यदि चेद्गमनं प्रवेशश्च। प्रतिशुक्रवारशूलं न चिंतयेद्योगिनीपूर्वम् ॥' इति। यदा तु दिनभेदेन यात्रा-प्रवेशौ भवतस्तदा यात्रायां प्रतिशुक्रवारशूलादिविचारोऽस्त्येव ॥ ७७ ॥

अथैकदिनसाध्ये निर्गमप्रवेशरूपे कार्ये चिकीर्षिते किं विचार्यमित्याशं-क्योत्तरमार्यावृत्तेनाह—

> यद्येकस्मिन्दिवसे महीपतेर्निर्गमप्रवेशौ स्तः।
> तर्हि विचार्यः सुधिया प्रवेशकालो न यात्रिकस्तत्र ॥ ७८ ॥

यदीति ॥ स्पष्टार्थं पद्यम्। प्रवेशकालो गृहप्रवेशप्रकरणे वक्ष्यते। यात्रिको यात्रासंबंधी कालः। तत्र नगरान्नगरांतरगमने। यदाह गर्गः—'प्रवेशनिर्गमौ

स्यातामेकस्मिन्नपि वासरे। तदा प्रावेशिकं चिंत्यं बुधैर्नैव तु यात्रिकम्॥' इति। प्रावेशिकं वासरं यात्रिकं च वासरम्, 'वा पुंसि क्लीबे दिवसवासरौ' इति वासरशब्दस्य पुंनपुंसकत्वात्सामानाधिकरण्येन संबंधः। अत्राहुः एतत्पद्योपनिबंधेन प्राक्पद्योपनिबंधस्याजागलस्तनायमानत्वमस्त्येककर्तृकत्वात्। भिन्नकर्तृके तु नायं दोषः, यथा संमतिवाक्ययोः। अत्र समाधिः—एकस्मिन्नेव दिने यात्राप्रवेशकालयोः कियद्घटिकाकृतो विलंबस्तिष्ठते। परंतु यात्रासमये भद्राव्यतीपातादिकं महादोषजातं विचार्यं वा न वेति संदेहः। यदि विचार्यं तदा विशिष्य प्रोक्तं प्रतिशुक्राद्यपि विचार्यम्। यदि न विचार्यं तदेवमपि न विचार्यम्। एवं सति भृगुवाक्यमनर्थकं स्यात्। ननु सामान्यविशेषवाक्यभावेन प्रतिशुक्रादिकं बाधकं भविष्यतीति चेन्न। एतत्प्रकरणपठितानां शुभाशुभप्रकरणस्थदोषाणां च नास्ति सामान्यविशेषभावः। अयं विचारो 'योगात्सिद्धिर्धरणिपतीनाम्' (११।५४) इति पद्यव्याख्यानेऽभिहितः। तस्मात्प्रकरणद्वयपठिते दोषविचारे प्रसक्ते विना वचनं दोषत्यागोपादानविचारो न निर्णयपदवीमवगाहत इति प्राक्पद्योपनिबंधः सार्थक इति॥ ७८॥

अथ प्रयाणे त्रिनवमीदोषमनुष्टुभाह—

प्रवेशान्निर्गमं तस्मात्प्रवेशं नवमे तिथौ।
नक्षत्रेऽपि तथा वारे नैव कुर्यात्कदाचन॥ ७९॥

प्रवेशादिति॥ त्रिविधा नवमी-प्रयाणनवमी प्रवेशनवमी तिथिश्च नवमी। तत्र गृहप्रवेशतिथितो नवमे तिथौ निर्गमं न कुर्यात्। इयं च प्रयाणनवमी। पुनश्च गमनदिवसान्नवमे तिथौ गृहप्रवेशं न कुर्यात्। इयं च प्रवेशनवमी। नवमी तिथिस्तु प्रसिद्धैव। यदाह वसिष्ठः—'नवमी ज्ञेया त्रिविधा प्रवेशनवमी प्रयाणनवमदिनम्। निर्गमनतः प्रवेशात्प्रयाणनवमी नवमदिनं च॥ सततं नवमीत्रितयं यात्रायां प्राणहानिदं प्राहुः।' इति। अत्र पद्ये तु नवमीदोषः प्रागुक्तत्वान्नोपनिबद्धः। ननु प्रयाणनवम्यां तिथौ च नवम्यां यात्रा निषिद्धेति युक्तं, प्रवेशनवम्यां तु बहिःस्थस्य पुंसो गृहप्रवेशनिषेधस्यैव युक्तत्वात्कथं पुनस्तस्य गृहाद्गमनसंभवो युक्तः? अतो दोषाभिधानमपि न युक्तम्। उच्यते,—यथा गृहान्निर्गतः पुमान् दैवाच्छीघ्रमेव कृतकार्यः सन् सप्तमेऽष्टमे वा तिथौ गृहं प्रविष्टः स चेत्पुनः कार्यनिपातप्रवेशतिथेः सकाशात्तृतीया द्वितीया वा तिथिः प्राङ्निर्गमतिथितो नवमीतिथिस्तस्यां तिथौ यात्रां नैव विदध्यादित्यर्थः। नक्षत्रेऽपीति। तथा तेनैव विधिः प्राङ्निर्गमतिथितो नवमीतिथिस्तत्तुल्येन प्रकारेण नक्षत्रे वारे वा कदाचन नैव कुर्यात्। अयमर्थः—यस्मिन्नक्षत्रे गृहप्रवेशः कृतस्ततो नवमे नक्षत्रे प्रयाणं न कार्यं। यथा मृगे प्रवेशो हस्ते गमनं। निर्गमनक्षत्रान्नवमे नक्षत्रे प्रवेशो न कार्यः। यथा हस्ते गमनमुत्तराषाढायां प्रवेशः। अत्रापि प्रागभिहितरीत्या यात्रापि निषिद्धा। एवं वारेऽपि ध्येयम्। यथा बुधवारे प्रवेशस्ततो नवमे दिवसे गुर्वाख्ये प्रयाणं न कार्यम्। गुरुदिवसाच्च नवमे शुक्राख्ये दिवसे प्रवे-

शोऽपि न कार्य इत्यर्थः । यदाह गर्गः—'प्रवेशान्निर्गमश्चैव निर्गमाच्च प्रवेशनम् । नवमे जातु नो कुर्याद्दिने वारे तिथावपि' इति ॥ ७९ ॥

अथ यात्रादिनीयं विधिं शालिनीछंदसाह—

अग्निं हुत्वा देवतां पूजयित्वा
नत्वा विप्रानर्चयित्वा दिगीशम् ।
दत्त्वा दानं ब्राह्मणेभ्यो दिगीशं
ध्यात्वा चित्ते भूमिपालोऽभिगच्छेत् ॥ ८० ॥

अग्निमिति ॥ स्पष्टार्थम् । यदाह नारदः—'हुताशनं तिलैर्हुत्वा पूजयेत्तु दिगीश्वरम् । तथा प्रणम्य भूदेवानाशीर्वादैर्नृपो व्रजेत् ॥' इति । वसिष्ठोऽपि—'दिगीश्वराकृतिं कृत्वा सुवर्णेन स्वमंत्रकैः । स्वस्ववर्णैः सुगंधाद्यैर्धूपैर्दीपैर्मनोरमैः ॥ तद्वर्णवस्त्रनैवेद्यैर्भक्त्या सम्यक्प्रपूजयेत् । दिगीशं च सुसंपूज्य तिलहोमं च कारयेत ॥ दैवज्ञाय ततो दद्यात्प्रतिमां भूषणान्विताम् । देवान्गुरून्पितृन्विप्रान्स्वस्तिवाचनपूर्वकम् । नत्वा तुष्टः प्रीतमना व्रजेन्मंगलनिःस्वनैः ॥' इति । अत्र यात्रादिनात्प्राक्सप्तदिनमध्ये गुह्यकपूजनमुक्तम् । त्र्यहं पूर्वं विजयस्नानमुक्तं सप्तमदिने प्रहसनञ्च । तदेतद्वराहेण बृहद्यात्रायां महता ग्रंथसंदर्भेणाभिहितं ततस्तत एवावधार्यम् । वसिष्ठादिभिस्तु दिगीश्वरध्यानान्यपि उक्तानि । तान्यपि तत्तत्पूजायां पाठात्तत्रैव द्रष्टव्यानीति नास्माभिर्लिख्यंते । गमनसमये ध्यानम् 'इंद्राय नमः अग्नये नमः' इत्यादिनापि संभवति ॥८०॥

अथ नक्षत्राणां दोहदाञ्शार्दूलविक्रीडिताभ्यामाह—

कुल्माषांस्तिलतंडुलानपि तथा माषांश्च गव्यं दधि
त्वाज्यं दुग्धमथैणमांसमपरं तस्यैव रक्तं तथा ।
तद्वत्पायसमेव चापपललं मार्गं च शाशं तथा
षाष्टिक्यं च प्रियंग्वपूपमथवा चित्रांडजान्सत्फलम् ८१
कौर्मं सारिकगौधिकं च पललं शाल्यं हविष्यं हया-
दृक्षे स्यात्कृसरान्नमुद्गमपि वा पिष्टं यवानां तथा ।
मत्स्यान्नं खलु चित्रितान्नमथवा दध्यन्नमेवं क्रमा-
द्भक्ष्याभक्ष्यमिदं विचार्य मतिमान्भक्षेत्तथाऽऽलोकयेत् ॥

कुल्माषानिति ॥ कौर्ममिति ॥ अत्र प्रथमपद्ये चतुर्थचरणे 'प्रियंग्वपूप' इत्यत्र छंदोभंगोऽस्ति सगणप्रक्षेपाकरणात् । सत्यम् । 'प्रन्हेवा' इति पिंगलसूत्रकारेण रेफसंयोगे च प्राग्वर्णस्य लघुत्वाभिधानात् । तथा च कालिदासः—

१ 'प्रणम्य देवभूदेवान्' इति जीर्णपुस्तके पाठः ।

'गृहीतप्रत्युद्गमनीयवस्त्रा'(कुमार० ७।११) इति, तद्वदत्रापि छंदोभंगाभावः। सूत्रेऽकारोच्चारणं मुखसुखार्थम्, तेन प्रीत्यादावपि लघुत्वम् । अन्ये तु संयोगमात्रे परभूते लघुत्वमतीव्रप्रयत्नतयेत्याहुः। उक्तं च सरस्वतीकंठाभरणे—'यदा तीव्रप्रयत्नेन संयोगादेरगौरवम् । न च्छंदोभंगमप्याहुस्तदा दोषाय सूरयः ॥' इति । 'एतच्च श्रुत्वा गदितो भवांस्त्वं सीतोपलंभे च कुरु प्रवृत्तिम्' इति च । ततो तीव्रप्रयत्नेनात्र प्रीत्यस्योच्चारणे प्राग्वर्णस्य लघुतैव तेन सगणप्रक्षेप एव । तथासति छंदोभंगाभाव इत्यलमतिप्रसंगेन । इयाणूक्ते अश्विन्यादिसप्तविंशतिभेषु नक्षत्रदोहदं 'कुल्माषान्'इत्यादिकमिदं भक्ष्याभक्ष्यं वर्णभेदेन देशभेदेन वा इदं भक्ष्यमेतदभक्ष्यमिति विचार्य भक्ष्यसंभवे भक्षेत् ,अभक्ष्यसंभवे आलोकयेत्पश्येत् स्पृशेद्वेत्यपि ध्येयम् । यथा—अश्विन्यां कुल्माषानक्षतस्विन्नमाषान्, भरण्यां तिलमिश्रतंडुलान्, कृत्तिकायां माषान्, रोहिण्यां गव्यं गोसंबंधि दधि, मृगे गव्यमाज्यं घृतं, आर्द्रायां दुग्धं गव्यमेव, पुनर्वसावैणमांसं हरिणमांसं, पुष्ये तस्यैव मृगस्य रक्तं रुधिरं, आश्लेषायां पायसं दुग्धमध्ये वह्निसंपर्केण पाचिततंडुलान्, मघायां चाषस्य पक्षिणः पललं मांसं, पूर्वाफल्गुन्यां मृगस्येदं मार्गं मांसं, उत्तराफल्गुन्यां शशस्येदं शाशं मांसं, हस्ते षाष्टिक्यं षष्टिकान्नं 'साठी' इति भाषायां, चित्रायां प्रियंगुः फलिनी, स्वात्यामपूपं घृतपक्को भक्ष्यविशेषः, विशाखायां चित्रांडजान्नानावर्णान्पक्षिणः, अनुराधायां सत्फलमुत्तमफलमाम्रादि, ज्येष्ठायां कूर्मस्य कच्छपस्येदं कौर्मं मांसं,मूले सारिकायाः पक्षिण्या इदं सारिकं मांसं,पूर्वाषाढायां गोधाया इदं गौधिकं मांसं, उत्तराषाढायां शाल्यं शल्यस्य पक्षिण इदं शाल्यं पललं मांसम्, 'श्वाविन्तु शल्यः' इत्यमरः। 'सारसलम्' इति भाषया । अभिजिति हविष्यं मुद्गादि, श्रवणे कृसरान्नं 'खिचडी', धनिष्ठायां मुद्गान्नं मुद्गौदनं, शतभे यवानां पिष्टं, पूर्वाभाद्रपदायां मत्स्यमिश्रितमन्नमोदनं, उत्तराभाद्रपदायां चित्रितान्नं नानाविधैरन्नैर्गोधूमादिभिः पक्वैर्मिश्रमन्नमोदनमिति केचित् । वयं त्वेवं व्याकुर्मः—यवतंडुलतिला मेषीदुग्धेन पक्त्वा मेषकर्णोपरकेनारक्ताश्चित्रान्नमोदनमिति चित्रितशब्देनोच्यते इति । रेवत्यां दध्यन्नं दध्योदनमिति । अपि-च-तथेत्यादीन्यव्ययानि पादपूरणार्थानि । यदाह नारदः—'कुल्माषांश्च तिलान्माषान्दधि गव्यं घृतं पयः । मृगं मांसं च तत्सारं पायसं चापकं मृगम् ॥ शशमांसं च षाष्टिक्यं प्रियंगुकमपूपकम् । चित्रांडजान्फलं कूर्मं शारीं गोधां च शल्यकम् ॥ हविष्यं कृसरान्नं च मुद्गान्नं यवपिष्टकम् । मत्स्यान्नं चित्रितान्नं च दध्यन्नं दाक्षभात्क्रमात् ।' इति । तत्सारं=मृगरुधिरम् । अत्र चित्रांडजाफलमित्येकमेव दोहदमाहुः । तन्न । 'चित्रांडं च फलं ततः' इति कश्यपेन पृथगुक्तेः । अंडा

१ दृश्यते चोदाहृतोऽयं पाठो मुद्राहरणत्वेन छंदोमंजरी-वृत्तरत्नाकरादिग्रन्थटीकाकारैः, पर कुमारसंभवे तु 'गृहीतपत्युद्गमनीयवस्त्रा' इति पाठमादृत्य 'पत्युर्वरस्योद्गमनीयवस्त्रा' इति मल्लिनाथो व्याख्यातवान् । क्षीरस्वाम्यपि 'गृहीतपत्युद्गमनीय' इत्युदाजहारोद्गमनीयशब्दविवरणे । रहस्यं त्वत्राभियुक्तैरेव विनिगमनीयम् ।

अंडजा उच्यंते, अंडगतवैचित्र्याभावात् । यत्तु श्रीपतिवाक्ये—'चित्रांड-जायाः फलम्' इत्युक्तं तस्यार्थं न विद्मः । 'प्राश्याः प्रियंगुश्चित्रांडजाः फलं यावकं कुलित्थाश्च' इति वराहपद्यव्याख्याने चित्राण्डाकाराः पक्षिणश्चित्रायां प्राश्याः, फलानि प्रसिद्धानि स्वाताविति भट्टोत्पलो व्याख्यत् । चित्राण्डलक्षण-मुक्तं दीपिकायाम्—'अजाक्षीरेण संस्विन्ना यवाः सतिलतंदुलाः । अजकर्णस्य रक्तेन रक्ताश्चित्राण्डसंज्ञकाः ॥' इति । अत्र यद्भक्ष्यं दुष्प्रापं वा तत्स्मृत्वा दृष्ट्वा दत्त्वा वा गंतव्यमित्याह गुरुः—'अलभ्यलभ्याऽभक्ष्यान्वा स्मृत्वा स्पृष्ट्वाथ तान्व्रजेत् । दत्त्वा वा सिद्धिमाप्नोति दुष्टभादिषु भूपतिः ॥' इति । आदि-शब्दात्तिथिवारदिग्दोहदेषु स्मरणं स्पर्शनं दानं भक्षणं वा यथासंभवं ध्येयम् । नक्षत्रदोहदेषु वसिष्ठादिपद्येषु कश्चिदिदमत्र विकल्पमतुल्यबलत्वात् । भक्षे-दिति 'भक्ष अदने' इति धातुश्चुरादिस्तस्मात् 'सत्यापपाश—' इति स्वार्थणि-जंताद्विधिलिङि तिपि शबादौ च कृते 'इतश्च' इतीकारलोपे भक्षयेदिति भवि-तव्यं ननु भक्षेदिति कथमयं प्रयोगः ? उच्यते,—चुरादिभ्यस्तु णिजनि-त्योऽस्ति. 'अनित्यण्यंताश्चुरादयः' इत्युक्तेरेवं सति णिजभावपक्षे विधिलिङि भक्षेदिति सिद्ध्यति । ज्ञापकं चात्र चुरादौ हि 'चिति स्मृत्याम्' इति चितिधातोरिदित्करणं तद्धि चिंतित इत्यादौ 'इदितो नुम् धातोः' इति नुमि 'अनिदितां हल उपधायाः क्ङिति' इति नलोपो मा भूदित्येवमर्थं कृतं नित्ये तु णिचि नलोपस्याप्रसंगादित्वं वृथैव भवति । नुमर्थमिति चेन्न । 'चिन्त स्मृत्यां' इति सनुमेव पठितव्यं किमिदित्त्वेन ? एवं सतीदित्त्वं कृतं ज्ञापकमुक्ता-र्थस्य संपन्नमिति । अत एव 'महीपालवचः श्रुत्वा जुघुषुः पुण्यमानवाः' इति विशब्दनार्थस्य चौरादिकस्य घुषेर्घोषयामासुरित्यर्थे जुघुषुरित्यादिमहा-कविप्रयोगोपपत्तिरिति वामनः । पक्षे चोरनीत्यादि प्रक्रियाकौमुदीकृत्वेत्याह संन्यलमतिप्रसंगेन । अथवा व्यक्तमेवं पठितव्यम् 'खादेत्तथालोकयेत्' इति ॥ ८१-८२ ॥

अथ दिग्दोहदमनुष्टुभाह—

आज्यं तिलौदनं मत्स्यं पयश्चापि यथाक्रमम् ।
भक्षयेद्दोहदं दिश्यमाशां पूर्वादिकां व्रजेत् ॥ ८३ ॥

आज्यमिति ॥ आज्यं घृतं पूर्वस्यां, तिलौदनं तिलमिश्रौदनं दक्षिणस्यां, मत्स्यं प्रसिद्धं पश्चिमायां पयो दुग्धं उत्तरस्याम् । एतद्यथाक्रमं दिश्यमभी-ष्टदिग्भवं दोहदं भक्षयेत्ततः पूर्वादिकामाशां जिगमिषितां दिशं व्रजेत् । यदाह श्रीपतिः—'आज्यतिलौदनमत्स्यपयोभिः प्राक्प्रभृति क्रमशः खलु भुक्त्वा' इति । नारदेन त्वन्यथोक्तम्—'घृतान्नं तिलपिष्टान्नं मत्स्यान्नं घृत-पायसम् । प्रागादिक्रमशो भुक्त्वा याति राजा जयत्यरीन् ॥' वसिष्ठेनापि—'घृतान्नं कृसरान्नं च मत्स्यान्नं घृतपायसम् । पूर्वादिषु क्रमाद्भुक्त्वा याता सिद्धिमवाप्नुयात् ॥' इति । अत्रैवं विरोधे विकल्पो यथादेशाचारं वा व्यवस्था ॥ ८३ ॥

अथ वारदोहदमनुष्टुभाह—

रसालां पायसं कांजीं शृतं दुग्धं तथा दधि।
पयोऽशृतं तिलान्नं च भक्षयेद्वारदोहदम् ॥ ८४ ॥

रसालामिति ॥ रसाला शर्करादधिमरीचकर्पूरैलासंसृष्टा, लोके 'शिखरिणी' इति प्रसिद्धा तां रविवारे। पायसकांज्यौ प्रसिद्धे सोममंगलवारयोः। शृतं पक्वं दुग्धं बुधे। 'शृतं पाके' इति साधु। तत्रापि 'क्षीरहविषोरेव' इति वार्तिकात्प्रस्तुते क्षीरे साधुत्वं। दधि प्रसिद्धं गुरुवारे, अशृतमपक्वं दुग्धं शुक्रे, तिलान्नं तिलमिश्रमोदनं शनौ। एतद्वारदोहदं रविवारादौ क्रमेण भक्षयेत्। यदाह श्रीपतिः—'मज्जिकां सघृतपायसं तथा कांजिकं शृतपयो दधि क्रमात्। क्षीरपक्वमथितं तिलौदनं वारदोहदविधिर्बुधैः स्मृतः ॥' इति। वसिष्ठनारदाभ्यां दुग्धस्य पक्वविशेषो नाभ्यधायि-'मज्जिका परमान्नं च कांजिकं च पयो दधि। क्षीरं तिलौदनं भुक्त्वा भानुवारादिषु क्रमात् ॥' इति। मज्जिका=रसाला, 'स्याद्रसाला तु मज्जिका' इत्यभिधानात्। गुरुस्तु विशेषमाह-'सूर्यवारे घृतं प्राश्यं चंद्रवारे पयस्तथा। गुडमंगारके वारे बुधवारे तिलानपि। गुरुवारे दधि प्राश्यं शुक्रवारे यवानपि। माषान्भुक्त्वा शनेर्वारे शूले गच्छन्न दोषभाक्' इति ॥ ८४ ॥

अथ तिथिदोहदं वसंततिलकाछंदसाह—

पक्षादितोऽर्कदलतंदुलवारि सर्पिः
श्राणा हविष्यमपि हेमजलं त्वपूपम्।
भुक्त्वा व्रजेद्रुचकमंबु च धेनुमूत्रं
यावान्नपायसगुडानसृगन्नमुद्गान् ॥ ८५ ॥

पक्षादित इति ॥ पक्षादितः प्रतिपत्तस्याः ल्यब्लोपे पंचमी। प्रतिपदादिपंचदशतिथिषु क्रमेण तिथिदोहदं भुक्त्वा व्रजेत्। यथा-प्रतिपदि अर्कस्य वृक्षविशेषस्य दलानि पर्णानि, 'रुई' इति भाषायां। द्वितीयायां तंदुलवारि क्षालिततंदुलजलं, तृतीयायां सर्पिर्घृतं, चतुर्थ्यां श्राणा यवागूः, 'आंबिलि'[1] इति भाषायां; पंचम्यां हविष्यं मुद्गादि, षष्ठ्यां हेमजलं प्रक्षालितसुवर्णजलं। सप्तम्यामपूपं, अष्टम्यां रुचकं बीजपूरफलम्; 'फलपूरो बीजपूरो रुचको मातुलिंगके' इत्यमरः; नवम्यामंबु जलं, दशम्यां धेनुमूत्रं स्त्रीगवीमूत्रं; न तु वृषमूत्रं धेनुशब्दग्रहणात्, एकादश्यां यावान्नं यवविकारं, द्वादश्यां पायसं, त्रयोदश्यां गुडमिक्षुविकारं, चतुर्दश्यामसृक् रुधिरं। पंचदश्यामन्नमुद्गानोदनमिश्रितमुद्गान्। यदाह बृहस्पतिः—'अर्कपत्रं भवेयातुः प्रथमायां तु भक्षणम्। द्वितीयायां भवेद्यातुर्भक्ष्यं सतंडुलोदकम् ॥ तृतीयायां तथा सर्पिर्यवागूः स्यात्ततः परं। पंचम्यां तद्धविष्यं स्यात्षष्ठ्यां वा कांचमोदकम् ॥ अपूपभुक्तिः

१ 'आंबट' इति लोके।

सप्तम्यामष्टम्यां बीजपूरकम् । नवम्यां तोयपानं स्याद्गोमूत्रं तु ततः परम् ॥ एकादश्यां यवानन्नाद्द्वादश्यां पायसं भवेत् । त्रयोदश्यां गुडं लेह्यं रुधिरं स्याच्चतुर्दशे ॥ मुद्गौदनं भवेद्भोज्यं पंचदश्यां यियासतः । पक्षयोरुभयोरेवं यात्रायोगे विधिः स्मृतः ॥' इति । दैवज्ञमनोहरेऽपि कश्चिद्भेदो यथा–'अर्क-दलतंदुलोदकसर्पींषि हविष्यदधिसुवर्णपयः । तिलवारिबीजपूरकमध्वाज्यक-सूत्रपिष्टिकाश्चापि ॥ तिलपिष्टकंदमूलानि शाकमथ शस्तवृक्षपर्णानि । प्रतिप-त्प्रभृतिषु भुक्त्वा प्रस्थाता सिद्धिमाप्नोति ॥' इति । ननु च–'अलभ्यलभ्या-ऽभक्ष्यान्वा स्पृष्ट्वा दृष्ट्वाथ तान्व्रजेत् । दत्त्वा वा सिद्धिमाप्नोति दुष्टभादिषु भूपतिः ॥' इति गुरूक्तेः वारादिषु दोहदाभिधानं सार्थकं, विहितेषु पुनर्नक्षत्रति-थिवारादिषु दोहदाभिधानं व्यर्थम्, दोषनिवारणफलको हि दोहदस्तदभावेन वैयर्थ्यप्रसंगात् । उच्यते–'दुष्टभादिषु भूपतिः' इत्यत्र दुष्टत्वं किं नैसर्गिकमु-तान्याहितं इति विशेषानभिधानात् सत्यावश्यकगमने राज्ञां बलेनैव गमने प्राशस्त्याभिधानात् यदि विहितनक्षत्रेष्वपि क्रूरग्रहसाहित्यादिर्महान् दोषः संभावितोऽस्ति तदपाकरणाय दोहदाभिधानं युक्तम् । एवं सर्ववर्णानामपि पारिघदंडे विरुद्धताराक्रूरग्रहसाहित्यादिमहादोषनिवारणाय दोहदोक्तिः सार्थ-क्याच्च । एवं विहिततिथिदोहदाभिधानं योगिन्यादिदोषनाशार्थं 'सक्रूरराशेर-शुभा तिथिः स्यात्' इत्येतद्दोषनिवारणार्थं च तद्दोषाभिधानम् । रत्नमालायां च—'आद्याश्चतस्रः क्रियपूर्वकाणां मेषाच्चतुर्णामिह पंचमी स्यात् । पराः परेषां परतस्तथैव सक्रूरराशेरशुभा तिथिः स्यात् ॥' इति । एवं वारदोहदोक्तिरपि वक्रिग्रहवारशूलादिदोषहान्या सार्थिका । दिग्दोहदोक्तिरपि त्रिविधप्रतिबुध-प्रतिशुक्रप्रतिभौमादिदोषहान्या सार्थिका ॥ ८५ ॥

अथ गमनसमयभवं विधिं प्रहर्षिणीछंदसाह—

**उद्धृत्य प्रथमत एव दक्षिणांघ्रिं द्वात्रिंशत्पदमभिगत्य दिग्ययानं । आरोहेत्तिलघृतहेमताम्रपात्रं दत्त्वादौ गणकवराय च प्रगच्छेत् ॥**

उद्धृत्येति ॥ राजा गमनसमय एव प्रथमतो दक्षिणांघ्रिं दक्षिणचरणमुद्धृत्य पश्चाद्द्वात्रिंशत्पदं द्वात्रिंशत्पदपरिमितां भूमिं गत्वा दिग्ययानं वक्ष्यमाणं दिग्विशेषे हस्त्यादियानमारोहेदिति । यदाह गुरुः—'पूर्वं दक्षिणमुद्धृत्य पादं यायान्नराधिपः । द्वात्रिंशतं पदं गत्वा यानमारुह्य संव्रजेत् ॥' वराहो-ऽपि—'कल्याणनामसचिवाप्तजनायुधीयदैवज्ञविप्रजनकंचुकिमध्यसंस्थः । द्वा-त्रिंशतं समुपगम्य पदानि भूमौ प्रागादि नागरथवाजिनरैस्तु यायात् ॥' इति । तिलेति । आरोहणसमये तिलघृतहेमसहितं ताम्रपात्रमादौ गणकवराय ज्यो-तिर्विच्छ्रेष्ठाय चकारादन्येभ्योऽपि ब्राह्मणेभ्यो यथाशक्ति दानं दत्त्वा प्रगच्छेत् । यदाह गुरुः—'ताम्रपात्रे तिलान्कृत्वा सघृतान्हेमसंयुतान् । निवेद्य विप्र-मुख्याय दैवज्ञाय विशेषतः ॥' इति ॥ ८६ ॥

अथावसरप्राप्तानि दिग्वशयानान्यनुष्टुभाह—

प्राच्यां गच्छेद्गजेनैव दक्षिणस्यां रथेन हि ।
दिशि प्रतीच्यामश्वेन तथोदीच्यां नरैर्नृपः ॥ ८७ ॥

प्राच्यामिति ॥ स्पष्टार्थं पद्यम् । नरैर्नरवाह्यैः सुखासनादिभिः । यदाह श्रीपतिः–'हस्तिरथाश्वनरैर्यदि राजा याति तदाऽऽशु जयत्यरिचक्रम्' इति । वराहोऽपि–'प्रागादि नागरथवाजिनरैस्तु यायात्' इति ॥ ८७ ॥

अथ निर्गमनस्थानानि पादाकुलकछंदसाह—

देवगृहाद्वा गुरुसदनाद्वा स्वगृहान्मुख्यकलत्रगृहाद्वा ।
प्राश्य हविष्यं विप्रानुमतः पश्यञ्शृण्वन्मंगलमेयात् ॥ ८८ ॥

देवेति ॥ देवा विष्ण्वादयः पूज्यंते यस्मिन् गृहे तद्देवगृहं, गुरुरध्यापकः स्वस्य कुलगुरुर्वा, स्वगृहं स्वशय्यागृहं, बहुस्त्रीत्वसंभवे मुख्यकलत्रं पट्टराज्ञी तद्गृहं; एषां मध्ये मनोभीष्टात्सकाशाद्गृहात् भोजनसंभवे हविष्यमन्नं प्राश्य भक्षयित्वा विप्रैर्ब्राह्मणैरनुमतः कृतोत्साहः मंगलं मंगलद्रव्यं मनोभीष्टं पश्यन् सन् तथा शृण्वन् सन् एयात् गच्छेत् । यदाह लल्लः—'स्वनिकेताद्देवगृहात्प्रधानदाराश्रयाद्गुरुगृहाद्वा । यायात्कृताग्निकार्यः प्राश्य हविष्यं द्विजानुमतः ॥ द्विजो विष्णुक्रमान्नृपं मंत्रेणानेन चालयेत् । "इदं विष्णुर्विचक्रम" इत्येवं पादमुद्धरेत् । मंगलानि ततः पश्यन् स्पृशञ्छृण्वन्नृपो व्रजेत् ॥' इति । वराहोऽपि–'अंतःपुराद्वा स्वनिवेशनाद्वा सिंहासनादग्निपरिग्रहाद्वा । कुर्यान्नरेंद्रः प्रथमं प्रयाणं विप्रैः शताग्र्यैः कृतमंगलाशीः ॥ "इदं विष्णुर्विचक्रम" इत्येवं पादमुद्धरेत् । अमुकस्य वधायेति दक्षिणं क्षितिपो न्यसेत् ॥' इति । अग्निपरिग्रहः[1]= अग्निहोत्रगृहम् ॥ ८८ ॥

अथ गमनकाले निर्णीते सत्यपि स्वस्यावश्यकार्यानिष्पादाद्गमनविलंबे वर्णक्रमेण प्रस्थानवस्तूनि प्रहर्षिणीछंदसाह—

कार्याद्यैरिह गमनस्य चेद्विलंबो भूदेवादिभिरुपवीतमायुधं च ।
क्षौद्रं चामलफलमाशु चालनीयं सर्वेषां भवति यदेव हृत्प्रियं वा ॥

कार्याद्यैरिति ॥ किंचिदावश्यकं कार्यं नाभूदिति गमनस्य चेद्विलंबः स्यात्तदा विचारिते यात्रालग्ने भूदेवादिभिर्ब्राह्मणप्रभृतिभिरेतानि वस्तूनि आशु चालनीयानि प्रस्थापनीयानि । यथा–ब्राह्मणेनोपवीतं, क्षत्रियेणायुधं, वैश्येन मधु, शूद्रेण अमलं निर्मलं फलं नारिकेलादि । यदाह वसिष्ठः–'तस्मिन्मुहूर्ते स्वयमप्रयाणे प्रयोजनापेक्षितया च दैवात् । तत्रैव तन्निर्गमनं च कार्यं स्वीयासनाद्यापि तदुच्यमानम् ॥' इति । राजमार्तंडः—'प्रस्थाने ब्राह्मणादीनां यज्ञसूत्रमथायुधं । मध्वामलफलं चैव प्रशस्तं वृद्धिकारणम् ॥' इति । वा अथवा सर्वेषां वर्णानां यदेव हृत्प्रियं मनोभीष्टं तदेव प्रस्थापनीयम् ।

[1] [illegible] अग्निरिति परिग्रहः । परिग्रहणस्थानमित्यर्थः । 'प्रहवृत्तिनिश्चिगमश्च' इति [illegible] अप्रस्तुत: ।

उक्तं च वसिष्ठेन—'श्वेतातपत्रध्वजचामराश्वविभूषणोष्णीषगजांबराणि ॥ नांदीलिकारवरथाश्ववारान्छप्यासनाद्यं मनसस्त्वभीष्टम् ॥' इति । नारदोऽपि—'अप्रयाणे स्वकं कार्यमपेक्षी भूपतिस्तथा । कुर्यान्निर्गमनं छत्रध्वजवाहनसंयुतम् ॥' इति ॥ ८९ ॥

अथ स्वयं गमने कियद्दूरं प्रस्थानं कार्यमित्येतदाशंक्य प्राच्यमतेन प्रस्थानपरिमाणं मंदाक्रांताछंदसाह—

गेहाद्गेहांतरमपि गमस्तर्हि यात्रेति गर्गः
सीम्नः सीमांतरमपि भृगुर्बाणविक्षेपमात्रम् ।
प्रस्थानं स्यादिति कथयतेऽथो भरद्वाज एवं
यात्रा कार्या बहिरिह पुरात्स्याद्वसिष्ठो ब्रवीति ॥ ९० ॥

गेहादिति ॥ स्वगृहात्परगृहमतिसमीपवर्त्यपि तत्रापि चेद्गमो गमनं स्यात्तर्हि यात्रा जातेति गर्गः कथयते । अथवा स्वग्रामसीमामुल्लंघ्य सीमांतरं ग्रामांतरसीमां प्राप्य वसेदिति भृगुः कथयते । अथवा महता योद्धा स्वबलेन क्षिप्यमाणः शरो यावद्दूरं गच्छति तावन्मात्रं प्रस्थानं स्यादिति भरद्वाजः कथयते । अथवा पुरान्नगराद्बहिर्यात्रा कार्या स्यादित्येवं वसिष्ठः कथयते । यदाह राजमार्तंडः—'गृहाद्गृहांतरं गर्गः सीम्नः सीमांतरं भृगुः । शरक्षेपाद्भरद्वाजो वसिष्ठो नगराद्बहिः ॥' इति । एतच्च यथायोग्यं कार्यस्यावश्यकतायां च ध्येयम् ॥ ९० ॥

अथ मुनिमतेन प्रस्थानपरिमाणं वसंततिलकाछंदसाह—

प्रस्थानमत्र धनुषां हि शतानि पंच
केचिच्छतद्वयमुशंति दशैव चान्ये ।
संप्रस्थितो य इह मंदिरतः प्रयातो
गंतव्यदिक्षु तदपि प्रयतेन कार्यम् ॥ ९१ ॥

प्रस्थानमिति ॥ धनुषः परिमाणमाह भास्करः—'यवोदरैरंगुलमष्टसंख्यैर्हस्तोऽङ्गुलैः षड्गुणितैश्चतुर्भिः । हस्तैश्चतुर्भिर्भवतीह दंडः[1] क्रोशः सहस्रद्वितयेन तेषाम् ॥' इति । अत्र गमनकाले तादृशानां धनुषां पंचशतानि, हस्तसहस्रद्वयमिति यावत् । स्वगृहात्तावद्दूरस्थावधि प्रस्थानं स्यादिति केचित्कथयन्ति । अन्ये तु तादृशानां धनुषां शतद्वयमष्टौ शतानि हस्तास्तावत्प्रस्थानमित्याहुः । अपरे तु इह यात्राकाले मंदिरतः स्वगृहाद्दशैव धनूंषि चत्वारिंशद्धस्तास्तावद्दूरे संप्रस्थितः प्रयात एव ज्ञेय इत्याहुः । यदाह वसिष्ठः—'प्रस्थानं धनुषां पंचशतान्युत शतद्वयम् । स्वदेवसदनाद्वापि दशभिः प्रस्थितो गतः ॥' इति । नायं स्वेच्छाविकल्पः किंतु कार्यस्यानावश्यकावश्यकत्वात्तादृशप्रस्था-

---

१ दंडः धनुर्दंड इत्यर्थः ।

नम् । अत एव नारदोऽपि—'स्वस्थानान्निर्गमस्थानं दंडानां च शतद्वयम् । चत्वारिंशत्पंचविंशत्प्रस्थितः स स्वयं गतः ॥' इति प्रस्थानविकल्पानाह । अत एव 'अप्रयाणे स्वकं कार्यमपेक्षी' इत्याह च । गंतव्यदिक्स्थिति । तदपि प्रस्थानं प्रयतेन सविधानेन राजादिना गंतव्यदिक्षु यस्यां दिशि गमनं चिकीर्षितं तद्दिगभिमुखं कार्यम् । यदाह राजमार्तंडः—'गंतव्यदेशाभिमुखे प्रदेशे प्रस्थानमाहुः शुभदं नराणाम्' इति । अतः स्वयंप्रस्थाने गुणमप्याह स एव—'स्वशरीरेण यः कश्चिन्निर्गच्छेच्छ्रद्धयान्वितः । तस्य यात्राफलं सर्वं संपूर्णं पथि सिध्यति ॥' इति । यदा तु स्वयं प्रस्थानं कृतं ततोऽपरदिनेऽष्टमचंद्रादिदोषसद्भावे न गंतव्यमित्याह नारदः—'जन्मर्क्षे चाष्टमे चंद्रे वारे भौमे शनैश्चरे । प्रस्थितेऽपि न गंतव्यं यदि स्याद्गर्हितं दिनम् ॥' इति । अष्टमचंद्रादिदोषसद्भावदुष्टे दिने यात्रा न कार्येत्यर्थः । ये तु व्यतीपातवैधृतिभद्राभरण्यादिदोषसद्भावेन गर्हितेऽपि दिने यात्रा नेत्याहुस्तन्न । पूर्वार्धस्य वैयर्थ्यापाताद्वाक्यभेदाच्च । दोषोपलक्षणार्थमिति चेन्न । एकस्मिन्नेव दोषे उपलक्षणार्थे वक्तव्ये बहुदोषकथनस्य वैयर्थ्यात् । तस्मादष्टमचंद्रादिदोषेषु सर्वथा यात्रा न कार्या । व्यतीपातादिदोषसद्भावप्रतिबंधेषु सुखेन यात्रेति तत्त्वमिति प्रतीमः । यस्तु गृहान्निर्गतो न प्रस्थानमाचरति तस्य केन क्रमेण प्रथमादिदिनगमनमित्याह चंडेश्वरः—'क्रोशं वा यदि वाऽप्यर्धं प्रथमेऽहनि शस्यते । द्वितीये योजनं गत्वा निवसेत महीपतिः ॥ तृतीये योजनं सार्धं वसेदाक्रम्य दूरतः । ततः परं यथेष्टं तु मार्गे यायान्महीपतिः ॥' इति ॥ ९१ ॥

अथ कृते प्रस्थानेऽधिकारिविशेषपुरस्कारेण कियद्दिवसनिषेधमुत्तरार्धेन मैथुननिषेधं च स्रग्धराछंदसाह—

प्रस्थाने भूमिपालो दशदिवसमभिव्याप्य नैकत्र तिष्ठे-
त्सामंतः सप्तरात्रं तदितरमनुजः पंचरात्रं तथैव ।
ऊर्ध्वं गच्छेच्छुभाहेऽप्यथ गमनदिनात्सप्त रात्राणि पूर्वं
चाशक्तो तद्दिनेऽसौ रिपुविजयमना मैथुनं नैव कुर्यात् ९२

प्रस्थाने इति ॥ भूमिपाल एकत्र प्रस्थाने दशदिवसमभिव्याप्य दशाहोरात्राणि न वसेत् । सामंतो मांडलिक एकत्र प्रस्थाने सप्तरात्रं न वसेत् । तदितरमनुजो ब्राह्मणादिः तथैव एकत्र प्रस्थाने पंचरात्रं न वसेत् । यदि दैवाद्वसेत्तदा किं कुर्यादित्यत आह—ऊर्ध्वमिति । अवधिदिवसातिक्रमानंतरं पुनर्गृहमागत्य शुभाहे पूर्वोक्तप्रकारेण विचारितशुभदिवसे गच्छेत् । यदाह वसिष्ठः—'आरभ्य निर्गमाद्यावद्दशाहं न वसेन्नृपः । मंडलीकः सप्तरात्रं प्राकृतः पंचरात्रतः । अत ऊर्ध्वं व्रजेद्भूयो भद्रेऽन्यदिवसे नृपः ।' इति । भद्रे कल्याणकारिणि । श्रीपतिरपि—'वसेन्न चैकत्र दश क्षितीशो विना-

न्यथो सप्त च मांडलीकः । यः प्राकृतः सोऽपि न पंचरात्रं मत्रेण यात्रा परतः प्रयोज्या ॥' इति । नन्वत्र प्रस्थाने दशदिवसाद्यतिक्रमे भूयः सुमुहूर्तेन यात्रा कार्येत्युक्तं, तन्न युक्तिसहं प्रतिभाति । यतो यात्रा हि शत्रुमारणादिद्रव्यार्जनाद्यर्था शत्रुमारणादिकमनोभीष्टवस्तुप्राप्तिर्यात्रासमाप्तिरित्युच्यते । न हि तां विना पुनर्मुहूर्तविचारो युक्तः । आहुश्च 'अयुक्तमेतत्प्रतिभाति नूनं होराविदां युक्तिमतां बहूनाम् । यात्रासमाप्तिः खलु वांछितार्थफलस्य सिद्ध्यै नियतं प्रदिष्टा ॥' इति । उच्यते,—वसिष्ठाद्यृषिवचःप्रामाण्यमंगीकुर्वद्भिः किमीदृशं युक्तिविरुद्धं वक्तुमुचितम्? यतोऽवधिकथनार्थकानां तत्तदृषिवाक्यानामप्रामाण्यप्रसंगाज्ज्यौतिषस्मृतिलंघने दुरितोत्पत्तिः स्यात् । किंच मासगम्यमध्वानमतिक्रम्य यदि कार्यवशाद्दशाहाद्यतिक्रमे सति तत्रापि तत एव स्थानात्सुमुहूर्तविचारोऽस्ति, किं पुनः प्रस्थाने? यदाह वराहः—'एकत्राध्युषितस्य जगुर्यात्रामत्रात्रिगौतमच्यवनाः । पंचत्रिसप्तरात्रान्नृपाद्रद्रेण संयोज्याम् ॥' इति । 'अयुक्तमेतत्प्रतिभाति नूनम्' इति तु वाक्यं निर्मूलत्वादुपेक्ष्यम् । न हि वचनबोधितेऽर्थे युक्तिः प्रभवेत् । यथा......तस्मादवध्यतिक्रमे सति शुभमुहूर्तेन यात्रा विधेया । अवधिमध्ये तु निषिद्धमत्राव्यतीपातादिमहादोषपरिहारायान्या यात्रा स्यादित्यल्मतिप्रसंगेन । क्वचिद्दिग्विशेषेण प्रस्थाने दिवसनियमोऽभिहितः । यदाह राजमार्तंडः—'प्राच्यामहानि मुनयः प्रवदंति सप्त याम्यामतीव शुभदानि दिनानि पंच । त्रीण्येव पश्चिमदिशि क्षितिनायकानां प्रस्थानकेषु दिवसद्वयमुत्तरस्याम् ॥' इति । यदा तु स्वयं प्रस्थाय परावृत्य गृहमागच्छेत्तदा पुनः सुमुहूर्तेन यात्रा कार्या । यदाह राजमार्तंडः—'यस्तु संप्रस्थितो यात्रां निवर्तेत पुनर्गृहम् । कामाद्वा यदि वाऽकामाच्च स सिद्धिमवाप्नुयात् ॥' इति । दुर्गादित्यः—'कार्यवशाद्यदि कथमपि निवर्तते प्रस्थितः स्वगृहमेव । यायात्तदा विशुद्धैः पुनरपि तिथिकरणदिवसाद्यैः ॥' इति । अथ प्रस्थानकर्तुर्नियममाह—अथेति । असौ राजादिः रिपुविजयमना शत्रुजये कृतांतःकरणः सन् यात्रादिनात्पूर्वं सप्त रात्राणि मैथुनं संभोगं नैव कुर्यात् । यदाह च्यवनः—'त्रिरात्रं वर्जयेत्क्षीरं पंचाहं क्षुरकर्म च । तद्दहश्चावशेषाणि सप्ताहं मैथुनं त्यजेत् ॥' इति । वा अथवा अशक्तो सप्ताहमतिकामितया स्थातुमशक्तो तद्दिने यात्रादिवसे मैथुनं नैव कुर्यात् । यदाह गर्गः—'यात्राकाले तु संप्राप्ते मैथुनं यो निषेवते । रोगार्तः क्षीणकोशश्च स निवर्तेत वा न वा ॥' इति । अत एवानयोर्वाक्ययोर्मैथुनपीडासहिष्णुत्वसहिष्णुपरा विषयव्यवस्था । मार्गमध्येऽपि मैथुननिषेधे विकल्पानाह च्यवनः—'यावद्व्रजति चाध्वानं यावत्कार्यं न सिध्यति । यावद्वा न निवर्तेत तावद्वर्ज्यं हि मैथुनम् ॥' इति । यदा तु प्रयाणदिने स्त्री ऋतुस्नाता भवति गमने चावश्यकता तदा मैथुनं कार्यं न वेति संदेहः । तत्र यदि न कार्यमिति चेद्ब्रूषे तदा धर्मशास्त्रविरोधः । यदाह स्वायंभुवः—'ऋतुस्नातां तु यो भार्यां संनिधौ नोपगच्छति । घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः ॥' इति ।

यदि कार्यमिति चेत् ज्यौतिषस्मृत्युल्लंघनम्। तद्दूषः प्रागभिहितम्। अत्र निर्णयमाह च्यवन एव—'आत्ययिककार्यपाते पुष्पजातासमागमं कृत्वा। मुदितो गच्छँल्लभते मनोरथानचिरकालेन॥' इति। यदा हि पुनर्गमनार्थं कालांतरमप्यस्ति तदा तद्दिने मैथुनं कृत्वा कालांतरे सुलग्ने यायादित्यर्थसिद्धम्। यदा प्रस्थानकालः श्वोदिवसस्तत्पूर्वरात्रावपि मैथुनं न कार्यमित्याह लल्लः—'कृत्वा तु मैथुनं रात्रौ प्रभाते योऽधिगच्छति। नासौ फलमवाप्नोति कृच्छ्रेण च निवर्तते॥' कृच्छ्रेण कष्टेन॥ ९२॥

अथान्यानपि प्रस्थानकर्तुर्नियमाञ्शालिन्याह—

**दुग्धं त्याज्यं पूर्वमेव त्रिरात्रं क्षौरं त्याज्यं पंचरात्रं च पूर्वम्। क्षौद्रं तैलं वासरेऽस्मिन्वमिश्च त्याज्यं यत्नाद्भूमिपालेन नूनम्॥९३॥**

दुग्धमिति॥ यात्रादिनात्पूर्वं भूमिपालेन राज्ञा उपलक्षणत्वाद्गमनकर्त्रा यत्नात् दुग्धं पेयत्वेन त्याज्यं न तु द्रव्यत्वेन तद्विकारः पायसं च निषिद्धम्। च पुनः पंचरात्रं पूर्वं क्षौरं क्षुरसंबंधि कृत्यं मुंडनं श्मश्रुकर्म च त्याज्यम्। अस्मिन् वासरे यात्रादिने क्षौद्रं मधु भक्ष्यत्वेन तैलं तैललापनं त्याज्यम्। वमिश्छर्दिः स्वोत्कृता शरीरशोधनार्थं बलात्कारकृता वा यात्रादिने निषिद्धा नूनं निश्चितम्। यदाह च्यवनः—'वपनं वमनं क्षौद्रं तैलं चैव विवर्जयेत्। तदहश्चावशेषाणि सप्ताहं मैथुनं त्यजेत्॥' इति। वपनं श्मश्रुकर्मणोऽप्युपलक्षणम्। तथोक्तं वसिष्ठेन—'यात्राहवे तूत्कटभूषिते च भुक्तोत्कटे रात्रिषु संध्ययोर्वा। क्षौरं प्रकुर्यात्खलु चात्मनो हि श्रेयोभिलाषी न कदाचिदेव॥' इति क्षौरपदोपादानात्। क्षौरमश्रुभपदार्थोपलक्षणम्। यदाह स एव—'कामं क्रोधं तथा लोभं मद्यं मांसं च रोदनम्॥' इति॥ ९३॥

अथान्यानपि प्रस्थानकर्तुर्नियमान् गीतालयछंदसाह—

**भुक्त्वा गच्छति यदि चेत्तैलगुडक्षारपक्वमांसानि। विनिवर्तते स रुग्णः स्त्रीद्विजमवमान्य गच्छतो मरणम्॥९४॥**

भुक्त्वेति॥ तैलं तैलपक्वानि वटकादीन्यन्यानि वा, गुडमिक्षुविकारं तत्पाचितमन्नं वा क्षारं सलवणं पक्वमांसानि रंधितमांसानि यो भुक्त्वा गच्छति स राजादिः रुग्णो रोगसहितो निवर्तते। यदाह गर्गः—'कटुतैलगुडक्षारपक्वमांसाशनं तथा। भुक्त्वा यो यात्यसौ मोहाद्व्याधितः स निवर्तते॥' इति। अत्र मांसदुग्धादिनिषेधस्तत्तद्भक्ष्यत्रादिदोहदव्यतिरिक्तविषयः। दोहदस्य विशेषविहितत्वात्। स्त्रीद्विजमिति। स्त्री च द्विजश्च अनयोः समाहारः, स्त्रीद्विजं स्त्रियं स्वीयां परकीयां वा। द्विजः ब्राह्मणः, 'दंतविप्रांडजा द्विजाः' इत्यभिधानात्। अवमान्य धिक्कारदुरुताडनादिना मानभंगं कृत्वा गच्छतः पुंसो मरणं स्यात्। यदाह गर्गः—'यस्तु संप्रस्थितो यात्रां भार्यां नैवाभिनंदति। भार्या वा नाभिनंदेत न स प्रतिनिवर्तते॥ परकीयां

स्वकीयां वा स्त्रियं पुरुषमेव वा । ताडयित्वा तु यो मोहात्तदंतं तस्य जीवितम् ॥ यात्रायां प्रस्थितो यश्च ब्राह्मणानवमानयेत् । नासौ प्रतिनिवर्तेत तदंतं तस्य जीवितम् ॥' इति । केचित् शुभाशुभशब्दान् यात्राकाले शुभाशुभसूचकानाहुः । यदाह लल्लः—'प्रापय गच्छ विसर्जय निर्गच्छ व्रज विमुंच संसर्प । सिद्धिकराः खल्वेते प्रमोदजयजीवशब्दाश्च ॥ मा गास्तिष्ठ निवर्त क्व गम्यते मूढ दुर्मते मोहात् । यात्रां नेच्छंति बुधाः क्षुतकासितभीतशब्दैश्च ॥' इति । कासितं=रोगार्तध्वनिर्हिक्कादिः ॥ ९४ ॥

अथाकालवृष्ट्याख्यं दोषं सलक्षणं वसंतमालिकाछंदसाह—

**यदि मास्सु चतुर्षु पौषमासादिषु वृष्टिर्हि भवेदकालवृष्टिः । पशुमर्त्यपदांकिता न यावद्वसुधा स्यान्न हि तावदेव दोषः ॥ ९५ ॥**

यदीति ॥ पौषादिषु चतुर्षु पौषमाघफाल्गुनचैत्राख्येषु मासेषु यदि वृष्टिर्भवेत् साऽकालवृष्टिः स्यात् । पौषादयश्चत्वारो मासा वृष्ट्यकालः, तत्र भवा वृष्टिरकालवृष्टिरुच्यते । यदाह राजमार्तंडः—'पौषादिचतुरो मासान् प्राप्ता वृष्टिरकालजा ॥' इति । तत्राकालवृष्ट्यां जातायां यदि वसुधा पृथ्वी यावत्पशवो गवादयः मर्त्या मनुष्यास्तेषां पदैश्चरणैरंकिता चिह्निता न भवति तावदकालवृष्टिदोषो नास्ति । यदा पशुचरणांकिता वसुधा स्यात्तदाऽकालवृष्टेर्दोषवत्त्वमस्त्येव । यदाह राजमार्तंडः—'वृष्टिः करोति दोषं तावन्नाकालसंभवा राज्ञाम् । यावन्न भवति याने नरपशुचरणांकिता वसुधा ॥' इति । अस्यार्थः-अकालसंभवा वृष्टिः राज्ञां गमने तावद्दोषं न करोति । यावद्वसुधा याने गमने नरपशुचरणांकिता न भवति । तेनातिस्वल्पया रजोपगममात्रं भवति । तत्र पश्वादिचरणचिह्नाभावाद्दोषाभावः । यदा तु किंचिदधिका वृष्टिः स्यात्तदा कर्दमसद्भावात्पश्वादिचरणचिह्नानि जायंते तदा दोष एव । स च समर्गांत्रक इत्युक्तं प्राक् । अत्र केचिदल्पा वृष्टिर्दोषाय, न महतीति वदंति । तत्र युक्तिः—अल्पवृष्ट्या कर्दमबाहुल्यात्पश्वादिचरणचिह्नानां वसुधायां दर्शनादित्यल्पवृष्टेर्दोषवत्त्वम्. महत्त्वात्तु वृष्ट्याः सकलकर्दमापाकरणात्पश्वादिचरणचिह्नादर्शनाद्दोषाभावः । तदेतदृषिप्रणीतसंहिताग्रंथाभिहितविषयाऽज्ञानां केवलन्यायाभिनिविष्टमनसां मतम् । तथा हि-मार्गशीर्षशुक्लपक्षप्रतिपदाद्यः सार्धाः षण्मासा मेघानां गर्भग्रहणकालस्तदनंतरं वृष्टिर्भवति । यदाह कश्यपः—'सितादौ मार्गशीर्षस्य प्रतिपद्दिवसे तथा । पूर्वाषाढागते चंद्रे गर्भाणां धारणं वदेत् ॥' इति । गर्गोऽपि—'शुक्लादौ मार्गशीर्षस्य पूर्वाषाढाव्यवस्थिते । निशाकरे तु गर्भाणां तदादौ लक्षणं वदेत् ॥' इति । गर्भप्रसवकालज्ञानं वराहेण प्रोक्तम्—'यन्नक्षत्रमुपगते गर्भश्चंद्रे भवेत्स चंद्रवशात् । पंचनवतौ दिनशते १९५ तत्रैव प्रसवकालमायाति ॥' इति । माससंहितायां च 'पौषासितपक्षाद्यैः श्रावणशुक्लादयो विनिर्देश्याः । सार्धैः षड्भिर्मासैर्गर्भविपाकः स्वनक्षत्रे ॥' इति । विशेषमाह वराहः—'सितपक्षभवाः कृष्णे शुक्ले कृष्णा

शुसंभवा रात्रौ। नक्तंप्रभवाश्चाहनि संध्याजातास्तु संध्यायाम् ॥' इति। कृष्णाः कृष्णपक्षोद्भवा गर्भाः। एवं सार्धषण्मासा गर्भग्रहणकालः, तदनंतरं जायमाना वृष्टिः कालवृष्टिरिति। यदा वृष्टिकालव्यतिरिक्ते काले वृष्टिर्गर्भनिर्गलनरूपा स्यात् साऽकालवृष्टिः, अकाले अयोग्ये काले वृष्टिरिति निर्वचनसंभवात्। एतदेवाभिप्रेत्योक्तं 'सौदामिनीवर्षणगर्जितेषु' इति पद्यव्याख्याने महादेवेन गृहीतगर्भाणां मेघानां यो वृष्टिकाल उक्तस्तं विना यदि वृष्टिर्गर्भनिर्गलनरूपा स्यात्साऽकालवृष्टिरिति। तत्र मार्गशीर्षशुक्लादितो मेघानामवश्यं गर्भसंभवात्तच्चिह्नभूता किंचिद्वृष्टिरवश्यमपेक्षितैव। यदाह वराहः—'पवनसलिलविद्युद्गर्जिताभ्रान्वितो यः स भवति बहुतोयः पंचभूताभ्युपेतः। विसृजति यदि तोयं गर्भकाले तु भूरि प्रसवसमयमित्वा शीकरांभः करोति ॥' इति। तेन किंचिद्वृष्ट्यां गर्भसत्तानिश्चयादल्पा वृष्टिर्न दोषमावहतीति। अल्पवृष्ट्यामपि त्रैराशिकवशादत्यल्पवृष्ट्यां नैव दोषः। ततः किंचिदधिकायां दोषतारतम्यम्। तत्र मार्गशीर्षाद्या गर्भा मंदफलाः। पौषशुक्लजाताश्चेति। बृहद्यात्रायां वराहोक्तेर्मार्गशीर्षगर्भाणां मंदफलत्वम्। तं च मार्गशीर्षमनिक्रम्य पौषादिवृष्टेरकालिकत्वम्। अत एवोक्तम्—'पौषादिचतुरो मासान्प्राप्ता वृष्टिरकालजा ॥' इति। मंदफलत्वादितुल्यन्यायतया च मार्गवृष्टेरप्याकालिकत्वम्। तदप्युक्तं राजमार्तंडेन—'मार्गान्मासात्प्रभृति मुनयो व्यासवाल्मीकिगर्गाश्चैत्रं यावद्गमनसमये वृष्टिदोषं वदंति ॥' इति। एवं सति गर्भनिर्गलनं विकृतिः, सा यथा स्वल्पा सती नरपशुचरणांकितत्वेन किंचिद्दोषं जनयति, तथा उपचीयमानापि विकृतिर्महांतं दोषमादधाति, तेन महावृष्टेर्दोषवत्त्वमेव न दोषाभावः। अत एवोक्तं वराहसंहितायाम्–'गर्भसमयेऽतिवृष्टिर्गर्भाभावाय निमित्तकृता। द्रोणाष्टांशेऽभ्यधिके वृष्टेर्गर्भः स्रुतो भवति ॥' निमित्तं=शुक्लादि। बृहद्यात्रायामपि—'भृशं क्वणंतो रुधिरारुणाभाः मशकचापाः खररूक्षनादाः। रणोपयोज्याकृतिचित्ररूपा रणाय दृष्टा गमनेऽम्बुवाहाः ॥' इति। अन्यदपि तेनैवोक्तम्। 'सप्ताहं सतताऽन्यतौ वृष्टिर्हन्यान्नराधिपम्।' इति। सतता निरंतरा। मेघभेदस्तेनैवोक्तः—'सप्ताहांतर्बलभयकरी वृष्टिरन्यर्तुजाता कश्चिद्यात्रामसितजलदैः संयुतां पूजयंति। चित्राभ्रायां बलमतिवधो रुक्सपीतांबुदायां शुक्लाब्दायां न भवति चिराद्धूम्रंबुदायां च नाशः ॥' इति। चित्राभ्रायां वृष्टाविति शेषः। अनेनैवाशयेन क्वचित्पठ्यते-'वृत्तेऽप्यकालवर्षे तु तावद्दोषो न जायते। यावन्न यानसमये पशुपादांकिता मही ॥' इति। तस्मात्सिद्धमेतत्–यदत्यल्पायामकालवृष्टौ दोषाभावः, अल्पायामकालवृष्टौ अल्पदोषः, महत्यामकालवृष्टौ महादोष इति। वसिष्ठोऽपि वृष्टिविशेषे फलविशेषमाह–'अकालं सततं वृष्टिः सप्ताहं नृपतेर्वधः। रक्तवृष्टौ रणोद्योगो मांसवृष्टौ महद्भयम् ॥ मेरकश्चास्थिवर्षे स्याद्वसावर्षेऽपि तत्फलम्। क्षौद्रवर्षं राष्ट्रनाशस्त्वंगारैः पांशुभिर्गदः। धान्याकफलपुष्पाद्यैर्लोहैश्चापि महद्भयम्। पर्णैस्तृणैः काष्ठवर्षैस्तद्वत् फलमादिशेत् ॥ पाषाणवृष्टिरभ्रेषु प्राणिवृष्टिरथापि वा। चित्र-

१ महामार्ग इति भाषायाम्।

वृष्टिर्यदि भवेत्सस्थानामीतिकारणम् ॥' इति । अत्र रक्तवृष्ट्यादीनां वृष्टित्वादेव निषेधे सिद्धे पुनर्ग्रहणं कृतं तत्कालवृष्टावप्यासां वृष्टीनां दोषसूचनार्थम् । यत आसां वृष्टीनामुत्पातत्वमस्ति, 'तेषां संक्षेपोऽयं प्रकृतेरन्यत्वमुत्पातः' इति वराहोक्तेः ॥ ९५ ॥

अथामुमेवार्थं स्पष्टीकुर्वन्सत्यावश्यकयात्रायां तच्छांतिकं प्रसंगाद्दुष्टशकुनोद्भूतारिष्टशांतिकं चातिशक्वर्या गाथाछंदसाह—

> अल्पायां वृष्टौ दोषोऽल्पो भूयस्यां दोषो भूयान्
> जीमूतानां निर्घोषे वृष्टौ वा जातायां भूपः ।
> सूर्येन्द्वोर्बिंबे सौवर्णे कृत्वा विप्रेभ्यो दद्या-
> दुःशाकुन्ये साज्यं स्वर्णं दत्त्वा गच्छेत्स्वेच्छाभिः ॥ ९६ ॥

अल्पायामिति ॥ अल्पायामकालवृष्टावल्पो दोषः स्यात् । भूयस्यामतिशयेन बह्वी भूयसी तस्यामकालवृष्टौ भूयानतिशयेन महान्दोषः । अतो यत्प्राच्याः पठंति–'यावत्प्रयाणादिषु भूपतीनामकालवृष्टिः प्रकरोति दोषम् । यावद्रवेस्संचरतां जनानां तथा पशूनां चरणांकिता भूः ॥' इति, तदेतन्निर्मूलत्वाद्युक्त्यसहत्वाच्चोपेक्ष्यम् । अयं चाकालवृष्ट्याख्यो दोषः प्रयाणानंतरं सप्तरात्रं यावद्विलोकनीय इति महादेवेन व्याख्यातं, न तत्र प्रमाणं पश्यामः । किंतु जातायामकालवृष्टौ यात्रामेव न कुर्यात् । कृते तु स्वयं प्रस्थाने मार्गमध्ये नास्त्ययं दोषः । शुक्रास्तादिदोषो मार्गमध्ये 'जीवः शशांकः शुक्रो वा' इति वचनबलादंगीक्रियते । प्राच्यास्तु महत्यामकालवृष्टौ दोषाभावं वर्णयंति तेषामाशयं न विद्मः । अथ सत्यप्यकालवृष्ट्यादिनिमित्ते आवश्यकयात्रायां दानमाह—जीमूतानामिति ॥ जीमूतानां मेघानां निर्घोषे शब्दे वृष्टावकालवृष्टौ जातायां वा । सूर्येन्द्वोः सूर्याचंद्रमसोर्बिंबे स्वरूपे सौवर्णे यथाशक्ति सुवर्णनिर्मिते कृत्वा भूपो राजा विप्रेभ्यो ब्राह्मणेभ्यो दद्यात् । यदाह मांडव्यः—'दुर्दिने गर्जिते वृष्ट्यां सूर्याचंद्रमसोर्द्वयोः । बिंबे विधाय शांत्यर्थं श्रोत्रियाय निवेदयेत् ॥' इति । यद्यपि 'श्रोत्रियंश्छंदोधीते' इति पाणिनिवचनाच्छंदोऽध्येतृत्वेन श्रोत्रियत्वमुच्यते, तच्च वर्णत्रयसाधारणम् । तथापि प्रतिग्रहाधिकारी ब्राह्मण एव श्रोत्रियशब्देन व्याकर्तव्यः । अत एव मूले विप्रपदोपादानम् । अकालवृष्टौ शांतिर्महता ग्रंथसंदर्भेण बृहद्यात्रायां वराहेणाभ्यधायि, सा तत एवावधार्या । कचिदकालवृष्टेरपवादः पठ्यते । यथा–'एकेनैकमहः प्रोक्तं द्वितीयेन त्रिरात्रकम् । तृतीयेन तु सप्ताहं दशरात्रमतः परम् । पौषे दिनत्रयं वर्ज्यं माघे चैव दिनद्वयम् । फाल्गुने दिनमेकं तु चैत्रे तु घटिकाद्वयम् ॥' इति, तदेतदप्यात्ययिककार्यविषयं ज्ञेयम् । अथ प्रसंगाद्दुष्टेऽपि शाकुने जातेऽवश्यविधेयायां यात्रायां दानमाह—दुःशाकुन्ये इति । शकुन एव शाकुन्यम् । चतुर्वर्णादिराकृतिगणत्वात्ष्यञ् । दुष्टं च तत् शाकुन्यं च दुःशाकुन्यं,

तस्मिन् दुष्टे शकुने वक्ष्यमाणे प्रस्थानकाले संभूते सति साज्यं सघृतं स्वर्णं सुवर्णं श्रोत्रियाय दत्त्वा स्वेच्छाभिर्गच्छेत्। यदाह मांडव्यः—'यदाऽपशकुनं पश्येद्विपरीतमुपस्थितम्। सघृतं कांचनं दत्त्वा निर्विशंकस्ततो व्रजेत् ॥' इति। इति यात्रोपयोगिदोषविवरणम् ॥ ९६ ॥

अथ शुभाशुभसूचकत्वेन द्वेधा शकुनाः संति तान्वक्तुकामस्तावच्छुभसूचकाञ्छकुनान् शार्दूलविक्रीडिताभ्यामाह—

विप्राश्वेभफलान्नदुग्धदधिगोसिद्धार्थपद्माम्बरं
वेश्यावाद्यमयूरचापनकुला बद्धैकपश्वामिषम्।
सद्वाक्यं कुसुमेक्षुपूर्णकलशच्छत्राणि मृत्कन्यका-
रत्नोष्णीषसितोक्षमद्यससुतस्त्रीदीप्तवैश्वानराः ॥ ९७ ॥
आदर्शांजनधौतवस्त्ररजका मीनाज्यसिंहासनं
शावं रोदनवर्जितं ध्वजमधुच्छागास्त्रगोरोचनम्।
भारद्वाजनृयानवेदनिनदा मांगल्यगीतांकुशा
दृष्टाः सत्फलदाः प्रयाणसमये रिक्तो घटः स्वानुगः ९८

विप्रेति ॥ आदर्शेति ॥ विप्रा बहवो द्वौ वा, न त्वेकः; अश्वः प्रसिद्धः, इभो हस्ती अनुन्मत्तः, फलान्नदुग्धदधीनि प्रसिद्धानि, गौः सौगवी, सिद्धार्थः सर्षपाः, 'सिरसा' इति भाषायां। पद्मं कमलं, अंबरं वस्त्रं स्वच्छं, वेश्या गणिका, वाद्यं मर्दलादि, मयूरचापौ पक्षिणौ, नकुलः प्रसिद्धः, बद्धैकपशुः रज्ज्वादिबद्धो वृषः आरक्तादिवर्णः, आमिषं मांसं, सद्वाक्यं 'कार्यसिद्धिरस्तु' इत्यादिवाक्यं, कुसुमानि पुष्पाणि, इक्षवः प्रसिद्धाः, जलपूर्णकलशः, छत्रं प्रसिद्धं, मृत् आर्द्रमृत्तिका, कन्या कुमारी, रत्नं माणिक्यादि, उष्णीषं शिरोवेष्टनं, सितोक्षा श्वेतो वृषः, अयमबद्धोऽपि; मद्यं प्रसिद्धं, ससुतस्त्री सपुत्रापि काचित् स्त्री, दीप्तो जाज्वल्यमानोऽग्निः शिखावानित्यर्थः, आदर्शो दर्पणः, अंजनं 'सुर्मा', धौतवस्त्ररजको उज्ज्वलीकृतवस्त्रो वस्त्रनिर्णेक्ता, मीनो मत्स्यः, आज्यं घृतं, सिंहासनं देवादेः, शावं शवमेव शावं मृतकं, पृष्ठगामिलोकरोदनरहितं; ध्वजः पताका, मधु क्षौद्रं, छागो मेषः, अस्त्रं धनुरादि, गोरोचनं प्रसिद्धं, भारद्वाजः पक्षी, नृयानं सुखासनं, वेदनिनदः अधीयानानां ब्राह्मणानां मुखाद्विःसरन्वेदध्वनिः, मांगल्यं प्रसिद्धं, गीतं गानं, अंकुशो हस्तिनिवारणमस्त्रं; एते पदार्था गंतुर्भूपादेः प्रयाणसमये यात्राकाले संमुखं दृश्यमानाः सत्फलदाः शुभफलदाः; तथा रिक्तो जलरहितो घटः स्वानुगः स्वस्य पश्चाद्भागगामी सोऽपि शुभफलदः जलेन भरिष्यमाणत्वात्। यदाह नारदः—'प्रज्वलाग्निश्च तुरगनृपासनपुरोगमाः। गंधपुष्पाक्षतच्छत्रचामरांदोलिकागजाः ॥ भक्ष्येक्ष्वंकुशमृत्साज्ञमध्वा-

ज्यदधिगोवृषाः । मत्स्यमांससुराधौतवस्त्रशंखरवध्वजाः ॥ पण्यस्त्रीपूर्णकलश-रत्नभृंगारदर्पणम् । भेरीमृदंगपटहशंखवीणादिनिःस्वनाः ॥ वेदमंगलघोषाः स्युर्याने वै कार्यसिद्धिदाः' इति । श्रीपतिरपि—'भारद्वाजो नाकुलश्चापसंज्ञ-श्छागो बर्ही शोभनो वीक्षितः स्यात् । भृंगारांजनवर्धमानमुकुरायर्द्रकपश्वा-मिषोष्णीषपक्षीरनृपानपूर्णकलशच्छत्राणि सिद्धार्थकाः । वीणाकेतनमीनपंकज-दधिक्षौद्राज्यगोरोचनाः कन्याशंखसितोक्षवस्त्रसुमनोविप्राश्वरत्नानि च ॥ प्रज्वलज्ज्वलनदंतितुरंगभद्रपीठगणिकांकुशमृग्याः । अक्षतेक्षुफलचामर-भक्ष्याण्यायुधानि च भवंति शुभानि ॥ भेरीमृदंगमृदुमर्दलशंखवीणावेदध्व-निर्मधुरमंगलगीतघोषाः । पुत्रान्विता च युवतिः सुरभिः सवत्सा धौतांब-रश्च रजकोऽभिमुखः प्रशस्तः ॥' इति । भृंगारः सुवर्णकलशः । 'भृंगारः कन-कालुका' इत्यमरः । वर्धमानः=शरावः, 'शरावो वर्धमानकः' इत्यमरः । वसिष्ठः—'दृष्टे शवे रोदनवर्जिते च संपूर्णयात्राफलमेव तत्र । दृष्टः प्रवेशे तु शवः शवत्वं करोति तद्रोदनवर्जितोऽपि ॥' इति । कश्यपोऽपि—'कार्य-सिद्धिर्भवेद्दृष्टे शवे रोदनवर्जिते । प्रवेशे रोदनयुतः शवः स्यात्तु शवप्रदः ॥' इति । वसंतराजः—'आदाय रिक्तं कलशं जलार्थी यदि व्रजेत्कोऽपि महा-ध्वगेन । पूर्णं समादाय निवर्ततेऽसौ यथा कृतार्थः पथिकस्तथैव ॥' इति । एतानि शकुनानि यदि दैवात्स्युस्तदोत्तमान्येव । यदि वा स्वयं रचितानि तदापि शुभान्येव । यदाह वराहः—'स्वयमथ रचितान्ययत्नतो वा यदि कथितानि भवंति मंगलानि । स जयति सकलां ततो धरित्रीं ग्रहणदशां श्रुतिपाटतो यथांहः ॥' इति । शकुनप्रयोजनमाह वराहः—'अन्यजन्मांतरकृतं शुभं वा यदि वाऽशुभम् । यत्तस्य पाकं शकुनो निवेदयति गच्छताम् ॥' इति । लल्लोऽपि—'नक्षत्रस्य मुहूर्तस्य तिथेश्च करणस्य च । चतुर्णामपि चैतेषां शकुनो दंडनायकः ॥' इति । अत्र कैश्चिल्लग्नवशेन शुभसूचकाः शकुना उक्ताः 'लग्ने त्वर्कपतिशुक्राणां ब्राह्मणाः संमुखाः स्त्रियः । बुधशुक्रौ च केंद्रस्थौ सवत्सा गौः प्रदृश्यते ॥ चंद्रसूर्यौ च भवतो दशमस्थौ यदाऽथवा । दीपादर्शौ सुम-नसो रजका धौतवाससः ॥ सुतस्थाने यदा सौम्यो वृषो बद्धस्तु संमुखः । गुरुश्चेत्पंचनवमो दक्षिणे सप्त वायसः ॥ चंद्रो गुरुश्च सहजे भानो वामांग-भागतः । सर्वे कर्मायनवमे भारद्वाजोऽथ नाकुलः ॥ चापस्य दर्शनं वा स्याद्वामांगेऽत्यंतदुर्लभम् । आदित्यो राहुसौरी च सहजस्थौ कुमारिका ॥ प्रौढानां सुभगानां वा दर्शनं सर्वकामदम् । षष्ठे तृतीये कर्माये भौमश्चेत्तत्फलं भवेत् ॥ दास्यो वेश्या सुरा मांसं लाभश्चैव सुनिश्चितः ॥ सप्ताष्टपंचमे यस्य जीवो ज्ञो वात्र वर्तते । आदर्शपुष्पमांसानि सुरादर्शश्च लाभदः ॥ राहुर्भौमश्च मंदश्च लग्नाद्यदि तृतीयगः । उद्धृतं गोमयं पश्येच्छीघ्रं लाभं धनं दिशेत् ॥' इति । एवमादीनि शकुनानि लग्नबलेन शकुनग्रंथेष्वभिहितानि, तानि तत एवावधार्याणि; विस्तरभयादस्माभिर्लिख्यंत इति ॥ ९७-९८ ॥

अथाशुभसूचकान् शकुनान् शार्दूलविक्रीडिताभ्यामाह—

वंध्याचर्मतुषास्थिसर्पलवणांगारेंधनक्लीबविट्-
तैलोन्मत्तवसौषधारिजटिलप्रव्राट्तृणव्याधिताः ।
नग्नाभ्यक्तविमुक्तकेशपतितव्यंगक्षुधार्ता असृक्
स्त्रीपुष्पं सरठः स्वगेहदहनं मार्जारयुद्धं क्षुतम् ॥ ९९ ॥
काषायी गुडतक्रपंकविधवाकुब्जाः कुटुंबे कलि-
र्वस्त्रादेः स्खलनं लुलायसमरं कृष्णानि धान्यानि च ।
कार्पासं वमनं च गर्दभरवो दक्षेऽतिरुट् गर्भिणी
मुंडार्द्रांबरदुर्वचोऽन्धबधिरोदक्या न दृष्टाः शुभाः॥१००॥

वंध्येति ॥ काषायीति ॥ वंध्या कदापि गर्भसंभावनारहिता, चर्म अश्वादेश्चर्म, तुषं धान्यादितुषम्, अस्थिसर्पलवणानि प्रसिद्धानि, अंगारो निर्धूमोऽग्निपिंडः, इंधनं काष्ठादि, क्लीबो नपुंसकः, विट् विष्ठा, 'उच्चारावस्करौ शमलं शकृत् । पुरीषं गूथवर्चस्कमस्त्री विष्ठाविषौ स्त्रियौ' इत्यमरः । तैलं प्रसिद्धं, उन्मत्तो मद्यभूताद्यावेशवान्, वसा शरीरमांसविशेषः, वसाग्रहणादन्ये मांसविभागाः समीचीनाः; औषधं प्रसिद्धं, अरिः शत्रुः, जटिलो जटावान्, प्रव्राट् संन्यासी, तृणं प्रसिद्धं, व्याधितोऽचिकित्स्यव्याधिमान्, नग्नः अपरिहितवस्त्रः कुमारव्यतिरिक्तः, अभ्यक्तः कृततैलाभ्यंगः, विमुक्तकेशः प्रसृतकेशः, बद्धकेशस्तु प्रशस्तः; पतितो मद्यपानाद्यभिशापवान् द्विजः, व्यंगः छिन्ननासिकादिः, क्षुधार्तः क्षुत्पीडितः, असृक् रुधिरं, स्त्रीपुष्पं स्त्रीणामृतुः, सरठः कृकलासः, 'गिर्गिधम'[1] इति भाषा प्राच्यानां । स्वगेहदहनं स्वगृहदाहः, मार्जारयुद्धं प्रसिद्धं, क्षुतं शिक्का, काषायी कषायो रागविशेषस्तेन रक्तं वस्त्रं काषायं तद्वान्, गुडतक्रपंकविधवाकुब्जाः प्रसिद्धाः, कुटुंबे कलिः स्वपुत्रमित्रादिभिः सह कलहः, वस्त्रं प्रसिद्धं, आदिशब्देन गेंबुकच्छत्रादिस्खलनं स्वहस्ताद्भिर्निमित्तपतनं, लुलाया महिषास्तेषां समरं युद्धं, कृष्णानि श्यामवर्णानि धान्यानि माषादीनि, कार्पासं वमनं च प्रसिद्धं, दक्षे दक्षिणभागे गर्दभस्य रवः शब्दः, अर्थाद्वामभागे गर्दभशब्दः साधीयान्; अतिरुट् क्रोधाधिक्यं, गर्भिणी गर्भवती, मुंडो मुंडितशीर्षो यः कश्चित्, आर्द्रांबरो जलार्द्रवस्त्रः, दुर्वचः स्वमुखोत्थं परमुखोत्थं वा दुष्टं वाक्यं, अंधबधिरौ प्रसिद्धौ, उदक्या रजस्वला स्त्री; एते पदार्था गंतुर्भूपादेर्यानसमये दृष्टाः संतो न शुभा न शुभफलदाः, किंतु गमने सति अशुभफलदाः । यदाह कश्यपः—'औषधक्लीबबधिरैर्जटिलोन्मत्तपावकैः । अभ्यक्तांगारकाष्ठास्थिचर्मांधचिररोगिभिः ॥ तैलकार्पासलवणगुडतक्रतृणोरगैः । कषायकुब्जैकपादमुक्तकेशबुभुक्षितैः ॥ सनग्नमुंडैर्दृष्टैस्तु यात्रा नैव फलप्रदा ॥' इति । श्रीपतिः—'तृणतुषफणिचर्मांगारकार्पासपंकैर्लवणगुडवसास्थिक्लीबतैलौषधैश्च । रिपुविहसितधान्यव्याधिताभ्यक्तक्रैः पतितजटिलमुंडोन्मत्तवांतैर्न सिद्धिः ॥ विमुक्तकेशकाषायनग्नांधनबुभुक्षितैः । कुब्जांधवंध्याबधिरैर्दृष्टैः सिद्धिर्न जायते ॥ कुटुंब-

---

१ 'गर्गिटान' इति जीर्णपुस्तकपाठः । २ आंगठी इति लोके ।

कलहो गृहज्वलनमार्तवं योषितो बिडालसमरं क्षुतं स्खलनमंबरादेस्तथा। दुरुक्तमतिकोपता महिषयोश्च युद्धं भवेत्प्रयाणसमये नृणामभिमतार्थविच्छित्तये ॥' इति। बृहद्यात्रायां वराहः—'कार्पासौषधकृष्णधान्यलवणक्लीबास्थितालानलं सर्पांगारगराहिचर्मशकृतः केशारिसभ्याश्रिताः। वांतोन्मत्तजडांधकतृणतुषक्षुत्क्षामतक्रारयो मुंडाभ्यक्तविमुक्तकेशपतिताः काषायिणश्चाशुभाः ॥' तालो हरितालः, गरो विषं, केशारिः क्षुरादिः। 'ध्वजातपत्रायुधसंनिपातः क्षितौ प्रयाणे यदि मानवानाम्। उत्तिष्ठतो वायुधमेति संगं पतेत वा तन्नृपतेर्भयाय ॥' इति। योगयात्रायां वराहः—'न सरठो दृष्टः शुभाय क्वचित्' इति। चंडेश्वरः—'खरोष्ट्रमहिषारूढा अमंगल्यादिसंयुताः। कर्णतालादिभिर्हीना विवशाः कृष्णवाससः ॥ मुक्तकेशातिकृष्णांगास्तैलाभ्यक्तरजस्वलाः। गर्भिणीविधवोन्मत्ताः क्लीबांधबधिरा नराः ॥ एतेषां दर्शने जाते न गंतव्यं कदाचन ॥' इति। वसंतराजः—'सर्वं शुभं दक्षिणतः कार्यं निंद्यं तु वामतः।' इति। अथ क्षुते विशेष उच्यतेऽस्माभिः—तत्र नारदः—'सर्वदिक्षु क्षुतं नेष्टं गोक्षुतं मरणप्रदं। अफलं तत्क्षुतं वाच्यं वृद्धपीनसकैतवे ॥' इति। सर्वशाकुने—'अथ क्षुतफलं वक्ष्ये दिक्षु यामक्रमेण च। लाभो वह्निर्धनं मित्रं चतुर्यामेषु पूर्वतः ॥ लाभो वह्निः सुतो वह्निः क्रमादाग्नेयतो भवेत्। यामक्रमाद्दक्षिणस्यां धनमन्नं मृतिः कलिः ॥ लाभो मित्रं सुखं वार्ता लाभो नैर्ऋत्यदेशतः। गमनोत्साहकलहवस्त्राप्तिः पश्चिमादिशि ॥ वायव्यायां जयो लाभः पुत्राप्तिर्मंगलं क्रमात्। शत्रुनाशो रिपुप्राप्तिर्लाभोऽन्नं चोत्तरे क्षुतं ॥ संग्रामनाशलब्धिर्दिगीशे यामक्रमेण च। क्षुते गतघटी वारतिथियुग्वसुभिर्हृता ॥ विषमा लाभदा नित्यं समा विघ्नमृतिप्रदा। औषधे वाहनारोहे विवादे शयनेऽशने ॥ विद्यारंभे बीजवापे क्षुतं सप्तसु शोभनम्।' इति। वसंतराजः—'निषिद्धमग्रेऽक्षिणि दक्षिणे च धनव्ययं दक्षिणकर्णदेशे। तत्पृष्ठभागे कुरुतेऽरिवृद्धिं क्षुतं प्रकामं शुभमादधाति ॥ भोगाय वामश्रवणे स्वपृष्ठे कर्णे च वामे कथितं जयाय। सर्वार्थलाभाय च वामनेत्रे जातं क्षुतं स्यात्क्रमतोऽष्टधैवम् ॥' इति ॥ ९९-१०० ॥

अथान्यच्छकुनं शार्दूलविक्रीडितेनाह—

**गोधाजाहकसूकराहिशशकानां कीर्तनं शोभनं**
**नो शब्दो न विलोकनं च कपिऋक्षाणां ततो व्यत्ययः।**
**नद्युत्तारभयप्रवेशसमरे नष्टार्थसंवीक्षणे**
**व्यत्यस्ताः शकुना नृपेक्षणविधौ यात्रोदिताः शोभनाः ॥**

गोधेति ॥ गोधा 'गोह' इति प्राच्याः, 'घोरपड' इति दाक्षिणात्याः; जाहकः गात्रसंकोची जंतुविशेषः, सूकराहिशशकाः प्रसिद्धाः; यानसमये एषां गोधादीनां कीर्तनं स्वमुखेनान्यमुखेन वोच्चारणं शोभनं शुभफलदात्‌ स्यात्। च पुनरेषां गोधादीनां शब्दो रुतं विलोकनं दर्शनं च न शोभनं निषिद्धम्।

कपिऋक्षाणामित्यत्र 'ऋत्यकः' इति प्रकृतिभावः। 'न समासे' इति निषेधवार्तिकं हि 'इकोऽसवर्णे' इति सूत्र एव, नतु 'ऋत्यकः' इत्यत्र इति सिद्धान्तः। व्यत्ययो यथा–वानराणां भल्लूकानां च कीर्तनं निषिद्धं, तेषामेवं शब्दितं दर्शितं वा न निषिद्धमित्यर्थः। यदाह श्रीपतिः—'जाहकाहिशशसूकरगोधाकीर्तनं शुभमुदाहृतमाद्यैः। नो रुतं न च विलोकनमेषामन्यथा गदितमृक्षकपीनाम्॥' इति। वसिष्ठः—'शाखामृगाख्यभल्लूकदर्शनं शब्दितं तथा। शशसूकरगोधानां यातुः कार्यविनाशनम्॥' इति। शाखामृगः=वानरः। अथ विशेषमाह—नद्युत्तारेति। नद्या गंगादेरुत्तारणे भये भयसंबंधिनि कार्ये पलायनादिके प्रवेशे गृहप्रवेशे समरे संग्रामे नष्टस्यार्थस्य द्रव्यस्य संवीक्षणे गवेषणे एतत्कृत्यसंबंधिनि गमने क्रियमाणे सति प्रागुक्ताः शुभाशुभाः शकुना व्यत्यस्ता ज्ञेयाः। शुभशकुनाः 'विप्राश्वेभ–' (११।९७-९८) इत्यादयोऽशुभा ज्ञेयाः। 'वंध्याचर्म–' (११।९९-१००)इत्याद्यशुभशकुनाः शुभफलदा ज्ञेया इत्यर्थः। यदाह वसंतराजः–'नद्युत्तारे भये युद्धे प्रवेशे नष्टवीक्षणे। शकुना व्यस्तगाः शस्ता नृपालोके प्रयाणवत्॥' इति। वराहः—'नद्युत्तरणयुद्धेषु प्रवेशे नष्टमार्गणे। यानव्यस्तगताः शस्ताः शकुना दैवचिंतकैः॥' इति। नृपेति। नृपस्येक्षणविधौ दर्शनार्थगमने यात्रायामुदिताविप्राश्वेभेत्यादयः शुभशकुनाः शोभना ज्ञेयाः। 'नृपालोके प्रयाणवत्' इत्युक्तेः। श्रीपतिरपि—'नृपावलोके शकुनः प्रयाणवत्' इति। राजदर्शनस्य भयस्थानत्वात्तदपवादोऽयम्॥ १०१॥

अथ कोकिलादीनां वामांगभागेन शकुनमनुष्टुभाह—

वामांगे कोकिला पल्ली पोतकी सूकरी रला।
पिंगला छुच्छुकाः श्रेष्ठाः शिवाः पुरुषसंज्ञिताः॥ १०२॥

वामांग इति॥ कोकिलापल्ल्यौ प्रसिद्धे, पोतकी दुर्गेति पितृचरणाः। सूकरी जात्यचटिका, रला पक्षिविशेषः, पिंगला भैरवी, छुच्छुका छुच्छुंदरी, शिवा शृगाली, पुरुषसंज्ञिताः पुन्नामानः कपोतखंजनतित्तिरहंसादयः; एते गच्छतां राजादीनां वामांगे शरीरवामभागे शस्ताः स्युः। यदाह श्रीपतिः—'छुच्छुका भवनगोधिका रला पिंगला पिकवधूश्च पोतकी। सूकरी पुरुषसंज्ञिताः शिवा वामतः खलु यियासतां शुभाः॥' इति। वराहोऽपि–'शिवा श्यामा रला छुच्छुः पिंगला गृहगोधिकाः। सूकरी परपुष्टा च पुन्नामानश्च वामतः॥' इति। श्यामा पोतकी भवनगोधिका पल्ली परपुष्टा कोकिला॥ १०२॥

अथ दक्षिणांगभागावस्थितं शकुनं चानुष्टुभाह—

छिक्करः पिक्को भासः श्रीकंठो वानरो रुरुः।
स्त्रीसंज्ञकाः काकऋक्षश्वानः स्युर्दक्षिणाः शुभाः॥ १०३॥

छिक्कर इति॥ छिक्करो मृगजातिः, पिक्कः पक्षिविशेषः, भासः पक्षी, श्रीकंठः पक्षिविशेषः, वानरः प्रसिद्धः, रुरुर्मृगविशेषः–स्त्रीसंज्ञकाः। काकः प्रसिद्धः, ऋक्षो भल्लूकः, अत्रापि 'ऋत्यकः' इति प्रकृतिभावः। श्वा कुक्कुरः; एते

यात्रायां गंतुर्भूपादेः दक्षिणभागगताः शुभाः शुभफलदाः । यदाह श्रीपतिः— 'ऋक्षो भासश्छिक्करो वानरश्च श्रीकंठः श्वा पिङ्कास्यो रुरुश्च । ये स्त्रीसंज्ञा दक्षिणास्ते प्रशस्ताः प्रोक्ताः पूर्वैः सूरिभिस्ते प्रयाणे ॥' इति । वराहः—'स्त्रीसंज्ञाश्चाषभषककपिश्रीकर्णछिक्कराः । शिखिश्रीकंठपिककरुरुश्येनाश्च दक्षिणाः ॥' इति । भषकः=श्वा । वराहेण प्राच्यादिदिक्परत्वेन शकुना उक्ताः—'कुक्कुटेभचिरल्वाश्च शिखिवंजुलछिक्कराः । बलिनः सिंहनादाश्च कूटपूरी च पूर्वतः ॥ क्रोष्टुकोलूकहारीतकाककोकर्क्षपिंगलाः । कपोतरुदिताक्रंदक्रूरशब्दश्च याम्यतः ॥ गोशशक्रौंचलोमाशहंसक्रोशकपिंजलाः । विलोमोत्सववादित्रगीतहासाश्च वारुणाः ॥ शतपत्रकुरंगाखुमृगैकशफकोकिलाः । चापशल्यकपुण्याहघंटाशंखरवा उदक् ॥' इति ॥ १०३ ॥

अथोक्तव्यतिरिक्तानां मृगपक्षिणां सामान्यतः प्रादक्षिण्येन शकुनमनुष्टुभाह—

प्रदक्षिणगताः श्रेष्ठा यात्रायां मृगपक्षिणः ।
ओजा मृगा व्रजंतोऽतिधन्या वामे खरस्वनः ॥ १०४ ॥

प्रदक्षिणेति ॥ रुरुव्यतिरिक्ताः मृगाः पक्षिणश्च यात्रायां प्रादक्षिण्येन गताश्चलिताः श्रेष्ठाः शुभफलदाः स्युः । परंतु मृगा ओजा विषमसंख्याखिपंचसप्ताद्यश्चेद्व्रजंतो दृष्टाः स्युस्तदातिधन्याः । यदाह श्रीपतिः—'मृगा विहंगाश्च गताः प्रदक्षिणं महीभृतां कांक्षितकार्यसिद्धये । मृगा व्रजंतः परमोजसंख्यया' इति । वराहस्तु पक्षिणामपि विषमसंख्याकत्वमाह । यथा— 'ओजाः प्रदक्षिणं शस्ता मृगाश्चनकुलांडजाः' इति । अंडजाः=पक्षिणः । वामे इति । स्ववामभागे खरस्वनो गर्दभशब्दोऽतिधन्यः । अथ शकुनानां कियतां देशकालविशेषे नैष्फल्यमाह—'ग्राम्ये नारण्यको ग्राह्यो नारण्ये ग्रामसंस्थितः । दिवाचरो न शर्वर्यां न च नक्तंचरो दिवा ॥ द्वंद्वरोगार्दितास्त्रस्त कलहामिषकांक्षिणः । आपगांतरिता मत्ता न ग्राह्याः शकुनाः क्वचित् ॥ रोहिताश्वाजवालेयकुरंगोष्ट्रमृगाः शशाः । निष्फलाः शिशिरे ज्ञेया वसंते काककोकिलौ ॥ नतु भाद्रपदे ग्राह्याः शूकराश्च वृकादयः । शरद्यृक्षादयः क्रौंचाः श्रावणे हस्तिचातकौ ॥ व्याघ्रर्क्षवानरद्वीपिमहिषाः सबिलेशयाः । हेमंते निष्फला ज्ञेया बालाः सर्वे विमानुषाः ॥' इति । अथ स्थानविशेषे शकुनः शुभोऽपि दुष्टफलद इत्याह वराह एव—'प्रभग्नशुष्कद्रुमकंटकीषु श्मशानभस्मास्थितुषाकुलेषु । प्राकारशून्यालयजर्जरेषु सौम्योऽपि पापः शकुनः प्रकल्प्यः ॥' इति । विरुद्धशकुननिंदाभिहिता दैवज्ञमनोहरे—'वरं श्रेयो दुर्जनकृष्णसर्पौ वरं क्षिपेत्सिंहमुखे स्वमंगम् । वरं तरेद्वारिनिधिं भुजाभ्यां नोल्लंघयेद्दुःशकुनं कदापि ॥' इति ॥ १०४ ॥

अथावश्यकत्यायां यात्रायां विरुद्धे शकुने जाते किं कर्तव्यमित्यनुष्टुभाह—

**आद्येऽपशकुने स्थित्वा प्राणानेकादश व्रजेत्।**
**द्वितीये षोडश प्राणांस्तृतीये न क्वचिद्व्रजेत् ॥ १०५ ॥**

आद्य इति॥ निर्गमसमये यदापशकुने 'वंध्यार्चम'(११।९९-१००)इत्यादिके विरुद्धे शकुने आद्ये प्रथमे संजाते सति एकादशसंख्याकान् प्राणान् स्थित्वा 'कालाध्वनोरत्यंतसंयोगे' इति द्वितीया। एकादशप्राणपरिच्छेद्यकालं स्थित्वेत्यर्थः। ततः समीचीने शकुने व्रजेत्। अथ तत्रापि द्वितीये विरुद्धे शकुने संवृत्ते षोडश-संख्याकान् प्राणान् स्थित्वा शुभशकुने व्रजेत्। तत्रापि पुनस्तृतीये विरुद्धे शकुने संवृत्ते क्वचिदपि न व्रजेत्किंतु परावृत्य गृहमागच्छेत्। यदाह वसंतराजः— 'जाते विरुद्धे शकुनेऽध्वनीनो व्यावृत्य कृत्वा करपादशौचम्। आचम्य च क्षीर-तरोरधस्तात्तिष्ठेत्प्रपश्येच्छकुनांतराणि ॥' इति। श्रीपतिः—'आद्ये विरुद्धे शकुने प्रतीक्ष्य प्राणान्नृपः पंच च षट् प्रयायात्। अष्टौ द्वितीये द्विगुणांस्तृतीये व्यावृत्य नूनं गृहमभ्युपेयात् ॥' इति। प्राणशब्देन विंशतिलघ्वक्षराणि दश गुर्व-क्षराणि वा यावता कालेन पूर्यन्ते तावान्काल उच्यते। यदाह शौनकः— 'लघ्वक्षरैः स्फुटोच्चैः प्राणः कथितस्तु विंशतिभिः' इति। भास्करः— 'गुर्वक्षरैः खेंदुमितैरसुः' इति। अन्यत्रापि 'दश गुर्वक्षरैः प्राणः' इति। कश्यपेन तु प्राणायामत्रयमेव प्रतीक्ष्यमित्युक्तम्; यथा—'यायी विरुद्धशकुन-मादौ दृष्ट्वा प्रयत्नतः। प्राणायामत्रयं कुर्याद्द्वितीये द्विगुणं चरेत्। तृतीये पुनरावृत्य शांत्या यायाद्दिनांतरे ॥' इति प्राणायामस्तु वर्णत्रयप्रसिद्धः। शांतिरुक्ता दैवज्ञमनोहरे—'यदा हि शकुनं पश्येद्विपरीतमुपस्थितम्। सघृतं कांचनं दत्त्वा निर्विशंकः सुखं व्रजेत् ॥' इति। एतच्च मूले स्पष्टमुक्तं— 'दुःशाकुन्ये साज्यं स्वर्णं दत्त्वा गच्छेत्स्वेच्छाभिः' इति। एवं निखिलदोष-शुद्धिं विचार्य शुभलग्ने गंतुर्भूपस्य शत्रुपराजयपूर्वकतन्मरणपूर्वको जयो वा भवत्येव। तत्र शत्रुनगरे जिते सति राज्ञा किं कार्यमित्याह वसिष्ठः— 'विगजतुरगभीतान्पुण्यलोकाभिलाषान्विरथशिथिलवस्त्रान्मुक्तशस्त्रास्त्रकेशान्। तृणमुखगतसत्त्वान्प्रांजलीनुह्यमानान्क्षितिपतितनयादीन्युद्धभूमौ न हन्यात् ॥ सपत्नदेशान्नगरान्प्रपश्यन्[1] महीपतिर्देवगुरुद्विजार्थे। कुर्यान्न वांछां न कुलां-गनानां प्राणाभिलाषी च कदाचिदेव ॥' इति। वराहोऽपि—'नार्ता न भीता न तृणाननाश्च विमुक्तशस्त्रा विपलायमानाः। क्षीणायुधा वाजिगजावतीर्णा ह्येते न वध्या न च पीडनीयाः ॥ कुलैकतंतुः शरणं गतो वा कृतांजलिर्यश्च वदेत्तवास्मि। अयुध्यमानानवगम्य चान्यान्न बालकान्स्त्रीपरिरक्षितांश्च ॥' इति। ग्रंथकर्त्रा तदर्थकं पद्यं नोपनिबद्धं, मुहूर्तविचारेऽनुपयोगात्। यत्तु श्रीपतिनोक्तम्—'न परविषयमाप्तो राजा द्विजामरसज्जनद्रविणहरणे चेतः कुर्यान्न वा कुलयोषिताम्। विगजतुरगानार्तान्हन्यान्न भीतनिरायुधा-न्प्रमुदितमनाः सैन्यैः शस्ते क्षणे स्वपुरं विशेत् ॥' इति। 'तन्महतामनुरोधो न्याय्यः' इति मनस्याकोप्यात्रिहितम् ॥ १०५ ॥

---

१ नगरान्प्रविश्य इति पाठः।

तत्र शस्ते क्षणे प्रवेशस्योक्तत्वाद्विजययात्रां विधाय परावृत्त्य गृहमागतस्य भूपस्य यात्रानिवृत्तिगृहप्रवेशीयमुहूर्तं जगत्यामुपजातिछंदसाह—

**यात्रानिवृत्तौ शुभदं प्रवेशनं मृदुध्रुवैः क्षिप्रचरैः पुनर्गमः ।**
**द्वीशेऽनले दारुणभे तथोग्रभे स्त्रीगेहपुत्रात्मविनाशनं क्रमात् ॥**

यात्रानिवृत्ताविति ॥ चतुर्धा प्रवेशः—नववधूप्रवेशः, सुपूर्वप्रवेशः, अपूर्वप्रवेशः, द्वंद्वाभयप्रवेशश्चेति । तत्र नववधूप्रवेशः प्रागुक्तः । अपूर्वप्रवेशद्वंद्वाभयप्रवेशौ वक्ष्येते । इह तु सुपूर्वप्रवेश उच्यते । तत्र नववधूप्रवेशस्यान्वर्थसंज्ञाविज्ञानादेव तल्लक्षणं नोक्तं कैश्चिदपि । अपूर्वादित्रिविधगृहप्रवेशलक्षणान्याह वसिष्ठः—'अपूर्वसंज्ञः प्रथमः प्रवेशो यात्रावसाने च सुपूर्वसंज्ञः । द्वंद्वाभयस्त्वग्निभयाद्विजातस्त्वेवं प्रवेशस्त्रिविधः प्रदिष्टः ॥' इति वास्तुप्रकरणोक्तविधिना गृहनिर्माणं विधाय यः प्रवेशः सोऽपूर्वसंज्ञः प्रवेशः । यस्तु भूपस्य समरविजययात्रां विधाय गृहमागतस्य प्रवेशः स सुपूर्वसंज्ञः । यस्तु अग्निभयेनाग्निकृतदाहेनादिशब्देन नद्यादिसमीपवर्तित्वाज्जलाप्लवनेन वा क्रुद्धराजादिपातनेन वा गेहनाशस्तद्गृहं पुनर्यदा संपाद्यते तस्मिन् यः प्रवेशः स 'द्वंद्वाभय' इत्युच्यते। अन्वर्थसंज्ञा चेयम् । द्वंद्वं शीतोष्णम् । अथ शीतशब्देन जलं उष्णशब्देनाग्निरुच्यते लक्षणया । जलाप्लवनेन वा अनवरतकतिपयदिवसवृष्टिपातेन वा गृहनाशस्तज्जलभयं अग्निकृतदाहेन यो गृहनाशस्तदग्निभयं तस्माच्छीतोष्णरूपात् द्वंद्वादपि पुनरुत्थापनेन यदभयं तद्द्वंद्वाभयमित्युच्यते । द्वंद्वाभयं विद्यते यस्मिन्निति 'अर्शआदिभ्योऽच्' इति मत्वर्थीयोऽच्प्रत्ययः । तादृशः प्रवेशो द्वंद्वाभय इति । तत्र गुरुशुक्रास्तादिकालशुद्धिविचारस्तु नूतनोत्थापितगृहप्रवेशे एव न द्वंद्वाभयसुपूर्वसंज्ञप्रवेशयोः । वास्तुपूजा सर्वेष्वपि प्रवेशेषु । यदाह वसिष्ठः—'नवप्रवेशे त्वथ कालशुद्धिर्न द्वंद्वसौपूर्विकयोः कदाचित् । प्रवेशपंचांगदिने सुलग्ने वास्त्वर्चनं पूर्ववदेव कुर्यात् ॥' इति । पूर्ववत्पूर्वस्मिन्नपूर्वे गृहप्रवेशे यथा वास्त्वर्चनं तथाऽपरयोरपि । अमुमेवाशयं मनसि निधायाग्रे ग्रंथकृद्वक्ष्यति—'जीर्णे गृहेऽग्न्यादिभयान्नवेऽपि मार्गोर्जयोः श्रावणिकेऽपि सत्स्यात् । वेशोऽम्बुपेज्यानिलवासवेषु नावश्यकास्तादिविचारणात्र ॥' इति । अतोऽत्र यात्रानिवृत्तिप्रवेशमुहूर्तविचारे शुक्रास्तादिदोषविचारो नाभिहितः किंतु यथाकथंचित्पंचांगशुद्धिमात्रमपेक्ष्य विशेषतश्च पंचांगशुद्धिं लग्नशुद्धिं चाग्रे (पृ० ४२९) वक्ष्यति, साप्यत्र यथासंभवमूह्या । नक्षत्रशुद्धिस्त्वेवंविधे प्रवेशे विशेषाभिधानाच्च ग्रंथकृतोक्ता । तत्र कालशुद्धिमाह श्रीपतिः—'अथ प्रवेशो नवमंदिरस्य यात्रानिवृत्तावथ भूपतीनाम् । सौम्यायने पूर्वदिने विधाय वास्त्वर्चनं भूतबलिं च सम्यक् ॥' इति । नारदोऽपि—'अथ सौम्यायने कार्यं नववेश्मप्रवेशनम् । राज्ञां यात्रानिवृत्तौ च' इति । सौम्यायन इत्येतत्तु राज्ञां यात्रानिवृत्तौ कालविलंबसहत्वे बोद्धव्यम् । वसिष्ठस्वरसात् । स्मृत्योर्विरोधे विषयकल्पनैवोचिता नतु विकल्पः । यथो-

क्तम्—'स्मृतिद्वैधं तु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ । स्मृतिद्वैधे तु विषयः कल्पनीयः पृथक् पृथक् ॥' इत्यलमतिप्रसंगेन । यात्रानिवृत्ताविति । मृदूनि चित्रानुराधामृगरेवत्यः, ध्रुवाणि रोहिणीम्युत्तराश्च, एभिर्नक्षत्रैः राज्ञां यात्रा-निवृत्तौ प्रवेशनं शुभदं । यदि क्षिप्रैः अश्विनीपुष्यहस्ताभिजिद्भिः । चरैः श्रवण-धनिष्ठाशततारकापुनर्वसुस्वातीभिर्नक्षत्रैः प्रवेशनं स्यात्तदा पुनरपि राज्ञो गमो यात्रा स्यात् । तस्मादेतानि मध्यमानि । द्वीशादिनक्षत्रेषु प्रवेशे क्रमात् स्त्र्यादीनां नाशः । यथा-विशाखायां प्रवेशे स्त्रियो राज्या मरणं, कृत्तिकायां प्रवेशे गृहनाशनमग्निना गृहं दग्धं स्यात्; दारुणभे मूलज्येष्ठार्द्राश्लेषासु प्रवेशे पुत्रस्य राजकुमारस्य मरणं; तथोग्रभे पूर्वात्रयभरणीमघासु प्रवेशे आत्मनः स्वस्यैव राज्ञो मरणं स्यादित्यर्थः । यदाह श्रीपतिः—'शुभप्रवेशो मृदुभिर्ध्रु-वाख्यैः क्षिप्रैश्चरैः स्यात्पुनरेव यात्रा । उग्रैर्नृपो दारुणभैः कुमारो राज्ञी विशाखासु विनाशमेति ॥ कृत्तिकासु भवनं कृशानुना दह्यते प्रविशतां न संशयः ॥' इति । कृशानुरग्निः । अथाग्रे ग्रंथकृता प्रोक्तापि पंचांगलग्नशुद्धिर-त्रोपयोगात्तन्मूलवाक्यान्युच्यंते । वसिष्ठः—'चंद्रजार्यसितवासरेषु तु श्रीकरं सुखमहार्थलाभदम् । सूर्यसूनुदिवसे स्थिरप्रदं किंतु चौरभयमत्र विद्यते ॥' इति । श्रीपतिः—'रिक्ता तिथिर्भूसुतभानुवारौ निंद्याश्च योगाः परिवर्ज-नीयाः । मेषः कुलीरो मकरस्तुला च त्याज्याः प्रवेशे हि तथा तदंशाः ॥' इति । अत्र मेषादिर्निंद्यलग्नानां फलं सापवादमुक्तम् । राजमार्तंडे—'भूपो यात्रा मेषलग्नप्रवेशे नाशं गच्छेत्कर्कटस्योदये च । व्याधिं तौलिन्याश्रिते लग्न-वर्तिन्याकेकेरे प्राप्नुयाद्धान्यनाशम् ॥' आकेकेरः=मकरः । 'लग्नेऽन्यत्रांशकेऽप्येषामेते दुष्टफलप्रदाः । शुभान्यन्यानि लग्नानि प्रवेशे मुनयो विदुः ॥ निंदिता अपि शुभांशसमेतास्तौलिमेषमकराः सकुलीराः । कर्तृभोपचयगाश्च विलग्ने राशयः शुभफलाय भवंति ॥' इति । वसिष्ठः—'त्रिकोणकेंद्रत्रिधनायसंस्थैः शुभैस्त्रिषष्ठायगतैः खलैश्च । लग्नांत्यषष्ठाष्टविवर्जितेन चंद्रेण लक्ष्मीनिलयप्रवेशः॥ न नैधने भेऽपि न चाष्टलग्ने पंचेष्टकेऽप्यष्टमशुद्धियुक्ते । कार्यः प्रवेशो न चरांशलग्ने शुभेक्षिते वाप्यथ संयुते वा ॥ प्रवेशलग्नाद्धिधनस्थितो यः क्रूरग्रहः क्रूरगृहे यदि स्यात् । प्रवेशकर्तारमथ त्रिवर्षाद्धंत्यष्टवर्षैः शुभराशि-गश्चेत् ॥' इति । अन्यदप्याह वसिष्ठ एव—'कृत्वा शुक्रं पृष्ठतो वामतोऽर्कं विप्रान्पूज्यानग्रतः पूर्णकुंभम् । हर्म्यं रम्यं तोरणस्रग्वितानैः स्त्रीभिः स्रग्वी गीतवाद्यैर्विशेत्तत् ॥' इति । वामसूर्यज्ञानोपायमाह विश्वकर्मा—'लग्ना-त्प्रागादितो दिक्षु द्वौ द्वौ राशी नियोजयेत् । एकमेकं न्यसेत्कोणे सूर्यं वामे विचिंतयेत् ॥' अत्रेदं ध्येयम्-यत्र मासे यात्रा कृता तन्मासान्नवमे मासि यात्रादिनान्नवमदिने वा प्रवेशो निषिद्धः । यदाह गुरुः—'निर्गमान्नवमे मासि प्रवेशो नैव शोभनः । नवमे दिवसे चैव प्रवेशं नैव कारयेत् ॥' इति । एतत्सविशेषं नूतनगृहप्रवेशव्याख्यानावसरेऽभिधास्यते इत्यास्तां प्रसक्तानुप्रसक्तमिति ॥ १०६ ॥

। विवाहप्रकरणोक्तदोषानतिदिशन्प्रागुक्तान्यात्राप्रकरणोक्तदोषान् शिष्याणामविस्मरणार्थं मंजुभाषिणीभ्यां स्रग्धरया च संगृह्णाति—

अयनर्क्षमासतिथिकालवासरोद्भवशूलसंमुखसितज्ञदिक्पाः ।
भृगुवक्रतादिपरिघाख्यदंडको युवतीरजोऽप्यशुचितोत्सवादिकं ॥
मृतपक्षरिक्तरवितर्कसंख्यकास्तिथयश्च सौरिरविभौमवासराः ।
अपि वामपृष्ठगविधुस्तथाऽनलो वसुपंचकाभिजिदथापि दक्षिणे ॥
लग्ने जन्मर्क्षतन्वोर्मृतिगृहमहितर्क्षाच्च षष्ठं तदीशा
वा लग्ने कुंभमीनर्क्षनवलवतनू चापि पृष्ठोदयं च ।
पृष्ठाशासंस्थमृक्षं दशमशनिरथो सप्तमे चापि काव्यः
केंद्रे वक्राश्च वक्रिग्रहदिवसविवाहोक्तदोषाश्च नेष्टाः ॥१०९॥

अयनर्क्षेति ॥ मृतपक्षेति ॥ लग्न इति ॥ एतेऽयनर्क्षादयो दोषा विवाहप्रकरणोक्ताश्च दोषा यात्रायां कर्तव्यायां नेष्टाः । तत्रायनशूलः 'सौम्यायने सूर्यविधू तदोत्तराम्' (११।८) इत्यादिकः । मासोद्भवः शूलो द्विविधः—'वृषादित्रित्रिराशिष्वर्के प्राच्यादिदिक्षु न गंतव्यम्' इत्येकः, कपाटकंटकादिश्च द्वितीयः युद्धयात्रायां स्वरोदयशास्त्रे सर्वतोभद्रचक्रेऽभिहितः । यथा—'यत्र त्रयो वृषाद्याश्च पूर्वाशादिषु बुधैः क्रमात् । राशयो द्वादशैवं तु मेषांताः सृष्टिमार्गगाः ॥ यत्र पूर्वादिकाष्ठायां वृषराश्यादिगो रविः । सा दिशाऽस्तमिता ज्ञेया तिस्रः शेषाः सदोदिताः ॥' इति । कपाटकंटकादिर्यथा—'कपाटं पूर्वतो ज्ञेयं कार्तिकादित्रिकं तथा । नभस्यतो वास्तुमध्ये मघोरेकेन कंटकः ॥' इति ज्योतिषार्कवचनात् । नक्षत्रवारशूलः 'न पूर्वदिशि शक्रभे न विधुसौरिवारे तथा' (११।१०) इत्युक्तः । तिथिशूलः योगिनी 'नवभूम्यः शिववह्नयः' (११।३१) इत्युक्तः । संमुखसितज्ञदिक्पा इति । संमुखः शुक्रः संमुखो बुधः संमुखो दिक्स्वामी लालाटिकश्चैव 'यत्रोदितस्तां ककुभं न यायात्' (११।३७) इत्यादिनोक्तः । भृगुवक्रतादीति । आदिशब्दात्क्षीणास्तमितनीचगतपराजितत्वबाल्यादिकम् 'वक्रास्तनीच' (११।३८) इत्युक्तम् । परिघाख्यदंडकः 'पूर्वादिषु चतुर्दिक्षु' (११।३३) इत्युक्तः । युवतीरजः स्वपत्नीरजोदर्शनं, अशुचिता आशौचं, जननाशौचं मरणाशौचं च; अशुचितेत्यत्र 'न नञ्पूर्वात्तत्पुरुषात्' इत्यनेन यो निषेधः स एतस्मात्सूत्रादनंतरं वक्ष्यमाणविषये ध्येयः । उत्सवः दीपोत्सवादिः, आदिशब्देन विवाहव्रतबंधादिः । मृतपक्षः 'तमोभुक्ततारा' (११।१४) इत्युक्तः, रिक्तरवितर्कसंख्यकाश्चतुर्थीनवमीचतुर्दशीद्वादशीषष्ठ्यस्तिथयः, उपलक्षणत्वादष्टमीपूर्णिमामावास्याशुक्लप्रतिपदः । सौरिरविभौमवासराः शनिसूर्यमंगलवाराः । अयं च निषेधो दिक्शूले न सर्वत्रेति प्रागभिहितम् । वामपृष्ठगविधुरपि वामभागे पृष्ठभागे च चंद्रो निषिद्धः । उक्तं च—'संमुखोऽर्थस्य लाभाय दक्षिणे सुखसंपदः ।

१ टीकाकृद्भिः 'भानि स्थाप्यान्यब्धिदिक्षु' इति मूलपाठमादृत्य परिघलक्षणं (पृ० ३५३) व्याख्यानम्, अत्र च 'पूर्वादिषु चतुर्दिक्षु' इति तत्पाठपठने हेतुर्मृग्यः ।

पृष्ठतो मरणं चंद्रे वामचंद्रे धनक्षयः ॥' इति । एतच्च निर्मूलत्वादुपेक्ष्यम् । सत्यपि मूलवत्त्वे एतत्सार्धद्वारिकनक्षत्रव्यतिरेकेण ज्ञेयम्, अन्यथा सर्वत्र दिग्द्वयनिषेधे पुष्यादीनां सर्वदिग्द्वारकता भज्येत । तथाऽऽह्लः–'रवेर्भतोऽब्जभोन्मितिः' (११।२५) इत्युक्तः । उपलक्षणत्वात्क्रमणमपि निषिद्धम् । वसुपंचकं वसुशब्देन धनिष्ठोत्तरार्धमुच्यते, तदादिकं नक्षत्रपंचकं; अभिजिदभिजित्संज्ञको मुहूर्तो दिवसेऽष्टमः, एतद्द्वयमपि दक्षिणे; एते पंचांगदोषाः॥ अथ लग्नदोषाः । लग्न इति । लग्ने यात्रालग्ने विचारयितव्ये सति जन्मर्क्षतन्वोर्जन्मराशिर्जन्मलग्नं तत्संबंधिमृतिगृहमष्टमस्थानं अहितर्क्षाच्छत्रुराशेः शत्रुलग्नाद्वा षष्ठस्थानं तदीशाः स्वजन्मराशितोऽष्टमाधिपतिः स्वजन्मलग्नाद्वाष्टमाधिपतिः स्वशत्रुराशितः षष्ठस्वामी स्वशत्रुजन्मलग्नाद्वा षष्ठाधिपतिः; एते लग्ने लग्नस्थिताः स्युः कुंभमीनर्क्षनवलवतनू कुंभलग्नं मीनलग्नं लग्नांतरसद्भावे वा कुंभनवांशो मीननवांशो वा पृष्ठोदयं च । पृष्ठोदयराशयः 'गोऽजाश्विकर्किमिथुनाः समृगा निशाख्याः पृष्ठोदया विमिथुनाः' इति वराहोक्ताः । पृष्ठाशामंत्यमृक्षं दिग्विलोमलग्नमित्यर्थः । दशमशनिः दशमे स्थाने शनिर्दशमशनिः, अथो सप्तमे स्थाने स्थितः काव्यः शुक्रः, केंद्रे वक्रा वक्रिणो ग्रहाः, वक्रिग्रहस्य वक्रिग्रहयोर्वा वक्रिग्रहाणां वा दिवसा वाराः; एते दोषा यात्रायां नेष्टा अवश्यं वर्ज्याः । अत्रार्थे मूलवाक्यानि प्राग्लिखितानि । अथ च विवाहोक्तदोषा विवाहप्रकरणेऽभिहिता ये दोषास्तेऽपि निषिद्धाः । त इमे–'उत्पातान्सहपातदग्धतिथिभिर्दुष्टांश्च योगांस्तथा चंद्रेज्योशनसामथास्तमयनं निध्याः क्षयर्द्धी तथा । गंडांतं च सविष्टि संक्रमदिनं तन्वंशपास्तं तथा तन्वंशेशविधूनथाष्टरिपुगान् पापस्य वर्गांस्तथा ॥ सेंदुक्रूरखगोदयांशमुदयास्ताशुद्धिचंडायुधान् खार्जूरं दशयोगयोगसंहितं जामित्रलत्ताव्यधम् । बाणोपग्रहपापकर्तरि तथा तिथ्यृक्षवारोत्थितं दुष्टं योगमथार्धयामकुलिकाद्यान्वारदोषानपि ॥ क्रूराक्रांतविमुक्तभं ग्रहणभं यत्क्रूरगंतव्यभं त्रेधोत्पातहतं च केतुहतभं संध्योदितं भं तथा । तद्वच्च ग्रहभिन्नयुद्धगतभं सर्वानिमान्संत्यजेदुद्वाहे शुभकर्मसु ग्रहकृतांल्लग्नस्य दोषानपि ॥' इति । यदाह वसिष्ठः—'एकविंशन्महादोषास्त्वेते ब्रह्ममुखोदिताः । कदाचिन्नैव सीदंति गुणानां कोटिकोटिभिः ॥ तस्मादेतेषु दोषेषु कदाचिन्नाचरेच्छुभम् । विवाहे विधवा नारी मरणं व्रतबंधने ॥ ग्रामनाशः प्रतिष्ठायां सीमन्ते गर्भनाशनम् । नवान्नभोजने मृत्युः कृषौ तत्फलनाशनम् ॥ कर्तुर्नाशो गृहारंभे प्रवेशे पतिनाशनम् । यात्रायां कर्तृनाशः स्यादुद्यानेऽपि विशेषतः । लभ्यते सुमहत्पुण्यमेषु श्राद्धादिकर्मभिः ॥' इति । अत्र सप्तमशुक्रव्यतिरिक्तो जामित्रदोषो धनुरर्कादिमासदोषोऽपि नास्तीति ज्ञेयम् । यदुक्तं गणेशदैवज्ञैः–'सर्वमुद्वाहजं मासाभ्रदोषौ विना' इति । मासदोषो धनुरर्कादिः, अभ्रदोषो जामित्रदोषः । तथापि शुक्राहित्यं विवक्षितम् । यतः सप्तमशुक्रस्य यात्रायां विशिष्य निषेधोऽस्ति । बुधगुरू तु प्रशस्तावेव । एवं मासदोषजामित्रदोषा विवाहोक्ता यात्रायां न निषिद्धाः

किंतु विहिता इत्येतद्वर्जम्; अन्ये विवाहोक्ता दोषा यात्रायां निषिद्धा एवेति शिवम् ॥ १०७ - १०९ ॥

अथ यात्राप्रकरणं गद्येनोपसंहरति—

## इति श्रीदैवज्ञानंतसुतदैवज्ञरामज्योतिर्विद्विरचिते मुहूर्तचिंतामणौ यात्राप्रकरणं समाप्तम् ॥ ११ ॥

स्पष्टार्थमेतत् ॥

ज्योतिर्विद्वरनीलकंठविदुषः श्रीचंद्रिकायास्तथा पुत्रेणाहिगविप्रमारितधिया मौहूर्तचिंतामणेः ॥ गोविंदेन विनिर्मिते नयनिधौ पीयूषधाराभिधे व्याख्याने खलु यात्रिकप्रकरणं संपूर्णतामभ्यगात् ॥ १ ॥

इति श्रीमद्दैवज्ञमुकुटालंकारनीलकंठज्योतिर्वित्पुत्रगोविंदज्योतिर्विद्विर-
चितायां मुहूर्तचिंतामणिटीकायां पीयूषधाराभिधायां
यात्राप्रकरणं समाप्तम् ॥ ११ ॥

---

# अथ वास्तुप्रकरणम् १२ ।

गौरीनंदनमिष्टसिद्धिसदनं विघ्नावलीभेदनं
नत्वा ज्योतिषिकाग्र्यरामरचिते मौहूर्तचिंतामणौ ।
गोविंदो बुधनीलकंठविधिविरसूनुः सतामग्रणी-
र्वेश्मार्थं गृहनिर्मितिप्रकरणं व्याख्याति विद्वन्मुदे ॥ १ ॥

अथ वास्तुप्रकरणं व्याख्यायते। तत्र त्रिविधप्रवेशे वसिष्ठाद्यभिहिते 'अपूर्वसंज्ञः प्रथमः प्रवेशः' इत्युक्तं स च गृहनिर्माणायत्त इति वास्तुनिर्माणमारंभ उच्यते। यदाह वसिष्ठः—'वास्तुज्ञानं प्रवक्ष्यामि यदुक्तं ब्रह्मणा पुरा। ग्रामसद्मपुरादीनां निर्माणं सूक्ष्मतोऽधुना ॥' इति। गृहनिर्माणप्रयोजनमभिहितं भविष्यत्पुराणे—'गृहस्थस्य क्रियाः सर्वा न सिध्यंति गृहं विना। यतस्तस्माद्गृहारंभप्रवेशसमयौ ब्रुवे ॥' गृहं स्वसत्ताकं। न सिध्यंति निष्फला भवंतीत्यर्थः। एतदपि स्पष्टमभिहितं तत्रैव-'परगेहे कृताः सर्वाः श्रौतस्मार्तक्रियाः शुभाः। निष्फलाः स्युर्यतस्तासां भूमीशः फलमश्नुते ॥' इत्येतत्सर्वं मनस्यालोच्य गृहारंभप्रकरणं विवक्षुः ग्रंथकृद्ग्रामपुरादिस्थानेषु स्वस्य

शुभमशुभं वा लाभमलाभं वा द्वारनिवेशनं च शार्दूलविक्रीडितेनाह—

यद्भं द्व्यंकसुतेशदिङ्मितमसौ ग्रामः शुभो नामभात्
स्वं वर्गं द्विगुणं विधाय परवर्गाढ्यं गजैः शेषितम्।
काकिण्यस्त्वनयोश्च तद्विवरतो यस्याधिकाः सोऽर्थदो-
ऽथ द्वारं द्विजवैश्यशूद्रनृपराशीनां हितं पूर्वतः॥ १॥

यदिति॥ ग्रामः स्वस्य शुभोऽशुभो वेति तावच्चिंत्यते। व्यवहारप्रसिद्धं यन्नाम नीलकंठ इत्यादिकं तस्यावकहडाचक्रानुसारेण यदनुराधादिकं नक्षत्रं ततो यद्वृश्चिकादिकं भं राशिः स्यात्तन्नामभं। एवं यस्मिन् ग्रामे नगरे वा वस्तुमिच्यते तस्य चरणाद्रिरित्यादिकं यन्नाम तस्माज्जातो यो राशिर्मीनादिस्तन्नामभमेवं नामद्वयं ज्ञात्वा नामभात् पुरुषनामराशेः सकाशाद् यद्भं यस्य ग्रामस्य भं राशिः स चेद्द्वितीयो नवमः पंचम एकादशसंख्यो दशमश्च स्यात्तदाऽसौ ग्रामः स्वस्य शुभः शुभफलदाता स्यादन्यथा न भवतीत्यर्थः। यथा–नीलकंठस्य वृश्चिकराशितः पंचमो मीनराशिरतश्चरणाद्रिर्नीलकंठस्य वासयोग्यः सन् शुभफलदो न वाराणस्यादिः। उक्तं च मुहूर्तमार्तंडे(६।१)–'नामर्क्षाद्द्विसुतांकदिग्भवगतो ग्रामः शुभोऽन्योऽन्यथा' इति। अथ काकिण्यादौ नामराशिरेव ग्राह्यः। उक्तं च–'काकिण्यां वर्गशुद्धौ च वादे द्यूते स्वरोदये। मंत्रे पुनर्भूवरणे नामराशेः प्रधानता॥' इति। अथ ग्रामात्मनोरुत्तमर्णत्वमधमर्णत्वं चाह-स्वं वर्गमिति। वर्गास्तु–'अकचटतपयशवर्गाः खगेशमार्जारसिंहशुनाम्। सर्पाखुमृगावीनां निजपंचमवैरिणामष्टौ॥' इत्युक्ताः; तत्र यस्य पुंसः यत्संख्याको वर्गो गरुडादिः स्यात्तद्वर्गसंख्यां द्विगुणां विधाय कृत्वा परस्य ग्रामस्य वर्गसंख्यया आढ्यां च कृत्वा गजैरष्टभिः शेषितमवशिष्टं ताः काकिण्यो ज्ञेयाः पुंसः। एवं ग्रामस्यापि स्ववर्गसंख्यां द्विगुणां कृत्वा परस्य पुंसः वर्गसंख्यया युक्तां च कृत्वा गजभक्ताऽवशिष्टाः काकिण्यो ग्रामस्य भवंति। एवमनयोः पुरुषग्रामयोः काकिण्यः स्युः। तत्र तद्विवरतः पुरुषकाकिणीनां ग्रामकाकिणीनां च विवरमंतरं तस्मिन् क्रियमाणे यस्य ग्रामस्य दातृत्वात् पुंसः काकिण्यवशेषे पुंसो द्रव्यहानिः ग्रामस्य प्रतिग्रहीतृत्वादित्यर्थः। यथा–नीलकंठस्य वर्गः सर्पः तत्संख्या ५ द्विगुणा १० चरणाद्रेर्वर्गः सिंहस्तत्संख्यया ३ युक्ताः १३ गज ८ भक्तावशेषं ५ नीलकंठस्य काकिण्यः ५; एवं ग्रामवर्गसंख्या ३ द्विगुणा ६ नीलकंठवर्ग ५ संख्यया युक्ताः ११ अष्टभक्तावशेषं ३ ग्रामस्य काकिण्यः ३; द्वयोरंतरे शेषं २ नीलकंठस्य दातृत्वात्स्वद्रव्यहानिरित्यर्थः। उक्तं च–'स्ववर्गं द्विगुणं कृत्वा परवर्गेण योजयेत्। अष्टभिस्तु हरेद्भागं योऽधिकः स ऋणी भवेत्॥' इति। इतोऽन्यथाहुः कश्यपवसिष्ठनारदाः—'अकारादिषु वर्गेषु दिक्षु प्रागादिषु क्रमात्। गृध्रमार्जारसिंहश्वसर्पाखुगजशाशकाः॥ दिग्वर्गाणामियं योनिः स्ववर्गात्पंचमो रिपुः। रिपुवर्गं परित्यज्य शेषवर्गाः शुभप्रदाः॥ साध्यवर्गं पुरः स्थाप्य पृष्ठतः साधकं न्यसेत्। विभजेदष्टभिः शेषं साधकस्य धनं स्मृतम्॥ व्यत्ययेनागतं शेषं साधकस्य ऋणं स्मृतम्। धनाधिकं स्वल्पऋणं सर्वसंपत्प्रदं स्मृतम्॥' इति। गृध्रोऽत्र गरुडः। गरुडसर्पयोर्महावैर-

सत्त्वात् । साध्येति । साध्यो वासयोग्यो ग्रामादिस्तस्य वर्गं वर्गसंख्यां पुरः संस्थाप्य साधकस्य नीलकंठादेः वर्गसंख्यां पृष्ठतो न्यसेत्, एवं विशिष्टोऽङ्कोऽष्टभिर्भक्तः शेषं साधकस्य ऋणं स्यात् । यथा-साध्यवर्गसंख्या ३ पुरः स्थापिता साधकस्य वर्गसंख्या ५ च पृष्ठतः सा चैवं ५३ जातास्त्रिपंचाशत् अष्टभक्तावशिष्टं ५ धनं साधकस्य, विपरीतं स्थापितं यथा ३५ अष्टभक्तावशेषं ३ साधकस्य ऋणं स्यात्। अथ द्वारनिवेशनमाह—अथेति। द्विजादिराशिमतां पुंसां क्रमेण पूर्वतः प्राच्यादिदिक्चतुष्टये द्वारं हितम् । यथा-द्विजराशयः कर्कवृश्चिकमीनास्तेषां पूर्वदिशि वैश्यराशयो वृषकन्यामकरास्तेषां दक्षिणदिशि शूद्रराशयो मिथुनतुलाकुंभास्तेषां पश्चिमदिशि नृपराशयो मेषसिंहधनुर्धरास्तेषामुत्तरदिशि द्वारनिवेश इत्यर्थः। यदाह......॥ १ ॥

अथ राशिपरत्वेन ग्रामनिवासे निषिद्धस्थानानि वसंततिलकाछंदसाह—

गोसिंहनक्रमिथुनं निवसेन्न मध्ये
ग्रामस्य पूर्वककुभोऽलिझपांगनाश्च ।
कर्की धनुस्तुलभमेषघटाश्च तद्व-
द्वर्गाः स्वपंचमपरा बलिनः स्युरष्टाः ॥ २ ॥

गोसिंहेति ॥ वस्तुमिष्टस्य ग्रामस्य नवविभागवन्नवधा विभागं कृत्वा मध्ये मध्यमविभागे गोसिंहनक्रमिथुनम्। समाहारद्वंद्वः। न वसेत् वृषसिंहमकरमिथुनराशिमंतः पुरुषाः न वसेयुः। अथ पूर्वककुभः पूर्वदिशातोऽष्टदिक्षु अलिवृश्चिकः तदादिराशिमंतः पुरुषाः न वसेयुः । यथा-पूर्वस्यां वृश्चिकः, आग्नेय्यां झषो मीनः, दक्षिणस्यां कन्या, नैर्ऋत्यां कर्कः, पश्चिमायां धनुः, वायव्यां तुला, उत्तरस्यां मेषः, ऐशान्यां कुंभः न वसेदित्यर्थः। अथ वर्गाः अकचटतपयशवर्गाः अष्टौ ऐन्द्र्याः पूर्वदिशमारभ्य अष्ट दिक्षु बलिनः। यथा-अवर्गः पूर्वस्यां, कवर्ग आग्नेय्यां, चवर्गो दक्षिणस्यां, टवर्गो नैर्ऋत्यां, तवर्गः पश्चिमायां, पवर्गो वायव्यां, यवर्ग उत्तरस्यां, शवर्ग ऐशान्यां, बलीत्यर्थः। कीदृशा वर्गाः? स्वपंचमपराः स्वस्मात् पंचमः परः शत्रुर्येषां ते। यस्य अवर्गः पूर्वस्यां बली तेन पश्चिमायां द्वारं निवासो वा न विधेयः। एवं कवर्गादीनामाग्नेयादिसप्तदिक्षु बलित्वं सप्रयोजनं ज्ञेयम्। यदुक्तं मुहूर्तमार्तंडे-'नामर्क्षाद्विसुतांकदिग्भवगतो ग्रामः शुभोऽन्योऽन्यथा तत्कोणेऽत्यभुवां शुभं निवसतां दोषः परेषामलम्। कन्याकर्किधनुस्तुलाक्रियघटाः कौर्प्यांडजौ याम्यतो मध्येऽन्ये न वसंत्ययैंद्रककुभो वर्गाः स्युरोजस्विनः॥' इति। ओजस्विनो बलिनः। कौर्प्यो वृश्चिकः। चक्रोद्धारो यथा ·····॥

अथेष्टनक्षत्रेष्टायाभ्यां इष्टभूम्यां विस्तारायामौ इंद्रवज्रयेंद्रवंशापूर्वार्धेन चाह—

एकोनितेष्टर्क्षहता द्वितिथ्यो रूपोनितेष्टायहतेंदुनागैः ।
युक्ता धनैश्चापि युता विभक्ता भूपाश्विभिः शेषमितो हि पिंडः॥३॥

---

१ टीकायां कश्यपादिवचनस्थमिदं प्रतीकम् । २ शत्रुत्वं चोक्तं भूपालवल्लभे—'वर्गेशास्ताक्ष्यमार्जारसिंहश्वसर्पमूषकाः । इभेणौ पूर्वतस्तेषां स्ववर्गात् पंचमो रिपुः' इति । ३ 'कौर्प्यंडजो' इति पाठमादृत्य 'कौर्पो=वृश्चिकः' इति मुहूर्तमार्तंडकारो व्याख्यातवान्।

**स्वेष्टायनक्षत्रभवोऽथ दैर्घ्यहृत्स्याद्विस्तृतिर्विस्तृतिहृच्च दीर्घता ।**

एकोनितेति ॥ स्वेष्टायेति ॥ यत्र गृहं कर्तुमिष्टं भवति सा भूर्नानाकारा संभवति समचतुरस्रविषमचतुरस्रव्यस्राद्यनेकभेदेन, तत्र यदेव नक्षत्रं स्वव्यवहारनाम्नः 'राशिकूटादिकं सर्वं दंपत्योरिव चिंतयेत्' इति वसिष्ठोक्तेः विवाहोक्तमेलापकविधिना शुभदं स्यात्तदेव स्वेष्टभं कल्प्यं । कल्पितमृक्षं तेन हता गुणिता द्वितिथ्यः १५२ कार्याः; ततो रूपेणोनितो य इष्टायो ध्वजादिकः तेन हता इंदुनागाः एकाशीतिस्तया युक्ताः कार्याः; ततो घनैः सप्तदशभिरपि युक्ताः, ततो भूपाश्विभिः षोडशाधिकद्विशत्या विभक्ताः, ततो भक्ते सति यच्छेषं तन्मितः पिंडः क्षेत्रफलं स्यात्, स च पिंडः स्वेष्टायनक्षत्रभवः स्वस्य गृहकर्तुरिष्टं यन्नक्षत्रं इष्टः आयश्च ताभ्यां भवतीति तादृशः स्यात् । अथ स पिंडो दैर्घ्यहृत् कल्पितदैर्घ्यभक्तः सन् विस्तृतिर्विस्तारः स्यात् । अथ स पिंडो विस्तृतिहृत् कल्पितविस्तारभक्तो दीर्घता स्यात् । उक्तं च सारसमुच्चये—'रूपाष्टभि ८१ र्विनिहतो भवनस्य बंधो नक्षत्रमिष्टमिह युग्मशरेंदु १५२ निघ्नम् । एकीकृतं घन १७ युतं च रसेंदुयुग्म २१६ भक्तस्ततो भवति मध्यगृहस्य पिंडः ॥' इति । अत्रोदाहरणम्—नीलकंठस्य अनुराधानक्षत्रं तस्य रोहिण्या सह मेलापकः संभवतीति इष्टभं रोहिणी कल्पितं, विषमायः सिंहस्तृतीयः ३ इष्टर्क्षं ४ एकोनितं ३ अनेन द्वितिथ्यो १५२ हताः ४५६ इष्टायः ३ रूपोनितः २ आभ्यामिंदुनागा ८१ हताः १६२ एतैर्युक्ताः ६१८ घनैः १७ युताः ६३५ भूपाश्विभिः २१६ विभक्ताः शेषमिदमेव क्षेत्रफलं गृहस्य २०३ अथ कल्पितदैर्घ्यं २९ अनेन भक्तो लब्धो विस्तारः ७ अथ कल्पितविस्तृतिः ७ अनेन भक्तो लब्धं दैर्घ्यं २९ । यदाह प्रकारांतरेण गोपिराजः-'विष्णुं व्येकायगोभू १९ हतिभयुजि फलं गोपिराजो भशेषाग्मायं वाहाष्टिराम्भेष्टयुतमहिहता केप्रकृत्याख्य २१ विश्व १३ । बाणाः ५ सिद्धा २४ ष्टि १६ नागो ८ हु २७ निर्हृति १९ गिरिश ११ स्या ३ कृतीं २२ द्र १४ र्तु ६ तत्त्वा २५ त्यष्ट्यं १७ क ९ क्ष्मा १ नखे २० ना १२ र्णव ४ विकृति २३ दिना १५ श्व ७ स्कृती २६ भेंदु १८ काष्ठाः १० ॥' इति । अस्यार्थः-गोपिराजो व्येकायगोभूहतिभयुजि सति भशेषात् विष्णुं अहिहता दकप्रकृत्याख्या विश्वादयः फलं स्यादित्याहेति योजना । विगत एको यस्मात्स व्येकः स चासौ आयश्च व्येकायः ध्वजादिरिष्टायः स च गोभुवश्च १९ एषां हतिः परस्परगुणनं व्येकायगोभूहतिश्च भं च व्येकायगोभूहतिभे तयोर्युक् व्येकायगोभूहतिभयुक् तस्मिन्सति भशेषात्रैः २७ भक्ते सति यच्छेषं तस्माद्विष्णुनामानं शिष्यं अहिहताश्चाष्टगुणिताः दक द्वौ प्रकृत्याख्या एकविंशतिर्विश्वे त्रयो-

१ अत्र प्रत्यंत्यं शेषाङ्क-फलविस्तारकं चक्रमत्र दीयते; तथथा—

| शेषाङ्कः | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | ० | ११ | १२ | १३ | १४ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| फलं | २ | २१ | १३ | ५ | २४ | १६ | ८ | २७ | १९ | ११ | ३ | २२ | १४ | ६ |
| शेषाङ्कः | १५ | १६ | १७ | १८ | १९ | २० | २१ | २२ | २३ | २४ | २५ | २६ | २७ | |
| फलं | २५ | १७ | ९ | १ | २० | १२ | ४ | २३ | १५ | ७ | २६ | १८ | १० | |

दशोत्थादयो गृहक्षेत्रफलं सायमिष्टायसहितं स्यात् इत्याह वेति गोपिराजः। अत्रोदाहरणम्-पूर्वोक्त इष्टायः ३ व्ययकः २ गोभू १९ हतिः ३८ इष्टर्क्ष रोहिणी तत्संख्यया ४ युतं ४२ अस्मात् भैः २७ शेषं १५ एतत्संख्यया फलं २५ अहि-८ हतं २०० इष्टायसहितं २०३ इदं स्वेष्टायनक्षत्रभवं क्षेत्रफलं पूर्वसममेव। अथ महागृहप्रमाणार्थमाह—वेति। वा अथवा इष्टायसहितं जातं यत्फलं तत् अष्टिरग्नेष्टयुतं अष्टिश्च दशश्च अष्टिदशः षोडशाधिकद्विशती २१६ तया हतो गुणितो य इष्ट एकद्वित्र्याद्यंकस्तेन युक्तं कार्यं तन्मनोभीष्टस्य महागृहस्य क्षेत्रफलं स्यादित्यर्थः॥ ३॥

अथैवंवंशोत्तरार्धेन ध्वजान्वदत्रायैर्वर्णपरत्वेन च द्वारनिवेशनं उपजात्याह—

**आया ध्वजो धूमहरिश्वगोखरेभध्वांक्षकाः पिंड इहाष्टशेषिते॥४॥**
**ध्वजादिकाः सर्वदिशि ध्वजे मुखं कार्यं हरौ पूर्वयमोत्तरे तथा।**
**प्राच्यां वृषे प्राग्यमयोर्गजेऽथवा पश्चादुदक्पूर्वयमे द्विजादितः ५**

आया इति॥ ध्वजादीति॥ पिंडे क्षेत्रफलेऽष्टशेषिते अष्टभक्ते सति यद्वशिष्यते तत्परिमिता आया ध्वजादिकाः स्युः। ध्वजधूमौ प्रसिद्धौ, हरिः सिंहः, श्वा कुक्कुरः, गौर्वृषः, खरो गर्दभः, इभो हस्ती, ध्वांक्षः काकः, ध्वांक्ष एव ध्वांक्षकः, स्वार्थे कः। यदाह विश्वकर्मा—'विस्तारेणाहतं दैर्घ्यं विभजेदष्टभिस्ततः। यच्छेषं स भवेदायो ध्वजाद्यास्ते स्युरष्टधा। ध्वजो धूमो हरिः श्वा गौः खरेभौ वायसोऽष्टमः। पूर्वादिदिक्षु चाष्टानां ध्वजादीनामवस्थितिः॥' इति। सर्वदिशीति। ध्वजाख्ये आये आगते सति सर्वदिशि दिक्चतुष्टयेऽपि गृहद्वाराणि कार्याणि स्युरित्यर्थः। हरौ सिंहाये पूर्वदक्षिणोत्तरदिक्षु द्वाराणि स्युः न पश्चिमदिशि। तथा वृषाख्ये आये प्राच्यां दिश्येव मुखं, नान्यदिक्षु। गजाख्ये आये प्राग्यमयोः पूर्वदक्षिणदिशोर्गृहमुखं कार्यं स्यात्। यदाह श्रीपतिः—'गृहेषु चाया विषमाः प्रशस्ताः स्वस्थानगाः सर्वगतो ध्वजश्च। ध्वजो हरौ तौ च गजे वृषे ते वृषो हि नान्यत्र समाश्रितः स्यात्॥' वसिष्ठोऽपि—'विषमायः शुभायैव समायः शोकदुःखदः। ध्वजः सिंहे तौ च गजे होते गवि शुभप्रदाः॥ वृषो न पूज्यतेऽन्यत्र ध्वजः सर्वत्र पूजितः॥' इति। अस्यार्थः—ध्वजः प्रागवस्थित्या तत्र पूजित एव परंतु हरावपि दक्षिणस्यामभिपूजितः तौ च गजे तौ ध्वजसिंहायौ गज उत्तरस्यामपि प्रशस्तौ स्वस्थाने किमुत? एते ध्वजसिंहगजाख्या आयाः पश्चिमायामपि पूजिताः स्वस्थाने किमुत? वृष आयस्तु अन्यत्र पूर्वदक्षिणोत्तरदिक्षु न पूजितः किंतु स्वावस्थित्या पश्चिमदिश्येव। ध्वजस्तु सर्वत्रैव पूजित इति। अनया रीत्या ये आया यत्रावस्थिताः स्युस्तत्तत्संमुखदिक्षु द्वाराणि स्युरित्यर्थः। 'प्रत्यग्ध्वजे द्वारमथोऽक्षिण पूर्वं हरावपि स्याद्विरदे च याम्याम्' इति श्रीपत्युक्तेः। महेश्वरोऽपि—'सर्वद्वार इह ध्वजो वरुणदिग्द्वारं च हित्वा हरिः प्राग्द्वारो वृषभो गजो यमसुरेशाशामुखः स्याच्छुभः' इति। आयानां प्रयोजनांतरमाह विश्वकर्मा—'वृषः सिंहो गजश्चैव कुंभे कर्कटकीटयोः। द्विपः पुनः प्रयोक्तव्यो वापीकूपसरःसु च॥ मृगेंद्र-

मासने दद्याच्छयने च गजं पुनः । वृषं भोजनपात्रेषु छत्रादिषु पुनर्ध्वजम् ॥ अग्निवेश्मसु सर्वेषु गृहे वह्न्युपजीविनाम् । धूमं नियोजयेत्केचिच्छ्वानं म्लेच्छादिजातिषु ॥ खरो वैश्यगृहे शस्तो ध्वांक्षः शेषकुटीषु च । वृषसिंहौ ध्वजश्चापि प्रासादपुरवेश्मसु ॥' इति । वसिष्ठः—'गजाये वा ध्वजाये वा गजानां सदनं शुभम् । अश्वालयं ध्वजाये वा खराये वृषभेऽपि वा । उष्ट्राणां मंदिरं कार्यं गजाये वा वृषे ध्वजे ॥ पशुसद्म वृषाये वा ध्वजाये वा शुभप्रदम् । शय्यासु वृषभः शस्तः पीठे सिंहः शुभप्रदः ॥ अमत्रच्छत्रवस्त्राणां वृषाये वा ध्वजेऽपि वा ॥ पादुकोपानहौ कार्यौ सिंहाख्येऽप्यथवा ध्वजे । उक्तानामप्यनुक्तानां मंदिराणां ध्वजः शुभः ॥' इति । अथ ब्राह्मणादिवर्णपरत्वेन द्वारनिवेशनमुच्यते—अथवेति । द्विजादितः ब्राह्मणादिवर्णविभागेन पश्चादित्यादिदिक्षु गृहद्वारं स्यात् । यथा-ब्राह्मणस्य पश्चान्मुखं गृहद्वारं, क्षत्रियस्योदग्दिशि, वैश्यस्य पूर्वस्यां, शूद्रस्य यमे दक्षिणस्यामित्यर्थः । उक्तं च श्रीपतिना-'ध्वजे प्रतीच्यां मुखमग्रजानामुदङ्मुखं भूमिभृतां च सिंहे । विशो वृषे प्राग्वदनं गजे तु शूद्रस्य याम्याननमामनंति ॥' इति । टोडरानंदे च्यवनः-'ध्वजे परास्यं विप्राणां राज्ञां सिंहेऽप्युदङ्मुखम् । गजे शूद्रस्य याम्यास्यं विशः पूर्वामुखं वृषे ॥' इति ॥ ४-५ ॥

अथ गृहारंभे विशिष्यकालनिषेधमुपजातिकयाह—

**गृहेशतत्स्त्रीसुखवित्तनाशोऽर्केन्दिज्यशुक्रे विबलेऽस्तनीचे ।**
**कर्तुः स्थितिर्नो विधुवास्तुनोर्भे पुरःस्थिते पृष्ठगते खनिः स्यात् ६**

गृहेशेति ॥ चेद् गृहस्वामिनो जन्मराशिवशाद् अर्केन्दिज्यशुक्रे विबले निर्बले अस्ते अस्तंगते नीचे नीचराशिगते वा सति क्रमाद् गृहेशतत्स्त्रीसुखवित्तनाशो भवति । यथा-सूर्ये दुष्टे विबले निर्बले नीचस्थिते च गृहेशस्य नाशः, इंदौ चंद्रे निर्बले अस्तमिते नीचगते वा गृहेशस्त्रीनाशः, इज्ये गुरौ तादृशे सति गृहेशसुखनाशः, शुक्रे तादृशे गृहेशस्य वित्तं द्रव्यं तस्य नाशः । यदाह श्रीपतिः—'रवौ गृहस्थो गृहिणी शशांके धनं सिते देवगुरौ च सौख्यम् । विनाशमायाति बलेन हीने नीचस्थिते वाऽस्तमुपागते वा ॥' इति । वसिष्ठस्तु नैःस्वमेवाह-'नीचे शत्रुगते जीवे शुक्रे वा यदि वा बुधे । शशांके वा कृतं गेहमतिनिःस्वत्वमाप्नुयात् ॥' इति । इदमस्तस्याप्युपलक्षणम् । अत्रास्तगतत्वं किं क्षितिजसन्निधिकृतमुत सूर्यकृतं विवक्षितमिति ? उच्यते- क्षितिजसन्निधिकृतमस्तगत्वं तु दैनंदिनं तच्च सूर्यादिसकलग्रहसाधारणम् । तस्मिन्विवक्षितेऽस्तगतत्वविशेषणानर्थक्यम् । अनेनैवाशयेन वास्तुशास्त्रे पठ्यते 'अस्तदोषोऽत्र न ग्राह्यः प्रातिदैवसिको बुधैः । नास्तदोषः सदा चांद्रे न मैत्रेऽब्जस्य नीचता ॥' इति । अब्जस्य चंद्रस्य । कर्तुरिति । विधुवास्तुनोर्भे यन्नक्षत्रे दिनचंद्रस्तद्विधुभं यद् गृहस्य विस्तारायामवशादुत्पन्नं भं तद्गृहभं तस्मिन्पुरःस्थिते संमुखस्थिते सति कर्तुर्गृहनिर्मातुस्तस्मिन्गृहे स्थितिर्निवासो न स्यात् । पृष्ठगते वा विधुवास्तुनोर्भे

१ वैश्यागृहे इति पाठांतरम् ।

सति खनिः खननं चौरकृतापहारं तद्वशात्सर्वस्वहानिरित्यर्थः । उक्तं च वास्तुशास्त्रे—'ऋक्षं चंद्रस्य वाम्नोऽग्र त्वग्रे पृष्ठे न शस्यते ॥' इति । श्रीपतिना तु चंद्रफलमुक्तम्—'क्षपाकरे नैव गृहं पुरःस्थे कुर्याद्वसेत्तत्र न जातु कर्ता । पतंति स्वप्नानि च पृष्ठसंस्थे यत्नेन तस्मादिदमत्र चिंत्यम् ॥' इति । पुरःस्थितत्वं लग्नवशादिति केचिद्व्याचख्युः । यथा-प्राङ्मुखे गृहे कर्तव्ये लग्नस्थश्चंद्रः पुरःस्थितो भवति,दक्षिणमुखे तु गृहे वामगः, पश्चिममुखे तु पृष्ठगः, उत्तरमुखे तु दक्षिणगः,एवं दशमस्थश्चंद्रो दक्षिणमुखे गृहे संमुखः। एवं सर्वास्वपि दिक्षु पृष्ठगत्वं संमुखत्वं च ध्येयम् । तत्रार्थात् दक्षिणवामगत्वं चंद्रस्य समीचीनमित्यर्थः । रत्नमालाटीकाकारो महावास्तुदिग्द्वारभक्रमेण संमुखादिवाऽवस्थेति व्याख्यत् । यथा गृहद्वारं यस्यां दिशि विधित्सितं तद्दिङ्नक्षत्रेषु गृहारंभो न कार्य इति । अर्थाद्दिङ्नक्षत्रवशेन वामदक्षिणगे चंद्रे गृहारंभः सुखेन कार्यः । यदाह ब्रह्मशंभुः—'धनलाभः प्रवासः स्यादायुश्चौरभयं क्रमात् ॥ दक्षाग्रवामपृष्ठस्थे गृहभर्तुर्निशाकरे ॥' इति । केचित्सूर्येऽप्येवमेव फलमाहुः । यदाह ब्रह्मशंभुरेव—'भानावपि तथैव स्यादधिकं च तदंतरे । धनलाभो मृतिर्व्याधिरविनाशो विलोमतः ॥' इति । तदंतरे विदिक्षु, विलोमतः ऐशानवायव्यनैर्ऋत्याग्नेयदिक्षु क्रमेण धनलाभो मरणं व्याधिरविनाशः फलं स्यादित्यर्थः । इदं दिग्द्वारनक्षत्रवशेन चंद्रफलं तुल्यन्यायत्वाद्वास्तुनक्षत्रेऽपि ध्येयम् । यदुक्तं ब्रह्मशंभुना—'गृहायलब्धऋक्षेषु यत्र ऋक्षे च चंद्रमाः । शलाकामस्तके ध्येयं कृत्तिकादिक्रमेण च ॥ वामदक्षिणभागे तु प्रशस्तं शांतिकारकम् । अग्रे पृष्ठे न दातव्यं यदीच्छेच्छ्रेय आत्मनः ॥ ऋक्षं चंद्रस्य वाम्नोऽग्र त्वग्रे पृष्ठे न शस्यते ॥' इति । [अयमाशयः—कृत्तिकादिसप्तनक्षत्रेषु अनुराधादिसप्तसु वा गृहनक्षत्रे चंद्रनक्षत्रे च सति पूर्वद्वारं पश्चिमद्वारं वा न कार्यं तत्र चंद्रः पृष्ठस्थितोऽग्रस्थितो वा भवति । एवं मघादिसप्तसु धनिष्ठादिसप्तसु वा गृहनक्षत्रे चंद्रनक्षत्रे वा सति दक्षिणद्वारमुत्तरद्वारं वा न कार्यमित्यर्थः ] ॥ ६ ॥

अथैवमायं सफलमभिधाय व्ययकथनपुरःसरं अंशकज्ञानं सफलमुपजात्याह—

**भं नागतष्टं व्यय ईरितोऽसौ ध्रुवादिनामाक्षरयुक् सपिंडः ।**
**तष्टो गुणैरिंद्रकृतांतभूपा ह्यंशा भवेयुर्न शुभोऽन्तकोऽत्र ॥ ७ ॥**

भमिति ॥ प्रागुक्तदिशा कल्पितं यद् गृहभं तन्नागैरष्टभिस्तष्टं भक्तावशिष्टं स व्यय ईरितः । यथा-भं रोहिणी ४ नागतष्टं ४ अयमेव व्ययः असौ व्ययः ध्रुवादिनामाक्षरयुक् ध्रुवादीनां नामानि अधुनैव वक्ष्यति यत्संख्याकानि दिक्षु द्वाराणि चिकीर्षितानि तदनुरोधेन यदागतं ध्रुवादिगृहनाम तदक्षरसंख्यया युक्तः ततः सपिंडः प्रागानीतपिंडयुक्तः गुणैस्त्रिभिस्तष्टः भक्तावशिष्टः एकद्वित्रिशेषेण इंद्रयमराजसंज्ञकाख्योंऽशाः स्युः।अत्र गृहारंभेऽन्तको यमाख्योंऽशको न शुभः । अर्थादिंद्रराजानौ शुभफलदौ । यदाह श्रीपतिः—'धिष्ण्ये विभक्ते वसुभिर्व्ययः स्याद्व्यायमूलव्ययमालयं सत् । व्ययान्विते क्षेत्रफले गृहस्य ध्रुवादिनामाक्षरमिश्रिते च । त्रिभिर्विभक्ते क्रमशोंऽशकः स्यादिंद्रो यमो

भूपतिरंतकोऽसन् ॥' इति । वास्तुशास्त्रेऽपि—'मूलराशौ व्यये क्षिप्ते गृहनामाक्षरैः पुनः । युते हरेत्त्रिभिर्भागं यच्छेषं सोंऽशको भवेत् । इंद्रो यमश्च राजा स्याद्यमांशो नैव शोभनः ॥' इति । मूलराशिः=क्षेत्रफलम् ॥ ७ ॥

अथ विवक्षितशालाध्रुवांकानयनं पथ्यावक्त्राख्येनानुष्टुभाह—

**दिक्षु पूर्वादितः शालाध्रुवा भूद्वौ कृता गजाः ।**
**शालाध्रुवांकसंयोगः सैको वेश्म ध्रुवादिकम् ॥ ८ ॥**

दिक्ष्विति ॥ पूर्वादितो दिक्षु प्राच्यादिषु चतसृषु दिक्षु इमे शालाध्रुवाः स्युः । यथा–प्राच्यां द्वारे चिकीर्षिते शालाध्रुवांकः एकः, दक्षिणस्यां द्वौ, पश्चिमायां कृताश्चत्वारः, उत्तरस्यां गजाः अष्टौ । अथ दिक्परत्वेन यावंति द्वाराणि एकं द्वे त्रीणि चत्वारि वा चिकीर्षितानि तावतां शालाध्रुवांकानां संयोगः कार्यः सैकः एकयुक्तः सन् ध्रुवादिकं वेश्म गृहं स्यात् । अत्रोपपत्तिर्नीलकंठगुरुचरणप्रसादत उच्यते । यथाह नारदः—'गुरोरधो लघुं न्यस्य पुरस्तात्पूर्ववन्न्यसेत् । गुरुभिः पश्चिमं पूर्वं यावत्सर्वलघुर्भवेत् ॥' एतच्च सामान्यतो यस्मिन्कस्मिंश्चित्प्रस्तारे संभवति तथापि गृहेषु विदिग्द्वारानौचित्यादिदिक्ष्वेव द्वाराणां प्राशस्त्योक्तेः दिशां च चतुष्ट्वाच्चत्वार एव गुरवः स्थाप्याः, ततो गुरोरधो लघुः स्थाप्य इति विधिः कार्यः । तत्र प्रथमातिक्रमे कारणाभावादादिगुरोरेवाधो लघुः स्थाप्यः । एवमग्रेऽपि । गुरुलघुस्वरूपं वृत्तरत्नाकरे—'असौ ग्वक्रो ज्ञेयोऽन्यो मात्रिको लृजुः' इति । असौ ग् गुरुर्वक्रो लेख्यः यथा (ऽ) अन्यो गुरुव्यतिरिक्तः लृ लघुर्मात्रिकः एकमात्रः ऋजुः सरलः ऊर्ध्वदंडाकृतिर्लेख्यः । यथा (।) चतुर्णां प्रस्तारो यथा—

| | | | | |
|---|---|---|---|---|
| १ | ऽ | ऽ | ऽ | ऽ |
| २ | । | ऽ | ऽ | |
| ३ | ऽ | । | ऽ | |
| ४ | । | । | ऽ | |
| ५ | ऽ | ऽ | । | |
| ६ | । | ऽ | । | |
| ७ | ऽ | । | । | |
| ८ | । | । | । | |
| ९ | ऽ | ऽ | ऽ | |
| १० | । | ऽ | ऽ | |
| ११ | ऽ | । | ऽ | |
| १२ | । | । | ऽ | |
| १३ | ऽ | ऽ | । | |
| १४ | । | ऽ | । | |
| १५ | ऽ | । | । | |
| १६ | । | । | । | |

अत्र दिशां चतुष्ट्वात् क्रमेण लघुस्थानेनालिंदं गुरुमाश्रितं । 'प्रदक्षिणंगृहद्वारादलिंदैर्दशषड्विधा' इति । गृहभेदाः स्युरिति शेषः । अलिंदं आलिंदशब्देन शालाभित्तेर्बाह्ये या गमनिका जालकावृतांगणसंमुखा क्रियते सा ज्ञेयेत्युत्पलः । प्रतिशालाल्यमिति महादेवः । 'प्रघाणप्रघणालिंदा बहिर्द्वारप्रकोष्ठके' इत्यमरः । तत्र चतुर्गुरोः प्रथमभेदस्य लघोरभावात् दिग्द्वाराभावादूर्ध्वमुखं गृहं कोष्ठीसदृशं स्यात् । अन्येषु पंचदशसु भेदेषु लघुस्थानावस्थितत्वा तत्तद्दिक्षु द्वाराणि स्युः । तत्र ग्रंथकृद्भिनापि प्रस्तारोक्तिं लाघवेन शालाध्रुवानानयति स्म । यथा एकस्मिन्नेव द्वारे प्राच्यां चिकीर्षिते शालाध्रुवांकः १ एवं दक्षिणदिशि २ पश्चिमदिशि च ४ उत्तरदिशि च ८ प्रत्यक्षतो दृश्यते । तत्र द्वित्र्यादिद्वारज्ञानार्थमुपायः । यद्दिक्षु द्वारेच्छा तत्तद्दिक्शालाध्रुवयोगः कार्यः; यथा–पूर्वस्यां पश्चिमायां

१ गुरोरधो लघुः स्थाप्यः पुरस्तादूर्ध्ववन्न्यसेत् ॥ गुरुभिः पश्चिमं पूर्वं सर्वलघ्ववधिर्विधिः ॥ इति पाठो लिखितपुस्तके ।

च द्वारे अभीष्टे शालाध्रुवौ १।४ अनयोर्योगः ५ एवं पूर्वदक्षिणोत्तरद्वारेऽभीष्टे शालाध्रुवानां १।२।८ एषां योगः ११ एवं दिक्चतुष्टयेऽपि द्वारे शालाध्रुवांकयोगः १५ प्रस्तारलिखितक्रमेण प्रत्यक्षत उपलभ्यते । ध्रुवादिसंज्ञास्तु चतुर्गुरुप्रस्तारमारभ्योक्ताः । तत्र चतुर्गुरोः प्रथमभेदस्य दिग्द्वाराभावेन गणनाभावात्तस्यागस्य प्राप्तत्वात्स माभूदित्येकयोगः कृतः सर्वत्र । यथा पूर्वपश्चिमयोः ६ कांताख्यं गृहं जातमेवं पूर्वदक्षिणोत्तरदिक्षु १२ धनदाख्यं गृहं दिक्चतुष्टये १६ विजयाख्यं गृहम् । अत एवोक्तम् 'दिक्षु पूर्वादितः' इत्यादि ॥८॥

अथैवं विवक्षितध्रुवानयनमभिधायेदानीं ध्रुवादीनां नामाक्षरसंख्यां पथ्यावक्त्रछंदसाह—

तिथ्यर्ककाष्टाष्टिगोरुद्रशक्र नामाक्षरं त्रयम् ।
भूम्यब्धीष्वंगदिग्वह्निविश्वेषु द्वौ नगेऽब्धयः ॥ ९ ॥

तिथ्यर्केति ॥ 'दिक्षु पूर्वादितः' इत्यादिना यद्वेश्मध्रुवादि समागतं तस्य 'शालाध्रुवांकसंयोगः सैकः' इत्युक्तदिशा संख्यामवधारयेत्, सा चेत्संख्या पंचदशी द्वादशी अष्टमी षोडशी नवमी एकादशी चतुर्दशी वा स्यात्तदा गृहनामाक्षरत्रयात्मकं स्यात् । यथा १५।१२।८।१६।९।११।१४ अत्र त्रीण्येवाक्षराणि । पुनः सैव संख्या प्रथमाद्वितीयाचतुर्थीपंचमीषष्ठीदशमीतृतीयात्रयोदशी वा स्यात्तदा गृहनाम द्वौ अक्षरद्वयात्मकं स्यात्; यथा–१।२।४।५।६ । १० । ३ । १३ अत्र द्वे अक्षरे । पुनः सा संख्या सप्तमी स्यात्तदाऽब्धयश्चतुरक्षरं गृहनाम । यथा–७ चत्वार्यक्षराणि । एतच्च पद्यं ध्रुवधान्याद्यक्षरगणनामूलमिति नात्र मूलवाक्यसमानार्थकस्योपन्यासः ॥ ९ ॥

अथ षोडशगृहाणां नामान्यार्यागीतिछंदसाह—

ध्रुवधान्ये जयनंदौ खरकांतमनोरमं सुमुखदुर्मुखोग्रं च ।
अहितं धनदं नाशं चाक्रंदं विपुलविजयाख्यं स्यात् ॥ १० ॥

ध्रुवधान्ये इति ॥ आर्यागीत्याख्यं छंदोऽदः । तल्लक्षणं वृत्तरत्नाकरे— 'आर्याप्रथमार्धे यदि गुरुणैकेनाधिकेन निधने युक्तम् । इतरं तद्वन्निखिलं यदीयमुदितेयमार्यागीतिः ॥' इति । तथा प्रस्तारः ॥ऽऽ॥ऽऽ॥ऽ॥ऽ॥ऽ॥।॥ऽ।ऽऽ पूर्वार्धे । उत्तरार्धे ॥ऽ॥ऽऽऽऽऽऽ॥ऽ॥ऽऽऽ अत्रार्यासामान्यात्तल्लक्षणमप्यनुसंधेयम् । विशेषलक्षणस्य सामान्यलक्षणाधीनत्वात् । निधने प्रांते । ध्रुवेत्यादिपद्यं स्पष्टार्थमेव तथापि विविच्यते । यथा ध्रुवधान्ये जयनंदाविति चेतरेतरयोगद्वंद्वः खरकान्तेत्यादिः समाहारद्वंद्वः । अहितं विपक्षाख्यं । उग्रं क्रूरम् । विपुलविजयाख्यमिति समाहारद्वंद्वः । ध्रुवमूर्ध्वमुखं प्रथमं गृहं, धान्यं पूर्वद्वारं द्वितीयं, जयं दक्षिणद्वारं तृतीयं, नंदं प्राग्दक्षिणद्वारं चतुर्थं, खरं पश्चिमद्वारं पंचमं, कांतं प्राक्प्रत्यग्द्वारं षष्ठं, मनोरमं दक्षिणपश्चिमद्वारं सप्तमं, सुमुखं प्राग्दक्षिणपश्चिमद्वारमष्टमं, दुर्मुखमुत्तरद्वारं नवमं, उग्रं पूर्वोत्तरद्वारं दशमं, अहितं विपक्षाख्यं दक्षिणोत्तरद्वारमेकादशं, धनदं पूर्वदक्षिणोत्तरद्वारं द्वादशं, नाशं क्षयाख्यं पश्चिमोत्तरद्वारं त्रयोदशं, आक्रंदं पूर्वपश्चिमोत्तरद्वारं चतुर्दशं, विपुलं दक्षिणपश्चिमोत्तरद्वारं पंचदशं,

१ रिपुदं विस्तदं नाशं इति पाठः ।

विजयं पूर्वदक्षिणपश्चिमोत्तरद्वारं षोडशमिति । ननु ध्रुवाद्यक्षरसंख्याज्ञानं प्राक्-पद्येनैवोक्तं, तत्किं पुनर्ध्रुवादीनां नामग्रहणेन ? उच्यते,—नामसदृशफलसूच-नार्थं तदुपादानम्, अन्यथा द्वारानुरोधेन ध्रुवाद्यक्षरसंख्यायोगे उक्ते कीदृशानां गृहाणां विधिर्निषेधो वेति न निश्चीयेत । तस्माद्येषां शुभफलदानि नामानि तेषां गृहाणां ग्रहणं येषां चाशुभं फलं तेषां त्यागो विधेय इति निष्कृष्टोऽर्थः । उक्तं च वसिष्ठेन—'ध्रुवसंज्ञं गृहं त्वाद्यं धनधान्यसुखप्रदम् । धान्यं धनप्रदं नृणां जयं स्याद्विजयप्रदम् । नंदं स्त्रीहानिदं नूनं खरं संपद्विनाशनम् । पुत्रपौत्रप्रदं कांतं श्रीप्रदं स्यान्मनोरमम् ॥ सुवक्रं भोगदं नूनं दुर्मुखं विसुखप्रदम् । सर्वदुःखप्रदं क्रूरं विपक्षं शत्रुभीतिदम् । धनदं धनदं गेहं क्षयं सर्वक्षयप्रदम् । आक्रंदं शोकजननं विपुलं श्रीयशःप्रदम् । विपुलं नामसदृशं धनदं विजयाभिधम् ॥' इति ॥ १० ॥

अथ केषांचिन्मतेन गृहस्यायादिनवकमुपजातिकापथ्यावक्त्राभ्यामाह—

पिंडे नवांकांगगजाग्निनागनागाब्धिनागैर्गुणिते क्रमेण ।
विभाजिते नागनगांकसूर्यनागर्क्षतिथ्यृक्षखभानुभिश्च ॥ ११ ॥
आयो वारोंऽशको द्रव्यमृणमृक्षं तिथिर्युतिः ।
आयुश्चाथ गृहेशर्क्षगृहभैक्यं मृतिप्रदम् ॥ १२ ॥

पिंड इति ॥ आय इति ॥ पिंडे क्षेत्रफले नवधा स्थापिते क्रमेण नवादि-भिरंकैर्गुणिते क्रमेण च नागादिभिरंकैर्भक्ते सति यदवशिष्टं तदायादिकं स्यात् । यथा–क्षेत्रफलं नवभिर्गुणितमष्टभिर्भक्तं शिष्टमायः स्यात्, पुनर्नवभिर्गुणितं सप्तभिर्भक्तं शिष्टं वारः । पुनः षड्भिर्गुणितं नवभिर्भक्तं शिष्टोंऽशकः । पुनरष्ट-भिर्गुणितं द्वादशभिर्भक्तं शिष्टं द्रव्यं स्यात् । पुनस्त्रिभिर्गुणितमष्टभिर्भक्तं शिष्ट-मृणं । पुनरष्टभिर्गुणितं सप्तविंशत्या भक्तं शिष्टमृक्षं । पुनरष्टभिर्गुणितं पंचदश-भिर्भक्तं शिष्टा तिथिः । पुनश्चतुर्भिर्गुणितं सप्तविंशत्या भक्तं शिष्टा युतिर्योगो विष्कंभादिः । पुनरष्टभिर्गुणितं क्षेत्रफलं खभानु १२० भिर्भक्तं शिष्टमायुः स्यादित्यर्थः । तद्यथा—पिंडः २०३ नवभिर्गुणितः १८२७ अष्टभक्तं शेषं ३ सिंह आयो जातः, पुनः नवभिर्गुणितं सप्तभिर्भक्तं शिष्टं वारः ७ एवं सर्वेऽप्यानीताः अंशकः ३ द्रव्यं ४ ऋणं १ नक्षत्रं ४ रोहिणी तिथिः ४ चतुर्थी योगः २ प्रीतिः आयुः ६४ । उक्तं च–'गोऽङ्कर्त्वष्टगुणाष्टनागजलधिव्यालैः ९ । ९ । ६ । ८ । ३ । ८ । ८ । ४ । ८ । हतं भूफलं नागाद्र्यंकदिवाकराष्टभतिथ्यर्क्षैर्युगैः स्वसूर्यैः ८ । ७ । ९ । १२ । ८ । २७ । १५ । २७ । १२० भंजेत् । आयं वारमथांशकं धनमृणं तारां तिथिं चिंतयेद्योगं चायुरितीह शेषकपदं भागैर्हतं तांत्रिकः ॥' इति । वसिष्ठादिभिस्तु पदेन निर्दिष्टाः । यदाह–'विस्तारायामगुणितं गृहस्य पदमुच्यते । तस्माद्धनाऽधनायर्क्षं वारराश्यनवांशकाः ॥ गजरामांकवस्वंकऋतु-भि ८ । ३ । ९ । ८ । ९ । ६ । गुणितात्पदात् । सूर्याष्टाष्टर्क्षशैलांक १२ । ८ । ८ । २७ । ७ । ९ विभक्तादवशिष्टकाः ॥ संपूर्णाः शुभदास्त्वेते ह्यसंपूर्णास्त्वनिष्टदाः ॥' इति । पदं क्षेत्रफलं । अधनमृणम् । अत्रोपपत्तिः गुणकानां भाजकानां च—

१ वसिष्ठो हि विपक्ष इति पाठोऽत्र पठति; गर्गस्तु–'सुपक्ष धनद क्षयम्' इत्यनेन तमेव 'सुपक्ष' इत्याचष्टे । एवमत्र सुपक्ष-विपक्षयोर्वैषम्यं कथं शुभ तत्सुधीभिर्विमर्शनीयम् ।

आया अष्टावेव, वाराः सप्तैव, अंशा नवैव, धनं ऋणं, नक्षत्राणि सप्तविंशतिः, तिथयः पंचदश, योगाः सप्तविंशतिः, परमायुः विंशत्यधिकशतम् । अथैषामायादीनां प्रयोजनमुच्यतेऽस्माभिः । आयस्य तावत्–'विषमायः शुभायैव समायः शोकदुःखदः' इति वसिष्ठोक्तिः । वाराणां च 'सूर्यारवारराश्यंशाः सदा वह्निभयप्रदाः । शेषग्रहाणां वारांशाः कर्तुरिष्टार्थसिद्धिदाः ॥' इति । यथा-गणितेनागतो भौमवारः सोऽपि निंद्यः, तद्राशी मेषवृश्चिकौ निंद्यौ, तदंशाः यस्मिन्कस्मिंश्चिल्लग्ने मेषवृश्चिकनवांशावपि निंद्यौ । एवमन्येष्वपि वारेषु नवांशानां च । 'गृहस्यागतं भं यत्तु तद्द्विराश्यात्मकं यदि । तन्नवांशवशात्तत्र ज्ञातव्यं सर्वदा गृहं' इति । यथा कृत्तिका द्विराश्यात्मिका तत्रैकावशेषे मेषः, द्व्यादिशेषे वृषः, मृगेऽपि द्व्यधिके शेषे मिथुनमन्यथा वृषः,पुनर्वस्वावप्यंशकत्रयं यावन्मिथुनमन्यथा कर्कः, एवमुत्तराफल्गुन्यादिषु द्विराश्यात्मकंगृहनीयं विद्वद्भिः । ननु निःसंदिग्धत्वेकराश्यात्मकेषु अश्विन्यादिषु । धनर्णयोश्च 'धनाधिकं गृहं वृद्ध्यै निर्धनाय ऋणाधिक'मिति । नक्षत्रस्य 'विपत्प्रदा विपत्तारा प्रत्यरा प्रतिकूलदा । निधनाख्या तारका तु सर्वथा निधनप्रदा ॥ विवर्ज्यतारकास्वेतन्निर्माणमशुभप्रदम् । कुर्वन्नज्ञानतो मोहाद् दुःखभाग्व्याधिभाग्भवेत ॥' अयमर्थः–गृहनक्षत्रात् दिनभं यत्संख्यं तन्नवभक्तमवशिष्टतारका विपत्तारादिकाः स्युश्चेत्तदाऽनिष्टास्तद्दिने गृहारंभं न कुर्यादन्यस्मिन्दिने शुभतारासु गृहारंभं कुर्यादित्यर्थः–इति केचित् । अपरे तु गृहकर्तृनामनक्षत्राद्गृहभं गण्यं नवभक्तमवशिष्टं विपत्तारादिकं स्यात्तदा तद्गृहमनिष्टमन्यथा शुभमिति । यदाह कश्यपः—'दत्ते दुःखं तृतीयर्क्षं पंचमर्क्षं यशःक्षयम् । आयुःक्षयं सप्तमर्क्षं कर्तुर्भाद्यदि सद्मभम् ॥' इति । वास्तुशास्त्रेऽपि—'गृहभात्स्वामिभं गण्यं भक्तं च नवभिः पुनः । यच्छेषं सा भवेत्तारा सप्तपंचत्रिकाधमा ॥' इति । यदा तु गृहकर्तुर्गृहस्य चैकं नक्षत्रं चेत्स्यात्तदा तच्छुभमशुभं वेति निर्णयं स्वयमेवाह–अथेति । गृहेशो गृहस्वामी तस्यर्क्षं नक्षत्रं प्रागुक्तप्रकारेण चानीतं भं गृहभं तयोरैक्यं तयोरेकमेव चेद्भं स्यात्तद्गृहकर्तुर्मृतिप्रदं मरणकरं स्यात् । यदाह वसिष्ठः—'गृहस्य तत्पतेस्त्वेकं धिष्ण्यं चन्निधनप्रदम्' इति । निधनं मरणम् । राश्यैक्येऽयं दोषः, ननु भिन्नराशित्वे । तद्वाक्यस्य विवाहप्रकरणोक्तत्वात् । कैश्चिदन्यदपि प्रयोजनमुक्तम् । तदुक्तं व्यवहारसमुच्चये—'त्रिभिस्त्रिभिर्वेश्मनि कृत्तिकाद्यैरुच्छेदपुत्राप्तिधनानि शोकः । शत्रोर्भयं राजभयं च मृत्युः सुखं प्रवासश्च नव प्रभेदाः ॥' इति । गृहभवशाद्राशिज्ञानेऽपि प्रयोजनमाह स एव–'राशिकूटादिकं सर्वं दंपत्योरिव चिंतयेत् । नैःस्वं द्विद्वादशे नूनं त्रिकोणे त्वनपत्यता । षष्ठाष्टके नैधनं स्याद्व्यत्यये मध्यमं स्मृतम् । परेषु शुभदं प्रोक्तं गेहं तत्कर्तृराशितः ॥' इति । व्यत्यये=द्वादशद्वितीय इत्यादिके । अन्ये राशिकूटप्रभेदा 'वर्णो वश्यम्' (७।२१) इत्यादिका विवाहप्रकरणोक्ता ध्येयाः । सर्वपदोपादानात् 'राक्षसामरमर्त्योक्तं गणयोन्यादिकं पुनः । ज्ञेयं ज्यौतिषशास्त्रात्तदिदमित्यत्र नोदितम् ॥' इति वास्तुशास्त्रोक्तेश्च । कृत्तिकादिषु द्विराशिषु भेषु राशिनिर्णयो वास्तुशास्त्रे–'अश्विन्यादित्रयं मेषे सिंहे प्रोक्तं मघात्रयम् । मूलादि-

त्रितयं चापे शेषेषु नवराशयः ॥' इति। शेषेषु भेषु रोहिण्यादिषु नवराशयो ज्ञेयाः। यथा–रोहिणीमृगयोर्वृषः, आर्द्रापुनर्वस्वोर्मिथुनं, पुष्याश्लेषयोः कर्कः; एवं हस्तादिद्विके श्रवणादिद्विके च कन्यामकराद्या राशयः स्युरित्यर्थः। अयं च पक्षो वास्तुशास्त्रे नवांशानुक्तेरुक्तः। अत्र राशिकूटे नाडीवेधो न दोषाय। उक्तं च ज्योतिश्चिंतामणौ—'सेव्यसेवकयोश्चैव गृहतत्स्वामिनोरपि। परस्परं मित्रयोश्चैकनाडी प्रशस्यते ॥' इति। तिथिप्रयोजनं तिथ्यानयनप्रकारांतरं च वास्तुशास्त्रे—'शक्राहतं क्षेत्रफलं त्रिंशद्भक्तावशेषकम्। तिथिः प्रतिपदा ज्ञेया दर्शं रिक्तां च वर्जयेत् ॥' इति। तुल्यन्यायत्वाच्छुभाशुभप्रकरणोक्तं दुष्टयोगवर्जनं च योगानां प्रयोजनं आयुषश्च प्रयोजनं स्पष्टमेव यत् 'तावत्कालं गृहस्थिति'रिति। अथ यत्र हस्तादिगणनया क्षेत्रफले क्रियमाणे आयव्ययांशकादिषु शुद्धिर्नोपलभ्यते, तत्राप्यंगुलादिकं निक्षिप्य संशोध्य वा क्षेत्रफलं साध्यम्। यदाह भीमपराक्रमः—'करमानाद्गुणं चेत्तदंगुलादि प्रदाय हित्वा वा। क्षेत्रफलं गणितेन प्रसाधयेदिष्टसिद्ध्यर्थम् ॥' इति। अगुणमायव्ययादिगुणशून्यं यदि स्यात्तदिष्टसिद्ध्यर्थमिष्टानामायांशकानां सिद्ध्यर्थं प्रक्षिपेत। अत्र वृत्तादिक्षेत्रेषु क्षेत्रफलानयनं लीलावतीप्रभृतिषु ज्योतिर्ग्रंथेषु द्रष्टव्यम् ॥ ११-१२ ॥

अथ गृहारंभे वृषवास्तुचक्रं शालिनीभ्यामाह—

**गेहाद्यारंभेऽर्कभाद्वत्सशीर्षे रामैर्दाहो वेदभैरग्रपादे।**
**शून्यं वेदैः पृष्ठपादे स्थिरत्वं रामैः पृष्ठे श्रीर्युगैर्दक्षकुक्षौ ॥ १३ ॥**
**लाभो रामैः पुच्छगैः स्वामिनाशो वेदैर्नैःस्व्यं वामकुक्षौ मुखस्थैः।**
**रामैः पीडा संततं चार्कधिष्ण्याद्दृश्वे रुद्रैर्दिग्भिरुक्तं त्वमन्मत् ॥ १४ ॥**

गेहाद्यारंभ इति ॥ लाभो रामैरिति ॥ गेहं गृहम्, आदिशब्देन ग्रामादादि। तदारंभे सति अर्कभात् सूर्याक्रांतनक्षत्राद् रामैस्त्रिभिर्भैर्वत्सस्य वृषस्य शीर्षे स्थितैर्दाहः फलं स्यात्। ततो वेदभैश्चतुर्भिर्भैः अग्रपादे पुरःस्थितपादद्वये स्थितैः शून्यं जनवासशून्यं स्यात्। ततश्चतुर्भिर्भैः पृष्ठपादद्वये स्थितैः स्थिरत्वं गृहकर्तुः। ततो रामभैः पृष्ठे स्थितैः श्रीः स्यात्। ततो युगैश्चतुर्भिर्दक्षिणकुक्षौ स्थितैर्लाभः। ततस्त्रिभिः पुच्छगैः स्वामिनो गृहकर्तुर्नाशः। ततो वेदैश्चतुर्भिर्भैर्वामकुक्षौ स्थितैः नैःस्व्यं दारिद्र्यम्। ततस्त्रिभिर्मुखस्थितैर्गृहकर्तुः पीडा संततमनवरतं स्यात्। उक्तं च ज्योतिःप्रकाशे—'वास्तुचक्रं प्रवक्ष्यामि यच्च व्यासेन भाषितम्। यद्भे वर्तते भानुस्तत्रादौ त्रीणि मस्तके ॥ चतुष्कमग्रपादे स्यात्पुनश्चत्वारि पश्चिमे। पृष्ठे च त्रीणि ऋक्षाणि कुक्षौ चत्वारि वामतः ॥ चत्वारि दक्षिणे कुक्षौ पुच्छे भत्रयमेव च। मुखे भत्रयमेव स्युरष्टाविंशतितारकाः ॥ शिरस्याराग्निदाहाय गृहेऽवास्योऽग्रपादयोः। स्थैर्यं स्यात्पश्चिमे पादे पृष्ठे चैव धनागमः ॥ कुक्षौ स्याद्दक्षिणे लाभो वामकुक्षौ दरिद्रता ॥ पुच्छे स्वामिविनाशः स्यान्मुखे पीडा निरंतरम् ॥' इति। पितामहानंतचरणा अपि–'त्रिवेदवेदाग्नियुगाग्निवेदत्रिकेषु ३। ४। ४। ३। ४।

३।४।३ भानो शशिभं गृहेषु। दाहो विनाशः स्थिरता धनं श्रीः शून्यं च दारिद्र्यवधौ क्रमेण ॥' इति। अथैतस्य चक्रस्य प्रकारांतरेण निष्कृष्टमर्थमाह–वेति। अर्कधिष्ण्यादश्वैः सप्तभैरसत्फलं रुद्रैरेकादशभिः सत्फलं, ततो दिग्भिर्दशभैरसत्फलमुक्तं स्यादिति निष्कृष्टोऽर्थः। उक्तं च–'रविभात्सप्त नेष्टानि शुभान्येकादशाष्टमात्। दश शेषाण्यनिष्टानि साभिजिद्भूपवास्तुनि ॥' इति। पूर्वं सविस्तरोक्तिस्तु मूलवाक्यानुरोधात् ॥ १३-१४ ॥

अथ सौरचांद्रमासैक्येन प्राच्यादिदिक्षु द्वाराणि गृहनिर्माणनक्षत्राणि च सूतिकागृहनिर्माणप्रवेशमुहूर्तौ च स्रग्धराछंदसाह—

**कुंभेऽर्के फाल्गुने प्रागपरमुखगृहं श्रावणे सिंहकर्क्योः**
**पौषे नक्रे च याम्योत्तरमुखसदनं गोऽजगेऽर्के च राधे।**
**मार्गे जूकालिगे सद्ध्रुवमृदुवरुणस्वातिवस्वर्कपुष्यैः**
**सूतीगेहं त्वदित्यां हरिभविधिभयोस्तत्र शस्तः प्रवेशः ॥१५॥**

कुंभेऽर्क इति ॥ कुंभे कुंभस्थिते सूर्ये फाल्गुने च मासि प्रागपरमुखं गृहं प्राङ्मुखं पश्चिममुखं च गृहं सत् शुभफलदं कार्यं स्यादित्यर्थः। श्रावणे मासि सिंहकर्किसंक्रांत्योः प्रागपरमुखं गृहं स्यात्। पौषे मासे नक्रे मकरसंक्रांतौ च प्रागपरमुखं गृहं स्यात्। अथ गोऽजगे वृषमेषगे सूर्ये राधे वैशाखे मासे च तथा मार्गे मार्गशीर्षे मासि जूकालिगे तुलावृश्चिकगते सूर्ये सति याम्योत्तरमुखं सदनं दक्षिणमुखमुत्तरमुखं च सदनं स्यात्। यदाह नारदः—'गृहसंस्थापनं सूर्ये मेषस्थे शुभदं भवेत्। वृषस्थे धनवृद्धिः स्यान्मिथुने मरणं ध्रुवम् ॥ कर्कटे शुभदं प्रोक्तं सिंहे भृत्यविवर्धनम्। कन्या रोगं तुला सौख्यं वृश्चिके धनवर्धनम् ॥ कार्मुके तु महाहानिर्मकरे स्याद्धनागमः। कुंभे तु रत्नलाभः स्यान्मीने सद्म भयावहम् ॥' इति। चांद्रमासानाह श्रीपतिः—'शोको धान्यं मृतिपशुहती द्रव्यवृद्धिर्विनाशो युद्धं भृत्यक्षतिरथ धनं श्रीश्च वह्नेर्भयं च। लक्ष्मीप्राप्तिर्भवति भवनारंभकर्तुः क्रमेण चैत्रादूचे मुनिरिति फलं वास्तुशास्त्रोपदिष्टम् ॥' इति। अन्यच्च–'आषाढचैत्राश्वयुजोर्जमाघज्येष्ठेषु सप्रौष्ठपदेषु नूनम्। निकेतनानां घटनं नृपाणां योगेश्वराचार्यमते न शस्तम् ॥' इति। मते न इति पदच्छेदः। अत्र सौराणां चांद्रमासानां च महान् शुभाशुभफलभेदेन विरोधः। तत्र चिकीर्षितगृहद्वारानुकूलरविसंक्रमसमीचीनविहितमासेष्वेव वैशाखादिषु गृहारंभः कार्य इति विरोधाभाव इति पितृचरणाः। तत्र द्वारनियममाह श्रीपतिः—'कार्किनक्रहरिकुंभगतेऽर्के पूर्वपश्चिममुखानि गृहाणि। तौलिमेषवृषवृश्चिकयाते दक्षिणोत्तरमुखानि च कुर्यात् ॥ अन्यथा यदि करोति दुर्मतिर्व्याधिशोकधननाशमश्नुते। मीनचापमिथुनांगनागते कारयेन्न गृहमेव भास्करे ॥' इति। तत्र कुंभार्कसहिते फाल्गुने मासि पूर्वपश्चिममुखं गृहम्। सिंहकर्कसहिते श्रावणे मासि तादृशमेव गृहमुक्ताद्धेतोः। एवं मकरार्कसहिते पौषे मासे। अनेनैव हेतुना

दक्षिणोत्तरमुखं गृहं मेषवृषार्कसहिते वैशाखे स्यात्। तुलावृश्चिकार्कसहिते मार्गशीर्षमासे तथैव गृहं स्यादित्यर्थः। अथात्र सौराणां चांद्राणां च मासानां निषेधस्तृणादिनिर्मेयगृहाद्यारंभे नैव भवति। यदुक्तं व्यवहारसमुच्चये 'निषिद्धेष्वपि ऋक्षेषु स्वानुकूले शुभे दिने। तृणदारुगृहारंभे मासदोषो न विद्यते॥' इति। जगन्मोहनेऽपि–'पाषाणेष्ट्यादिगेहानि निंद्यमासे न कारयेत्। तृणदारुगृहारंभे मासदोषो न विद्यते॥' अत्र केचिदनियतदिग्गृहारंभे सर्वदा कालदोषो न प्रवर्तत इत्याहुस्तन्न। वचनाभावात् किंच–'दिङ्मूढे कुलनाशः स्यात्' इत्यनियतदिग्गृहस्य विचारकोटिसन्निवेशाभावात्। अथ गृहनिर्माणनक्षत्राण्याह–ध्रुवेति। ध्रुवाणि मृदूनि च प्रसिद्धानि, वरुणः शतभं, स्वाती प्रसिद्धा, वसुः धनिष्ठा, अर्को हस्तः, पुष्यश्च; एषु भेषु गृहनिर्माणं सत् शुभफलदम्। यदाह गर्गः—'त्र्युत्तरेऽपि च रोहिण्यां पुष्ये मैत्रे करद्वये। धनिष्ठाद्वितये पौष्णे गृहारंभः प्रशस्यते॥' अत्र वाक्ये मृगानभिधानं तदुक्तिर्महेश्वरवाक्यालोचनेन। 'प्रारंभो भवनस्य वारुणमृदुस्वात्यर्कपुष्यध्रुवैर्वस्वृक्षेण युतैः' इति। अथ सूतिकागृहनिर्माणे विशेषमाह—सूतीगेहमिति॥ अदित्यां पुनर्वसौ सूतिकागृहनिर्माणं शस्तम्। शस्त इति वक्ष्यमाणस्यात्र नपुंसकत्वेन संबंधात्। तत्रेति। तत्र सूतीगृहे हरिभविधिभयोः श्रवणाभिजितोर्नक्षत्रयोः प्रवेशः शस्तः। उक्तं च श्रीपतिना—'पुनर्वसौ च सूतिकागृहस्य निर्मितिः शुभा। विरंचिविष्णुभांतरे प्रवेशनं हितं भवेत्॥' इति। केचित्तु विरंचिः रोहिणी, विष्णुभं श्रवणः, तयोरंतरे मध्यवर्तिनि नक्षत्रसमुदाये इत्याहुः। तन्न। अमंदहार्थं विरंचिभादिभूपेषु इत्येवं ब्रूयात्। तस्माद् विरंचिरभिजिन्नक्षत्रम्। अन्तरे मध्ये। विरंचिविष्णुतारयोरित्येव सप्तमीविभक्त्याऽधिकरणत्वे बोधिते अंतरपदोक्तिः स्पष्टार्था। तदेतद्ब्राह्मणव्यतिरिक्तवर्णत्रयसाधारणम्। यदाह लल्लः—'पुनर्वसौ नृपादीनां कर्तव्यं सूतिकागृहम्। श्रवणाभिजितोर्मध्ये प्रवेशं तत्र कारयेत्॥' इति। आवश्यकत्वे तु श्रवणाभिजितोर्मुहूर्तस्तदुदयो वा ग्राह्य इत्यर्थः। ब्राह्मणस्य तु प्रागुक्तनक्षत्रेष्वेव सूतिकागृहनिर्माणप्रवेशौ। तत्र सूतिकागृहं नैर्ऋत्यां कार्यम्। यदाह वृद्धवसिष्ठः—'ऐंद्र्यां तु विक्रमस्थानमाग्नेय्यां पचनालयः। वारुण्यां भोजनगृहं नैर्ऋत्यां सूतिकागृहम्॥ याम्यायां शयनस्थानं वायव्यां पशुमंदिरम्। कौबेर्यां तु धनस्थानमैशान्यां देवतालयः॥' इति। स्मृतिभास्करे गर्गः—'वारेऽनुकूले राशौ तु दिने दोषविवर्जिते। सानुकूलदिशि प्रोक्तं सूतिकाभवनं बुधैः॥' इति। कालनियम उक्तो रत्नकोशे—'आसन्नप्रसवे मासि कुर्याच्चैव विशेषतः। तद्वत्प्रसवकाले स्यादिति शास्त्रेषु निश्चयः' इति। वराहेणात्रानेकनक्षत्राद्यभिधानं कृतम्। यथा–'हस्तादित्यशशांकतिष्यपवनप्राजेशमित्रोत्तराश्चित्राश्विश्रवणेषु वृश्चिकघटौ हित्वा विरिक्ते तिथौ। शुक्राचार्यशनैश्चरज्ञशशिना वारेऽनुकूले विधौ सद्भिर्वेश्मनि सूतिकागृहविधिः क्षेमंकरः कीर्त्यते॥' इति। वेश्मनि=चतुर्थस्थाने। सद्भिः=शुभग्रहैः। सूतिका-

१ 'सदा दोषो न विद्यते' इति पाठांतरम्। २ प्राजेशस्य प्रजापतेर्नक्षत्रं प्राजेशं रोहिणी।

गृहप्रवेशे कालविशेषमाह ज्योतिर्वसिष्ठः—'अथातः संप्रवक्ष्यामि सूतिकागारवेशनम् । मासे तु नवमे प्राप्ते पूर्वपक्षे शुभे दिने ॥ प्रसूतिसंभवे काले सद्य एव प्रवेशयेत् ॥' इति । पूर्वपक्षे=शुक्लपक्षे । नक्षत्राण्याह गर्गः—'रोहिण्यैंद्रवपौष्णेषु स्वातीवारुणयोरपि । पुष्ये पुनर्वसौ हस्तधनिष्ठास्वुत्तरासु च ॥ मैत्रत्वाष्ट्रे तथाश्विन्यां सूतिकागारवेशनम् । सर्वे शुभग्रहाः केन्द्रे पापाश्च त्रिषडायगाः ॥ शुभांशे शुभसंदृष्टौ सूतिकावेशनं शुभम् ॥' इति ॥ १५ ॥

अथ प्रागभिहितानां सौराणां चान्द्राणां वा मासानां प्रकारान्तरेणैकवाक्यतां शार्दूलविक्रीडितेनाह—

**केश्चिन्मेषरवौ मधौ वृषभगे ज्येष्ठे शुचौ कर्कटे**
**भाद्रे सिंहगते घटेऽश्वयुजि चोर्जेऽलौ मृगे पौषके ।**
**माघे नक्रघटे शुभं निगदितं गेहं, तथोर्जो न सन्**
**कन्यायां च तपा धनुष्यपि न सन् कृष्णादिमासाद्धवेत् ॥ १६ ॥**

केश्चिदिति ॥ पूर्वं द्विप्रकारविरोधेनैकवाक्यता उक्ता इदानीमेतादृशी उच्यते । मेषसंस्थे रवौ मधौ चैत्रे मासि गेहं प्रारब्धं शुभं स्यात् । तथा वृषस्थे सूर्ये ज्येष्ठे मासे, कर्कस्थेऽर्के शुचावाषाढे सिंहगतेऽर्के भाद्रपदे मासि घटे तुलास्थे रवौ आश्वयुजि आश्विनमासे अलौ वृश्चिकगेऽर्के ऊर्जे कार्तिके मासि मृगे मकरस्थेऽर्के पौषे मासे नक्रघटे मकरकुंभस्थेऽर्के माघे मासि प्रारब्धं गृहं शुभं स्यादित्यर्थः इति केश्चिन्निगदितमस्यायमाशयः।'मीनचाप' इत्यादिना द्विस्वभावराशयो निषिद्धाः;'शोको धान्यम्' इत्यादिना च कियंतश्चांद्रा अपि मासा निषिद्धाः । अतोऽन्ये सौराश्चांद्रा वा विहितास्तेषामयमेकवाक्यताप्रकारः । मेषस्थे रवौ चैत्रेऽपि गृहं शुभम् । यस्तु चैत्रो निषिद्धः स मीनार्कविषयः । वृषस्थे रवौ ज्येष्ठेऽपि शुभम् । वैशाखस्तु विहित एवास्ति । ज्येष्ठो निषिद्धः स मिथुनार्कविषयः । कर्कटस्थे सूर्ये आषाढेऽपि शुभम् । आषाढनिषेधस्तु मिथुनार्कविषयः, सिंहगते सूर्ये भाद्रपदेऽपि शुभं, श्रावणश्चेत्तत्र स्यात्स विहितत्वादेव शुभः । यस्तु भाद्रपदनिषेधः स कन्यार्कविषयः । तुलागते सूर्ये आश्विनेऽपि शुभम् । यस्त्वस्य निषेधः स कन्यार्कपरः । वृश्चिकस्थे सूर्ये कार्तिकेऽपि शुभं स्यात् । निषेधविषयं स्वयमेव वक्ष्यति । मार्गशीर्षो विहित एव । मकरस्थे सूर्ये पौषे शुभम् । धनुरर्कस्य साहित्ये सोऽप्यशुभः । मकरकुंभस्थे सूर्ये माघेऽपि शुभम् । निषेधस्तु धनुरर्कविषयः । अत एव—'पौषफाल्गुनवैशाखमाघश्रावणकार्तिकाः । मासाः स्युर्गृहनिर्माणे पुत्रारोग्यशुभप्रदाः ॥' इति नारदवाक्यम् । 'मासे तपस्ये तपसि माधवे नभसि त्विषे । ऊर्जे च गृहनिर्माणं पुत्रपौत्रधनप्रदम् ॥' इति वसिष्ठवाक्यं च आश्विनकार्तिक-

माघमासानां शुभत्वप्रतिपादकं तुलावृश्चिकमकरकुंभार्कसाहित्यपरत्व-परम् । वचनांतरबोधितो निषेधः प्रागुक्तविषय एव । एवं फाल्गुनस्य शुभत्वं कुंभार्कविषयम् । मीनार्कसाहित्ये तु निषिद्धः सः । ननु कार्तिकमाघमासौ श्रीपतिना निषिद्धौ तयोः को विषय इत्यत आह । तथेति । ऊर्जः कार्तिको मासः कन्यायां कन्यागते रवौ न सन् न शुभः । च पुनः तपाः माघमासो धनुषि धनुरर्के न सन् । अपिः पादपूरणे । नन्वेतदयुक्तं प्रतिभाति । यतश्चांद्रमासेन चैत्रादिमाससंज्ञाः संति, तत्र कार्तिके मासि कन्यासंक्रांतिः माघे मासि धनुरर्कश्च कदापि न संभवेत्; यतः कार्तिकस्य माघस्य वा शुक्लप्रतिपदादि त्रिंशत्तिथयः यावत्तावत् तत्संज्ञेत्यत आह—कृष्णादिमासादिति । अस्ति द्विविधो मासः–शुक्लादिः, कृष्णादिश्चेति । तत्र शुक्लप्रतिपदमारभ्यामावास्या-पर्यंतं शुक्लादिः; कृष्णपक्षप्रतिपदमारभ्य पूर्णिमांतं कृष्णादिः । यथा चैत्रशुक्ल-पक्षो मतद्वयेऽपि स एव, चैत्रपौर्णमास्यनंतरं कृष्णपक्षश्चैत्रमास एव, एवं चांद्र-मासो भवति । स एव कृष्णपक्षो यदि वैशाखकृष्णपक्षत्वेन व्यवह्रियते तदनं-तरभावी शुक्लपक्षो वैशाखशुक्लः सर्ववादिसिद्धः तदा कृष्णादिर्मासः संभवति । उभयथा हि शास्त्रे व्यवहारः । 'अश्वयुक्कृष्णपक्षे तु श्राद्धं कुर्याद्दिने दिने ।' इति । अष्टमी कृष्णपक्षस्य रोहिणी ऋक्षसंयुता । भवेत्प्रौष्ठपदे मासि जयंती नाम सा स्मृता ॥' इति । अत्र यदि दर्शांतो मासो विवक्ष्यते तदा भाद्रपदकृष्ण-पक्षे श्रावणे मासि चेत्येवं ब्रूयात् । तदेतन्मासस्य कृष्णादित्वे प्रमाणम् । 'अत ऊर्ध्वममी युक्ता गतकालाब्दसंख्यया ॥ मासीकृतायुतमासैर्मधुशुक्लादि-भिर्गतैः ॥' इत्यादीनि बहुवाक्यानि शुक्लादित्वे प्रमाणम् । तत्राश्विनपूर्णिमातः कार्तिकशुक्लपौर्णिमांतं कृष्णादित्वेन कार्तिकव्यवहारात् कन्यासंक्रांतिसंभवात् निषेध उपपन्नो भवति । एवमेव माघे मासि धनुरर्कसंभवे तन्निषेधस्य सार्थक्यमित्यलमियता ॥ १६ ॥

अथ तिथिपरत्वेन द्वारनिषेधमुपजातिकयाह—

**पूर्णेंदुतः प्राग्वदनं नवम्यादिषूत्तरास्यं त्वथ पश्चिमास्यम् ।**
**दर्शादितः शुक्लदले नवम्यादौ दक्षिणास्यं न शुभं वदंति ॥ १७ ॥**

**पूर्णेंदुत इति** ॥ पूर्णेन्दुतः पूर्णिमातः कृष्णाष्टमीपर्यंतं प्राङ्मुखं गृहं शुभं न वदंति । कृष्णनवमीतश्चतुर्दशीपर्यंतं क्रियमाणं गृहमुत्तरास्यं न शुभम् । अथ दर्शादितः शुक्लाष्टमीपर्यंतं पश्चिमास्यं गृहं न शुभम् । शुक्लनवमीतश्चतुर्दशी-पर्यंतं दक्षिणास्यं गृहं न शुभं वदंति । तासु तिथिषु तत्तद्दिङ्मुखं गृहं न कर्तव्यमिति वाक्यार्थः फलितः । यदुक्तं व्यवहारसमुच्चये–'पूर्णिमातोऽष्टमीं यावत्पूर्वास्यं वर्जयेद्गृहम् । उत्तरास्यं न कुर्वीत नवम्यादिचतुर्दशीम् ॥ अमा-वास्याष्टमीं यावत्पश्चिमास्यं विवर्जयेत् । नवम्यादौ दक्षिणास्यं यावच्छुक्लचतु-र्दशीम् ॥' इति । विहिततिथयोऽपि तत्रैवोक्ताः–'द्वितीया पंचमी मुख्यास्तृती-

या षष्ठिका तथा । सप्तमी दशमी चैव द्वादश्येकादशी तथा ॥ त्रयोदशी पंचदशी तिथयः स्युः शुभावहाः । दारिद्र्यं प्रतिपत्कुर्याच्चतुर्थी धनहारिणी ॥ अष्टम्युच्चाटनं चैव नवमी शस्त्रघातिनी । दर्शे राजभयं ज्ञेयं भूते दारविनाशनम् ॥' इति । पक्षफलं च तत्रैव—'शुक्लपक्षे भवेत्सौख्यं कृष्णे तस्करतो भयम् ॥' इति । अथात्र प्रसंगाद् द्वारवेधफलानि लिख्यंते । तत्र वराहः—'मार्गतरुकोणकूपस्तंभभ्रमविद्धमशुभदं द्वारम् । उच्छ्रायाद्द्विगुणितां भूमिं त्यक्त्वा न दोषाय ॥' इति । भ्रमो जलनिर्गमप्रदेशः प्रणालिकेत्यर्थः । विद्धं संमुखावस्थितं । अत्रोच्छ्रायो द्वारस्य गृह्यते । तथा च गर्गः—'द्वारोच्छ्रायाद्द्विगुणितां भूमिं त्यक्त्वा बहिःस्थिताः । न दोषाय भवंत्येते' इति । 'रथ्याविद्धं द्वारं नाशाय कुमारदोषदं तरुणा । पंकद्वारे शोको व्ययोऽम्बुनिःस्राविणि प्रोक्तः ॥ कूपेनापस्मारो भवति विनाशश्च देवताविद्धे ॥ स्तंभेन स्त्रीदोषः कुलनाशो ब्रह्मणोऽभिमुखे ॥' इति । पंकविद्धं द्वारं पंकद्वारं यस्य द्वारस्याग्रतः निरंतरं पंकस्तिष्ठति । देवताः सुरप्रतिमाः । नाशः स्वामिन एव । ब्रह्मवेध एकाशीतिपदचक्रस्थितब्रह्मस्थानवेधो गृह्यते । यदाह विश्वकर्मा—'गृहमध्ये कृतं द्वारं द्रव्यधान्यविनाशनम् ॥' इति । विशेषमाह भरद्वाजः—'शिरा मर्माणि वंशश्च नालं मध्यं च सर्वशः । विहाय वास्तुमध्यं च द्वाराणि विनिवेशयेत् ॥' इति । वास्तुमध्यं ब्रह्मस्थानम् । 'तत्र द्वारं चेन्निधनप्रद'मिति वसिष्ठोक्तेश्च । अस्यापवादमाह विश्वकर्मा—'देवागारे विहारे च प्रपायां मंडपेषु च । प्रतोल्यां च मखे चैव मध्ये द्वारं निवेशयेत् ॥' इति । देवालयादिस्थानेषु कृतस्य गृहांतर्गतद्वारस्य ब्रह्मणो न वेध इति निष्कृष्टोऽर्थः । अत्रैकाशीतिपदचक्रं च सामान्यविशेषभावपुरःसरं ग्रंथसंदर्भेण वराहसंहितायामुक्तमपि नोक्तमेतस्मिंश्चक्रे मुहूर्तविचारोऽप्रसंगात् । केचित् प्रयोजनाभावान्नोक्तमित्याहुस्तन्न । तत्र हि वास्तुनरस्य शिरामर्मवंशादिदुष्टस्थानानामशुभफलदानां त्यागोक्त्या सप्रयोजनत्वात् । तथा तस्यैव शुभफलदानामन्येषां बाह्वादिस्थानानां ग्राह्यत्वोक्त्या च । वसिष्ठाद्यृषिसंहितासु तु वास्तुशांत्यर्थमेव तस्याभिधानमित्यतोऽत्रानुक्तिः ॥ १७ ॥

अथ गृहारंभे पंचांगशुद्धिं लग्नशुद्धिं चानुष्टुभाह—

**भौमार्करिक्तामाद्यूने चरोनेऽङ्गे विपंचके ।**
**व्यष्टांत्यस्थैः शुभैर्गेहारंभस्त्र्यायारिगैः खलैः ॥ १८ ॥**

भौमार्केति ॥ भौमार्कौ वारौ रिक्ताश्च प्रसिद्धाः, अमा अमावास्या, आदिः प्रतिपद्, उपलक्षणत्वादष्टम्यपि; एतैः ऊने काले तथा विपंचके पंचकं धनिष्ठोत्तरार्धादिका पंचनक्षत्री पंचकमित्युच्यते । पंचशब्दात् संघार्थे 'संख्यायाः संज्ञासंघसूत्राध्ययनेषु' इति कन्प्रत्ययः । विगतं पंचकं यस्मिन्नेवंविधे च काले सति ।

चरोने चरराशिभिः मेषकर्कतुलामकरैरूनेऽङ्के लग्ने स्थिरे द्विस्वभावे च गृहारंभः कार्यः। यदुक्तं व्यवहारसमुच्चये–'द्वितीया पंचमी मुख्यास्तृतीया षष्ठिका तथा। सप्तमी दशमी चैव द्वादश्येकादशी तथा । त्रयोदशी पंचदशी तिथयः स्युः शुभावहाः ॥' इति । अन्यास्तिथयोऽर्थान्निषिद्धास्तदप्युक्तं तत्रैव–'दारिद्र्यं प्रतिपत्कुर्यात्' इत्यादि । वास्तुशास्त्रेऽपि–'चरलग्ने चरांशे वा रिक्तामारार्कवासरे । अंगाष्टांत्यारिगे चंद्रे रंध्रे पापे क्षयः प्रभोः ॥' इति । नन्वत्र धनिष्ठापंचकदोषोऽनुपपन्नः । नक्षत्रप्रकरणोक्तधनिष्ठादिपंचकनिषेधेन गतार्थत्वात् । न पुनरुक्तमिति वयं । यतो गृहगोपनमिति पूर्वमुक्तं तत्र गृहस्य तृणकाष्ठादिभिराच्छादनं गोपनं तद्धि सिद्धस्य गृहस्य संभवेत् । गृहारंभस्तु प्राग्भवनरूपः स त्वसिद्धस्यैवेति । ननु 'ध्रुवमृदुचरभस्वातीनिवस्वर्कपुष्यैः' इति गृहारंभे नक्षत्रेषु धनिष्ठाशततारकोत्तराभाद्रपदारेवतीनां विहितत्वेनैकस्या एव पूर्वाभाद्रपदाया निषेधोक्तौ कर्तव्यतायां च सत्यां पुनः पंचकनिषेधानुपपत्तिः । सत्यं; स्तंभोच्छ्रायविषयकोऽयं निषेधः । यदाह मांडव्यः—'धनिष्ठापंचके नैव कुर्यात्स्तंभसमुच्छ्रयम् । सूत्राधारशिलान्यासप्राकारादि समारभेत् ॥' इति । प्राकारो देवालयम् । अन्ये पुनरेवमाहुः । विवाहप्रकरणोक्तानि पंचकानि रोगाग्निराजचौरमृत्युसंज्ञानि तैः रहितेऽङ्के लग्ने पंचकरहिते लग्ने इत्यर्थः । उक्तं च गणेशदैवज्ञैः—'विमृत्युकेंद्रखलगोऽङ्के वर्जिते पंचकैः' इति । नात्रार्षवाक्यं प्रमाणमस्ति । त्र्यष्टांत्येति । अष्टमस्थानद्वादशस्थानव्यतिरिक्तस्थानस्थैः शुभैः, खलैः पापैस्तृतीयैकादशषष्ठस्थानस्थैश्चोपलक्षिते लग्ने सति गृहारंभः कार्यः । उक्तं च श्रीपतिना—'पापैस्त्रिषष्ठायगतैस्त्रिकोणकेंद्राश्रितैः साधुभिरालयस्य । वदंति निर्माणमिहाष्टमस्थः क्रूरस्तु कर्तुर्मरणं करोति ॥' इति । अन्यदपि उक्तं तेनैव—'अंगे स्थिरे वा भवने विलग्ने सौम्यग्रहैर्युक्तनिरीक्षिते वा । कर्मस्थितैर्वीर्ययुतैश्च सौम्यैर्निर्माणमाहुर्भवनस्य संतः ॥ शुद्धकेंद्रनिधनस्थिरोदये सौम्यवर्गमनुजोदयेऽपि च । सन्निवेश उदितो हि वास्तुनः सूरिभिर्न तु चरोदये क्वचित् ॥' इति ॥ १८ ॥

अथ देवालये गृहारंभे जलाशये च विदिग्गवस्थितं राहुमुखं सफलमिंद्रवंशाछंदसाह—

**देवालये गेहविधौ जलाशये राहोर्मुखं शंभुदिशो विलोमतः ।**
**मीनार्कसिंहार्कमृगार्कतस्त्रिभे खाते मुखात्पृष्ठविदिक्शुभा भवेत् ॥**

देवालय इति ॥ अत्र यथासंख्यं संबंधः । देवालयप्रारंभे राहोर्मुखं मीनार्कतस्त्रित्रिराश्यवस्थिते सूर्ये ईशानीतो विलोमतो विपरीतं विदिक्षु वायव्यादिषु राहोर्मुखं स्यात् । यथा- मीनमेषवृषराश्यवस्थिते सूर्ये राहोर्मुखमैशान्याम् । मिथुनकर्कसिंहराश्यवस्थिते सूर्ये वायव्यां राहुमुखम् । कन्यातुलावृश्चिकस्थे सूर्ये नैर्ऋत्यां राहुमुखम् । धनुर्मकरकुंभराश्यवस्थे सूर्ये आग्नेय्यां राहोर्मुखमित्यर्थः । एवं गृहारंभेऽपि सिंहार्कतस्त्रित्रिराश्यवस्थितेऽर्के विलोमत ऐशान्यादिविदिक्षु राहुमुखं स्यात् । वृश्चिकादित्रये वायव्यां कुंभादित्रये नैर्ऋत्यां

वृषादित्रये च आग्नेय्यां राहुमुखं स्यात्। जलाशयारंभेऽपि मकरार्कतस्त्रिराश्यवस्थेऽर्के विलोमत ऐशान्यां राहुमुखं स्यात्। मेषादितः त्रिभिर्वायव्यां कर्कादितस्त्रिभिर्नैर्ऋत्यां तुलादितस्त्रिभिराग्नेय्यां राहुमुखं स्यात्।

त्रयाणामपि स्पष्टार्थं न्यासो यथा—

राहुमुखचक्रम्।

| आरंभः | ऐशान्याम् | वायव्याम् | नैर्ऋत्याम् | आग्नेय्याम् |
|---|---|---|---|---|
| देवालयारंभः | मीनमेषवृषभस्थिते सूर्ये राहुमुखम् | मिथुनकर्कसिंहस्थे सूर्ये राहुमुखम् | कन्यातुलावृश्चिकस्थे सूर्ये राहुमुखम् | धनुर्मकरकुंभस्थिते सूर्ये राहुमुखम् |
| गृहारंभः | सिंहकन्यातुलास्थिते सूर्ये राहुमुखम् | वृश्चिकधनुर्मकरस्थे सूर्ये राहुमुखम् | कुंभमीनमेषस्थिते सूर्ये राहुमुखम् | वृषभमिथुनकर्कस्थे सूर्ये राहुमुखम् |
| जलाशयारंभः | मकरकुंभमीनस्थिते सूर्ये राहुमुखम् | मेषवृषभमिथुनस्थे सूर्ये राहुमुखम् | कर्कसिंहकन्यास्थिते सूर्ये राहुमुखम् | तुलावृश्चिकधनुःस्थे सूर्ये राहुमुखम् |

फलमाह खात इति। देवालयादिविषयके खाते भूमिशोधने कर्तव्ये सति राहुमुखाक्रांतदिशः सकाशात्पृष्ठवर्तिनी दिक् शुभा भवेत्। यथा—देवालयविषये मीनादित्रिराशिस्थितसूर्यत्वेन ऐशान्यां राहुमुखं तत्पृष्ठविदिगाग्नेयी तस्यां प्रथमखातप्रारंभः शुभफलदः; एवं मिथुनादिराशित्रयस्थे सूर्ये राहुमुखं वायव्यां तत्पृष्ठविदिगैशानी तस्यां खातारंभः शुभः। एवं सर्वत्र। तथैव गृहविधौ जलाशयविधावपि राहुमुखं कस्यां विदिश्यस्तीत्यवधार्य तत्पृष्ठविदिशि खातं शुभफलदं कार्यमित्यर्थः। यतः सर्पेण विदिक्त्रये व्याप्तं यत्र मुखावस्थितिः सा प्रथमा। यत्रोदरावस्थितिः सा द्वितीया यत्र पुच्छावस्थितिः सा तृतीया। यथा ऐशान्यां मुखं, वायव्यामुदरं, नैर्ऋत्यां पुच्छम्; अतः खाते आग्नेयी सम्यक्। एवमन्यत्राप्यूहनीयम्। यदाह विश्वकर्मा 'ईशाननः सर्पति कालसर्पो विहाय सृष्टिं गणयेद्विदिक्षु। शेषस्य वास्तोर्मुखमध्यपुच्छं त्रयं परित्यज्य खनेच्चतुर्थम्॥' इति। ज्योतिश्चिंतामणौ 'वृषार्कादित्रिकं वेद्यां सिंहादि गणयेद् गृहे। देवालये च मीनादि तडागे मकरादिषु॥' इति। वसिष्ठस्तु गृहारंभे वास्तुनरमाह—'त्रिषु त्रिषु च मासेषु नभस्यादिषु च क्रमात्। यद्दिङ्मुखो वास्तुनरस्तन्मुखं सदनं शुभम्॥ अन्यदिङ्मुखगेहं तु रोगशोकभयप्रदम्॥' इति। 'चतुर्दिशादिशालानामेष दोषो न विद्यते।' इति। नभस्यादिग्रहणं सिंहाद्यर्कसंक्रमोपलक्षणं नागस्तु विदिशि खननार्थः। नरवास्तुस्तु गृहस्य तत्तद्दिङ्मुखार्थः। तत्र खातारंभादिनक्षत्राण्याह मांडव्यः—'अधोमुखैर्भैर्विदधीत खातं शिलास्तथा चोर्ध्वमुखैश्च पट्टम्। तिर्यङ्मुखैर्द्वारकपाटयानं गृहप्रवेशो मृदुभिर्ध्रुवर्क्षैः॥' इति। खातं=भूमिशोधनम्॥ १९॥

अथ गृहे कूपादिनिर्माणदिगवस्थित्या फलं शालिनीछंदसाह—

कूपे वास्तोर्मध्यदेशेऽर्थनाशस्त्वैशान्यादौ पुष्टिरैश्वर्यवृद्धिः।
सूनोर्नाशः स्त्रीविनाशो मृतिश्च संपत् पीडा शत्रुतः स्याच्च सौख्यम्

कूपे इति ॥ 'वेश्मभूर्वास्तुरस्त्रियाम्' इति वास्तुशब्दः पुल्लिंगेऽपि। वास्तोर्गृहस्य मध्यदेशे मध्यभागे जलकूपे कृते सति स्वामिनोऽर्थनाशः स्यात्। अथैशान्यादिषु सृष्टिमार्गेणाष्टसु दिक्षु पुष्टिरित्यादिफलम्। यथा—ऐशान्यां कूपे पुष्टिः, पूर्वस्यां कूपे ऐश्वर्यवृद्धिः, आग्नेय्यां कूपे पुत्रनाशः, दक्षिणस्यां कूपे स्त्रीविनाशः, नैर्ऋत्यां कूपे गृहकर्तुर्मृतिः, पश्चिमायां कूपे सम्यक् शोभनं, वायव्यां कूपे शत्रुतः सकाशात्पीडा, उत्तरस्यां कूपे सुखं गृहस्वामिन एव न्यासः। उक्तं च वसिष्ठेन—'ऐश्वर्यं पुत्रहानिश्च स्त्रीनाशो निधनं भवेत्। संपच्छत्रुभयं सौख्यं पुष्टिः प्रागादितः क्रमात् ॥' इति ॥ २० ॥

कूपे कृते गृहमध्ये करिष्यमाणानामुपकरणगृहाणां दिक्परत्वेन करणं वसंततिलकाछंदसाह—

स्नानस्य पाकशयनास्त्रभुजेश्च धान्य-
भांडारदैवतगृहाणि च पूर्वतः स्युः।
तन्मध्यतस्तु मथनाज्यपुरीषविद्या-
भ्यासाख्यरोदनरतौषधसर्वधाम ॥ २१ ॥

स्नानेति ॥ पूर्वतः पूर्वाद्यष्टदिक्षु स्नानगृहादीनि गृहाणि स्युः। यथा—पूर्वस्यां स्नानगृहम्, आग्नेय्यां पाकगृहं, दक्षिणस्यां शयनगृहं, नैर्ऋत्यां शस्त्रगृहं, पश्चिमायां भोजनगृहं, वायव्यां धान्यसंग्रहगृहम्, उत्तरस्यां भांडारस्य द्रव्यस्य गृहम्, ऐशान्यां दैवतगृहं स्यादित्यर्थः। यदाह वसिष्ठः—'ऐन्द्र्यां दिशि स्नानगृहमाग्नेय्यां पचनालयः। याम्यायां शयनं वेश्म नैर्ऋत्यां शस्त्रमंदिरम् ॥ वारुण्यां भोजनगृहं वायव्यां धान्यमंदिरम्। उदीच्यां हाटकं सद्म ऐशान्यां देवमंदिरम् ॥' इति। हाटकस्य सुवर्णस्येदं हाटकम्। कश्यपोऽपि—'प्राच्यां दिशि स्नानगृहमाग्नेय्यां पचनालयः। शयनं याम्यदिग्भागे नैर्ऋत्यां शस्त्रमंदिरम्। प्रतीच्यां भोजनगृहं वायुभागेऽन्नसंग्रहम्। भांडारसदनं सौम्ये त्वैशान्यां देवतालयम् ॥' इति। नारदस्तु विशेषमाह—'भाण्डागारं तूत्तरे स्याद्वायव्यां पशुमंदिरम् ॥' इति। विश्वकर्मा पुनः—'उत्तरस्यां जलस्थानं पूर्वस्यां श्रीगृहं तथा' इत्याह। तन्मध्यत इति। पूर्वाद्यष्टदिक्षु तन्मध्यतस्तयोर्दिग्विदिशोर्मध्ये अष्टसंख्याकं मथनाद्यष्टौ गृहाणि स्युः। यथा पूर्वाग्नेय्योर्मध्ये मथनस्य दध्यालोडनस्य गृहम्। आग्नेयीदक्षिणयोर्मध्ये आज्यस्य घृतसंग्रहस्य गृहं, दक्षिणनैर्ऋत्योर्मध्ये पुरीषस्य विष्ठात्यागस्य गृहं, नैर्ऋतिपश्चिमयोर्मध्ये विद्याभ्यासस्य गृहं, पश्चिमवायव्योर्मध्ये रोदनस्य गृहं, उत्तरवायव्ययोर्मध्ये रतस्य

गणितशास्त्राभिज्ञानां प्रीतये तुष्ट्यै । अनेनास्यानेकग्रंथकरणप्रयासकर्तृत्वं न स्वार्थमत्यल्पायासेन दृढतरज्योतिःशास्त्राभिज्ञत्वात् । किंतु सत्तुष्ट्यर्थमेव । यावत्स्वीयशास्त्राभ्यासो ग्रंथकरणद्वारा न प्रकाश्यते तावत्सकलसंतुष्टिर्न भवतीत्यनेकग्रंथकरणप्रयास इति सूचितम् । कृतीति 'अत इनिठनौ' इतीनिः। ननु 'एकाक्षरात्कृतो जातेः सप्तम्या च न तौ स्मृतौ' इत्युक्तेः कृतशब्दस्य कृदंतत्वात्कथमत्रेनिः? उच्यते–नायं समुच्चयः कृतो जातेश्चेति, किं तर्हि? जातिर्विशेषणं कृद्ग्रहणं कृद्योगे जातिरिति । एवं च कार्यी कार्यिकः, तंडुली तंडुलिक इत्यपि सिध्यति, तेन व्याघ्रवानित्यादावेव इनिठनोर्निषेधो नान्यत्रेति महाभाष्यकारेणैवं वार्तिकव्याख्यानाद्भवत्येवात्रेनिः । अहस्कर इति 'दिवाविभानिशा–' इत्यादिना कर्मण्यणो बाधकष्टप्रत्ययः । समकरोदिति 'डुकृञ् करणे' इत्यस्मात्संपूर्वात् 'अनद्यतने लङ्' इति लङ् । अकार्षीदिति तस्मादेवानिटो लुङि च्लेः सिच् 'सिचि वृद्धिः परस्मैपदेषु' इति वृद्धिः 'उरण्रपरः' इति रपरत्वम् ॥ २ ॥

अथ स्वनामकथनपूर्वकं मंगलं सूचयन् मुहूर्तचिंतामणिनामकज्यौतिषग्रंथसमाप्तिं पृथ्वीछंदसाह—

तदात्मज उदारधीर्विबुधनीलकण्ठानुजो
गणेशपदपंकजं हृदि निधाय रामाभिधः ।
गिरीशनगरे वरे भुज[2]भुजे[2]षु[5]चन्द्रै[1]र्मिते
शके विनिरमादिमं खलु मुहूर्तचिंतामणिम् ॥ ३ ॥

तदात्मज इति ॥ तदात्मजस्तस्याऽनंतज्योतिर्विद आत्मजः पुत्रो रामाभिधो रामसंज्ञकः गिरीशनगरे गिरीशो महादेवस्तस्य नगरे वाराणस्याख्ये मुहूर्तचिंतामणिनामकं ज्यौतिषग्रंथमिमं प्रत्यक्षदृश्यं विनिरमात् अकार्षीत् । खलुशब्दो वाक्यालंकारे । कीदृशो रामाभिधः? उदारधीः,उदारा अनेकशिष्यविद्यादिदानकारिका धीर्बुद्धिर्यस्यासौ तथा । पाठितानेकशिष्य इत्यर्थः । पुनः कीदृशः? विबुधनीलकंठानुजः, विबुधः ज्यौतिषव्याकरणाद्यनेकविद्यायां पंडितो नीलकंठस्तस्यानुजो लघुभ्राता । किं कृत्वा? गणेशस्य स्वकुलोपास्यमहागणपतेः पदपंकजं चरणकमलं,जात्यभिप्रायेणैकवचनं;गणेशपदपंकजे इत्यर्थः । ते ह्यंतःकरणे निधाय 'मङ्गलान्तानि शास्त्राणि प्रथंते वीरपुरुषाण्यायुष्मत्पुरुषकाणि च' इति महाभाष्यकारोक्तेश्च । कीदृशे गिरीशनगरे? वरे मोक्षदातृत्वेन श्रेष्ठे । यद्यपि 'अयोध्या मथुरा माया काशी कांची अवंतिका । पुरी द्वारावती चैव सप्तैता मोक्षदायकाः ॥' इति वाक्यान्मोक्षरूपफलप्रदत्वेनायोध्यादीनां नगरीणां साम्यमेव प्रतीयते । तथापि 'अन्यानि मुक्तिक्षेत्राणि काशीप्राप्तिकराणि वै । काशीं प्राप्य विमुच्येत नान्यथा तीर्थकोटिभिः ॥' इति वाराणस्या विशिष्यमुक्तिप्रदत्वेनाऽभिधानाच्छ्रैष्ठ्यं वाराणस्याः । ननु 'अयोध्या मथुरा माया' इत्यादिवाक्यस्य 'अन्यानि मुक्तिक्षेत्राणि' इत्यस्य च व्यासप्रणीत-

त्वसाम्यादेकस्य साम्यापादकस्य काशीमुक्तिदप्रागवचनस्याप्रामाण्यं प्रतिभाति। उच्यते,–अयोध्यादीनि तीर्थानि सम्यग्ज्ञानोत्पादनद्वारेण सालोक्यमुक्तिप्रदानि। अन्यानि मुक्तिक्षेत्राणीति मुक्तिपदोपादानात्पुनर्गर्भवासं च प्रयच्छंति; काशी तु सर्वथा ज्ञानादज्ञानाद्वा येन केनाप्युपायेन वा मरणानंतरं मुक्तिमेव प्रयच्छति न पुनर्गर्भवासम् । तदुक्तं पद्मपुराणे—'तीर्थांतराणि क्षेत्राणि विष्णुभक्तिश्च नारद । अंतःकरणसंशुद्धिं जनयंति न संशयः ॥ वाराणस्यपि देवर्षे तादृश्येव परंतु सा। प्रकाशयति ब्रह्मैक्यं तारकस्योपदेशतः ॥' काशीखंडे–'अविमुक्तिरहस्यज्ञा मुच्यंते ज्ञानिनो नराः। अज्ञानिनोऽपि तिर्यंचो मुच्यंते हि सकल्मषाः ॥' इति । अत एव वाराणस्याः श्रैष्ठ्यम्; एतदप्यभिहितं पद्मपुराणे–'नैमिषे च कुरुक्षेत्रे गंगाद्वारे च पुष्करे । स्नानात्संसेवनाद्वापि न मोक्षः प्राप्यते नरैः ॥ इह संप्राप्यते येन तत एव विशिष्यते।' इह=काश्याम् । किंच काश्यां मरणे कालकृतोऽपि विशेषो नास्ति । उक्तं च काशीखंडे–'उत्तरं दक्षिणं वापि अयनं न विचारयेत् । सर्वोऽप्यस्य शुभः कालो ह्यविमुक्ते प्रिये यतः ॥' इति । देशविशेषापेक्षाप्यत्र नास्तीत्युक्तं सनत्कुमारसंहितायाम्—'रथ्यान्तरे मूत्रपुरीषमध्ये चांडालवेश्मन्यथ वा श्मशाने । कृतप्रयत्नोऽप्यकृतप्रयत्नो देहावसाने लभतेऽत्र मोक्षम् ॥' इति । अन्यच्च तीर्थांतरे अंतरिक्षादिमरणदोषोऽस्ति सोऽप्यत्र नास्ति । तदुक्तं पाद्मे–'भूमौ जलेन्तरिक्षे वा यत्र क्वापि मृतो द्विजः । ब्रह्मैकत्वमवाप्नोति काशीशक्तिरुपाहिता ॥' इति । नाप्यत्र दुर्मरणदोषोऽस्ति । तदुक्तं पद्मपुराणे–'सूच्यग्रमात्रमपि नास्ति ममास्पदेऽस्मिन् स्थानं सुरैश्च विमृतस्य न यत्र मुक्तिः । भूमौ जले वियति वा भुवि मध्यतो वा सर्पाग्निदस्युपविभिर्निहतस्य जंतोः ॥' इति । पविर्वज्रम्, 'वज्रमस्त्री स्यात्कुलिशं भिदुरं पविः' इत्यमरकोशोक्तेः। अत एव ब्रह्मवैवर्ते प्रश्नप्रतिवचनाभ्यां वाराणस्यां विशेषोऽभिहितः। यथा–'जितेंद्रियाः पापविवर्जिताश्च शांता महांतो मधुसूदनाश्रयाः । अन्येषु तीर्थेष्वपि मुक्तिभाजो भवंति काश्यामपि को विशेषः ॥' इति दीपकप्रश्ने गुरुणोत्तरितम्–'विशेषं शृणु वक्ष्यामि काश्याः कथयतो मम । कृतानि साधनान्यत्र स्वल्पान्यपि महामते ॥ भवंति काशीमाहात्म्यात्सिद्धान्येव न संशयः। अन्यत्र साधुसुकृतैः कृतैर्मुच्येत वा न वा। अत्र साधनवैकल्ये काशी पूर्णं प्रकल्पयेत् ॥' इति । अयं भावः–साधनसंपत्तिमतामधिकारिणां काश्यतिरिक्तेऽपि क्षेत्रे मुक्तिः, काश्यां त्वन्येषामपीति । अत एवोक्तं काशीखंडे–'संसारभयभीता ये ये बद्धाः कर्मबंधनैः । येषां क्वापि गतिर्नास्ति तेषां वाराणसी गतिः ॥ श्रुतिस्मृतिविहीना ये शौचाचारविवर्जिताः । येषां क्वापि गतिर्नास्ति तेषां वाराणसी गतिः ॥' इत्याद्यनेकैः पद्यैः काश्या महत्त्वमुक्तम् । अत्रार्थे येऽर्थवादमाहुस्ते नास्तिका मंतव्याः । तदुक्तं काशीखंडे–'यत्र विश्वेश्वरो देवः साक्षात्स्वर्गतरंगिणी । मिथ्या तत्रानुसूयंते तार्किकाश्चानुसूयकाः ॥ उदाहरंति ये मूढाः कुतर्कबलदर्पिताः ।

काश्यां सर्वार्थवादोऽयं ते विट्कीटा युगे युगे ॥' विट् विष्ठा । अत एव ब्रह्मवैवर्ते—'मा जानीह्यर्थवादत्वं काश्यां मुक्तिविनिर्णये' इति । तस्मात्सर्वस्यापि काश्यां मरणान्मुक्तिरिति सिद्धम् । काशीखंडेऽपि—'ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वै वर्णसंकराः । कृमिम्लेच्छाश्च ये चान्ये संकीर्णाः पापयोनयः ॥ कीटाः पिपीलिकाश्चैव ये चान्ये मृगपक्षिणः । कालेन निधनं प्राप्ता अविमुक्ते शृणु प्रिये ॥ चंद्रार्धमौलयः सर्वे ललाटाक्षा वृषध्वजाः' इति । तथा—'अकामो वा सकामो वा तिर्यग्योनिगतोऽपि वा । अविमुक्ते त्यजन्प्राणान्मम लोके महीयते ॥' इति । अन्यच्च मरणानंतरं सालोक्यादिचतुर्विधमुक्तिरपि क्रमेण भवति न पुनर्गर्भवासः; तदुक्तं पद्मपुराणे—'काश्यां मृतस्तु सालोक्यं साक्षात्प्राप्नोति सत्तमः । ततः सरूपतां याति ततः सान्निध्यमश्नुते ॥ ततो ब्रह्मैकतां याति न परावर्तते पुनः' इति । सालोक्यं शिवलोकवासित्वं, सरूपतां शिवतुल्यरूपतां, सान्निध्यं शिवसामीप्यं, ब्रह्मैकतां शिवाभेदताम् । एतद्व्यवस्थापि तत्रैव—'सलोकतां च सारूप्यं सान्निध्यं वापि सत्तमः । कल्पं कल्पमवाप्नोति ततो ब्रह्मात्मको भवेत् ॥' इति । अन्ये तु क्षेत्रभेदेन सालोक्यादिमुक्तितारतम्यमेतदप्युक्तं ब्रह्मपुराणे—'चतुर्विधेऽपि क्षेत्रेऽस्मिन्प्रमीतो गर्भयातनाम् । नैवाप्नोति मुनिश्रेष्ठा विशेषोऽयं ब्रवीमि वः ॥' इति । तत्र काश्यात्मके क्षेत्रे सालोक्यमुक्तिः, वाराणस्यात्मके क्षेत्रे सारूप्यमुक्तिः, अविमुक्तात्मके क्षेत्रे सान्निध्यमुक्तिः अंतर्गेहात्मके क्षेत्रे कैवल्यमुक्तिः । उक्तं च पद्मपुराणे—चतुर्धा वितते क्षेत्रे सर्वत्र भगवाञ्छिवः । व्याचष्टे तारकं वाक्यं ब्रह्मात्मैक्यप्रबोधकम् ॥ काश्यां मृतस्तु सालोक्यं साक्षात्प्राप्नोति सत्तमः । वाराणस्यां मृतो जंतुः साक्षात्सारूप्यमश्नुते ॥ अविमुक्ते विपन्नस्तु साक्षात्सान्निध्यमाप्नुयात् । अंतर्गेहे विपन्नस्तु साक्षात्कैवल्यमाप्नुयात् ।' इति । केवलभावः कैवल्यं शिवतादात्म्यं प्राप्नुयात्, साक्षाच्छिवस्वरूप एव भवतीत्यर्थः । काश्यादिक्षेत्रपरिमाणानि पद्मपुराणीयपातालखंडे—'परिमाणं प्रवक्ष्यामि तन्निबोधत सत्तमाः । मध्यमेश्वरमारभ्य यावद्देहलिविघ्नपम् ॥ सूत्रं संस्थाप्य तद्दिक्षु भ्रामयेन्मंडलाकृति । तत्र या जायते रेखा तन्मध्यक्षेत्रमुत्तमम् ॥ काशीति यद्विदुर्वेदास्तत्र मुक्तिः प्रतिष्ठिता । काश्यंतं परमं क्षेत्रं विशेषफलसाधनम् ॥ वाराणसीति विख्यातं तन्मानं निगदामि वः । दक्षिणोत्तरयोर्नद्यौ वरणाऽसिश्च पूर्वतः ॥ जाह्नवीपश्चिमे चापि पाशपाणिर्गणेश्वरः । अस्या अंतःस्थितं दिव्यं विशेषफलसाधनम् ॥ अविमुक्तमिति ख्यातं तन्मानं च ब्रवीमि वः । विश्वेश्वराच्चतुर्दिक्षु धनुःशतयुगोन्मितम् । अविमुक्ताभिधं क्षेत्रं मुक्तिस्तत्र न संशयः ॥ गोकर्णेशः पश्चिमे पूर्वतश्च गंगामध्यं ह्युत्तरे भारभूतः । ब्रह्मेशानो दक्षिणे संप्रदिष्टस्तत्तु प्रोक्तं भवनं विश्वभर्तुः ॥' इति, काशीपरिमाणवाक्ये मुक्तिपदं सालोक्यमुक्तिपरम् । अविमुक्तपरिमाणवाक्ये मुक्तिपदं सान्निध्यमुक्तिपरम् । पूर्वाभिहितवाक्यैकवाक्यताबलात् । अस्याः=वाराणस्याः । धनुः=चतुश्चतुर्हस्तमितम् ।

एवं सति विश्वेश्वरस्थानाच्चतुर्दिक्ष्वष्टशतहस्तमितमित्यर्थः । विश्वभर्तुर्भवनमंतर्गृहम् । ततश्च यथा यथा मुक्तीनां सालोक्यसारूप्यसान्निध्यकैवल्याख्यानां पूर्वपूर्वापेक्षयोत्कृष्टत्वं तथा तथा काशीवाराणस्यविमुक्तांतर्गृहाख्यानां चतुःक्षेत्राणां पूर्वपूर्वांतर्भाविपूर्वपूर्वापेक्षया न्यूनपरिमाणमिति संपिंडितोऽर्थः। तस्मात्सर्वथा मथुरादिमुक्तिपुर्यपेक्षया काशी श्रेष्ठेति सिद्धमित्यास्तां प्रसक्ताऽनुप्रसक्तम् ॥ ननु कस्मिन्कालेऽयं ग्रंथः कृतः इत्यत आह–भुजेति । भुजौ द्वौ, पुनरपि भुजौ द्वौ, इषवः पंच, चंद्र एकः, भुजभुजेषुचंद्रास्तैः। कोऽर्थः? 'अंकानां वामतो गतिः' इति दैवज्ञसंप्रदायागतवाक्याद्द्वाविंशत्यधिकपंचदशशती तया मिते गणिते शके शकाः यवनास्तेषां स्वामी लक्षणया शकशब्देनोच्यते, तत्रापि लक्षणया शकशब्देन तद्राज्यप्राप्तिसमयाद्गतवर्षाणि प्रोच्यंते । एवं सति लक्षितलक्षणया लोकव्यवहारमूलभूतोऽयमर्थो लभ्यते । तत्र निखिलभूपालचूडामणेः श्रीशालिवाहननृपस्य राज्यप्राप्तिस्तु इदानींतनादष्टाविंशात्कलियुगादेकोनाशीत्यधिकैकत्रिंशच्छतीपरिमिते गते काले जाता । तत आरभ्य शालिवाहननृपशकप्रवृत्तिः । उक्तं च भास्वत्याम्–'शाको नवाद्रींदुकृशानु ३१७९ युक्तः कलेर्भवत्यब्दगणस्तु वृत्तः' इति । स च शालिवाहननृपशककालो ग्रंथकरणसमये द्वाविंशत्यधिकपंचदशशती १५२२ मितो गतोऽभूदत एतावत्संख्याके शककाले व्यतिक्रांते सति रामज्योतिर्विन्मुहूर्तचिंतामणिनामकं ज्यौतिषग्रंथं व्यधादित्यर्थ इति शिवम् ॥ ३ ॥

अथ ग्रंथकृद्वंशवर्णनप्रकरणं गद्येनोपसंहरन्मुहूर्तचिंतामणिनामकज्योतिर्ग्रंथसमाप्तिं करोति—

## इति श्रीदैवज्ञानंतसुतदैवज्ञरामज्योतिर्विद्विरचिते मुहूर्तचिंतामणौ ग्रंथकर्तुर्वंशवर्णनप्रकरणं समाप्तम् ॥ १४ ॥

स्पष्टार्थम् ॥

कीर्त्या विद्योतिताशो द्रविणवितरणैरर्थिनां पूरिताशो
ज्योतिर्विद्वृंदवंद्यो निखिलवसुमतीमंडलाखंडलेज्यः ।
दर्भाग्रप्रख्यबुद्धिर्द्विजकुलतिलकोऽभूद्विदर्भाख्यदेशे
ज्योतिःशास्त्रारविंदप्रविकसनरविर्विंदुचिंतामणिः सः ॥ १ ॥

तस्यात्मजोऽभवदनंत उमातनूजपादारविंदमकरंदमधुव्रताभ्यः ।
ज्योतिर्नयत्रिनयनेव हठादवापे येन त्रिकालविदुषा खलु भर्गभावः ॥ २ ॥

तत्सूनुर्नीलकंठः श्रुतपरिकलनाऽकुंठितप्रौढबुद्धि-
ज्योतिःशास्त्रैकसिंधोर्घटनविघटनासर्गधाता बभूव ।
यत्प्रोक्तं ग्रंथसिंधुच्छलदमलकणाकर्णनेनापि लोको
गर्गाचार्यादि यस्मिन्नचयति जगति प्रौढभावं नितांतम् ॥ ३ ॥

रामोऽनुजस्तस्य बभूव काश्यां यत्प्रोक्तसुज्यौतिषजान्निबंधान् ।
निपीय सौहित्यमुपेत्य सद्यः सुधां मुधा विंदति विंदुवृंदम् ॥ ४ ॥
श्रीमद्भूपतिशालिवाहनशके चंद्रांकशक्रै १४९१ मिते
मासीषेऽपरपक्षगे नग ७ तिथौ तिग्मांशुवारेऽदितौ ।
धर्मज्यौतिषशास्त्रपाणिनिमहाशास्त्रादिपारंगमा-
त्संभूतः खलु नीलकंठविदुषो गोविंदनामा सुतः ॥ ५ ॥
शाके तत्त्वतिथीमिते १५२५ युगगुणाब्दो ३४ नीलकंठात्मभू-
र्दुग्धाब्धिं निखिलार्थयुक्तममलं मौहूर्तचिंतामणिम् ।
काश्यां वाक्यविचारमंदरनगेनामथ्य लेखप्रियां
गोविंदो विधिविद्वरोऽतिविमलां पीयूषधारां व्यधात् ॥

इति ग्रंथकर्तृ-टीकाकर्तृवंशवर्णनम् ॥

इति श्रीपीयूषधारासहितो मुहूर्तचिंतामणिः समाप्तः ॥



# मुहूर्तचिंतामणिगतश्लोकानुक्रमः ।



* मुं०चिं०

## ह





# परिशिष्टम्[1]।

## १-मुहूर्त-देवता-नक्षत्र-संज्ञाः (दिवसे)

| सं. | मुहूर्तनाम | नक्षत्रम् | संज्ञा |
|---|---|---|---|
| १ | शिव | आर्द्रा | दारुण—तीक्ष्ण |
| २ | सार्प | आश्लेषा | दारुण—तीक्ष्ण |
| ३ | मित्र | अनुराधा | मृदु-मैत्र |
| ४ | पितृ | मघा | उग्र—क्रूर |
| ५ | वसु | धनिष्ठा | चर—चल |
| ६ | अंबु | पू. षा. | क्रूर—उग्र |
| ७ | विश्वेदेव | उ. षा. | ध्रुव—स्थिर |
| ८ | अभिजित् | अभिजित् | लघु—क्षिप्र |
| ९ | ब्रह्मा | रोहिणी | ध्रुव—स्थिर |
| १० | इंद्र | ज्येष्ठा | दारुण—तीक्ष्ण |
| ११ | इंद्राग्नि | विशाखा | मिश्र—साधारण |
| १२ | निशाचर | मूल | दारुण—तीक्ष्ण |
| १३ | जलाधीश | शततारका | चर—चल |
| १४ | अर्यमा | उत्तराफल्गुनी | ध्रुव—स्थिर |
| १५ | भग | पूर्वाफल्गुनी | क्रूर—उग्र |

## २-मुहूर्त-देवता-नक्षत्र-संज्ञाः (रात्रौ)

| सं. | मुहूर्तनाम | नक्षत्रम् | संज्ञा |
|---|---|---|---|
| १ | शिव | आर्द्रा | दारुण—तीक्ष्ण |
| २ | अजैकपाद् | पूर्वाभाद्र० | क्रूर—उग्र |
| ३ | अहिर्बुध्न्य | उत्तरभाद्र० | ध्रुव—स्थिर |
| ४ | पूषा | रेवती | मृदु—मैत्र |
| ५ | दस्र | अश्विनी | लघु—क्षिप्र |
| ६ | यम | भरणी | क्रूर—उग्र |
| ७ | अग्नि | कृत्तिका | मिश्र—साधारण |
| ८ | ब्रह्मा | रोहिणी | ध्रुव-स्थिर |
| ९ | चंद्र | मृगशीर्ष | मृदु—मैत्र |
| १० | अदिति | पुनर्वसु | चर—चल |
| ११ | गुरु | पुष्य | लघु—क्षिप्र |
| १२ | विष्णु | श्रवण | चर—चल |
| १३ | सूर्य | हस्त | लघु-क्षिप्र |
| १४ | त्वष्टा | चित्रा | मृदु—मैत्र |
| १५ | वायु | स्वाती | चर—चल |

१ परिशिष्टस्यास्यायोजनेनाधमर्णयन्ति सहृदयाः स्वसुहृद्वरा भट्ट—कृष्णराम-वल्लभजी-माधवपुरकरशर्माण इति सानुनयं निवेदयति-संशोधकः।

## ३-नक्षत्र-वार-संज्ञाः

| संज्ञा | वारः | नक्षत्रम् |
|---|---|---|
| ध्रुव–स्थिर | सूर्य | रोहिणी, उ. फ., उ. षा., उ. भा. |
| उग्र–क्रूर | भौम | भरणी, मघा, पू. फ., पू. षा., पू. भा. |
| चर–चल | चंद्र | पुन. स्वाती श्रवण, धनिष्ठा, शतभिषक् |
| लघु–क्षिप्र | गुरु | अश्विनी, पुष्य, हस्त, अभिजित् |
| मृदु–मैत्र | शुक्र | मृगशीर्ष, चित्रा, अनुराधा, रेवती |
| मिश्र–साधारण | बुध | कृत्तिका, विशाखा |
| दारुण–तीक्ष्ण | शनि | आर्द्रा, आश्लेषा, ज्येष्ठा, मूल |

## ४—वर्णकोष्ठकम्

| ब्राह्मण | क्षत्रिय | वैश्य | शूद्र |
|---|---|---|---|
| कर्क | मेष | वृषभ | मिथुन |
| वृश्चिक | सिंह | कन्या | तुला |
| मीन | धनु | मकर | कुंभ |

## वश्यकोष्ठकम्

| जलचर | चतुष्पाद | मनुष्य | वनचर | कीटक |
|---|---|---|---|---|
| कर्क | मेष | मिथुन | | |
| | | | सिंह | |
| मकर–-उत्तरार्धम् | वृषभ | कन्या | | |
| मीन | धनुः उत्तरार्धम् | तुला | | |
| | | धनुः पूर्वार्धम् | | वृश्चिक |
| | मकर-पूर्वार्धम् | कुंभ | | |

## ६-वर्गः → वैरवर्गः

| | |
|---|---|
| गरुड अ, इ, उ, ए | सर्प त, थ, द, ध, न |
| मार्जार क, ख, ग, घ, ङ | मूषक प, फ, ब, भ, म |
| सिंह च, छ, ज, झ, ञ | मृग य, र, ल, व |
| श्वान ट, ठ, ड, ढ, ण | मेष श, ष, स, ह |

वैरवर्गः ← वर्गः

## ७—योनिकोष्टकम् (मु० चिं० ६।२५-२६)

| योनिः ——→ वैरम् नक्षत्रम् वैरम् ←—— योनिः | | | नक्षत्रम् |
|---|---|---|---|
| अश्व | अश्वि. श. | महिष | ह. स्वा. |
| गज | भ. रे. | सिंह | ध. पू. भा., |
| मेष | कृ. पुष्य | वानर | पू. षा., श्र. |
| सर्प | रो. मृ. | नकुल | उ. षा. अभि. |
| श्वान | आर्द्रा. मू. | मृग | अनु. ज्ये. |
| मार्जार | पुन. आश्ले. | मूषक | म. पू. फ. |
| गौ | उ.फा.उ.भा. | व्याघ्र | चि. वि. |

## ८—मैत्रीकोष्टकम् (मु० चिं० ६।२७-२८)

| ग्रहाः | सू. | चं. | मं. | बु. | गु. | शु. | श. | रा. |
|---|---|---|---|---|---|---|---|---|
| मित्रा. | चं. मं. गु | र. बु. | र. चं. गु. | र. शु. रा. | र. चं. मं. | बु. रा. श. | बु. शु. रा. | बु. शु. श. |
| समाः | बु. | मं. गु. शु. श. | शु. श, | मं. श. गु. | श. रा. | मं. गु. | गु. | गु. |
| शत्रवः | श. शु. रा. | रा. | बु. रा. | चं. | बु. शु. | र. चं. | र. चं. मं. | र. चं. मं. |

## ९—गणकोष्टकम् (मु. ६।२९) १०—नाडीकोष्टकम् (मु. ६।३४)

| देवः | मनुष्यः | राक्षसः | आद्या | मध्या | अंत्या |
|---|---|---|---|---|---|
| अश्वि. मृ. | भ. रो. | कृ. आश्ले. | अ. आर्द्रा. | भ. मृ. | कृ. रो. |
| पुन. पु. | आर्द्रा. पू. फ., | म. चि. | पुन. उ. फ. | पुष्य. पू. फ. | आश्ले. म. |
| ह. स्वा. | उ. फ., पू. षा. | वि. ज्ये. | ह. ज्ये. | चि. अनु. | स्वा. वि. |
| अनु. श्र. | उ. षा. पू. भा. | मू. ध. | मू. शत. | पू. षा., ध. | उ. षा., श्र. |
| रे. | उ. भाद्र. | शत. | पू. भा. | उ. भा. | रे. |

### ११ वर्णगुणकोष्टकम्

| | वरस्य | ब्रा. | क्ष. | वै. | शू. |
|---|---|---|---|---|---|
| कन्यायाः | ब्रा. | १ | ० | ० | ० |
| | क्ष. | १ | १ | ० | ० |
| | वै. | १ | १ | १ | ० |
| | शू. | १ | १ | १ | १ |

### १२ नाडीगुणकोष्टकम्

| | वरस्य | आ | म | अं. |
|---|---|---|---|---|
| कन्यायाः | आ. | ० | ८ | ८ |
| | म. | ८ | ० | ८ |
| | अं. | ८ | ८ | ० |

### १३ गणगुणकोष्टकम्

| | वरस्य | दे. | म. | रा. |
|---|---|---|---|---|
| कन्यायाः | दे. | ६ | ५ | १ |
| | म. | ६ | ६ | ० |
| | रा. | ० | ० | ६ |

### १४ संक्षिप्तं तारागुणकोष्टकम् (मु.६।२४)

| | वरस्य | १ अ | ३ ब | अ | ब |
|---|---|---|---|---|---|
| कन्यायाः | १ अ | ३ | १॥ | १,२ | ३ |
| | ३ ब | १॥ | ० | ४,६ | ५ |
| | | | | ८,९ | ७ |

### १५ प्रीतषडष्टकम्

| | | | | | |
|---|---|---|---|---|---|
| मेष | मिथुन | सिंह | तुला | धनुः | कुंभ |
| वृश्चिक | मकर | मीन | वृषभ | कर्क | कन्या |

### १६ मृत्युषडष्टकम्

| | | | | | |
|---|---|---|---|---|---|
| मेष | मिथुन | सिंह | तुला | धनुः | कुंभ |
| कन्या | वृश्चिक | मकर | मीन | वृषभ | कर्क |

### १७ शुभद्विर्द्वादशकम्

| | | | | | | |
|---|---|---|---|---|---|---|
| मीन | वृषभ | कर्क | सिंह | कन्या | वृश्चिक | मकर |
| मेष | मिथुन | सिंह | कन्या | तुला | धनुः | कुंभ |

### १८ अशुभद्विर्द्वादशकम्

| | | | | |
|---|---|---|---|---|
| मेष | मिथुन | तुला | धनुः | कुंभ |
| वृषभ | कर्क | वृश्चिक | मकर | मीन |

### १९ शुभनवपंचकम्

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| मेष | वृषभ | मिथुन | सिंह | तुला | वृश्चिक | धनुः | मकर |
| सिंह | कन्या | तुला | धनुः | कुंभ | मीन | मेष | वृषभ |

### २० अशुभनवपंचकम्

| | | | |
|---|---|---|---|
| कर्क | कन्या | कुंभ | मीन |
| वृश्चिक | मकर | मिथुन | कर्क |